॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला

१४

महाकवि-कालिदासप्रणीतं

# कुमारसम्भवं-महाकाव्यम्

'सञ्जीविनी' 'शिशुहितैषिणी' व्याख्याद्वयोपेतम्

( आदितोऽष्टमसर्गपर्यन्तं मल्लिनाथकृतया, नवमसर्गादारभ्य सप्तदशसर्गपर्यन्तं सीतारामकविकृतया च 'सञ्जीविनी' व्याख्यया, आदितः सप्तसर्गपर्यन्तं चारित्रवर्धनकृतया तथा नवमसर्गतः सप्तदशसर्गपर्यन्तं मैथिलपण्डितकनकलालठक्कुरकृतया 'शिशुहितैषिणी' व्याख्यया च समलङ्कृतम्

सम्पादकः भूमिकालेखकश्च

श्री पं० शेषराजशास्त्री रेग्मी



चौखम्भा संस्कृत संस्थान

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पो० आ० चौखम्भा, पो० बा० नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी
मुद्रक : श्रीगोकुल मुद्रणालय, वाराणसी
संस्करण : द्वितीय, वि० सं० २०४४
मूल्य : रु० १००-००



फोन : ६५८८९

अन्य प्राप्तिस्थान
चौखम्भा विश्वभारती
पोस्ट बाक्स नं० १०८४
चौक, ( चित्रा सिनेमा के सामने )
वाराणसी-२२१००१ ( भारत )
फोन : ५४७६६

THE

KASHI SANSKRIT SERIES

14

*****

# KUMĀRASAMBHAVAM-MAHĀKĀVYAM

OF

MAHĀKAVI KĀLIDĀSA

*with*

*Sanjivinī and Śiśuhitaiṣiṇī Commentaries*

By

MALLINĀTHA AND SĪTĀRĀM KAVI

Edited By

KANAKLĀL THAKKUR

Re-Edited with Preface

By

SRĪ SEŚARĀJA ŚASTRI REGMI

CHAUKHAMBHA SANSKRIT SANSTHAN

***Publishers and Distributors of Oriental Cultural Literature***

**P. O. Chaukhambha, Post Box No. 1139**

**Jadau Bhawan, K. 37/116, Gopal Mandir Lane**

**VARANASI ( INDIA )**

Phone : 65889

Second Edition 1987

Price Rs. 100–00

*Also can be had of*

**CHAUKHAMBHA VISVABHARATI**

Post Box No. 1084

Chowk ( Opposite Chitra Cinema )

VARANASI–221 001

Phone : 54766

*Printers :—*

**SRIGOKUL MUDRANALAYA**

Gopal Mandir Lane

Varanasi–221001

## महाकविकालिदासः कुमारसंभवं च ।

त्रिचतुरसंख्यकेषु विश्वकविषु महाकविकालिदासस्याऽनितरसाधारणमुत्कृष्टं स्थानम् । खण्डकाव्ये, महाकाव्ये रूपके च तस्याऽप्रतिमा रचनाः ।

"जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नाऽस्ति येषां यशःकाये जरामरणजं भयम् ॥"

अस्या उक्तेस्तस्मिन्नेव सार्थकताऽवलोक्यते । बहुविपश्चित्सम्मताः कालिदासकृतमः—

| | | |
|---|---|---|
| खण्डकाव्ये | — | १ ऋतुसंहारः |
| | | २ मेघदूतं च । |
| महाकाव्ये | — | १ कुमारसंभवं |
| | | २ रघुवंशं च । |
| रूपके | — | १ मालविकाग्निमित्रं नाटकम् । |
| | | २ अभिज्ञानशाकुन्तलं नाटकम् । |
| | | ३ विक्रमोर्वशीयं त्रोटकं च । |

एवमेव—श्रुतबोधः, नलोदयः, श्यामलादण्डकं चिद्गगनचन्द्रिका चेति बहुविधा ग्रन्थास्तत्कर्तृकत्वेन श्रूयन्ते । परमत्र न सर्वेषां विश्वासः ।

कालिदासः कदा बभूवेति प्रश्ने बहूनि मतानि । भारतीयपरम्परया कालिदासो राज्ञो विक्रमादित्यस्याश्रितो राजकविरिति ख्यातिः । तस्य राज्ञः सभायां नवरत्नान्यासन्नित्यपि श्रूयते ।

तानि यथा—

"धन्वन्तरि-क्षपणकाऽमरसिंह-शङ्कु-वेतालभट्ट-घटकर्पर-कालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इत्युक्तेः राज्ञो विक्रमस्य सभायां नवरत्नेष्वन्यतमं रत्नं कालिदासः समभूत् । परमत्र रत्ननवके क्षपणकः शङ्कुर्वेतालभट्टश्चैते नाममात्राऽवशिष्टाः । एवमेवाऽपरे धन्वन्तरिर्वररुचिर्घटकर्परश्चैषामपि निर्णयो दुःशकः । अथाऽवशिष्टोऽमरसिंहः, संभाव्यतेऽयमरकोषकारोऽस्याऽपि समयो न निश्चितः । केनकेचित् कालिदासेन रचितस्य ज्योतिर्विदाभरणस्योक्त्यनुसारेण वचनमिदम् । परमयं ग्रन्थःखृष्टस्य त्रयोदशशताब्दयाः पूर्वं रचितो नाऽतोस्य प्रामाण्येन पूर्वोक्तानां नवरत्नानां समकालत्वं निश्चेतुं शक्यम् । तत्राऽपि त्रयोदशशताब्दयाः पूर्वतनस्य महाकविकालिदासस्यैतेन वचनेन निर्णयो दुर्घटः ।

कालिदास इति नाम्नोपाधिना वा बहवः कवयस्तथैव विक्रम इति नाम्नोपाधिना वा समलङ्कृता बहवो राजानश्च श्रूयन्ते ।

खृष्टस्य दशमशतके जातस्य कविशेखरस्य राजशेखरस्य—

"एकोऽपि जीयते हन्त ! कालिदासो न केनचित् । शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ?" । इति वचनमपि कालिदासबहुत्वस्य समर्थकम् । धाराऽधीशस्य भोजस्य ( खृ० १००५–१०५४ ) आश्रितः पद्मगुप्ताऽपरनामा परिमलोऽपि कालिदासोपाधिभूषितः । यस्य नवसाहसाङ्कचरितं महाकाव्यम् । अतः कालिदासो भोजकालिक इति प्रवादः । एवमेव "विक्रम" इति नाम्नोपाधिना वा विभूषिताश्चत्वारो विक्रमादित्या विख्याताः ते यथा—१ उज्जयिन्यधीश्वरो राजा विक्रमादित्यः, येन खृष्टात् ५७ वर्षेभ्यः पूर्वं विक्रमसंवत्सरः प्रतिष्ठापितः । २ द्वितीयचन्द्रगुप्तः खृ० ३५७–४१३ । ३ प्रथमः कुमारगुप्तः खृ० ४१३–४५५ । ४ काश्मीरको विक्रमादित्यः खृ० ५०० ।

भारतीयपरम्परया आधारतः खृष्टात्पूर्ववर्ती यो विक्रमादित्यो राजाऽऽसीत्तस्यैवाऽऽश्रितोऽयं महाकविः कालिदासः । परं पाश्चात्यास्तदनुसारिणो भारतीया विपश्चितोऽत्र मते विश्वासं न कुर्वन्ति । ते खलु खृष्टात्पूर्ववर्तिनं विक्रमादित्यं काल्पनिकं मन्यन्ते, द्वितीय चन्द्रगुप्ते प्रथम कुमारगुप्ते च कालिदासस्य सम्बन्धं कल्पयन्ति परं "न ह्यमूला जनश्रुतिः" इति नयेन वक्ष्यमाणप्रमाणाऽनुसारेण च खृष्टात्पूर्ववर्ती महाराजो विक्रमादित्यो न काल्पनिकः पुरुषः, महाकविकालिदासश्च तस्यैवाश्रितो राजकविरिति तथ्यं वक्ष्यमाणप्रकारेण वादिमतखण्डनपुरःसरं प्रदर्श्यते ।

रविकीर्तिना कविना खृ० सं० ६३४ तमे उत्कीर्णे ऐहोलशिलालेखे—

"येनाऽयोजि नवेश्म स्थिरकर्मविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः ॥"

इति पद्याऽनुसारेण ६३४ तमखृष्टाब्दात्पूर्ववर्तित्वं कालिदासस्य निश्चीयते ।

एवमेव वत्सभट्टिकविना मन्दसौरप्रशस्तौ पट्टवस्त्रनिर्मातृकारुभिर्निर्मापिते सूर्यमन्दिरे, यस्य निर्माणं खृ० ४३७ तमे समभूत्तत्र काव्ये यानि पद्यानि निर्मितानि तत्र कालिदासस्य प्रचुरा छायोपलक्ष्यते । अतः खृ० ४३७ तमाद्वर्षात्कालिदासस्य नार्वाचीनत्वं संभाव्यते ।

कालिदासस्य खृष्टपूर्ववर्तित्वे प्रबलं प्रमाणमिदमपि प्रस्तूयते । कालिदासेन मालविकाऽग्निमित्रनाटके प्रारम्भ एव—

"पुराणमित्येव न साधु सर्वं, न चाऽपि काव्यं नवमित्यवद्यम्" ।

इत्युक्त्वा—

वेदविप्रेतिहासानामाख्यानपरिकल्पनम् ॥ १–११६ ॥"

इति भरतमुनिसंमतं वेदविद्येतिहासाख्यानं परिहृत्य स्वजीवितकालसंवृत्तं मालविकाऽग्निमित्रपरिणयाख्यानरूपं नाटकं निर्मितम् ।

नाटकसमाप्तौ च भरतवाक्यत्वेन—

"आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाऽग्निमित्रे ।।"

इति प्रदर्श्य नाटके परिणयवृत्तस्य स्वसमयवृत्तत्वं स्थूणानिखननन्यायेन समर्थितम् । खृष्टपूर्वं प्रथमशतकस्थो राजाऽग्निमित्र इति बहूनां विश्वासः, एवं च महाकविकालिदासेन विक्रमोर्वशीयत्रोटके विक्रमलब्धा उर्वशी विक्रमोर्वशी, विक्रमोर्वशीमधिकृत्य कृतो ग्रन्थो विक्रमोर्वशीयम् इत्यत्र विक्रमोर्वशीशब्दात् "अधिकृत्य कृते ग्रन्थे" इति सूत्रेण छ ( ईय ) प्रत्ययेन विक्रमोर्वशीयपदं निष्पद्यते, अत्र मुद्राऽलङ्कारेण महाकविना स्वाश्रयदातू राज्ञो विक्रमादित्यस्य नाम्नो निवेशो विहितः । कालिदासस्य विक्रमनृपाश्रितत्वस्येदमपि प्रबलं प्रमाणं यदभिज्ञानशाकुन्तलनाटके प्रस्तावनायां नटीं प्रति सूत्रधारस्य—"आर्ये ! रसभावदीक्षागुरोर्विक्रमादित्यस्याऽभिरूपभूयिष्ठा परिषदियम् । अस्यां च कालिदासग्रथितवस्तुना नवेनाऽभिज्ञानशाकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः ।"

उक्तेरस्या अपि कालिदासस्य विक्रमादित्याश्रितत्वं संगच्छते । तस्य च विक्रमादित्यस्य राज्ञः खृष्टपूर्ववर्तित्वे चेदमपि प्रबलं प्रमाणं यत्खृष्टप्रथमशतके वर्तमानेन हालकविना निर्मिते गाथासप्तशत्यां—

"संवाहणसुहसंतोसिएण देन्तेण तुह करे लक्खम् ।
चलणेण विक्कमाइत्त चरितं अणुसिक्खिअं तिस्सा ।। ५।६४ ।।

अस्यागाथायां निर्दिष्टो राजा विक्रमादित्य एव खृष्टात् ५७ तमवर्षात् पूर्ववर्तीत्यत्र न कोऽपि विसंवादः ।

केचित्पाश्चात्या विचक्षणाः कुमारसंभवे प्रयुक्तं जामित्रशब्दं[1] दृष्ट्वा कालिदासं द्वितीयचन्द्रगुप्तसमकालिकं ( खृ० पञ्चमशतकस्थम् ) कल्पयन्ति । भारतीयज्योतिर्विदाऽऽर्यभटेन यवनानां पारिभाषिकं पदं गृहीतं, यतः पदमिदं "डाएमेट्रन" इत्यस्य परिवर्तितस्वरूपम् । परं 'खृष्टपञ्चमशतकात् प्राचीनेव बोधायनमुनिना स्वकीयगृह्यसूत्रे पदमिदं प्रयुक्तमतो नेदं पदं यावनपारिभाषिकमन्स्तेषामिदं मतं भ्रान्तिग्रस्तं प्रतीयते ।

एवं च काश्मीरकशतानन्दपुत्रेणाऽभिनन्दमहाकविना २६ सर्गात्मकं रामचरितनामकं महाकाव्यं निर्मितम् । तस्य स्थितिः खृ० नवमशताब्दी ।

---

१. "तिथौ च जामित्रगुणाऽन्वितायाम्" कु० सं० ७-१ ।

तेन सुस्पष्टं लिखितं यत्—"ख्यातिं कामपि कालिदासकृतयो नीताः शकाऽरतिनना" एतस्या उक्तेरपि पूर्वोक्तं "कालिदासः" खृष्टात् ५७ तद्वर्षात् पूर्ववर्तिनो विक्रमादित्यस्य राज्ञ आश्रित इति तथ्यं पुष्यति।

अस्य समर्थकान्यन्यान्यपि प्रमाणान्युपस्थाप्यन्ते "त्रियम्बकं संयमिनं दर्श" कु० सं० ३–४४। "तं पातयां प्रथममास पपान्त पश्चात्" ( रघु० ९–६१ ) "प्रभ्रंशयां यो नहुषं चकार" ( रघु० १२–३६ ) इत्यादयोऽनेकेऽपाणिनीयप्रयोगा अपि कालिदासस्य खृष्टपूर्ववर्तित्वं साधयन्ति। कालिदासस्य नाटके प्रयुज्यमानं प्राकृतमपि पूर्वोक्तमताऽनुगुणम्। एवमेव शाकुन्तलनाटके चौर्याऽपराधे धीवरस्य कठोरदण्डस्योल्लेखात्तथोत्तराऽधिकारे नियमस्य यद्रूपं समुपलभ्यते कालिदासस्य समये मनुवशिष्ठापस्तम्बादय एव धर्मविषये परिगृहीता न तदुत्तरकालिका याज्ञवल्क्यबृहस्पतिप्रभृतय इत्यतः कालिदासस्य खृष्टपूर्ववर्तित्वं निर्णीयते।

बौद्धकविरश्वघोषः खृष्टस्य प्रथमशताब्दीभवस्तेन सौन्दरनन्दे बुद्धचरिते च कालिदासग्रन्थस्याऽनुहरणं कृतं, तदनन्तरभावित्वादित्यपि बलवत् स्वीकरणीयम्।

कालिदासग्रन्थपर्यालोचनया तस्योत्तरभारताऽभिजनत्वं प्रतीयते, स उज्जयिनीवास्तव्यो वोज्जयिनी तस्याः स्थितिभूमिरिति संभाव्यते।

कालिदासग्रन्थेषु रघुवंशे, मालविकाऽग्निमित्रे विक्रमोर्वशीयेऽभिज्ञानशाकुन्तले च मङ्गलाचरणे शङ्करस्य भगवत उल्लेखात्तस्य शङ्करोपासकत्वं प्रतीयते परं न साम्प्रदायिकशैवत्वं, यतः कुमारसंभवे—"एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम्। विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥ ७–४४ ॥

इति पद्यदर्शनात्तस्य स्मार्तत्वं ज्ञायते। कालिदासस्य रचना वैदर्भीरीतिमयी प्रसादगुणभूयिष्ठा ध्वनि-भाव-रस-गुणाऽलङ्काराऽलङ्कृता, श्रवणमनोहरविविधच्छन्दोभिः समाकर्षणशीला च। अन्तर्जगतो बहिर्जगतश्च चारुचित्रणे कालिदासस्य सर्वसम्मता लोकोत्तरता। अत एव तस्य कृतयः पारेसमुद्रमपि ख्यातिं प्राप्ताः।

"कविकुलगुरुः" "वाग्देवताविलास" इत्याद्युपाधिभिर्निखिलधरामण्डले तस्याऽद्वितीयता वितता।

तस्य कविकुलगुरुत्वे साधकानि प्रमाणानि कानिचित्प्रस्तूयन्ते। वत्सभट्टिकविर्मेघदूतमनुचकार। मालविकाऽग्निमित्रमनुसृत्य हर्षवर्द्धनेन रत्नावली प्रियदर्शिका चेति नाटिकाद्वयं रचितम्। भवभूतिरपि मालतीमाधवे मेघदूत-

मनुसृत्य कानि चिन्मनोहराणि पद्यानि निर्ममे। आलङ्कारिककविर्दण्डी च काव्यादर्शे—"लक्ष्म लक्ष्मीं तनोतीति[1] प्रतीति सुभगं वचः ॥ १–४५॥

भारतीयानां सर्वेषामपि दूतकाव्यप्रणेतॄणां कवीनामनुकरणस्थानं कालिदासः।

न केवलं भारतीयकवीनामेव कालिदासोऽनुकारहेतुः प्रत्युत पाश्चात्यं-कवीनामपि। तद्यथा—शार्मण्यदेशाभिजनः कविः शिलरः ( Schillar ) मेरियाष्टुअर्टकाव्यं ( Mariastart ) कालिदासस्य मेघदूतमनुकृत्य चकार।

इत्थं च महाकविकालिदासो विक्रमादित्यनृपाश्रितः खृष्टपूर्ववर्ती लोकोत्तर-प्रतिभाभूषितश्चेति तथ्यं सिध्यति।

कालिदासविषये जनश्रुतिबाहुल्यमनुश्रूयते तत्रैका जनश्रुतिरत्र प्रचुरप्रसार-तया प्रदर्श्यते। शारदानन्दाऽभिधानस्य कस्यचिद्राज्ञो विद्योत्तमाभिख्या परम-रमणीया कुमारी समजायत। सा च रूपगुणगणवैदुष्याऽतिशयेन भूषिताऽऽसीत्। तस्याः प्रतिज्ञाऽऽसीद्यः शास्त्रार्थे मां जेष्यति तमेवाऽहं परिणेष्यामीति। तद्गुणलुब्धा बहवो विपश्चितः समायाताः, परं तस्याः पराजयमनुभूय नैराश्येन परावृत्ताः। ततस्तैस्तस्या मानमर्दनार्थं केनापि जडमतिना समं तस्या उद्वाहं सम्पादयितुं दुरभिसन्धिरकारि। ततो मूर्खाऽन्वेषणप्रसङ्गे तैर्वृक्षमधिरूढः परं स्वाश्रितां तस्यैव शाखां छेत्तुं प्रयतमानो मानवो व्यलोकि। तदनु ते तं वृक्षादधोऽवतार्य "वयं तव कयाऽपि सुन्दर्या राजकुमार्या समं परिणयं कारयिष्यामः, परं त्वया किमपि न भाषणीमिति कथयित्वा तेन समं राजकुमारीसंनिकृष्टं गत्वा "भवत्या समं शास्त्रार्थं विधातुं तु मस्मदाचार्यं विद्वत्तमं वयमानीतवन्तः परमेते मौनव्रतिनस्तस्मात्संज्ञयैव शास्त्रार्थो भविष्यतीति स्वीकारोत्तरं राजकुमार्या परमेश्वर एकोऽस्तीति धियैका-ङ्गुलिरूर्ध्वीकृता, तेन वालिशेनाऽयं मम नयनमेकमुत्पाटयितुं सङ्केते इति विमृश्य तह्यैवमहं तव लोचनयुगलमुत्पाटयिष्यामीति भावयित्वाऽङ्गुलियुगल-मुदस्थापितम्।

ततः सामूहिकरूपेण विद्वद्भिर्न केवलं मायाऽवच्छिन्नमन्तःकरणाऽव-च्छिन्नं च चैतन्यमस्तीति नानाविधैस्तर्कैः पराजितायाः राजकुमार्यास्तेन जडमतिना सयं परिणयः समपद्यत। परिणीतेन वरेण समं शयनागारे स्थितया राजकुमार्या निशीथे क्रमेलकारावं श्रुत्वा कोऽयं ध्वनिकर्तेति प्रश्ने कृते शुद्धोच्चारणाऽनभिज्ञो जडमतिरुष्ट्र इति वक्तुमसामर्थ्येनोट्र इत्युत्तरं प्रादात्। तदनु विपश्चिद्भिःप्रतारिता राजकुमारी व्यथाऽतिशयेन रुरोदार्धचन्द्रदानपुरःसरं बालिशं वरं च शयनाऽगाराद्बहिश्चकार। अपमानितो व्यथाकुलश्च स जडमति-

---

१. मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ( अभि० शा० १–१० )

देव्याः काल्या मन्दिरं गत्वा स्वकण्ठं छेत्तुं प्रायततः । ततस्तस्य जन्मान्तराचरितसुकृताऽतिशयाद्भगवती काली प्रसन्ना "वरं ब्रूही"ति कथयामास । तदिच्छाऽनुसारेण निरवद्यविद्याप्रदानेन च तमनुजग्राह च । तदनन्तरं स जडमतिर्विद्यया समं कालिदास इत्यभिख्यां समासाद्य कान्ताऽगारं प्राप "अनावृतकपाट द्वारं देही"ति जगाद च । ततस्तया राजकुमार्या "अस्ति कश्चिद्वाग्विशेष" इति पृष्टे अस्तीति पदेन युक्तम् "अस्त्युत्तरस्यां दिशि देवतात्मे"ति पादसमन्वितं कुमारसंभवं, कश्चिदिति पदेन विभूषितं "कश्चित्कान्ताविरहगुरुणा स्वाऽधिकारप्रमत्त" इति चरणाऽलङ्कृतं मेघदूतं "वागर्थाविव संपृक्तावित्यादिपादभूषितं रघुवंशं नाम महाकाव्यं प्रणिनायेति किंवदन्ती सर्वत्र प्रचलितेत्यलं जनश्रुतिविशेषचर्चया । साम्प्रतं महाकविकालिदासस्य कुमारसंभवं नाम काव्यमधिकृत्य किञ्चित्प्रस्तूयते । काव्यमिदं कालिदासस्य प्रथमा रचनेति बहूनां विपश्चितां परामर्शः । कुमारसंभवमिति पदस्य व्युत्पत्तिर्यथा कुमारस्य ( कार्त्तिकेयस्य ) संभवः (उत्पत्तिः) यस्मिन् तत् काव्यं कुमारसंभवमिति व्यधिकरणबहुव्रीहिसमासेन पदमिदं निष्पद्यते ।

पुरा तारकाऽसुरपीडिताः स्वर्गान्निराकृता अमराः पाकशासनं पुरस्कृत्य सत्यलोकं जग्मुर्भगवन्तं ब्रह्माणं प्रणिपत्य तुष्टुवुश्च । ततश्च प्रसद्य भगवान् सुरानागमनकारणं पप्रच्छ । ततश्चेन्द्रप्रेरितो देवगुरुर्बृहस्पतिस्तारकाऽसुरोपद्रवं सविशदं वर्णितवान्, ततो ब्रह्मदेवेन "हिमालये तपस्यतो भगवतः शम्भोर्मनसं पार्वतीरूपेणाकृष्टुं यतध्वं ततश्च तयोः परिणये संवृते ताभ्यां कुमारेः समुत्पन्ने तं सुरसेनान्यं विधाय तारकेरण युद्धं प्रारब्धव्यं, स कुमारस्तारकं हनिष्यतीति" । ततो मघवान् हिमालयाऽधित्यकायां तपस्यन्त शङ्करं शुश्रूषमाणां पार्वतीं प्रत्याकृष्टं कर्तुं स्मरमस्मरत् । ततश्चेन्द्रादेशेन मीनकेतनेन शरविद्धः शङ्करः कुपित्वा तृतीयनयनेन तं स्मरणमात्राऽवशिष्टं चकार । ततश्च पार्वतीतपश्चर्यया प्रीतः पशुपतिस्तां परिणीय कार्त्तिकेयमुत्पादयामास । ततः किञ्चित्कालाऽनन्तरं तारकाऽसुरेण समं सुराणां संग्रामे सुरसेनानीं; कुमारस्तारकाऽसुरं जघानेति कुमारसंभवस्य संक्षिप्ता कथा । कुमारसंभवे सप्तदश सर्गाः । तेषां कथासार उपन्यस्यते ।

प्रथमसर्गे —हिमालयस्य वर्णनम् । तस्य मेनया सह परिणयः । पार्वत्या जनिनं, तस्याः सौन्दर्यादिवर्णनम् । हिमालयस्य प्रस्थे शिवस्य तपश्चरणम् । हिमालयानुज्ञया पार्वत्या शिवस्य शुश्रूषणम् ।

द्वितीयसर्गे—तारकाऽसुरविप्रकृतानां सुराणां पुरन्दरं पुरस्कृत्य सत्यलोकगमनम् । प्रणिपातपुरःसरं देवैर्ब्रह्मदेवस्य स्तुतिः । देवानामयथापूर्वस्थितिं विलोक्य ब्रह्मणस्तेषामागमनप्रयोजनस्य प्रश्नः । पुरन्दरप्रेरणया सुरगुरोः

प्रजापतिं प्रति तारकाऽसुरस्योत्पातवर्णनम् । तत्समाकर्ण्य ब्रह्मदेवस्य "पार्वतीरूपेण शिवमानसमाक्रष्टुं यतध्वम् । तयोःपरिणये सति तयोरपत्यं कुमारो जनिष्यति । स एव सुरसेनानीर्भूत्वा तारकाऽसुरं हनिष्यती"ति कथनम् । तन्निशम्य तत्कार्यसिद्धयर्थमिन्द्रविहितं स्मरस्य स्मरणम् ।

तृतीयसर्गे—पार्वतीं प्रति शिवमानसमाक्रष्टुं यतस्वेति मदनं प्रति मघोन आज्ञापनम् । ततस्तेन हरं प्रति संमोहनाऽस्त्रप्रहारेण मनोविकारविधानम् । कुपितस्य हरस्य तृतीयनयनेन स्मरस्य भस्माऽवशेषकरणम् । नैराश्येन शून्य-हृदयायाः पार्वत्या हिमालयेन स्वभवनप्रापणम् ।

चतुर्थे सर्गे—रतिविलापः । मदनसुहृदो वसन्तस्य रतिमाश्वासयितुमा-गमनम् । ततश्च चिताऽनलेन प्राणत्मागतत्पराया रतेराकाश-भवया भारत्येति शिवस्य "पार्वतीपरिणयाऽनन्तरं मदनस्य जीवनलाभो भविष्यतीति" सूचनया समाश्वासनम् । वसन्तस्याऽपि तस्याः प्रबोधनम् ।

पञ्चमसर्गे—शिवं पतित्वेन प्राप्तुं पार्वत्या दुष्करं तपश्चरणम् । तद्वीक्ष्य भगवतः शङ्करस्य वर्णिवेषं विधाय तस्यास्तपश्चरणोद्देश्यप्रश्नः । पार्वतीसख्या प्रार्वत्यातपश्चर्याप्रयोजनस्य वर्णनम् । ततस्तस्य वर्णिनोऽनेकवचनभङ्ग्या शिव-निन्दनम् । तां निन्दां श्रोतुमक्षमां तत्स्थानं त्यक्तुं गमनतत्परां गौरीं प्रति शङ्करेण स्मितपूर्वकं "हे गौरि ! त्वत्तपोभिः क्रीतोऽहम्" इति कथनम् ।

षष्ठसग—पार्वत्या अनुरोधेन शङ्करेण सप्तर्षीणां गौरीयाचनार्थं हिमालयं प्रति प्रेषणम् । हिमवन्नगरष्योषधिप्रस्थस्योत्कर्षवर्णनम् । सप्तर्षिभिः" भवत्सुतां भगवाञ्छङ्करो यायत" इति सूचिते हिमालयस्य स्वपत्न्या मेनकया सह सहर्षं तस्या याचनायाः स्वीकरणम् । सप्तर्षिभिश्च तस्य वृत्तस्य श्रीङ्करं प्रति निवेदनम् ।

सप्तमसर्गे—शिवपार्वत्योर्वैवाहिकनेपथ्यरचना । वरयात्रिकाणामोषधि-प्रस्थगमः, विवाहक्रियाऽनुष्ठानं, सुरप्रार्थनया स्मरं प्रति हरकर्तृकं पुनः रुज्जीवनम् । पार्वत्या सह शिवस्य कौतुकागारे गमनम् ।

अष्टमे सर्गे—गौर्या नवोढात्वप्रपञ्चनम् । गौरीशङ्करयोर्वैशद्येन संभोग-वर्णनम् । वधूवरयोः समानरागित्वम् । शङ्करस्य हिमाचलभवने मासपर्यन्तं निवासः । ततो दम्पत्योर्यंच तत्र विहरणम् । तयोर्गन्धमादनगिरिविगाह-नादिकम् ।

महाकविकालिदासेनेत्थमष्टमसर्गान्तिभागो व्यरचि । तत्राऽष्टमसर्गे गौरी-शङ्करयोः संभोगवर्णने परा काष्ठा प्रदर्शिता । संभाव्यते तात्कालिकैर्विद्वद्भि-रस्याऽनौचित्यं प्रदर्शितमतः ततः परं कविना कुमारस्य ( कार्त्तिकेयस्य )

संभवस्य ( उत्पत्तेः ) कारणभूत उद्वाहस्तत्क्रियाप्रपञ्चनेन कुमारसंभव-नामधेयस्य सार्थकतां विमृश्य स्वकीया लेखन्यवरुद्धा ।

कालिदासाऽनन्तरोद्भूतैर्विद्वद्भिरपि स्वरचनायां कुमारसंभवस्याष्टमसर्गे गौरीशङ्करयोः संभोगवर्णनस्याऽनौचित्यं प्रदर्शितम् । तद्यथा—राजानक-मम्मटभट्टो दिव्ययोः संभोगवर्णनं जननीजनकयोः संभोगवर्णनमिवात्यन्त-मनुचितमित्याह ।

वामनोऽपि कुमारसंभवस्थं "दष्टमुक्तमधरोष्ठमम्बिका" इत्यादिवर्णन-मनुचितमिति प्रत्यपादयत् । ध्वनिकारस्तु महाकवीनाथुत्तमदेवताविषयक-प्रसिद्धसंभोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तिनिराकृतत्वाद् ग्राम्यत्वेन न प्रति-भासते, यथा कुमारसंभवे देवीसंभोगवर्णनमिति समर्थितवान् । (ध्व० ३–३१७) कवीन्द्रः क्षेमेन्द्रोऽपि कुमारसंभवस्थे—

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ।। पृ० ८–८७

पद्येऽस्मिन् "नखराजिविराजितोरुमूलहृतविलोचनत्वं त्रिलोचनस्य भगवत-स्त्रिजगद्गुरोर्यदुक्तं तेनाऽनौचित्यमेव परं प्रबन्धाऽर्थः पुष्णाति" इत्युक्तवान् । कुमारसंभवस्य सर्गाष्टकभाग एव कालिदासप्रचना । अत्र बहूनि कारणानि—

मल्लिनाथादयः प्राचीनाष्टीकाकाराः कुमारसम्भवस्य सर्गाष्टकं भाग-मधिकृत्य टीकाश्चक्रुः । नवमात्प्रभृति 'सप्तदशसर्गान्तभागं परिजह्रुः । आलङ्कारिकाश्चाऽष्टमसर्गान्तभागमाश्रित्यालङ्कारादीनां नानाविधान्युदा-हरणानि प्रादर्शयन् । अस्य सर्गनवकस्य शैलीं वाक्यविन्यासः, कथानिर्माण-कौशलं चेत्यादिविषया न कालिदासीयत्वं भजन्ति ।

अत्र छन्दःपूरणार्थं "नूनं खलु, सद्यः, अलम् इत्यादीनि पदानि प्रचुरतया संयोजितानि ।

यत्र तत्र यतिभङ्गश्च ।

मन्येऽहं कालिदासोत्तरवर्तिना केनचित्कविना सर्गाष्टके कुमारसंभवे सर्गनवकं प्रक्षिप्य तत्र दशमे सर्गे कुमारसंभवं वर्णयित्वाऽपि तारकाऽसुर-वधरूपं कुमारचरितं संयोज्य ग्रन्थोऽपूर्यत । "सर्गा अष्टाऽधिका इहे"ति प्रवादाऽनुसारं काव्यष्य महाकाव्यत्वख्यापनाय सप्तदशसर्गात्मकं कुमारसंभवं नाम महाकाव्यमक्रियत । वस्तुतस्तु "सर्गबन्धो महाकाव्य" मित्यादिकेन भामहादिवचनेन महाकाव्यलक्षणैकदेशत्वं संभवति ।

अष्टमात् सप्तदशसर्गं यावत् कुमारसंभवस्य पर्वणीकरोपनामकसीताराम-कविकृता सञ्जीविनीटीका, प्रथमसर्गादारभ्य सप्तदशसर्गपर्यन्तं चारित्र-

वर्द्धनकृता शिशुहितैषिणी टीका चास्ते स च सीतारामभट्टो लक्ष्मणात् सुहीरायां समजनि। असौ विक्रमस्याष्टादशशतके काशीपुरीमलञ्चकार। अनेन काव्य-पञ्चकस्य टीका, दशस्तोत्राणि, एकश्छन्दोग्रन्थः, काव्यद्वितयं टिप्पणीद्वयं च व्यरचिषत।

कुमारसंभवस्य नवमसर्गाद् ग्रन्थान्तं यावदवतरणी।

नवमे सर्गे—गौरीशङ्करयोः कैलाशगमनम्।

दशमे सर्गे—कुमारोत्पत्तिः।

एकादशे सर्गे—कुमारवर्णनम्।

द्वादशे सर्गे—"तारकाऽसुरं जही"ति शङ्करादेशस्य कुमारेण स्वीकरणम्।

त्रयोदशे सर्गे—कुमारस्य सुरसैनापत्याऽभिषेकः।

चतुर्दशे सर्ग—सुरसेनाप्रयाणम्।

पञ्चदशे सर्गे—सुराऽसुरसैन्यसंघट्टः।

षोडशे सर्गे—सुराऽसुरसैन्यानां भीषणरणवर्णनम्।

सप्तदशे सर्गे—तारकाऽसुरवधः।

कुमारसंभवकथाभागस्य मूलत उपजीव्यो ग्रन्थः शिवपुराणं, तस्य प्रथमखण्डस्य नवमाऽध्यायत ऊनविंशत्यध्यायपर्यन्तं प्रतिपाद्यं तारकाऽसुर-वधमाश्रित्य कालिदासेन महाकाव्यं निर्मितम्।

शिवपुराणस्य पद्यद्वयं कालिदासोऽनुचकार।

ते यथा—दिशः प्रसेदुः, पवनः सुखं ववौ, शङ्खं निदध्युर्गगनेचरास्तथा।
पपात मौलौ कुसुमाञ्जलिस्तदा, बभूव तज्जन्मदिनं सुखप्रदम्॥
( शिवपुराणम् )

'प्रसन्नदिक् पांसुविविक्तवातं, शङ्खस्वनाऽनन्तरपुष्पवृष्टि।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव॥'
( कुमारसंभवम् १–२३ )

'तां पार्वतीत्याभिजनाच्च नामतो जुहाव तद्बन्धुजनः स्वभावतः।
मात्रा निषिद्धा तपसे यदा तु सा ययावुमाख्यां भवभक्तिभाविनी॥'
( शिवपुराणम् )।

'तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव।
उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम॥'
( कुमारसंभवम् १–२६ )

संक्षिप्तं निदर्शनमेतत्।

एवं च कालिदासो बाल्मीकिरामायणस्य रामकथामाश्रित्य यथा रघुवंशं चकार, तथैव रामायणस्य सप्तत्रिंशसर्गे वर्णितं कुमारजननोदन्तमाधृत्य कुमारसंभवं निर्ममे। काव्यसंज्ञानाम्न द्वौ रामायणश्लोकौ मूलमिति ज्ञापितम् ज्ञापयति। इयं कौशिकोक्तिः—

'सुरसेनागणपतिं ततस्तममलद्युतिम्।
अभ्यषिञ्चन्सुरगणाः समेत्याऽग्निपुरोगमाः॥'

एष ते 'ते राम ! गङ्गाया विस्तरोऽभिहितो मया।
कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ॥'

कुमारगुप्तजन्मोपलक्ष्ये कुमारसम्भवस्य रचनाऽभवदिति केषां चित्कल्पनाशीलानां जल्पनम्।

महाकविकालिदास आर्यसंस्कृतेः परमभक्त आसीत् शृङ्गाररसबाहुल्येऽपि तस्य समस्तरचनाऽऽर्यादर्शस्य परिपालनोन्मुखी विलोक्यते।

सम्प्रति कुमारसंभवस्य सूक्तयो मनोहरपद्यानि च समासतः प्रस्तूयन्ते।

"एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः।" १–३
"क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसा सतीव।" १–१२
"अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे।" १–५२
"विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः॥" १–५९
"शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः॥" २–४०
"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥" २–५५
"प्रयोजनाऽपेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु॥" ३–१
"प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः॥" ३–२८
"आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति।" ३–४०
"न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम्।" ३–६३
"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते॥" ४–२६
शशिना सह याति कौमुदी, सह मेघेन तडित्प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि॥" ४–३३
"रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी।" ४–४४
"प्रियेषु सौभाग्यफला हि चारुता।" ५–१
"क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्।" ५–५
"न धर्मवृद्धेषु वयः समीक्ष्यते।" ५–१६
"शरीरमाद्यं खलु धर्मसाधनम्।" ५–३३
"न रत्नमन्विष्यति मृग्यते हि तत्।" ५–४५
"मनोरथानामगतिर्न विद्यते।" ५–६४
"अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्।" ५–७५
"न कामवृत्तिर्वचनीयमीक्षते।" ५–८२
"न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्।" ५–८३

| | |
|---|---|
| "क्लेशः फलेन हि पुनर्नवतां विधत्ते ।" | ५–८६ |
| "स्त्री पुमानित्यनास्थैषा, वृत्तं हि महितं सताम् ।" | ६–१२ |
| "क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ।" | ६–१३ |
| "प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ।" | ६–२० |
| "विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ।" | ६–२९ |
| "यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ।" | ६–५६ |
| "विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ।" | ६–६२ |
| "अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ।" | ६–७९ |
| "प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ।" | ६–८५ |
| "भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ।" | ६–८६ |
| "स्त्रीणां प्रियालोकफलो हि वेषः ।" | ७–२२ |
| "कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ।" | ७–९३ |
| "धिङ् महत्त्वमसतां हृतान्तरम् ।" | ८–५७ |
| "विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ।" | ८–६५ |
| "स्तोत्रं कस्य न तुष्टये ?" | १०–९ |
| "कार्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ।" | १०–२५ |
| "विपदा परिभूताः किं व्यवस्यन्ति विलम्बितुम् ।" ? | १०–३५ |
| "कं नाऽभिनन्दयत्येषा दृष्टा पीयूषवाहिनी ।" ? | १०–४८ |
| "रत्नाकरे युज्यत एव रत्नम् ।" | ११–११ |
| "पुत्रोत्सवे माद्यति का न हर्षात् ?" | ११–१७ |
| "प्रभुप्रसादो हि मुदे न कस्य ?" | १२–३२ |
| "भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं फलाविष्टमहोदयाय ।" | १२–४३ |
| "ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ?" | १२–३० |
| "युयुत्सुभिः किं समरे विलम्ब्यते ?" । | १५–४७ |
| "न कस्य वीर्याय वरस्य सङ्गतिः ?" | १५–५१ |

**कुमारसंभवस्य नायकादिविषयाः।** कुमारसंभवस्य नायकः कार्त्तिकेयः, प्रतिनायकस्तारकाऽसुरः । मिथो धनुराकर्षणादयोऽनुभावाः । धृत्यादयो व्यभिचारिभावाः । उत्साहः स्थायी भावः । वीररसोऽङ्गी । करुणादयोऽन्ये रसा अङ्गानि । रीतिः पाञ्चाली, प्रसादमाधुर्यौ मुख्यगुणौ ।

**कालिदास-प्रशस्तयः—**

"लिप्ता मधुद्रवेणासन् यस्य निर्विविशा गिरः ।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम् ॥" ( दण्डी ) ।

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥" ? (बाणभट्टः)

"कवयः कालिदासाद्याः, कवयो वयमप्यमी ।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥" (भट्टपादाः) ।

"अमृतेनेव संसिक्ताश्चन्दनेनेव चर्चिताः ।
चन्द्रांऽशुभिरिवोद्घृष्टाः कालिदासस्य सूक्तयः ॥"
(न्यायमञ्जर्यां जयन्तभट्टः) ।

"एकोऽपि जीयते हन्त ! कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ? ॥" (राजशेखरः) ।

"कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथ वा साक्षाद्विदुर्नाऽन्ये तु मादृशाः ॥" (मल्लिनाथः) ।

"भासो हासः, कविकुलगुरुः कालिदासो विलासः ।"
(प्रसन्नराघवे जयदेवः) ।

"साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतिलीलाकालिदासोक्ती ॥"
(आर्यासप्तशत्यां गोवर्द्धनाचार्यः) ।

"म्लायन्ति सकलाः कालिदासेनासन्नवर्तिना ।
गिरः कवीनां दीपेन मालतीकलिका इव ॥" (धनपालः) ।

"अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते । (आनन्दवर्द्धनाचार्यः) ।

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठकाऽधिष्ठितकालिदासा ।
अद्याऽपि तत्तुल्यकवेरभावादनामिका साऽर्थवती बभूव ॥"

"माहिषं दधि, सशर्करं पयः, कालिदासकविता नवं वयः ।
शारदेन्दुरबला च कोमला, स्वर्गशेषमुपभुञ्जते जनाः ॥"

"ख्यातः कृती योऽपि च कालिदासः शुद्धा सुधा स्वादुमती च यस्य ।
वाणीमिषाच्चन्द्रमरीचिगोत्र सिन्धोः— (सोड्ढलः) ।

"अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः ।
प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी ॥"
(श्रीकृष्णकविः) ।

"सुवशा कालिदासस्य मन्दाक्रान्ता प्रवल्गति ।
सदश्वदमकस्येव काम्बोजतुरगाऽङ्गना ॥"
(सुवृत्ततिलके क्षेमेन्द्रः) ।

"वयमपि कवयः कवयः कवयोऽपि च कालिदासाद्याः ।
दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा ! दृषदः ॥"
"वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यत्
यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम् ।
एकीभूतमभूतपूर्वमथ वा स्वर्लोकभूलोकयो-
रैश्वर्यं यदि वाञ्छसि प्रियसखे ! शाकुन्तलं सेव्यताम् ॥
गेटे ( Gothe ) पद्यम् ।

अनुवादकः म० म० वासुदेवविष्णुमिराशी:

## महाकवि कालिदास और उनका कुमारसंभव

विश्वमें प्रधान रूपसे परिगणित महाकवियोंमें महाकवि कालिदासका अद्वितीय स्थान है। साहित्यमें खण्डकाव्य, महाकाव्य और रूपक तीनों विधाओंमें उनका अप्रतिम स्थान है। सर्वसम्मत कालिदासकी रचनाएँ—

खण्डकाव्यमें—ऋतुसंहार और मेघदूत ।

महाकाव्यमें—कुमारसंभव और रघुवंश ।

रूपकमें—मालविकाग्निमित्र नाटक, अभिज्ञानशाकुन्तल नाटक, विक्रमोर्वशीय त्रोटक ।

कालिदास कब हुए ? इस प्रश्नमें पर्याप्त मतभेद हैं। भारतीय परम्पराके अनुसार संवत्सरस्थापक उज्जयिनीश्वर विक्रमादित्यके समयमें उनकी स्थिति मानी जाती है। वे आधुनिक व्यवहार के अनुसार खृष्टपूर्व ५७ वे वर्षमें हुए थे।



कालिदासका प्रकृत प्रवन्ध कुमारसंभव महाकाव्य १७ सर्गोका है। परन्तु उनमें आठ सर्गमात्र कालिदासकी अन्य रचनाओंके समान है, अतः मल्लिनाथ आदि प्राचीन टीकाकारोंने उतने भागकी ही टीका की है। अष्टम सर्गमें पार्वती और परमेश्वरकी संभोग क्रियाका उन्होंने प्रचुर रूपसे वर्णन किया है। संभवतः उनके समसामयिक विद्वानोंकी कटु आलोचनासे वा भगवतीके शापसे उन्होंने आगे नहीं लिखा। कुमार ( कार्त्तिकेय ) का संभव ( उत्पत्ति ) का वीजभुत गौरी और शङ्करका विवाह सप्तम सर्गमें हो गया है। परन्तु पीछेके किसी कविने महाकाव्यलक्षणके एक भाग "सर्गा अष्टाधिका इह" इसको पूर्ण करानेके लिए आगेके ९ सर्गोंको प्रक्षिप्त किया है।

दशमसर्गमें कुमारका संभव ( उत्पत्ति ) का वर्णन करके भी उसका फलभूत तारकासुरके वधको भी समाविष्ट करनेके लिए अवशिष्ट ७ सर्गके समष्टिरूप सप्तदश सर्गवाला कर दिया है नवमसर्गसे सप्तदशसर्गतककी रचना कालिदासकी अन्य रचनाके अनुरूप नहीं है। पादपूरणार्थक शब्द, उपसर्गकी वहुलतासे प्रयोग, यतिभङ्ग आदि अनेक दोषोंके कारण शेष भाग कालिदास-रचित नहीं हैं, ऐसा प्रतीत होता है।

विशेष विवरण संस्कृत भूमिकामें देखें। अव कालिदासके विषयमें एक किंवदन्तीका उल्लेख कर इसविषयका उपसंहार करते हैं।

शारदानन्दनामके किसी राजाकी विद्योत्तमा नामकी सुन्दरी और विदुषी कन्या थी उनका प्रण था जो शास्त्रार्थमें मुझे जीतेगा, उसीसे मैं विवाह करूँगी। उनके रूप और गुणोंसे आकृष्ट होकर वहुतसे पण्डित उनसे शास्त्रार्थ करने आए, परन्तु राजकुमारीसे सब परास्त हुए। तब पण्डितोंने उनका मानमर्दनके लिए किसी मूर्खके साथ उनकी शादी करानेके लिए षड्यन्त्र किया। मूर्खोंके अन्वेषणप्रसङ्गमें उन्होंने वृक्षकी शाखापर वैठकर उसको काटनेके लिए तत्पर एक मूर्खको देखा। उसको "हम एक सुन्दरी राजकुमारीसे तुम्हारा विवाह कराएँगे" कहकर "कुछ वोलना नहीं" ऐसा निर्देश कर उसको राजकुमारोंके पास ले गये। पण्डितोंने कहा कि" हम आपसे शास्त्रार्थ करनेके लिए हमारे गुरु उद्भटविद्वान्को ले आये हैं, परन्तु इन्होंने मौनव्रत लिया है, अतः सङ्केतसे शास्त्रार्थ होगा"। तब राजकुमारीने "ईश्वर एक है" इस अभिप्रायसे एक उंगली उठाई, मूर्ख समझा कि "यह मेरी एक आँख फोड़नेकी इशारा कर रही है" तब उसने "मैं तुम्हारी दो आँखोंको फोड़

दूंगा" इस आशयसे दो उङ्गलियाँ उठाईं। इसपर सङ्घबद्ध पण्डितोंके अनेक युक्तियोंसे राजकुमारीको हार मानना पड़ा। फलतः उस मूर्खके साथ राजकुमारीका विवाह हुआ। सुहागरातमें आधीरातमें एक ऊँटकी चिल्लाहटपर राजकुमारीने "यह क्या है ? ऐसा पूछा उस मूर्खने उच्चारणकी अनभिज्ञतासे "उट्र" ऐसा पद कहा, तब राजकुमारी पण्डितोंका शाठच समझकर फूट-फूटकर रोई और उसने मूर्खको अपमानपूर्वक बाहर निकाल दिया। अत्यन्त ग्लानिका अनुभव कर वह मूर्ख कालीमन्दिरमें जाकर अपनी गला काटनेपर उतारु हो गया। तब उसके पूर्व जन्मके पुण्यके परिपाकवश देवी कालीने "वर माँगो" कहा तब उसने "मुझे निरवद्य विद्या मिले" ऐसी प्रार्थना कर विद्याके साथ कालिदास नामसे विभूषित होकर राजकुमारीके पास पहुँच कर द्वार खोलनेके लिए प्रार्थना की। राजकुमारीने "अस्ति कश्चिद्वाग्विशेषः" अर्थात् कुछ विशेष वचन है ? ऐसा पूछा" तब कालिदासने "अस्ति" पदसे "अस्त्युत्तरस्यां दिशि देवतात्मा" ऐसे आदि चरणवाला कुमारसंभव, "कश्चित्" पदसे "कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः" ऐसे आदिचरणसे युक्त मेघदूत और "वाक्" पदसे "वागर्थाविव संपृक्तौ" ऐसे आद्यचरण वाला "रघुवंशकी रचना कर राजकुमारीके साथ सुखपूर्वक समययापन किया।

॥ श्रीः ॥

# कुमारसम्भवम्

## टीकाद्वयोपेतम्

### प्रथमः सर्गः

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि, कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीविनी व्याख्या तामद्योज्जीवयिष्यति ॥

तत्रभवान्कालिदासः कुमारसम्भवं काव्यं चिकीर्षुः 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इति शास्त्रात्काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी[1] वगाह्य[2] स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

मल्लि० टी०—अस्तीति ॥ उत्तरस्यां दिशि । अनेनास्य देवभूमित्वं सूच्यते । देवतात्माधिष्ठाता यस्य सः । एतेनास्य वक्ष्यमाणमेनकापरिणयपार्वतीजननादिचेतनव्यवहारयोग्यत्वसिद्धिः । हिमस्यालयः स्थानमिति हिमालयो नाम=हिमालय इति प्रसिद्धः । अधिको राजाधिराजः । 'राजाहःसखिभ्यष्टच्' । न गच्छन्तीति नगा अचलास्तेषामधिराजो नगाधिराजोऽस्ति । कथंभूतः । पूर्वापरौ=प्राच्यपश्चिमौ तोयनिधी = समुद्रौ वगाह्य=प्रविश्य । अतएव पृथिव्या भूमेर्मानं=हस्तादिना परिच्छेदः । भावे ल्युट् । तस्य दण्डः । यद्वा मीयतेऽनेनेति मानम् । करणे ल्युट् । स चासौ

१. वारिनिधि. २. विगाह्य.

दण्डश्च स इव स्थितः। आयामपरिच्छेदकदण्ड इव स्थित इत्यर्थः। पूर्वापरसागरावगाहित्वं चास्य हिमालयस्यास्त्येव। उक्तं च ब्रह्माण्डपुराणे—'कैलासो हिमवांश्चैव दक्षिणे वर्षवर्वतौ। पूर्वपश्चिमगावेतावर्णवान्तरुपस्थितौ ॥' अत्र हिमाचलस्याभ्राविश्यासि त्रान्म्यान्मानदण्डत्वेनोत्प्रेक्षणादुत्प्रेक्षाऽलंकारः। 'प्रकृतेऽप्रकृतगुणक्रियादिसम्बन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा' इत्यलंकारसर्वस्वकारः। अस्मिन्सर्गे प्रायेण वृत्तमुपजातिः। क्वचि दिन्द्रवज्रोपेन्द्रवज्रे च। तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ गः'। 'उपेन्द्रवज्रा जतजास्ततो गौ'। 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १ ॥

## चारित्रवर्धनमङ्गलाचरणम्

### ओंनमो भगवते श्रीजिनाय

तनोतु शान्तं पदमादिदेवः सनाभिजन्मा कमलालयो वः।
यदीयपादद्वयपद्मसेवाश्रिताः श्रयन्तेऽमितकामितानि ॥ १ ॥

शारदा शारदातिग्ममरीचिवदना मुदम्।
दद्याद्यस्य प्रसादेन कवयें जानतेऽखिलम् ॥ २ ॥

वन्दे गुरून् गुणगुरूनमितप्रभावान् भूतप्रभूततमकीर्तिसितीकृताशान्।
ये शिष्यजाड्यतिमिरप्रकरं प्रसह्य सज्ज्ञानदानमिहिरेण विनाशयन्ति ॥ ३ ॥

कुमारसंभवस्यार्थं यथामति तनोम्यहम्।
टीकामात्सर्यमुत्सार्य सैवादृत्या मनीषिभिः ॥ ४ ॥

यद्यथानेकशष्टीकाः सन्त्यत्र पटवो मम।
तथापि कुत्रचित्सैषा विशेषं ज्ञापयिष्यति ॥ ५ ॥

महाकाव्यकरणे यागभागभोक्तृत्वाद्विशिष्टदेवतारूपं नगाधिराजं काव्यमुख्यत्वेन सकलप्रवलकविचक्रचूडामणिमरीचिनीराजितचरणकमलकमलापतिपादारविन्दद्वन्द्वराजहंसः समस्तप्रशस्तकलाकलापनिवासः श्रीकालिदासः प्रतिबध्नाति। यथा—

चारित्र०—अस्त्युत्तरस्यामिति। सर्गबन्धत्वान्महार्थकत्वास्य महाकाव्यत्वम्। तदुक्तं दण्डिना। (सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्) इति व्यङ्ग्यप्रधानत्वादुत्तमत्वादुत्तमत्वं च। तथा च काव्यप्रकाशः। (इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः)। तत्रायमन्वयः। उत्तरस्यां कौवेर्यां दिशि हिमालयो नाम हिमालय इति प्रसिद्धो नगाधिराजः भूभृतां नाथोऽस्त्यद्यापि वर्तत इति। कीदृशः देवतात्मा। देव एव देवता। स्वार्थे तल्। देवता आत्मा स्वरूपं यस्य सः। पुनः कीदृशः। पूर्वपश्चिमौ तोयनिधी समुद्रौ विगाह्याक्रम्य पृथिव्या भुवो मानदण्ड इव प्रमाणदण्ड

इव स्थित इत्युत्प्रेक्षा। नगानां पर्वतानामधिराजः स्वामी पचाद्यच्। यद्वाधिको राजाधिराजः। यद्वा धरैश्वर्याधिकस्य राजाधिराजः। 'राजाहःसखिभ्यष्टच्'। देवतात्मेति पदेन केवलस्थावररूपप्रसिद्धिर्निरस्यते। शंभोस्तत्सुताग्रहणता च व्यज्यते। पूर्वापरावित्यादिना तस्य द्राघीयत्वं च द्योत्यते। तेन भुवो मानदण्डत्वेनावस्थितिः सूचिता 'नाम प्राकाश्यसम्भाव्यक्रोधापगमकुत्सने' इत्यमरः॥ १॥

इतः परं षोडशभिः श्लोकैर्हिमाद्रिं वर्णयति। तत्र नगाधिराजत्वं निर्वोढुमाह—

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम्॥ २॥

मल्लि०—यमिति॥ सर्वे च ते शैलाश्च सर्वशैलाः। 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति समासः। यं हिमालयं वत्सं परिकल्प्य विधाय दोहदक्षे दोहनसमर्थे मेरौ दोग्धरि स्थिते सति। 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। पृथूपदिष्टां पृथुना वैन्येनोपदिष्टामीदृक्तया प्रदर्शितां धरित्रीम्। गोरूपधरामिति शेषः। 'गौर्भूत्वा तु वसुन्धरा' इति विष्णुपुराणात्। 'अकथितं च' इति कर्मत्वम्। भास्वन्ति च भास्वत्यश्च भास्वन्ति द्युतिमन्ति। ओषधिविशेषणं चैतत्। 'नपुंसकमनपुंसकेन—' इत्यादिना नपुंसकैकशेषः। रत्नानि मणीञ्जातिश्रेष्ठवस्तूनि च। 'रत्नं श्रेष्ठे मणावपि' इति विश्वः। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते' इति यादवः। महौषधीश्च संजीवनीप्रभृतीश्च क्षीरत्वेन परिणता इति शेषः। 'ताः क्षीरपरिणामिनीः' इति विष्णुपुराणात्। दुदुहुः। 'दुहियाचि—'इत्यादिना द्विकर्मकत्वम्। अत्र प्रयोजकत्वेऽपि शैलानां 'पञ्चभिर्हलैः कर्षति ग्रामं ग्रामणीः' इतिवत्तत्समर्थाचरणात्कर्तृत्वेन व्यपदेशः। दुहेः स्वरितेत्त्वेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदम्। अत्रार्थे प्रमाणम्—गौर्भूमिरचलाः सर्वे कर्तारोऽत्र पयांसि च। ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च॥ वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः॥' इति। एतेन वत्सस्य मातुः प्रेमास्पदत्वादस्य सारग्राहित्वं गम्यते। तथा चास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्तमिति भावः। अत्र हिमवद्वर्णनस्य प्रकृतत्वात्तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रियारूपसमानधर्मसंबन्धादौपम्यस्य गम्यत्वात्केवलप्राकरणिकविषयस्तुल्ययोगिता नामालंकारः। तदुक्तम्—'प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥' न चात्र रूपकपरिणामाद्यलंकारशङ्का कार्या तेषामारोपहेतुत्वात्। हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति॥ २॥

चा०—यं सर्वेति ॥ सर्वशैला मन्दरादयो यं हिमवन्तं वत्सं परिकल्पयित्वा धरित्रीं वसुधां रत्नानि महौषधीश्च विशल्यादीर्दुदुहुर्दुग्धवन्तः । एवं सति दोहदक्षे । दोहनक्रियाचतुरे दोग्धरि मेरौ सुवर्णाचले स्थिते । किंभूतां धरित्रीम् । पृथुना नृपेणोपदिष्टा या ताम् । कीदृशानि रत्नानि । भास्वन्ति दीप्तिमन्ति दोग्धृत्वान्मेरोरिव कर्तृकत्वमुचितं । तथाप्येषामपि फलभागित्वात्कर्तृकत्वमुचितमेव । कर्त्रभिप्रायक्रियाफलस्याविवक्षितत्वादात्मनेपदार्थः । वत्सत्वेन हिमाद्रेः प्राधान्यम् । भास्वन्तीति नपुंसकैकविशषणेनौषधिविशेषणं दुदुहुरिति परोक्षे लिट्युस् दुहिर्द्विकर्मकः ।२।

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छ्वित्रिण इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

मल्लि०—अनन्तेति ॥ प्रभवत्यस्मादिति प्रभवः कारणम् । अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य यस्य हिमाद्रेर्हिमम् । कर्तृ । सुभगस्य भावः सौभाग्यम् । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । तद्विलुम्पतीति सौभाग्यविलोपि सौन्दर्यविघातकं न जातं नाभूत् । तथाहि । एको दोषो गुणसंनिपात इन्दोः किरणेष्वङ्क इव निमज्जति । अन्तर्लीयत इत्यर्थः । नहि स्वल्पो दोषोऽमितगुणाभिभावक एव किंतु कश्चिदिन्दुकलङ्कादिवद्गुणैरभिभूयते । अन्यथा सर्वरम्यवस्तुहानिप्रसङ्गादिति भावः । अत्रोपमानुप्राणितोऽर्थान्तरन्यासालंकारः । तल्लक्षणं तु—'ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥' इति दण्डी ॥ ३ ॥

चा०—अनन्तरत्नेति ॥ हिमं कर्तृ यस्य हिमवतः सौभाग्यविलोपि रामणीयकनाशकं न जातं कर्तरि क्तः । किंभूतस्य यस्यानन्तरत्नप्रभवस्यानन्तानां रत्नानां प्रभव उत्पत्तिस्थानं यस्तस्य । प्रभवत्यस्मादिति प्रभवः 'ऋदोरप्' इत्यप् । दोषालयस्य हिमस्य धारणं कथं न दोषायेत्यत आह । हि यत एको दोषो गुणानां सन्निपाते समूहे निमज्जति नश्यति । केषु क इव । इन्दोश्चन्द्रस्य किरणेषु करेषु अङ्क इव । अङ्कः कलङ्काभिज्ञानमित्यभिधानचिन्तामणिः । सौभाग्यमिति । हृद्भगेत्यादिनोभयपदवृद्धिः ॥ ३ ॥

यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ ४ ॥

मल्लि०—यश्चेति । किंचेति चकारार्थः । यो हिमाद्रिरप्सरसां विभ्रममण्डनानि विलासालंकरणानि । अथवा विभ्रमो विपरीतन्यासः । 'विभ्रमस्त्वरयाकाले भूषास्थानविपर्यये' इति दशरूपकात् । तेन मण्डनानि तेषां

संपादयित्रीम्। एतद्धातुरागदर्शिन्योऽप्सरसः संध्याभ्रमेण प्रसाधनाय त्वरयन्त इति भावः। तथात्वे भ्रान्तिमदलंकारो व्यज्यते। 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। वारीणां वाहका बलाहकाः पृषोदरादित्वात्साधुः। तेषां छेदेषु खण्डेषु विभक्तः संक्रमितो रागो यया ताम्। एतेनाद्रेरभ्रंकषत्वं गम्यते। इदं विशेषणद्वयं संध्यायामपि योज्यम्। धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान्। नित्ययोगे मतुप्। तस्य भावो धातुमत्ता ताम्। धातुयोगित्वमिति संबन्धोऽपि वाच्यार्थः। 'समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेन' इति वचनात्। लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः। अकालसंध्यामिवानियतकालप्राप्तसंध्यामिव शिखरैर्बिभर्ति धत्ते। अत्र संध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा॥ ४॥

चा०—यश्चेति॥ यो हिमवान् शृङ्गैः शिखरैर्धातुमत्तां प्रशस्तगैरिकादिमत्वं बिभर्ति धारयति। धातवोऽत्रारुणाः सिन्दूरादयो विवक्षितास्तद्युक्तम्। तां कीदृशीम्? अप्सरोविभ्रममण्डनानां संपादयित्रीं अप्सरसामुर्वशीप्रभृतीनां विभ्रममण्डनानि तिलकादीनि तेषां संपादयित्रीं कर्त्रीम्। केन विभ्रमो भ्रान्तिरिति व्याचक्षते। धातुमत्तां कामिवं। बलाहकच्छेदविभक्तरागां बलाहकानां मेघानां च्छेदाः शकलानि तेषु विभक्तो रोपितो रागोऽरुणिमा यया सा। तामकाले मध्याह्नेऽपि सन्ध्यायामेव रक्ता भवन्ति। धातुमत्ताव्याजेनारुणमेघावलोकनभावः। प्रशस्ता धातवो विद्यन्तेऽस्य धातुमान् प्रशंसायां मतुप्॥ ४॥

आमेखलं सञ्चरतां घनानां [1]छायामधः सानुगतां निषेव्य।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः॥ ५॥

मल्लि०—आमेखलमिति॥ सिद्धा अणिमादिसिद्धा देवयोनिविशेषाश्च। 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः'। इत्यमरः। आ मेखलाभ्य आमेखलं नितम्बपर्यन्तम्। 'मेखला खण्डबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति विश्वः। 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः। संचरतां घनानां मेघानामधः सानूनि मेघमण्डलादवस्तटानि गतां प्राप्ताम्। 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः। छायामनातपम्। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः'। इत्यमरः। निषेव्य वृष्टिभिरुद्वेजिताः=क्लेशिताः सन्तः। 'उद्वेगस्तिमिते क्लेशे भये मन्थरगामिनि' इति शब्दार्णवः। यस्य हिमाद्रेरातपवन्ति सातपानि शृङ्गाण्याश्रयन्ते। आश्रित्य स्थिता इत्यर्थः। अतिमेघमण्डलमस्योन्नत्यमिति भावः।

चा०—आमेखलमिति॥ सिद्धा यस्य हिमवतः शृङ्गाणि शिखराणि आश्रयन्ते भजन्ते। सिद्धिरणिमादिर्विद्यते येषां ते सिद्धाः। किं कृत्वा। अधःसानुगतां घनानां

---

१. छायामिषे सानुगताम्.

छायां निषेव्य सेवित्वा। किंभूतां छायाम्। आमेखलं संचरतां पर्वतमध्यमूलं मर्यादीकृत्याभिव्याप्य संचरताम्। कीदृशाः सिद्धाः। वृष्टिभिरुद्वेजिता उद्विग्नीकृताः किं भूतानि शृङ्गाणि। आतपवन्ति सघर्माणि। उद्वेजिता इत्यत्र 'विजइट्' इति ङित्वात्कथं गुणः। उच्यते ण्यन्तोयं णिच्यन्तरङ्गत्वात्प्रत्ययात्पूर्वं गुणः। आमेखलमिति 'आङ्मर्यादाभिविध्योः' इत्यनेनाव्ययीभावः।

टिप्पणी—अत्र सिद्धानां हिमालयशृङ्गाश्रयणे वृष्ट्युद्वेगस्य पदार्थस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम्। स्वभावोक्तिश्चेति द्वयोः संसृष्टिः॥ ५॥

पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम्।
विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः॥ ६॥

मल्लि०—पदमिति॥ यस्मिन्नद्रौ किरातास्तुषारस्रुतिभिर्हिमनिस्यन्दैर्धौतं क्षालितं रक्तं शोणितं यस्य तत्तथोक्तम् अतो दुर्ग्रहमिति भावः। हता द्विपा गजा यैस्तेषां हतद्विपानां केसरिणां सिंहानां पदं पादप्रक्षेपस्थानमदृष्ट्वापि नखरन्ध्रैर्नखद्रोणिभिर्मुक्तैर्मुक्ताफलैर्मार्गं विदन्ति जानन्ति। अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः। 'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि। मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि'॥ ६॥

चा०—पदमिति। यस्मिन्हिमवति किराताः शबराः हतद्विपानां मारितकरिणां सिंहानां मार्गं पन्थानं नखरन्ध्रमुक्तैर्नखानां करजानां रन्ध्राण्यन्तरालानि तेभ्यो मुक्तैस्स्खलितैर्मुक्ताफलैर्मौक्तिकैर्विदन्ति जानन्ति। किं कृत्वा। पदं चरणचिह्नमदृष्ट्वापि अनवलोक्यापि। किंभूतं पदं। तुषारस्य स्रुतिः स्रवणं तया धौतं प्रक्षालितं रक्तं रुधिरं यस्य तत्। भुवि विप्रकीर्णानि मौक्तिकानि वीक्ष्य किराता गजान् हत्वा सिंहा अनेन मार्गेण गता इति जानन्तीत्यर्थः। एतेन हिमाद्रिवासिनां सिंहानां पादाधिक्यं सूच्यते।

टिप्पणी—किरातानां केसरिमार्गज्ञानरूपकार्यस्य केसरिपदचिह्नरूपकारणाभावेऽप्युत्पत्त्या विभावनालङ्कारः। किरातानां केसरिमार्गज्ञानमुक्ताफलरूपहेतोः पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गञ्चेति द्वयोरङ्गाङ्गिभावेन साङ्कर्यम्॥ ६॥

न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम्॥ ७॥

मल्लि०—न्यस्ताक्षरा इति॥ यत्र हिमाद्रौ धातुरसेन सिन्दूरादिद्रवेण 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः। न्यस्ताक्षरा लिखितवर्णा अत एव कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः। 'पद्मकं बिन्दुजालकम्' इत्यमरः। त इव शोणा रक्तवर्णाः। लिखितभागेष्विति शेषः। भूर्जत्वचो भूर्जपत्त्रवल्कलानि। 'भूर्जपत्त्रो भुजो भूर्जो मृदुत्व-

क्वामिका अपि' इति यादवः। विद्याधरसुन्दरीणाम्। लिख्यन्ते येषु ते लेखाः पत्रिकाः। अनङ्गस्य लेखास्तेषां क्रियया। कामव्यञ्जकलेखकरणे-नेत्यर्थः। उपयोगमुपकारं व्रजन्ति। दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥ ७ ॥

चा०—न्यस्ताक्षरा इति ॥ यत्र यस्मिन् हिमाद्रौ भूर्जत्वचो भूर्जवृक्षवल्कलानि विद्याधरसुन्दरीणां विद्याधराङ्गनानाम् अनङ्गलेखक्रिययाऽनङ्गस्य मदनस्य लेखो लेखनं चित्ररूपेण निर्माणं तत्क्रियया तद्व्यापारेण उपयोगं प्रयोजनत्वं व्रजन्ति यान्ति। किंभूता भूर्जत्वचः। धातुरसेन धातूनां हरितालादीनां रसेन द्रवेण न्यस्ता-क्षरा न्यस्तानि निरूपितानि लिखितानीति यावत्। अक्षराणि वर्णाः यासु ताः। पुनः किंभूताः भूर्जत्वचः। कुञ्जरबिन्दुशोणाः कुञ्जराणां बिन्दवस्तद्वदरुणाः। गजानां नराणामिव दश दशा भवन्ति। तत्र पञ्चमी दशा पञ्चाशद्वर्षदेशीया भवति। तस्यां गजानां शरीरे रक्तबिन्दवो निर्गच्छन्तीति तच्छास्त्रविदा वदन्ति। यद्यपि धातुशब्देन गैरिकस्य विशेषोक्तिः। तथापि भूर्जत्वचः गैरिकस्य वर्णसाम्यादक्षराणामवाच्यत्व-प्रसङ्गात् हरितालादेरेवात्र ग्रहणम्।

टिप्पणी—भूर्जपत्रवल्कलानां विद्याधरसुन्दरीणामनङ्गलेखक्रियोपयोगे हेतु-भूतयोर्न्यस्ताक्षरकुञ्जरबिन्दुशोणपदार्थयोर्विशेषणविधयोक्तत्या पदार्थहेतुकं काव्य-लिङ्गमलङ्कारः लुप्तोपमा च ॥ ७ ॥

यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किंनराणां [1]तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

मल्लि०—य इति ॥ यो हिमाद्रिः दरी गुहा सैव मुखं तस्मादुत्थे-नोत्पन्नेन। 'आतश्चोपसर्गे' इति कप्रत्ययः। समीरणेन वायुना कीचका वेणुविशेषाः। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। तेषां रन्ध्रभागाञ्छिद्रप्रदेशान्पूरयन्धमयन्। वांशिकोऽपि वंशरन्ध्राणि मुखमारु-तेन पूरयतीति प्रसिद्धिः। उद्गास्यतां देवयोनित्वादुच्चैर्गान्धारग्रामेण गानं करिष्यताम्। उक्तं च नारदेन—'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः। न तु गान्धारनामानं स लभ्यो देवयोनिभिः।' इति किन्नराणां देवगायकानां तानप्रदायित्वम्। तानो नाम स्वरान्तरप्रवर्तको रागस्थिति-प्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः 'तान-स्त्वंशस्वरो मतः' इत्यभिनवगुप्तः। 'गाता यं यं स्वरं गच्छेत्तं तं वंशेन तान-येत्' इति भरतः। तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वमुपगन्तु-मिच्छतीवेत्युत्प्रेक्षा। सा च दरीमुखोत्थेनेत्येकदेशविवर्तिरूपकोज्जीविता।

---

1. स्थान।

सुखसाध्यत्वात्तानप्रदायित्वस्य। यत्रावयवरूपणादवयविरूपणं गम्यते तदेकदेशविवर्ति रूपकम्। गम्यते चात्रावयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्रावित्यलं बहुना ॥ ८ ॥

चा०—यः पूरयन्निति ॥ यो हिमवान् दरीमुखोत्थेन समीरणेन गुहामुखसमुद्भवेन वातेन कीचकरन्ध्रभागान् कीचकानां सच्छिद्रवंशानां रन्ध्रभागाः छिद्रप्रदेशास्तान् पूरयन् वादयन्। उद्गास्यतां गातुकामानां किन्नराणां स्थानप्रदायित्वं तत् प्रददातीति स्थानप्रदायी तस्य भावस्तत्त्वमुपगन्तुं प्राप्तुमिति वाञ्छति। यस्तु गातुमुपक्रमते तस्य पूर्वं वैणविको वेणुस्थानं ददाति। इह तु सच्छिद्रा वेणवो वायुपूरितरन्ध्राः शब्दायन्ते। तत्रोत्प्रेक्षा। 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः। पूरी आप्यायने तस्य शतरि रूपं। दरीमुखोत्थेनेत्युत्पूर्वात्तिष्ठतेः 'आतश्चोपसर्गे' इत्यनेन भावे कप्रत्यये 'उदःस्थास्तम्भोः पूर्वस्य' इति सस्य थः ॥ ८ ॥

कपोलकण्डूः[1] करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्।
यत्र स्नुतक्षीरतया प्रसूतः[2] सानूनि गन्धः[3] सुरभीकरोति ॥ ९ ॥

मल्लि०—कपोलेति ॥ यत्र हिमाद्रौ करिभिर्गजैः। कपोलकण्डूर्गण्डस्थलकण्डूर्विनेतुमपनेतुं विघट्टितानां घर्षितानां सरलद्रुमाणां संबन्धिस्नुतानि करिकपोलघर्षणात्क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता तया हेतुना प्रसूत उत्पन्नो गन्धः सानूनि सुरभीकरोति। एतेनास्य गजाकरत्वं गम्यते तथा च गजायुर्वेदे—'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः'। इति ॥ ९ ॥

चा०—कपोलेति ॥ यत्र सरलद्रुमाणां देवदारूणां स्नुतक्षीरतया गलितदुग्धत्वेन प्रसूतो व्यक्तीकृतो गन्धः सौरभ्यं सानूनि शिखराणि सुरभीकरोति सुगन्धीनि करोति। किंभूतानां करिभिर्गजैः कपोलकण्डूर्गण्डस्थलखर्जूर्विनेतुं विघट्टितानां वायुवशाद्गन्धस्य सानुषु सुगन्धीकरणम्। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः।

टिप्पणी—अत्र यथावद्वस्तुवर्णनात्स्वभावोक्तिरलङ्कारः ॥ ९ ॥

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥

मल्लि०—वनेचराणामिति ॥ यत्र हिमाद्रौ रजन्यां दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासां ता ओषधयस्तृणज्योतींषि। 'अगनात्रोषधीषु च तेजो निधाय रविरस्तं याति' इत्यागमः। वनितानां सखायो वनितासखाः। 'राजाहः सखिभ्यष्टच्'। तेषाम्। रममाणानामित्यर्थः। वने चरन्तीति वनेचराः किराताः।

---

१. कण्डूम्. २. समीरः. ३. गन्धैः.

'चरेष्टः' इति टप्रत्ययः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। तेषां वनेचराणाम्। अतैलपूराः। अनपेक्षिततैलसेका इत्यर्थः। सुरतकर्मणि प्रदीपा भवन्ति। अत्रौषधीष्वारोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात्परिणामालंकारः। तदुक्तम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति। तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः॥ १०॥

चा०—वनेचराणामिति। यत्रादौ रजन्यां रात्रौ वनिताः सखायो येषां ते वनितासखाः तेषाम्। "राजाहस्सखिभ्यष्टच्" इति टच्। स्त्रीसहितानां वनेचराणां पुलिन्दादीनां ओषधयः सुरतप्रदीपा भवन्ति। कीदृशाः। अतैलपूरास्तैलेन पूर्यन्त इति तैलपूरास्ततो नञ्। प्रसिद्धदीपेभ्यो विशेषाः। कीदृश्य ओषधयः। दरीगृहोत्सङ्गनिषक्तभासः। दर्य एव गुहा एव गृहास्तेषामुत्सङ्गे निषक्ताः प्रविष्टा भासो यासां ताः॥ १०॥

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र।
न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः॥ ११॥

मल्लि०—उद्वेजयतीति॥ यत्र हिमाद्रौ। शिलीभूतं घनीभूतं हिमं यत्र तस्मिन्। अत एवाङ्गुलीनां पार्ष्णीनां च भागान्प्रदेशानुद्वेजयत्यति-क्लेशयत्यपि मार्गे। श्रोणयश्च पयोधराश्च श्रोणिपयोधरम्। दुर्वहेण दुर्धरेण श्रोणिपयोधरेणार्ताः पीडिताः। आङ्पूर्वादृच्छतेः क्तः। 'उपसर्गादृति धातौ' इति वृद्धिः। अश्वानां मुखानीव मुखानि यासां ता अश्वमुख्यः किंनरस्त्रियः। उष्ट्रमुखवत्समासः। 'स्यात्किंनरः किंपुरुषस्तुरंगवदनो मयुः'॥ इत्यमरः। मन्दां मन्थरां गतिं न भिन्दन्ति। न त्यजन्तीत्यर्थः। पादपीडाकरेऽप्यतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यत इति भावः॥

चा०—उद्वेजयतीति। यत्र गिरौ अश्वमुख्यः किन्नरयोषितो मन्दां मन्थरां गतिं न भिन्दन्ति न मुञ्चन्ति। क्व सति। शिलीभूतहिमेपि मार्गे पथि अङ्गुलिपार्ष्णिभागान् चरणपाश्चात्यप्रदेशान् उद्वेजयत्यपि पीडयत्यपि सति। अशिला शिलाभूतं हिमं यत्रेत्यभूततद्भावः। किंभूता अश्वमुख्यः। दुर्वहश्रोणिपयोधरार्ताः। श्रोणिश्च पयोधरौ च श्रोणिपयोधरं। प्राण्यङ्गादेकवद्भावः। अतिपीनत्वाद्दुर्वहेन सोढुमशक्येन जघनस्तनेन ऋताः प्राप्ताः। ऋता इति "ऋते च तृतीया समासे" इति वृद्धिः। यद्वा आर्ताः पीडिताः।

टिप्पणी—अश्वमुखीनां मन्दगत्यत्यागे दुर्वहश्रोणिपयोधरार्तत्वरूपहेतोः विशेषणविधयोक्त्या पदार्थहेतुककाव्यलिङ्गम्॥ ११॥

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव॥ १२॥

मल्लि०—दिवाकरादिति ॥ यो हिमाद्रिर्दिवा दिवसे भीतं भयाविष्टमिव। उलूकमिवेति च ध्वनिः। गुहासु लीनमन्धकारं ध्वान्तम्। दिवा दिनं करोतीति दिवाकरस्तस्माद्दिवाकरात्। 'दिवाविभानिशाप्रभाभास्करे-'त्यादिना टप्रत्ययः। 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी। रक्षति त्रायते। ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्‌क्याह—क्षुद्र इति। उच्चैःशिरसामुन्नतानां शरणं प्रपन्ने शरणागते क्षुद्रे नीचेऽपि सति सज्जन इव नूनं ममत्वं ममायमित्यभिमानः। अस्तीति शेषः। ममशब्दात्त्वप्रत्ययः। अर्थान्तरन्यासोऽलङ्कारः ॥ १२ ॥

चा०—दिवाकरादिति। योऽद्रिर्गुहासु लीनं संश्लिष्टं दिवापि दिनेपि अन्धकारं रक्षति। अन्धकारं कमिव। दिवाकराद्रवेर्भीतमिव त्रस्तमिव। यद्यपि भीतस्य शरणमुचितं तदसत्त्राणे को गुण इत्यत आह। नूनं निश्चितं क्षुद्रेपि क्रूरेपि शरणं रक्षितारं प्रपन्ने प्राप्ते उच्चैःशिरसामुन्नतानां सतीव साधाविव ममत्वमात्मीयत्वं भवति। महान्तः शरणागतेषु सदसद्भावं न चिन्तयन्तीत्यर्थः। मम भावो ममत्वं, ममेति विभक्तिकरूपको निपातः। 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ १२ ॥

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्र[2]मरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति वालव्यजनैश्चमर्यः ॥ १३ ॥

मल्लि०—लाङ्गूलेति ॥ चमर्यो मृगीविशेषा इतस्ततो लाङ्गूलानि वालधयः। 'पुच्छोऽस्त्री लोमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः। तेषां विक्षेपैर्विधूननैर्विसर्पिण्यो विसृमराः शोभाः कान्तयो येषां तैश्चन्द्रमरीचिभिरिव गौरैः शुभ्रैः। 'गौरः करीरे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च' इति यादवः। 'उपमानानि सामान्यवचनैः' इति समासः। वालव्यजनैश्चामरैर्यस्य हिमाद्रेर्गिरिराजशब्दं 'गिरिराज इति संज्ञामर्थयुक्तमभिधेयवन्तं कुर्वन्ति। राजानो हि छत्रचामरादिचिह्निता इति भावः ॥ १३ ॥

चा०—लाङ्गूलेति। चमर्यो मृगविशेषा वालव्यजनैश्चामरैर्यस्य हिमवतो गिरिराजशब्दं गिरीणां राजा गिरिराजः। "राजाहःसखिभ्यष्टच्" इति टच्। तस्य शब्दस्तं गिरिराजेतिश्रुतमर्थयुक्तं सार्थकं कुर्वन्ति राज्ञां हि चामरवीजनं चिह्नम्। कीदृशैरितस्ततः सर्वतो लाङ्गूलस्य पुच्छस्य विक्षेपस्य चालनं तेन विसर्पिणी प्रसरणशीला शोभा येषां तैः। पुनः कीदृशैश्चान्द्रमरीचिगौरैः चन्द्रादागताश्चान्द्रास्तत आगत इत्यण्। चान्द्रा ये मरीचयस्तद्वद्गौरैः। अज गतिक्षेपणयोरित्यस्य विपूर्वस्य व्यजनशब्दः।

टिप्पणी—अत्र लुप्तोपमापदार्थहेतुककाव्यलिङ्गयोः संसृष्टिः ॥ १३ ॥

---

१. सतीव. २. चान्द्र.

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वार[1] विलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥

मल्लि०—यत्रेति ॥ यत्र हिमाद्रौ। अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां किंपुरुषाङ्गनानां किंनरस्त्रीणां यदृच्छया दैवगत्या दरीगृहद्वारेषु विलम्बिबिम्बा लम्बमानमण्डला जलदास्तिरस्करिण्यो जवनिका भवन्ति। 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः। 'तिरसोऽन्यतरस्याम्' इति सत्वम्। अत्र जलदेष्वारोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालङ्कारः॥ १४ ॥

चा०—यत्रेति। यत्राद्रौ यदृच्छया जलदाः किंपुरुषाङ्गनानां तिरस्करिण्यो जवनिका भवन्ति। कीदृशा जलदाः। दर्य एव गुहा एव गृहाणि तेषां द्वारे विलम्बिनो बिम्बा मण्डलानि येषाम्। किंभूतानां किंपुरुषाङ्गनानां। अंशुकाक्षेपो वस्त्रापहरणं तेन विलज्जितानां। 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः। 'तिरसोन्यतरस्याम्' इति सकारादेशः॥ १४ ॥

भागीरथीनिर्झरसीकाराणां वोढा मुहुः कम्पितदेवदारुः।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः॥ १५ ॥

मल्लि०—भागीरथीति। भागीरथीनिर्झरसीकराणां गङ्गाप्रवाहपाथःकणानाम्। कर्मणि षष्ठी। वोढा प्रापकः। वहेस्तृच्। मुहुः पुनः पुनः सद्यो वा। 'पौनः पुन्ये भृशार्थे च सद्यो वा स्यान्मुहुः पदम्' इति वैजयन्ती। कम्पिता देवदारवो येन स तथोक्तः। भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः। क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि। यस्य हिमाद्रेर्वायुः। अन्विष्टमृगैर्मार्गितमृगैः। श्रान्तैरिति भावः। 'अन्विष्टं मार्गितं मृगितम्' इत्यमरः। किरातैरासेव्यते॥ १५ ॥

चा०—भागीरथीति। किरातैः शबरैर्यद्वायुर्यस्य पर्वतस्य वात आसेव्यते समन्तादाश्रीयते। किं भूतैः किरातैरन्विष्टमृगैः। अन्विष्टा अनुगता यैस्तैः। अन्विष्टमृगैरिति श्रान्तत्वं ध्वन्यते। अतो वायोराश्रयणत्वमुचितम्। शीतलं सुगन्धं मन्दं त्रिविधं वायुं वर्णयन्ति। कवय इति। तद्दर्शयितुमाह। कीदृशो वयुर्भागीरथ्या गङ्गाया निर्झरस्तस्य शीकरा अम्बु कणास्तेषां वोढा वाहकः। एतेन शैत्यमुक्तम्। पुनः कीदृशः। मुहुः कम्पितदेवदारुः। मुहुरसकृत् कम्पिताश्चालिता देवदारवो येन सः सौरभ्योक्तिः। पुनः कीदृशः। भिन्नशिखण्डिबर्हः भिन्नानि विरलीकृतानि शिखण्डिनां मयूराणां बर्हाणि पुच्छानि येन सः। मन्दोक्तिः।

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः॥ १५ ॥

---

१. द्वारि.

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥

मल्लि०—सप्तर्षीति ॥ सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । तेषां हस्तैरवचितेभ्यो लूनेभ्योऽवशेषाण्यवशिष्टानि । 'शेषाऽप्रधानसंतापे त्रिष्वन्यत्रोपयुज्यते' इति केशवः । कर्मण्यण्प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । यस्य हिमाद्रेः रोहन्तीति रुहाणि । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । अग्र उपरि यानि सरांसि तेषु रुहाणि पद्मान्यधः परिवर्तमानो भ्रमन्विवस्वान्सूर्य ऊर्ध्वमुखैर्मयूखैः प्रबोधयति विकासयति । न कदाचिदधोमुखैः । अतिमार्तण्डमण्डलत्वादग्रभूमेरिति भावः । सप्तर्षिमण्डलं ध्रुवादप्यूर्ध्वमिति ज्यौतिषिकाः । अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥ १६ ॥

चा०—सप्तर्षीति ॥ यस्याद्रेरधो नितम्बप्रदेशे विवर्तमानो भ्रमन् विवस्वान् सूर्यः ऊर्ध्वमुखैरूर्ध्वगामिभिर्मयूखैः किरणैः पद्मानि कमलानि प्रबोधयति विकासयति । कीदृशानि कमलानि । पुनः कीदृशानि । सप्तर्षिहस्तावचितावशेषाणि सप्तर्षीणां मरीच्यादीनां हस्तैस्त्रोटितानि तेभ्योवशेषाणि उद्धरितानि । केचिदवचितावित्यत्र पदभङ्गं कुर्वन्ति । तत्र 'चर्मणि द्वीपिनं हन्ति' इतिवन्निमित्तसप्तमी । अशेषाणि समस्तानि । ( मुकुलैर्नार्चयेद्देवं विना कमलकुड्मलैः ) इति विशेषश्रवणान्न दोषः । पद्मानीति पद्मसङ्ख्यानीति केचित् ।

टिप्पणी—अत्रोदात्तालङ्कारः ॥ १६ ॥

यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥

मल्लि०—यज्ञाङ्गेति ॥ यस्य हिमाद्रेर्यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवस्तस्य भावस्तत्त्वम् । 'यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः' इति विष्णुपुराणात् । धरित्रीधरणक्षमं भूभारधरणयोग्यं सारं बलं च । 'सारो बले स्थिरांशे च' इत्यमरः । अवेक्ष्य ज्ञात्वा प्रजापतिः स्वयमेव कल्पितो यज्ञभागो यस्मिंस्तत्तथोक्तम् । 'सोमस्य राज्ञः कुरङ्ग इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती' इति श्रुतेरिति भावः । शैलानामाधिपत्यमधिपतित्वम् । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्ययः । अन्वतिष्ठत् । ददाति स्मेत्यर्थः । उक्तं च ब्रह्माण्डपुराणे—'शैलानां हिमवन्तं च नदीनां चैव सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः' इति ॥ १७ ॥

---

१. आचरित.

चा०—यज्ञाङ्गेति । प्रजापतिर्ब्रह्मा यस्य शैलाधिपत्यं पर्वताधिपत्वं स्वयमात्मनैवान्वतिष्ठत्कृतवानित्यर्थः । किं कृत्वा । यज्ञाङ्गयोनित्वं यज्ञाङ्गानां सोमलतादीनां योनिराकरस्तस्य भावस्तत्त्वं धरित्रीधरणक्षमं पृथ्वीधारणसमर्थं सारं चावेक्ष्य । किंभूतं शैलाधिपत्यं ? कल्पितयज्ञभागं कल्पितो दत्तो यज्ञभागो यज्ञांशो यत्र तत् स्वयंभूरस्याभिषेकं कृतवानित्यर्थः ।

टिप्पणी—हिमालयस्य प्रजापतिकर्तृकशैलाधिपत्यदाने यज्ञाङ्गयोनित्वस्य भूधारणयोग्यबलस्य च निरीक्षणं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ॥ १७ ॥

संप्रति कथां प्रस्तौति—

**स मानसीं मेरुसखः पितृणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥ १८ ॥**

मल्लि०—स इति ॥ मेरोः सखा मेरुसखः । बन्धुसंपन्न इति भावः । स्थितिज्ञो मर्यादाभिज्ञः । अनेन श्रुतसंपत्तिः सूच्यते । स हिमवान्पितृणां मानसीं मनःसंकल्पजन्यां मुनीनामपि माननीयाम् । योगिब्रह्मवादिभ्यां पूज्यामित्यर्थः । उक्तं च विष्णुपुराणे—'तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा । ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज ॥' इति । आत्मानुरूपां कुलशीलसौन्दर्यादिभिः सदृशीं मेनां मेनकादेवीति नामवतीं कन्यां कुलस्य स्थितये प्रतिष्ठायै विधिना यथाशास्त्रेणोपयेमे परिणीतवान् । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् । 'तेषां तु मानसी कन्या मेना नाम महागिरेः । पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते ॥' इति ब्रह्माण्डपुराणात् ॥ १८ ॥

सम्प्रति कथां प्रस्तौति—

चा०—अन्त्यकुलकं, स मानसीमिति । स हिमवान् कुलस्य स्थितये वंशस्याविच्छेदाय मानसी मनसः पितृभिः सृष्टां मेनां मेनानाम्नीं कन्यां विधिना वेदोक्तप्रकारेणोपयेमे विवाहितवान् । किंभूतां मेनां, मुनीनामपि माननीयां पूज्याम् । पुनः कीदृशीं । आत्मानुरूपां कुलशीलादिभिः स्वसदृशीम् । किंभूतः स । मेरुसखः । पुनः कीदृशः । स्थितिज्ञः स्थितिर्लोकाचारस्तां जानातीति तादृशः । मेरोरपि पितृकन्यापरिणयात्सख्यम् उपयेम इति । 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् ।

टिप्पणी—हिमालयस्य मेनापाणिग्रहणे कुलस्थितिरूपपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ॥ १८ ॥

**कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।**
**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥**

मल्लि०—कालक्रमेणेति ॥ अथ कालक्रमेण । गच्छता कालेनेत्यर्थः । तयोर्मेनकाहिमवतोः स्वरूपयोग्ये सौन्दर्यानुगुणे । यद्वा रूप्यते निश्चीयतेऽ-

नेनेति रूपं ज्ञानं तद्योग्ये । शास्त्रानुसारिणीत्यर्थः । सुरतप्रसङ्गे सुरतकर्मणि प्रवृत्ते सति मनोरमं यौवनमुद्वहन्त्या भूधरराजपत्न्या मेनकाया गर्भोऽभवत् ॥ १९ ॥

चा०—कालक्रमेणेति । अनन्तरं मनोरमं रुचिरं यौवनमुद्वहन्त्या धारयन्त्या भूधरराजपत्न्या हिमवत्स्त्रिया गर्भोऽभवत् । क्व सति । कालक्रमेण स्वरूपयोग्ये निजसदृशे सुरतप्रसङ्गे प्रवृत्ते याते सति ।

टिप्पणी—मेनाया गर्भधारणे सुरतप्रसङ्गो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् । अथ च, सुरतप्रसङ्गे सति गर्भो भवतीति स्वभावसिद्धमिति स्वभावोक्तिर्वा ॥ १९ ॥

असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥

मल्लि०—असूतेति । सा मेना नागवधूपभोग्यम् । नागकन्यापरिणेतारमित्यर्थः । अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम् । सख्यमूलं सूचयति—पक्षच्छिदि पक्षच्छेत्तरि । 'सत्सूद्विषे—'त्यादिना क्विप्प्रत्ययः । वृत्रशत्रौ क्रुद्धे कुपिते सत्यपि कुलिशक्षतानां वज्रप्रहाराणाम् । संबन्धसामान्ये षष्ठी । जानातीति ज्ञः । 'इगुपधज्ञा—' इति कप्रत्ययः । वेदनानां ज्ञः । अथवा वेदनां जानातीति वेदनाज्ञः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । 'उपपदमतिङ्' इति समासः । स न भवतीत्यवेदनाज्ञस्तम् । कुलिशक्षतवेदनानभिज्ञमित्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । पक्षच्छेदोद्यतशक्रात्त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः । मैनाकं पुत्रमसूत । सर्वपर्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः । तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम् । 'पिता न ज्ञायते यस्या भ्राता यदि न विद्यते । नोपयच्छेत्तु तां कन्यां धर्मलोपभयात्सुधीः ।' इत्यभ्रातृकन्यापरिणयनिषेधात्प्रकृते पार्वती भ्रातृमत्येवेति सूचनार्थं मैनाकपर्वतमिति तात्पर्यार्थः ॥ २० ॥

चा०—असूतेति । सा मेना मैनाकं मैनाकनामानं सुतमसूत अजीजनत् । कीदृशं अम्भोनिधिबद्धसख्यम् अम्भोनिधिना समुद्रेण बद्धं कृतं सख्यं मित्रत्वं येन तम् । तथाऽत एव नागवधूपभोग्यं सर्पाङ्गनाभिरुपभोगार्हम् । पुनः कीदृशं ? पक्षच्छिदि पक्षान् च्छिनत्तीति पक्षच्छित्तादृशे वृत्रशत्रौ शक्रे क्रुद्धेऽपि सति कुलिशक्षतानां वज्रप्रहाराणामवेदनाज्ञं पीडानभिज्ञम् । पूर्वं किल सपक्षाः पर्वता अभवन्, तेषां क्रुद्धः शक्रः पक्षानच्छैत्सीत् । मैनाकस्य तु न चिच्छेदेतिपुराणप्रसिद्धिः । असूतेति षूङ् प्राणिगर्भविमोचन इत्यदादौ लङ् ।

टिप्पणी—अत्र मैनाकस्य यथार्थवर्णनादुदात्तालङ्कारः पक्षच्छेतुः सद्भावेऽपि मैनाकस्य पक्षाच्छेदाद्विशेषोक्तिर्वा ॥ २० ॥

अथावमानेन[1] पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥

मल्लि०—अथेति ।। अथ मेनाकजननानन्तरं दक्षस्य प्रजापतेः कन्या भवस्य महादेवस्य पूर्वपत्नी पूर्वभार्या सती पतिव्रता । 'सती साध्वी पतिव्रता' इत्यमरः । सती नाम देवी । पितुर्दक्षस्य । कर्तरि षष्ठी । अवमानेन स्वभर्त्रवज्ञया प्रयुक्ता प्रेरिता योगेन योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती । जन्मने पुनरुद्भवाय तां शैलवधूं मेनकां प्रपेदे । अतःपुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्रवज्ञामसहमाना पितरं प्रसूं चोपेक्ष्य मत्कर्तव्यकार्यं त्वज्जामातैव करिष्यतीति निर्धार्य देवकार्याणि साधयितुं च योगाग्निना स्वशरीरं ददाहेति पुरावृत्तकथानुसंधेया ।। २१ ।।

चा०—अथापमानेनेति । अथानन्तरं मैनाकजन्मानन्तरं दक्षस्य प्रजापतेः कन्या सती नाम्नी जन्मने जन्मार्थं मेनां प्रपेदे प्राप । किंभूता । भवपूर्वपत्नी । भवस्य महादेवस्यादिपत्नी । पुनः कीदृशी । पितुरपमानेन प्रयुक्ता प्रेरिता । अत एव योगविसृष्टदेहा योगेन ध्यानेन विसृष्टस्त्यक्तो देहः शरीरं यया सा । पुरा किल दक्षो यज्ञोत्सवे सत्रिणो जामातॄन् सर्वान्निमन्त्रयामास । नच शंभुमिति रुष्टा सती देहं त्यक्त्वा मेनागर्भे ययाविति पुराणप्रसिद्धिः । प्रपेदे इति पदगताविरत्यस्य कर्तरि परोक्षे लिट् ।

टिप्पणी—सती सतीत्यत्र स्वरव्यञ्जनसमुदायस्य तेनैव क्रमेणावृत्त्या यमकालङ्कारः । पार्वत्याः शैलवधूप्राप्तौ जन्मनो हेतुभूतस्य पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गञ्चेति द्वयोः संसृष्टिः ।। २१ ।।

सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन संपत् ॥ २२ ॥

मल्लि०—सेति ।। भव्या कल्याणी सा सती भूधराणामधिपेन हिमवता समाधिमत्यां नियमवत्यां तस्यां मेनकायां सम्यक्प्रयोगात्साध्वाचरणाद्धेतोरपरिक्षतायामभ्रष्टायां नीतावुत्साहगुणेनोत्साहशक्त्या । कर्त्रा । संपदिवोदपाद्युत्पादिता । उत्पद्यतेर्ण्यन्तात्कर्मणि लुङ् । 'चिण्भावकर्मणोः' इति चिण्प्रत्ययः । 'चिणो लुक्' इति तस्य लुक् ।। २२ ।।

चा०—सेति ।। भूधराणामधिपेन पर्वतानां स्वामिना हिमवता तस्यां मेनायां भव्या रम्या सा सती उदपादि उत्पादिता । किंभूतायां तस्यां, समाधिमत्यां समाधिः सन्तत्यर्थे नियमविशेषस्तद्युक्तायाम् । केन कस्यां केव । सम्यक् प्रयोगात् यथा शास्त्रोक्तव्यवहारपरिक्षतायामलुप्तायां नीतौ नये उत्साहगुणेनोद्यमगुणेन संपदिव संपत्तिरिव । उदपादीति ण्यन्तात्कर्मणि लुङ् ।। २२ ।।

---

1. अपमानेन·

प्रसन्नदिक्पांसुविविक्तवातं [1]शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजंगमानां सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

मल्लि०—प्रसन्नेति ॥ प्रसन्ना निर्मला दिशो यस्मिंस्तत्प्रसन्नदिक् । पांसुविविक्ता रजोरहिता वाता यस्मिंस्तत्तथोक्तम् । शङ्खस्य स्वनात्स्वनस्यानन्तरं पुष्पवृष्टिर्यस्मिंस्तत्तथोक्तं तस्याः पार्वत्या जन्मदिनम् । स्थितिशीलाः स्थावरा शैलवृक्षादयः । 'स्थेशभासपिसकसो वरच्' इति वरच्प्रत्ययः । जंगम्यन्ते भृशं गच्छन्तीति जंगमा देवतिर्यङ्मनुष्यादयः । स्थावराश्च जङ्गमाश्च तेषां द्वयानामपि शरीरिणां सुखायानन्दाय बभूव ॥२३॥

चा०—प्रसन्नेति ॥ तज्जन्मदिवसः स्थावरजङ्गमानां स्थावरा वृक्षादयो जङ्गमा नरादयस्तेषां शरीरिणां प्राणिनां सुखाय बभूव । कीदृशं जन्मदिनं । प्रसन्नदिक् प्रसन्ना निर्मला दिशो यत्र तत् । पांसुविविक्तवातं पांसुभिर्धूलिभिर्विविक्तो विरहितो वातो यत्र तत् । पुनः कीदृशं शङ्खस्वनानन्तरम् । शङ्खशब्दानन्तरं पश्चात्पुष्पवृष्टिर्यत्र तत् ।

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ २३ ॥

तया दुहित्रा सुतरां सवित्री[2] स्फुरत्प्रभामण्डलया चकासे ।
[3]विदूरभूमिर्नवमेघशब्दा[4]दुद्भिन्नया रत्नशलाकयैव ॥ २४ ॥

मल्लि०—तयेति ॥ स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री जनयित्री । 'स्वरतिसूतिसूयतिधूञूदितो वा' इतीडागमः । विदूरस्याद्रेः प्रान्तभूमिर्विदूरभूमिः । 'अवदूरं विदूरस्य गिरेरुत्तुङ्गरोधसः । काकतालीयसीमान्ते मणोलाभाकरो भवेत् ॥' इति बुद्धः । नवमेघशब्दादुद्भिन्नया रत्नशलाकया रत्नाङ्कुरेव सुतरां चकासे रराज ॥ २४ ॥

चा०—तयेति । स्फुरत्प्रभामण्डलया स्फुरल्लसत्प्रभामण्डलं यस्याः सा तया । दुहित्रा पुत्र्या सवित्री जननी सुतरां भृशं चकासे शुशुभे । कया केव । नवमेघशब्दादुर्गजितादुद्भिन्नया भूमिं विदार्य तिर्यगा तया रत्नशलाकया मणिशून्या विदूरभूमिरिव विदूराख्याद्रेर्भूमिरिव ।

टिप्पणी—नीतावुत्साहगुणेन सम्पदिव सोत्पादीत्युपमानोपमेयभावादुपमालङ्कारः ॥ २४ ॥

दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥

मल्लि०—दिन इति ॥ लब्ध उदयो यया सा लब्धोदया । उत्पन्नेत्यर्थः । अभ्युदितेत्यन्यत्र दिने दिने प्रतिदिनम् । 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः । परिवर्धमाना । उभयत्र समानमेतत् । सा बाला ।

---

१. तूर्य. २. धरित्री. ३. वैदूर्यभूमिः. ४. नादात्.

चन्द्रमस इयं चान्द्रमसी लेखेव लावण्यमयान्कान्तिविशेषप्रचुरान्। 'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इति भूपालः। विशेषानवयवान्। 'विशेषाऽवयवे व्यक्तौ' इत्युत्पलमालायाम्। ज्योत्स्नायामन्तरमन्तर्धानं येषां तानि ज्योत्स्नान्तराणि ज्योत्स्नायान्तर्हितानि। तन्मयानीति यावत्। अन्याः कलाः कलान्तराणीव सुप्सुपेति समासः। स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् इति शाश्वतः। पुपोषोपचितवती। इयं वाक्योपमेत्याह दण्डी। तल्लक्षणं तु—'वाक्यार्थे नैव वाक्यार्थः कोऽपि यद्युपमीयते। एकानेकेव शब्दत्वात् सा तु वाक्योपमा द्विधा ॥' इति ॥ २५ ॥

चा०—दिन इति। लब्धोदया लब्धः प्राप्त उदयो जन्म यया सा दिने दिने प्रतिदिनं वर्धमाना चान्द्रमसी चान्द्री लेखेव लावण्यमयान् विशेषान् पुपोष शरीरावस्थान्तराणि पुष्टवती। विशेषात्कानिव। ज्योत्स्नान्तराणि ज्योत्स्ना अन्तरे येषां। यद्वा ज्योत्स्नाभिरान्तरं व्यवधानं येषाम्। कलान्तराणीव कलाविशेषानिव। यथा चान्द्रिलेखा ज्योत्स्नायुक्ताः कलाः प्रत्यहं वर्धयति। तथेत्यर्थः। चान्द्रिलेखा कलान्तराणीवेत्युपमानोपमेयसिद्धौ पद्द्वितीयमिवशब्दोपादानं तत्र पौनरुक्त्यं चिन्त्यम्। यद्वा कर्मणोरौपम्ये क्रियाभेदादिवद्वयस्योपादानं तत्र वृद्धिक्रियया च विशेषाणां कलान्तरोपमानम् ॥ २५ ॥

तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव।
उमेति मात्रा तपसो[1] निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥ २६ ॥

मल्ली०—तामिति॥ बन्धुप्रियां तां बालां बन्धुजनः पित्रादिः। अभिजनादागतेनाभिजनेन। पित्रादिपूर्वसंबन्धोपाधिकेनेत्यर्थः। 'अभिजनाः पूर्वबान्धवाः' इति काशिका। नाम्ना। पर्वतस्यापत्यं स्त्री पार्वती। 'तस्यापत्यम्' इत्यण्प्रत्ययः। इति जुहावाहूतवान्। ह्वयतेर्लिटि रूपम्। पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः। पश्चादभिजनानामाप्रवृत्त्यनन्तरं मात्रा जनन्या। उ इति संबोधने। 'उ इति वितर्कसंबोधनपादपूरणेषु' इति गणव्याख्याने। माशब्दो निषेधे। उ हे वत्से, मा मा कुर्वित्येवंरूपेण। तपसस्तपश्चर्यायाः। 'वारणार्थानामीप्सितः' इत्यपादानत्वात्पञ्चमी। निषिद्धा निवारिता सती सुमुखी सा बालोमेत्याख्यां नामधेयमुमाख्यां जगाम ॥ २६ ॥

चा०—तामिति। बन्धुजनो बन्धुलोको बन्धुप्रियां स्वजनवल्लभां ताम्। अभिजनो वंशस्तत आगतेन पार्वतीनाम्ना पर्वतस्यापत्यं पार्वतीति संज्ञया प्रथमं

१. तपसे.
२ कु०

जुहावाहूतवान् । पश्चादनन्तरं मात्रा मेनया उमा तपसे प्रक्रमश्चेत्यतो निषिद्धा निवारिता सुमुखी सुवदना उमेत्याख्यां जगाम प्राप । उप्रणयकोपे माशब्दो निवारणे ॥ २६ ॥

टिप्पणी—सुमुख्याः उमाख्याप्राप्तौ मातृकर्तृकतपोनिषेधरूपपदार्थस्य हेतोः विशेषणविधयोक्त्या पदार्थहेतुकं काव्यलिङ्गम् ॥ २६ ॥

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा[1] ॥ २७ ॥**

मल्लि०—महीभृत इति । पुत्राश्च दुहितरश्च पुत्राः । 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः । तेऽस्य सन्तीति पुत्रवान् । भूमार्थे मतुप् । तस्य पुत्रवतोऽपि । बह्वपत्यस्यापीत्यर्थः । महीभृतो हिमाद्रेर्दृष्टिश्चक्षुस्तस्मिन्नपत्ये तोके 'अपत्यं तोकं तयोः समे' इत्यमरः । तस्यां पार्वत्यामित्यर्थः । तृप्तिं न जगाम । तथा हि अनन्तपुष्पस्य नानाविधकुसुमस्यापि मधोर्वसन्तस्य संबन्धिनो द्विरेफमाला भृङ्गपंक्तिश्चूतस्य विकारे चूते चूतकुसुमे । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति विकारार्थोत्पन्नस्याण्प्रत्ययस्य लुक्प्रकरणे 'पुष्पमूलेषु बहुलम्' इति पठनाल्लुक् । सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता । अत्यन्तासक्तेत्यर्थः ॥ २७ ॥

चा०—महीभृत इति । पुत्रवतोपि प्रकृष्टपुत्रयुक्तस्यापि महीभृतो हिमालयस्य दृष्टिस्तस्मिन्नपत्ये पार्वतीरूपे तृप्तिं न जगाम न लेभे । पुनः पुनस्तत्र लग्नाभूदित्यर्थः । हि निश्चितं । अनन्तपुष्पस्य प्रचुरकुसुमस्य मधोर्वसन्तस्य द्विरेफमाला भृङ्गपङ्क्तिश्चूते आम्रे सविशेषसङ्गा सविशेषसङ्गो यस्याः सा तादृशी ॥ २७ ॥

टिप्पणी—दृष्टितृप्तिकारणस्य पुत्रीगतसौन्दर्यातिशयस्य सत्त्वेऽपि तृप्तिरूपकार्याभावकथनाद्विशेषोक्तिरलङ्कारः । वैधर्म्येणार्थान्तरन्यासालङ्कारश्चेति द्वयोः संसृष्टिः ॥ २७ ॥

**प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।**
**संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ २८ ॥**

मल्लि०—प्रभेति । प्रभामहत्या प्रकाशाधिकया शिखया ज्वालया दीप इव । शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः । त्रयो मार्गा यस्यास्तया त्रिमार्गया मन्दाकिन्या । तृतीया द्यौर्लोक इति त्रिदिवः स्वर्गः । वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम् पृषोदरादित्वाद्दिवशब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेर्घञर्थे कविधानम् । दीव्यन्त्यत्र जना इति क्षीरस्वामी । तस्य मार्गं इव । संस्कारो व्याकरणजन्या शुद्धिस्त-

1. संधाः, संज्ञा.

द्धत्या गिरा वाचा। 'भद्रैषां लक्ष्मीर्निहिताधि वाचि' इति श्रुतेरिति भावः। मनस ईषा मनीषा सास्यास्तीति मनीषी विद्वानिव। शकन्ध्वादित्वात्साधुः। तया पार्वत्या स हिमवान्पूतः शोधितश्च विभूषितश्च। अत्र शिखागिरोरविशिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः। इयं मालोपमा ॥ २८ ॥

चा०—प्रभेति। सोद्रिस्तया पुण्या पूनश्च पवित्रीकृतो विभूषितोऽलङ्कृतश्च। कया क इव। त्रिमार्गया त्रयो मार्गा यस्याः सा त्रिमार्गा गङ्गा तया त्रिदिवस्य नाकस्य मार्ग इव। पुनः कया क इव। संस्कारवत्या शब्दानुशासनादिभिः कृतसंस्कारया गिरा मनीषी पण्डित इव ॥ २८ ॥

**मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च।**
**रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥**

मल्लि०—मन्दाकिनीति ॥ सा पार्वती बाल्ये वयसि क्रीडानां रसः स्वादः। रुचिरिति यावत् तं क्रीडारसम्। 'रसो गन्धे रसः स्वादे' इति विश्वः। निर्विशतीव भुञ्जानेव। 'निर्वेशो भृतिभोगयोः' इति विश्वः। 'आच्छीनद्योर्नुम्' इति विकल्पान्नुमभावः। सखीनां मध्यगता सती मन्दाकिन्याः सैकतेषु पुलिनेषु वेदिकाभिः कन्दुकैः। क्रियया निवृत्तैः कृत्रिमैः। 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययः। 'क्त्रेर्मम्नित्यम्' इति ममागमश्च। पुत्रकैः पाञ्चालिकाभिः। 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः। 'संज्ञायां कन्' इति कन्प्रत्ययः। मुहुः पुनः पुना रेमे ॥ २९ ॥

चा०—मन्दाकिनीति। सखीनां मध्यगता मध्यवर्तिनी सा गौरी मन्दाकिनी सैकतवेदिकाभिर्गङ्गातीरे परिचितभूभागैस्तथा कन्दुकैस्सूत्रनिर्मितैः कृत्रिमैर्वस्त्रद्रव्यादिनिर्मितैः पुत्रकैश्च रेमे चिक्रीड। अत्रोत्प्रेक्षते क्रीडारसं क्रीडाया रसो रागो यत्र तत्तादृशं बाल्यं शैशवं निर्विशतीव भुञ्जानेव। 'निर्वेश उपभोगः स्यात्' इत्यमरः ॥ २९ ॥

टिप्पणी—निर्विशतीवेत्यत्रेवशब्देन क्रीडारसभोगस्योत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः।

**तां हंसमालाः शरदीव गङ्गां महौषधिं[1] नक्तमिवात्मभासः।**
**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥**

मल्लि०—तामिति ॥ स्थिरः स्थेयानुपदेशः प्राग्भवीयो यस्यास्तादृशीम्। मेधाविनीमित्यर्थः। तां पार्वतीमुपदेशकाले प्राक्तनजन्मविद्याः। पूर्वजन्माभ्यस्तविद्या इत्यर्थः। शरदि गङ्गां हंसमाला इव नक्तं रात्रौ महौषधिं तृणविशेषमात्मभासः स्वदीप्तय इव प्रपेदिरे। उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥ ३० ॥

---

१. महौषधी.

चा०—तामिति। प्राक्तनजन्मविद्याः पूर्वजन्मविद्या उपदेशकाले विद्याभ्याससमये स्थिरोपदेशां अविस्मरणशीलां तां प्रपेदिरे प्रापुः। कस्यां कां का इव। शरदि शरत्समये हंसमाला हंसपंक्तयो गङ्गामिव। तथा नक्तं रात्रौ महौषधीः आत्मभास इव। उपमाद्वयेन भूषणत्वभास्वरत्वोक्तिः॥ ३०॥

टिप्पणी—अत्र वाक्योपमाऽलङ्कारः॥ ३०॥

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ[1] वयः प्रपेदे॥ ३१॥

मल्लि०—असंभृतमिति। अथ सा पार्वती। अङ्गयष्टेरसंभृतमयत्नसिद्धं मण्डनं प्रसाधनमनासवाख्यमासवाख्यारहितं मदस्य करणं साधनं कामस्य पुष्पव्यतिरिक्तमस्त्रमस्त्रभूतं बाल्याच्छैशवात्परमनन्तरभावि वयो यौवनं प्रपेदे प्राप। यौवनेनैव हि युवतयः प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः। अत्र द्वितीयपाद आसवरूपकारणाभावेऽपि तत्कार्यमदोक्तेर्विभावनालंकारः। तदुक्तम्—'कारणाभावे कार्योत्पत्तिर्विभावना' इति। प्रथमतृतीययोस्त्वारोप्यमाणयोर्मण्डनमदनास्त्रत्वयोः प्रकृतोपयोगात्परिणामालंकारः। तल्लक्षणं तूक्तम्॥ ३१॥

चा०—असंभृतमिति। अनन्तरं सा गौरी बाल्यात्परं शैशवानन्तरं वयो यौवनाख्यं प्रपेदे प्राप। कीदृशं। अनासवाख्यं मदस्य करणं आसवो मद्यं तदाख्यया शून्यं मदस्य मत्ततायाः करणं चेतोविकारजनकम्। पुनः कीदृशम्। कामस्य कन्दर्पस्य पुष्पव्यतिरिक्तं पुष्पादधिकं तादृशं वा अस्त्रमायुधं स्वगितिविश्ववशीकरणं। विभावनाख्यालङ्कारः॥ ३१॥

उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम्।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन॥ ३२॥

मल्लि०—उन्मीलितमिति॥ नवयौवनेन प्रथमयौवनेन विभक्तमभिव्यञ्जितम्। पीनजघनादिसंस्थानमित्यर्थः। तस्याः पार्वत्या वपुस्तूलिकया कूर्चिकया। शलाकयेत्यर्थः। 'तूलिका कथिता लेख्यकूर्चिका तूलशय्ययोः' इति विश्वः। उन्मीलितं रञ्जनद्रव्येणोद्भासितं समुत्कीर्णम्। रूपमिति यावत्। चित्रमालेख्यमिव। सूर्यांशुभिर्भिन्नं विकसितमरविन्दं पद्ममिवाचतस्रोऽस्रयो यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति चतुरस्रशोभि। ताच्छील्ये णिनिः। बभूव। चित्रारविन्दयोस्तूलिकातरणिकिरणसंबन्ध इव स्वयं सिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूवेत्यर्थः॥ ३२॥

---

१. साधु.

चा०—उन्मीलितमिति । तस्या नवयौवनेन विभक्तं विभागीकृतं वपुः शरीरं चतुरस्रशोभि बभूव चतुरस्रं समन्ततः शोभत इति । कया किमिव । सूर्यांशुभिर्भिन्नं विकसितमरविन्दं कमलमिव । 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः ॥ ३२ ॥

टिप्पणी—अत्रापि वाक्योपमाऽलङ्कारः ॥ ३२ ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते मानुषाणां केशादारभ्येति धार्मिकाः । संप्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते—

[1]अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥

मल्लि०—अभ्युन्नतेति ॥ अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिर्निमित्तेन निक्षेपणान्निर्भरन्यासाद्धेतोः रागमन्तर्गतं लौहित्यम् । 'रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु' इति शाश्वतः । उद्गिरन्तौ वमन्तौ । बहिर्निःसारयन्ताविव स्थितावित्यर्थः । अत्रोद्गिरतेर्गौणार्थत्वान्न ग्राम्यतादोषः प्रत्युत गुण एव । यथाह दण्डी—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । तस्याश्चरणौ तच्चरणौ । पृथिव्यामव्यवस्थां व्यवस्थारहिताम् । संचारिणीमित्यर्थः । स्थलारविन्दश्रियमाजह्नतुः । स्थलविशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः—'यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निमूढगुल्फौ निहतौ सा स्यान्नृपतिसंमता ॥' इति । अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसंभवादरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालङ्कारः । सा च सबन्धेऽसंबन्धलक्षणातिशयोक्त्यनुप्राणिताव्यवस्थामित्यनेन स्थलारविन्दस्य स्थैर्यसंबधेऽप्यसंबधाभिधानात् । निदर्शनालक्षणं तु—'असंभवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥' इति ॥ ३३ ॥

समुदायरूपं वर्ण्यावयवरूपं वर्णयितुमुपक्रमते । तत्र देवीनां रूपं पादाङ्गमारभ्य वर्ण्यते । मानवीनां च केशात्प्रभृतीति कविसंप्रदायः । अतो देवीत्वात्पादमारभ्यवर्णनमाह—

चा०—अभ्युन्नतेति । तच्चरणौ तस्याः पादौ पृथिव्यां निक्षेपणादाक्रमणादारोपणाद्धेतोरव्यवस्थां चारिणीं स्थलारविन्दश्रियं स्थलपद्मशोभामाजह्नतुरनुचक्रतुः किं भूतौ । अभ्युन्नताङ्गुष्ठप्रभाभिर्लक्षितौ चरणौ पृथिव्यां निक्षेपणाद्गतिविशेषवशेनारोपणाद्रागमिवोद्गिरन्तौ प्रकाशयन्तौ स्थलारविन्दश्रियमाजह्नतुः ॥३३॥

---

१. अत्युन्नता.

टिप्पणी—सा गतेषु राजहंसैर्व्यनीयतेवतीवशब्देन हंसगमनोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ ३४ ॥

**सा राजहंसैरिव संनताङ्गी[1] गतेषु लीलाञ्चितविक्रमेषु[2]।**
**व्यनीयत प्रत्युपदेशलुब्धै[3]रादित्सुभिर्नूपुरसिञ्जितानि ॥ ३४॥**

**मल्लि०**—सेति॥ प्रत्युपदेशलुब्धैः। 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथवा विद्यया विद्या चतुर्थी नोपपद्यते।' इति न्यायादिति भावः। तदेव व्यनक्ति-नूपुरसिञ्जितान्यादित्सुभिरादातुमिच्छुभिः। मञ्जीरसिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः। राजहंसैः संनताङ्गी। कुचभारादिति भावः। सा पार्वती लीलाभिर्विलासैरञ्चिताः पूजिता विक्रमाः पादन्यासा येषु तेषु। 'अञ्चेः पूजायाम्' इतीडागमः। 'लीलाविलासक्रिययोः' इत्यमरः। गतेषु विषयेषु व्यनीयतेवविनीता किमु। अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा॥ ३४॥

**चा०**—सेति। संनताङ्गी स्तनाभोगेन किञ्चिन्नम्राङ्गी लीलाञ्चितविभ्रमेषु लीलायां शृङ्गारचेष्टायामञ्चतः पूजितो विभ्रमो भ्रमण चरणविन्यासो येषु तेषु गमनेषु राजहंसैरिव व्यनीयत शिक्ष्यते। किमर्थमशिक्ष्यतेत्याह। विशेषणेन कारणमाह। किंभूतैः प्रत्युपदेशलुब्धैः। विद्यान्तरे लोलुपैस्तदेवाह विशेषणेन। पुनः कीदृशैर्नूपुरसिञ्जितानि आदित्सुभिरादातुमिच्छुभिर्गृहीतुकामैः। 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः। 'भूषणानां तु शिञ्जितम्' इत्यमरः॥ ३४॥

**वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः॥ ३५॥**

**मल्लि०**—वृत्तेति। वृत्ते वर्तुले पूर्वमनुगतेऽनुपूर्वे। गोपुच्छाकार इत्यर्थः। वृत्ते च तेऽनुपूर्वे च वृत्तानुपूर्वे नातिदीर्घे च। महाविभाषया न समासः। नञो विशेषणत्वं चशब्दप्रयोगादेव ज्ञेयम्। शुभे मङ्गले। तस्या इमे तदीये जङ्घे प्रसृते। 'जङ्घा तु प्रसृता' इत्यमरः। सृष्टवतो निर्मितवतो विधातुः स्रष्टुः शेषाङ्गनिर्माणविधौ। जङ्घाव्यतिरिक्तावयवनिर्माणार्थमित्यर्थः। उत्पाद्ये पुनः संपाद्ये लावण्ये कान्तिविशेषविषये। लावण्यलक्षणं तूक्तम् (२५) श्लोक टी०। यत्न आसेव बभूवेवेत्युत्प्रेक्षा। उपादानमन्तरेण कार्यस्य दुष्करत्वात्तदङ्गानां न लावण्योपादानत्वात्पूर्वसंपादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात्पुनर्लावण्यसंपादने यत्नः स्यादेवेत्येतादृक्सौन्दर्ये तज्जङ्घे इति भावः। आसेति बभूवार्थे 'तिङन्तप्रतिरूपकमव्ययम्' इत्याह शाकटायनः। वल्लभस्तु-'न तिङन्तप्रतिरूपकमव्ययम्'

---

१. संनतांशा. २. विभ्रमेषु. ३. लब्धैः.

'अस्तेर्भूः' इति भ्वादेशनियमात्तादृक्तिङन्तस्यैवाभावात्। किंतु कवीनामयं प्रामादिकः प्रयोगः' इत्याह। वामनस्तु—असगतिदीप्त्यादानेष्विति: धातोर्लिटि रूपमिदम् इत्याह। अस इत्यनुदात्तेद्दीप्त्यर्थे 'आस दिदीपे। प्रवृत्त इत्यर्थः॥ ३५॥

चा०—वृत्तानुपूर्व इति। वृत्ते वर्तुले पूर्वानुगते। अनुपूर्वे गोपुच्छानुकारे च नचातिदीर्घे मध्यमप्रमाणे शुभे प्रशस्ते तदीये तस्या इमे तदीये जङ्घे सृष्टवतो निर्मितवतो विधातुर्विश्वसृजः शेषाङ्गनिर्माणविधौ शेषाङ्गानां पूर्वादीनां निर्माणविधिस्तस्मिन्। उत्पाद्ये लावण्य उत्पादनीये सौन्दर्ययत्न आस बभूव। आजङ्घानिर्माण एव सर्वस्य लावण्यस्य परिसमाप्तित्वात्। अस्तेर्भूभावः। प्रसङ्गादासेति चिन्त्यं। तिङन्तप्रतिरूपको न भवति। तादृशस्य तिङन्तस्याभावात्। यद्वा। अस गतिदीप्त्यादानेष्वित्येतस्योभयपदिनः प्रयोगोयं। धातूनामनेकार्थत्वादासेति बभूवार्थे इति विस्तारविधाविति निमित्तसप्तमी॥ ३५॥

टिप्पणी—अत्रोत्प्रेक्षाऽलङ्कारः॥ ३५॥

**नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः।**
**लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः॥ ३६॥**

मल्लि० नागेन्द्रेति। नागेन्द्राणामैरावतादीनां हस्ताः करास्त्वचि चर्मणि कर्कशत्वात्कदलीविशेषा रामरम्भादय एकान्तशैत्यान्नियतशैत्याद्धेतोः लोके परिणाहि वैपुल्ययुक्तम्। 'परिणाहो विशालता' इत्यमरः। रूपं लब्ध्वापि। अपिशब्दात्करिकदलीमात्रस्य तादृक्परिणाहो नास्तीति भावः। तस्या ऊर्वोस्तदूर्वोरुपमानबाह्या जाता उपमानक्रियानर्हा बभूवुः। तदूर्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः॥ ३६॥

चा०—नागेन्द्रेति। नागेन्द्रहस्ताः करिशुण्डादण्डाः कदलीविशेषाश्च रम्भास्तम्भाः। लोके भुवने परिणाहि विशालतालक्षणं रूपं लब्ध्वापि तदूर्वोस्तस्या जानुभागयोरुपमानेन बाह्या उपमायां बहिर्भूताः। कस्मात् त्वचि कर्कशत्वात्। तदूरू कोमलौ एकान्तशैत्याच्च सदा शीतलत्वाच्च रम्भायाः सर्वदा शैत्यम्। अत एव। तदूर्वो सादृश्याय नाभूवन्निति। परिणाहोस्तीति परिणाहि। 'परिणाहो विशालता' इति हैमः॥ ३६॥

**एतावता नन्वनुमेयशोभि[1] काञ्चीगुणस्थानमनिन्दितायाः।**
**आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम्॥ ३७॥**

मल्लि०—एतावतेति। अनिन्दितायाः अनवद्यायाः पार्वत्याः काञ्चीगुणस्थानं नितम्बबिम्बमेतावता नन्वेतावतैव। 'प्रश्नावधारणानुज्ञानुनया-

---

१. कान्ति.

मन्त्रणे ननु' इत्यमरः। शोभत इति शोभि। आवश्यके णिनिः ततस्त्वप्रत्ययः। अनुमेयं शोभित्वं शोभा यस्य तदनुमेयशोभि। 'त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः' इत्याह वामनः। पश्चादादौ नो.स्पृह्येऽपि पश्चात्। तपश्चर्यानन्तरमित्यर्थः। गिरौ शेत इति गिरिशः शिवः। 'गिरौ डश्छन्दसि' इति डप्रत्ययः। भाषायामपि क्वचिदिष्यते। अथवा गिरिः कैलासोऽस्यास्तीति गिरिशः। लोमादित्वाच्छप्रत्ययः। तेन गिरिशेन। अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यनन्यनारीकमनीयस्तमङ्कं निजोत्सङ्गमारोपितमधिरोपितमिति यत्। एतावता लिङ्गेनेति पूर्वेणान्वयः। रोहतेर्ण्यन्तात्कर्मणि क्तः। 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः। गत्यर्थविवक्षायां द्विकर्मकत्वम्। प्रधाने कर्मणि क्तः। गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्यं गिरिशाङ्कारूढत्वाद्व्यतिरेकेण नार्यन्तरनितम्बबिम्बवत्। विपक्षे हेत्वनुक्तिरेव बाधिका। दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिवृत्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसंरम्भेण॥ ३७॥

चा०—एतावतेति। अनिन्दितायाः प्रशस्ताया देव्याः काञ्चीगुणस्थानं काञ्चीगुणो दाम तस्य स्थानं श्रोणिबिम्बम्। एतावतैव इयतैव अनुमेयशोभि आसीदिति शेषः। अनुमेया शोभास्यास्ति तत्। एतावतेति। केनेत्याह। यत्पश्चाद्विवाहानन्तरं गिरिशेन शंभुना अनन्यनारीकमनीयं नान्यस्त्रीणामभिलषणीयमङ्कमुत्सङ्गमारोपितं यदि श्रोणिबिम्बमुत्कृष्टं न स्यात्तत्कथमीशः स्वाङ्कमारोपयामास। अतोनुमीयते तच्छोभेत्यर्थः। कौमारवर्णनेपि कवेरिदानींतनत्वादेतदनुमानं न विरुद्धं ननु गिरौ डश्छन्दसीति वक्तव्यात्कथं गिरिश इति उच्यते। गिरीन् श्यति तनूकरोतीति गिरिशः। यद्वा गिरिः कैलासोस्यास्तीति लोमादित्वाच्छः। यजुःक्रतुरिति ज्ञापकाच्छन्दसापि भाषायां प्रयुज्यत इति॥ ३७॥

टिप्पणी—अनुमानाऽलङ्कारः॥ ३७॥

**तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी[1] नवलोमराजिः[2]।**
**नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः॥ ३८॥**

मल्लि०—तस्य इति॥ नीवीं वस्त्रग्रन्थिम्। 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः। अतिक्रम्यातीत्य नतं निम्नं नाभिरन्ध्रं प्रविष्टा प्रविशन्ती तन्वी सूक्ष्मा तस्याः पार्वत्या नवलोमराजिः सितेतरस्यासितस्य। इन्द्रनीलस्येत्यर्थः। तस्याः पार्वत्या मेखला तन्मेखला। तस्या इत्यनुवृत्तौ पुनस्तच्छब्दोपादानं वाक्यान्तरत्वात्सोढव्यम्। यद्वा तस्या

१. नीला. २. राजी.

नीव्या मेखला तन्मेखला तत्र तदवस्थानात्। तस्या मध्यमणेरर्चिः प्रभेव रराज। 'ज्वालाभासोर्नपुंस्यर्चि.' इत्यमरः॥ ३८॥

चा०—तस्या इति। तस्या देव्यास्तन्वी सूक्ष्मा नवरोमराजिर्नूतनरोमश्रेणी रराज। कीदृशी। नतनाभिरन्ध्रं गम्भीरनाभिविवरं प्रविष्टा गता। तत्रोत्प्रेक्ष्यते। नीवीं वस्त्रग्रन्थिमतिक्रम्योल्लङ्घ्य सितेतरस्य नीलस्य तन्मेखलामध्यमणेस्तस्या गौर्या मेखलाया मध्यमणिस्तस्यार्चिर्दीप्तिरिव। सितादितर इति पञ्चमीति योगविभागात् समासः। 'स्त्रीकटी वस्त्रबन्धेपि नीवी परिपणेपिच' इत्यमरः॥ ३८॥

टिप्पणी—३८-३९ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

गम्भीरनाभीह्लदसंनिधाने रराज नीला नवलोमराजिः।
मुखेन्दुभीरुस्तनचक्रवाकचञ्चुच्च्युता शैवलमञ्जरीव॥

(१. नाभि, २. भीतं,)

टिप्पणी—अत्रोपमाऽलङ्कारः॥ ३८॥

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला।**
**आरोहणार्थं नवयौवनेन[1] कामस्य सोपानमिव प्रयुक्तम्॥ ३९॥**

मल्ली—मध्येनेति॥ 'वेदिः परिष्कृता भूमिः' इत्यमरः। वेदिविलग्नमध्या वेदिवत्कृशमध्या। तनुमध्येति यावत्। सा बाला पार्वती। मध्येन मध्यभागेन चारु सुन्दरं वलित्रयं कामस्यारोहणार्थं नवयौवनेन प्रयुक्तं रचितं सोपानमिव बभारेत्युत्प्रेक्षा॥ ३९॥

चा०—मध्येनेति। बाला षोडशवार्षिका सा गौरी मध्येनोदरेण चारु मनोहरं वलित्रयं त्रिवलीं बभार धृतवती। किंभूता वेदिविलग्नमध्या दक्षिणाग्न्यादीनां स्थानं वेदिस्तद्वद्विलग्नं क्षीणं मध्यं यस्याः सा वेदिरङ्गुलिमुद्रा तस्यां विलग्नं मध्यं यस्याः सा। 'वेदिरङ्गुलिमुद्रायां बुद्धे संस्कृतभूतले' इति विश्वप्रकाशः। तत्रोत्प्रेक्ष्यते। नवयौवनेन तारुण्येन कामस्यारोहणार्थमारोढुं प्रयुक्तं रचितं सोपानमिव निश्रेणिरिव। (बाला स्यात्षोडशाब्दा) इति कामशास्त्रे। बाल्येत्यजादिपाठाद्वयसि प्रथम इति ङीप् न भवति। 'आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहिणी' इति हैमः'॥ ३९॥

टिप्पणी—अत्रोत्प्रेक्षाऽलङ्कारः॥ ३९॥

**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु[2] तथा प्रवृद्धम्[3]।**
**मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम्॥ ४०॥**

मल्लि०—अन्योन्येति। अन्योन्यं परस्परम्। 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति द्विरुक्तिः। 'समासवच्च बहुलम्' इति बहुलवचनादसमास-

---

१. नवयौवनस्य कामेन. २. चारु. ३. विवृद्धम्.

पक्षेऽपि पूर्वपदस्थस्य सुपः सुर्वक्तव्यः। उत्पीडयदुपरुन्धत्पाण्डु गौरमुत्पलाक्ष्याः स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धम्। कर्तरि क्तः। श्याममुखस्य कृष्णचूचुकस्येति स्वरूपवर्णनं तस्य स्तनद्वयस्य मध्ये यथा येन प्रकारेण मृणालसूत्रान्तरं बिसतन्तुमात्रावकाशोऽप्यलभ्यं लब्धुमशक्यम्। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। अत्र संबन्धेऽसंबन्धरूपातिशयोक्त्यलंकारः। कुचयोः पीवरत्वातिशयार्थमवकाशसंबन्धेऽप्यसंबन्धाभिधानादिति ॥ ४० ॥

चा०— अन्योन्येति। उत्पलेवाक्षिणी यस्यास्तस्या देव्याः स्तनद्वयं तथा तेन प्रकारेण प्रवृद्धं घनीभूतं। कीदृशं। अन्योन्यं परस्परमुत्पीडयद्व्याप्नुवत्। तथा चारु रम्यं। यथा श्याममुखस्य श्यामं मुखमग्रं यस्य तस्य स्तनद्वयस्य मध्ये मृणालसूत्रान्तरमपि मृणालसूत्रस्य बिसतन्तोरन्तरमवकाशोऽलभ्यमप्राप्यमासीदिति शेषः। नीलमुखस्येतिस्वरूपकथनम् ॥ ४० ॥

टिप्पणी— ४१-४२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

निर्भर्त्सिताशोकदलप्रसूति पणिद्वयं चारुनख तदीयम्।
नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह—

**शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः।**
**पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

मल्लि०— शिरीषेति ॥ तस्या इमौ तदीयौ बाहू शिरीषपुष्पादधिकं सौकुमार्यं मार्दवं ययोस्तथोक्ताविति मे वितर्क ऊहः। कुतः। यौ बाहू पराजितेनापि पूर्वं निर्जितेनापि मकरध्वजेन कामेन हरस्य कण्ठपाशौ कण्ठबन्धनरज्जू कृतौ। कण्ठालिङ्गनं प्रापितावित्यर्थः। तदसाध्यसाधनात्तत आधिक्यमिति भावः। अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात्परिणामालंकारः ॥ ४१ ॥

चा० — शिरीषेति ॥ तदीयौ बाहू तस्या इमौ तदीयौ शिरीषपुष्पाधिकसौकुमार्यौ शिरीषपुष्पादधिकं सौकुमार्यं ययोस्तौ इति मे वितर्क ऊहः। तत्र हेतुत्वेन प्रकटयति यौ बाहूः पराजितेनापि दाहाभिभूतेनापि मकरध्वजेन स्मरेण हरस्य कण्ठपाशौ वशीकरणात्तौ कृतौ। स्मरो हि सुकुमारास्त्रेणैव जगज्जयति। प्राक् शंभुना जितः स्मरस्तज्जयार्थे देवीभुजव्याजेनातिकोमलौ पाशौ कृतवानित्युत्प्रेक्षा ॥ ४१ ॥

**कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।**
**अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ ४२ ॥**

मल्लि०—कण्ठस्येति ॥ स्तनाभ्यां बन्धुरस्योन्नतस्य तस्याः पार्वत्याः

कण्ठस्य गलस्य निस्तलस्य वर्तुलस्य मुक्ताकलापस्य मुक्ताभूषणस्य च। 'वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम्'। 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इति चामरः। अन्योन्यशोभाजननाद्भूषणभूष्यभावोऽलंकारालंकार्यभावः साधारणः समानो बभूव। उभावप्यन्योन्यस्य भूष्यौ भूषणे च बभूवतुरित्यर्थः। अत्र कण्ठमुक्ताकलापयोः सोभाक्रियाद्वारेणान्योन्यभूषाजनकत्वादन्योत्यालंकारः। तदुक्तम्–'परस्परं क्रियाजननमन्योन्यम्' इति ॥ ४२ ॥

चा०—कण्ठस्येति। स्तनबन्धुरस्य तस्याः कण्ठस्य निस्तलस्य वर्तुलस्य मुक्ताकलापस्य च अन्योन्यशोभाजननात् परस्परशोभोत्पादनात् भूषणभूष्यभावः साधारणो बभूव भूषणमलङ्कारो भूष्योलङ्कार्यस्तयोर्भावः। तुल्यशोभत्वात्कण्ठस्यालङ्कारो हारः हारस्यालङ्कारो कण्ठोभूदित्यर्थः ॥ ४२ ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वाचोभङ्ग्याह—

**चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।**
**उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥ ४३ ॥**

मल्लि०—चन्द्रमिति ॥ लोला चपला। परिभ्रमणशीलेत्यर्थः। लक्ष्मीः कान्त्यभिमानिनी देवता चन्द्रं गता प्राप्ता सती पद्मगुणान्सौगन्ध्यादीन्न भुङ्क्ते नानुभवति। पद्माश्रिता सती चन्द्रमस इमां चान्द्रमसीमभिख्यां शोभाम्। 'अभिख्या नामशोभयोः' इत्यमरः। अमृतवदानन्दिनीं न भुङ्क्ते। उमामुखं प्रतिपद्य तु द्वे चन्द्रपद्मे संश्रयः कारणं यस्यास्तां द्विसंश्रयां प्रीतिमानन्दमवाप। तत्रोभयगुणसंभवादिति भावः। अत्रोपमानभूतचन्द्रपद्मापेक्षयोपमेयस्योमामुखस्याधिकगुणवत्त्वोक्त्या व्यतिरेकालंकारः। तदुक्तम्—'भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति ॥ ४३ ॥

चा०—चन्द्रमिति। चन्द्रं गत्वा प्राप्ता लक्ष्मीः पद्मगुणान् सौगन्ध्यादीन् न भुङ्क्ते नानुभवति पद्माश्रिता लक्ष्मीः। चान्द्रमसीमिन्दुसम्बन्धिनीमभिख्यां न भुङ्क्ते। दिवसे चन्द्रस्य विच्छायत्वात्। निशि पद्मस्य मुकुलितत्वात्। लोलापि सा द्वयोर्गुणाभिलाषिणी उमामुखं प्रतिपद्य संप्राप्य द्विसंश्रयो द्वौ संश्रयौ यस्यास्तां प्रीतिं प्रमोदमवापि। एतेनास्या आस्यं चन्द्रपद्मतुल्यमित्यर्थः ॥ ४३ ॥

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्।**
**ततोऽनुकुर्याद्विशदस्य तस्या[1]स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ ४४ ॥**

मल्लि०—पुष्पमिति ॥ पुष्पं पुण्डरीकादिकं प्रवाले बालपल्लव उप-

१. ताम्रोष्ठ०

हितं निहितं स्याद्यदि। 'प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे' इति विश्वः। मुक्ताफलं वा स्फुटे निर्मले वा विद्रुमे तिष्ठतीति स्फुटविद्रुमस्थं स्याद्यदि ततस्तर्हि विशदस्य शुभ्रस्य ताम्रे अरुणे ओष्ठे पर्यस्ता प्रसृता रुक्कान्तिर्यस्य तथोक्तस्य तस्याः पार्वत्याः स्मितस्यानुकुर्यात्। स्मितमनुकुर्यादित्यर्थः। अत्र 'माषाणामश्नीयात्' इतिवत्सम्बन्धमात्रविवक्षया षष्ठी। अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्चासंबन्धेऽपि संबन्धोक्त्यातिशयोक्तिः। 'सा च संभावना' इत्यलंकारसर्वस्वकारः। विशेषस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात्प्रतीपालंकारः। तदुक्तम्--'उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपः' इति लक्षणात्। स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥ ४४ ॥

चा०—पुष्पमिति। यदि पुष्पं श्वेतपुष्पं प्रवालोपहितं पल्लवोपरिस्थितं स्याद्वा अथवा मुक्ताफलं स्फुटविद्रुमस्थं स्यात्। ततस्तदा तत्पुष्पं तच्च मौक्तिकं वा। कर्तृ। तस्या गौर्या विशदस्य शुभ्रस्य स्मितस्यानुकुर्यात् सदृशं भवेत्। किंभूतस्य। ताम्रौष्ठपर्यस्तरुचः। ताम्र अरुणेऽधरे पर्यस्ता प्रसृता रुक् दीप्तिर्यस्य तस्य ॥ ४४ ॥

**स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि।**
**[1]अप्यन्यपुष्टा प्रतिकूलशब्दा[2] श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥**

**मल्लि०**--स्वरेणेति। अभिजातवाचि मधुरभाषिण्यां तस्यां पार्वत्याममृतस्रुतामृतस्राविणेव। क्विप्। स्वरेण नादेन प्रजल्पितायामालपन्त्याम्। कर्तरि क्तः। अन्यैः काकादिभिः पुष्टान्यपुष्टा कोकिलापि। मुख्यया वृत्त्या जातिवचनत्वभावान्ङीबभावः। ताड्यमाना वाद्यमाना विषमबद्धा तन्त्रीर्वितन्त्रीरिव अवितृस्तृ तन्त्रिभ्यः ईः' इति तन्त्रि धातोरौणादिक ईप्रत्ययः। ङीबभावान्न 'हल्ङ्याब्भ्यः—' इति सुलोपः। तदुक्तम्—'अवीलक्ष्मीतरीतन्त्रीधीह्रीश्रीणामुणादितः। स्त्रीलिङ्गानाममीषां तु न सुलोपः कदाचन॥ एते ङीबन्ता न भवन्तीत्यर्थः। श्रोतुर्जनस्य प्रतिकूलशब्दाः कर्णकठोरनादा भवन्तीति शेषः ॥ ४४ ॥

चा०—स्वरेणेति॥ अभिजातवाचि अभिजातात्यन्ता मधुरा वाग् यस्यां सा तस्यां देव्यां अमृतस्रुतेव अमृतं सुधां स्रवतीति अमृतस्रुत् तेन। स्वरेण कण्ठध्वनिना प्रजल्पितायां वक्तुमुपक्रान्तायां सत्यामन्यपुष्टापि कोकिलापि प्रतिकूलशब्दा उद्वेगकारिशब्दा जाता। कस्याः केव। वितन्त्रीः श्रोतुर्वीणा श्रवणशीलस्य ताड्यमाना भेरीव। ताड्यमाना इति बहुवचनं वा। तत्र ताड्यमानाः पटहादय इव। वितन्त्रीरिति "अवितृस्तृतन्त्रिभ्यः ई' इतीप्रत्यये द्वितीयाबहुवचनान्तं

---

१. अन्यपुष्टाः० २. शब्दाः।

श्रोतुरिति तृदन्तस्य योगे 'न लोकाव्यय०' इत्यादिना षष्ठीनिषेधः। वल्लभभटस्तु एवं प्रजल्पितायां तस्यां श्रोतुरन्यपुष्टा प्रतिकूलशब्दा जाता। यथा ताड्यमाना विस्वरा तन्त्रीः स्थानाच्चलिता वीणा प्रतिकूलशब्दा भवति। स्वरोऽत्र शब्दमात्रं प्रजल्पितायामित्यनेन शब्दावगतावमृतस्रुतेति विशेषणार्थता न पौनरुक्त्यम्। यथा (शुचिस्मितां वाचमवोचदच्युतः) इत्यादौ ॥ ४५ ॥

टिप्पणी—पूर्वार्द्धे उत्प्रेक्षा। उत्तरार्धे उपमा ॥ ४५ ॥

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या।**
**तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ४६ ॥**

मल्लि०--प्रवातेति। प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदं। तत्सदृशमित्यर्थः। अधीरविप्रेक्षितं चकितविलोकितमायताक्ष्या विशालनेत्रया तया पार्वत्या मृगाङ्गनाभ्यो हरिणीभ्यो गृहीतमभ्यस्तं नु। अथवा मृगाङ्गनाभिस्ततस्तस्याः पार्वत्याः। पञ्चम्यास्तसिल्। गृहीतं नु। अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित्। तदुपजीविसंदेहालंकार इत्यन्ये। उभयोः संकर इत्यपरे ॥ ४६ ॥

चा०—प्रवातेति। आयताक्ष्या आयता दीर्घे अक्षिणी यस्याः सा तया। अधीरविप्रेक्षितं चञ्चलप्रेक्षणं मृगाङ्गनाभ्यो हरिणीभ्यो गृहीतं नु। न्विति वितर्के। मृगाङ्गनाभिस्ततो गौर्याः गृहीतं नु। किंभूतमधीरविप्रेक्षितं। प्रवातनीलोत्पलनिर्विशेषम्। प्रगतो वातो यत्र तत्प्रवातमेतादृशं यन्नीलोत्पलमिन्दीवरं तस्य निर्विशेषं समानं शक्त्यक्ष्णोः स्वाङ्गात्षच् षिद्गौरादित्वान् ङीष् ॥ ४६ ॥

टिप्पणी—४५-४६ श्लोकयोर्मध्ये इमौ श्लोकौ दृश्येते—

कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं सुतरां रराज।
मत्वा भवित्रीं त्रिपुरारिपत्नीं तां सेवमानाविव पुष्पवन्तौ ॥
(१. नितरां बभास०, २. ज्ञात्वा०, ३. सेवासमेतौ०।)

ताटङ्कपत्रं विरराज तस्याः शैलात्मजायाः श्रवणद्वयस्थम्।
मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पवन्तौ ॥
(१ युग्मम्० २ पुष्पदन्तौ०)

**तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या।**
**तां वीक्ष्य [1]लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥ ४७ ॥**

मल्लि०--तस्या इति। आयतलेखयोर्दीर्घरेखयोस्तस्याः पार्वत्या भ्रुवोः संबन्धिनी शलाकयाञ्जनेन निर्मितेव स्थिता या कान्तिर्लीला-

---

१. लीलाम्०।

चतुरां विलाससुभगां तां कान्तिं वीक्ष्यानङ्गः स्वचापसौन्दर्येण यो मदस्तं मुमोच। इह सौदर्याशयोक्तिः ॥ ४७ ॥

चा०—तस्या इति। तस्या देव्या आयतलेखयोरायते दीर्घे लेखे ययोस्तयोर्भ्रुवोः शलाकाञ्जननिर्मिता शलाका तूलिका तस्या यदञ्जनं तेन निर्मितेव या कान्तिः शोभासीदिति शेषः। लीलाचतुरां कामकलाविलासप्रवीणां तां भ्रुवोः शोभां वीक्ष्य स्मरः स्वचापसौन्दर्यमदं लावण्यगर्वं मुमोच तत्याज ॥ ४७ ॥

टिप्पणी—उत्प्रेक्षातिशयोक्त्योः संसृष्टिः ॥ ४७ ॥

**लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः।**
**तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्यः ॥ ४८ ॥**

मल्लि०—लज्जेति। तिरश्चां तिर्यग्जातीनां चेतसि लज्जा स्याद्यदि। संशयाभावोऽसंशयम्। संदेहो नास्तीत्यर्थः। पर्वतराजपुत्र्याः। 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन्। तं प्रसिद्धं केशपाशं केशकलापम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः। प्रसमीक्ष्य दृष्ट्वा चमर्यो मृगोविशेषाः बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावो बालप्रियत्वम्। प्रियबालत्वमित्यर्थः। आहिताग्न्यादिपाठाद्वा परनिपातः। 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः। शिथिलं कुर्युः। निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः। अत एवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यार्थत्वेनोक्त्या काव्यलिङ्गाख्योऽलङ्कारः। तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्' इति ॥ ४८ ॥

चा०—लज्जेति। तिरश्चां पशूनां चेतसि चित्ते यदि लज्जा स्यात्। तदा असंशयं निश्चितं पर्वतराजपुत्र्या गौर्यास्तं केशपाशं केशकलापं प्रसमीक्ष्य दृष्ट्वा चमर्यः बालप्रियत्वं बालाः केशाः प्रिया यासां तासां भावो बालप्रियत्वं शिथिलं कुर्युः। तच तासां देवीकेशपाशावलोकनेऽपि केशेष्वनादरोऽभूदतोनुमीयते। तिर्यग्योनित्वाच्चमरीषु लज्जा नास्तीत्यर्थः। स्यादित्यत्र क्रियातिपत्तेरविवक्षितत्वाल्लृट्प्रयोगाभावः। 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इत्यत्र तदाद्याचिख्यासायामिति वक्तव्ये इच्छास्वाज्ज्ञापितोयमर्थः। यद्विवक्षैव शब्दप्रवृत्तौ प्रधानं कारणं न वस्तुसत्त्वमिति ॥ ४८ ॥

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९ ॥**

मल्लि०—सर्वोपमेति। किंबहुना सा पार्वती विश्वसृजा विधात्रैकत्र तिष्ठतीत्येकस्थं तस्य सौन्दर्यस्य। सर्ववस्तुगतस्येत्यर्थः। दिदृक्षयेव प्रयत्नाद्यथाप्रदेशं क्रमाद्विनिवेशितेन स्थापितेन सर्वेषामुपमाद्रव्याणां चन्द्रार-

विन्दाद्युपमानवस्तूनां समुच्चयेन समाहारेण निर्मिता। दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥ ४९ ॥

चा०—सर्वोपमेति। विश्वसृजा ब्रह्मणा सर्वोपमाद्रव्यसमुच्चयेन सर्वेषां द्रव्याणां चन्द्रपद्मादीनां समुच्चयः समूहस्तेन। एकत्र सौन्दर्यदिदृक्षयेव एकत्रस्थितलावण्यदर्शनाभिलाषेणेव प्रयत्नात्सा देवी निर्मिता। कीदृशेन। यथाप्रदेशं यो यस्योचितः प्रदेशो मुखनेत्रादिस्तत्रतत्र विनिवेशितः ॥ ४९ ॥

टिप्पणी—अत्रोत्प्रेक्षाऽलङ्कारः ॥ ४९ ॥

**तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे।**
**समादिदेशैक[१]वधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

मल्लि०—तामिति। कामेनेच्छया चरतीति कामचरो नारदः। कदाचित्पितुर्हिमवतः समीपे कन्यां तां पार्वतीं प्रेक्ष्य किल प्रेम्णा न त्वन्यथा हरस्य शिवस्यार्धं हरतीत्यर्धहरा। 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः। शरीरस्यार्धहराम् शरीरार्धहराम्। कुलधुरंधरादिवदवयवद्वारा समुदायविशेषकत्वात्समासः। अन्यथा त्वर्धस्य समप्रविभागवचनत्वादर्धशरीरेति स्यात्। एकवधूमसपत्नीकां भार्याम्। 'पूर्वकाल—'इत्यादिना समासः। भवित्रीं भाविनीं समादिदेश। हरस्यार्धाङ्गहारिण्येकपत्नी भविष्यतीत्यादिष्टवानित्यर्थः॥ ५० ॥

चा०—तामिति। नारदो मुनिः पितुः समीपे तां कन्यां प्रेक्ष्य दृष्ट्वा हरस्य शंभोरेकामद्वितीयां वधूं भार्यां भवित्रीं भाविनीं समादिदेशादिष्टवान्। किंभूतां प्रेम्णा। स्नेहेन शरीरार्द्धहरां देहार्धस्थायिनीं। यद्वा हरस्यार्धमर्धहरः। शरीरे अर्धहरो यस्यास्तां किलेत्यागमे प्रसिद्धौ वा। तथा चोक्तं। एषा भार्या जगद्भर्तुर्वृषाङ्कस्य महीधरः। शरीरार्धहरा देवी भविष्यति न संशयः। कीदृशो नारदः। कामचरः चरतीति चरः। पचाद्यच् कामेन चरः कामचरः ॥ ५० ॥

टिप्पणी—पार्वतीम्प्रति नारदकर्तृकभाविहरपत्नीत्वोपदेशे पितुः समीपे निरीक्षणस्य हेतोः पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५० ॥

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ [२]निवृत्तान्यवराभिलाषः।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥**

मल्लि०—गुरुरिति। गुरुः पिता। 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः। अतो नारदवचनाद्धेतोरस्याः पार्वत्याः प्रगल्भे वयस्यपि यौवने सत्यपि निवृत्तोऽन्यस्मिन्वरे जामातर्यभिलाषो यस्य स तथोक्तः सन्। 'वरो ना रूपजामात्रोः' इति वैजयन्ती। तस्थौ। वरान्तरं नान्विष्टवानित्यर्थः।

१. एकवधूः २. अन्यतर

ननु कुतोऽसौ निबंन्ध इत्यत आह--ऋत इति। तथाहि मन्त्रैः पूतं संस्कृतं हूयत इति हव्यमाज्यादिकं कृशानोः पावकादृते कृशानुं विना। 'अन्यारादितर--' इत्यादिना पञ्चमी। अपराणि तेजांसि सुवर्णादीनि नार्हन्ति। न भजन्तीत्यर्थः। ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षेति भावः॥ ५१॥

चा०—गुरुरिति। गुरुः पिता। अतः पूर्वाद्धेतोरस्या गौर्याः प्रगल्भेपि वयसि निवृत्तान्यवराभिलाषो निवृत्तो गतोऽन्यवराभिलाषोऽन्यस्मिन् हरादितरे वरे जामातरि आकांक्षा यस्य सः। तस्थौ स्थितः युक्तोयमर्थः। कृशानोरग्नेः ऋते विनाऽपराणि तेजांसि आदित्यादीनि मन्त्रपूतं वैदिकमन्त्रमन्त्रितं हव्यं हवनीयं नार्हन्ति। कृशानोरिति ऋते योगेत्यारादितिरपि पञ्चमी॥ ५१॥

टिप्पणी--अत्र वैधर्म्येणार्थान्तरन्यासालङ्कारः॥ ५१॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह--

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे॥ ५२॥

मल्लि०--अयाचितारमिति। अद्रिर्हिमवानयाचितारमयाचमानं देवदेवं महादेवं सुतां पार्वतीं ग्राहयितुं स्वयमाहूय परिग्राहयितुं न शशाक नोत्सेहे। तथाहि साधुः सज्जनः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। अभ्यर्थनाभङ्गभयेन याञ्चावैफल्यभीत्येष्टेऽप्यर्थे विषये माध्यस्थ्यमौदासीन्यमवलम्बते॥ ५२॥

यद्येवं तर्हि शंभवे किमिति न प्रादादित्याह--

चा०—अयाचितारमिति। अद्रिर्हिमवान् अयाचितारमयाचमानं देवदेवं हरं सुतां गौरीं ग्राहयितुं स्वीकारयितुं न शशाक न समर्थोऽभूत्। तत्र हेतुमाह। साधुर्मनस्वी अभ्यर्थनाभङ्गभयेन प्रार्थनातिक्रमभीत्या इष्टेप्यर्थे माध्यस्थमौदासीन्यमवलम्बते आश्रयनिग्रहेरगत्यर्थत्वादिद्रकर्मकता चिन्त्या। अपशब्दोयमिति न्यासकारः॥ ५२॥

टिप्पणी--अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः। ५२।

न च तथैव स्थितः, किं तूपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति--

यदैव पूर्वे जनने शरीरं सा दक्षरोषात्सुदती[1] ससर्ज।
[2]तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत्॥ ५३॥

मल्लि०--यदेति। शोभना दन्ता यस्याः सा सुदती। 'वयसि दन्तस्य दतृ' इति दत्रादेशः। 'उगितश्च' इति ङीप्। सा पार्वती पूर्वे जनने पूर्व-

---

१. स्वयमुत्ससर्ज० २. ततः प्रभृति०

स्मिञ्जन्मनि। 'पूर्वादिभ्यो नवभ्दो वा' इति स्मिन्नादेशविकल्पः। 'पूर्वं ज्वलने' इति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगाग्नौ। यदा यस्मिन्काले दक्षरोषाच्छरीरं देहं ससर्ज तत्याज, तदाप्रभृत्येव तदाद्येव यथातथा पशूनां पतिः शिवो विमुक्तसंगस्त्यक्तविषयासंगः सन्। अपरिग्रहोऽपत्नीकोऽभूत्। स्त्र्यंतरं न परिजग्राहेत्यर्थः 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः ॥ ५३॥

साम्प्रतं हरवर्यां वर्णयति—

चा०—यदेति। यस्मिन्नेव काले पूर्वभवे सा सुदती देवी दक्षरोषाद्दक्षविषये यो रोषस्तस्मात् ज्वलने अग्नौ शरीरं ससर्जात्याक्षीत्। तदाप्रभृत्येव विमुक्तसङ्गो-निर्विषयः पशूनां पतिः शंभुरपरिग्रहः पत्नीरहितोऽभूत्। स्नेहवदन्यां न पर्यणैषी-दिति भावः। 'परिग्रहः परिजने पत्नीस्वीकारयोरपि' इति ॥ ५३ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ५३ ॥

**स कृत्तिवासास्तपसे [1]यतात्मा गङ्गाप्रवाहोक्षितदेवदारु।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किंचित्क्वणत्किन्नरमध्युवास ॥ ५४ ॥**

मल्लि०—स इति। कृत्तिवासाश्चर्माम्बरः। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः। यतात्मा नियतचित्तः सः पशुपतिस्तपसे तपोर्थं गङ्गाप्रवाहेणोक्षिताः सिक्ता देवदारवो यस्मिंस्तत्तथोक्तम्। मृगनाभिगन्धि कस्तूरीगन्धवत्। कस्तूरीमृगसंचारादिति भावः। 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' इत्यमरः। क्वणन्तो गायन्तः किन्नरा यस्मिंस्तत्तथोक्तम्। किंचित्किमपि हिमाद्रेः प्रस्थं सानुमध्युवास। कुत्रचित्प्रस्थ उवासेत्यर्थः। 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम्। 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः ॥ ५४ ॥

चा०—स इति। कृत्तिर्गजचर्म वासो यस्य। तपसे तपोर्थं हिमाद्रेः प्रस्थं सानुमधितस्थौ अधिष्ठितवान्। कीदृशः। यतात्मा जितेन्द्रियः। कीदृक् प्रस्थं। गङ्गायाः प्रवाहेण प्रपातेन निर्झराम्बुनोक्षिताः सिक्ता देवदारुवृक्षा यत्र तत्। तथा मृगनाभिगन्धि मृगनाभेः कस्तूरिकाया गन्धोस्यास्ति तत्। पुनः कीदृक्। किञ्चिन्मन्द क्वणन्तो गायन्तः किन्नरा यत्र तत् ॥ ५४ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ५४ ॥

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः[2]।**
**मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

मल्लि०—गणा इति ॥ गणाः प्रमथगणाः। 'गणा प्रमथसंख्यौघाः'

---

१. जितात्मा०   २. वसानाः०

३ कु०

इति वैजयन्ती। नमेरुप्रसवावतंसाः सुरपुंनागकुसुमशेखराः। 'नमेरुः सुरपुंनागः' इति विश्वः। स्पर्शवती सुखस्पर्शाः। मृदुरित्यर्थः। प्रशंसायां मतुप्। भूर्जत्वचो भूर्जवल्कलानि दधानाः। वसाना इत्यर्थः। मनःशिलाभिर्धातुविशेषैर्विच्छुरिता अनुलिप्ताश्च सन्त। शिलायां भवं शैलेयम्। गन्धौषधिविशेषः। शिलायाः 'सत्राभ्या ढक्' इति भवार्थे ढक। 'शिलाजतु च शैलेयम्' इति यादवः। तेन नद्धेषु व्याप्तेषु शिलातलेषु निषेदुः। उपविविशुरित्यर्थः ॥ ५५ ॥

चा० —गणा इति। गणा नन्दिप्रभृतयः शैलेयनद्धेषु शिलापुष्पैर्व्याप्तेषु शिलातलेषु निषेदुस्तस्थुः। कीदृशाः नमेरुप्रसवावतंसा नमेरूणां प्रसवैः पुष्पैरवतंसा कर्णाभरणानि येषां ते तथा स्पर्शवतीर्मसृणा भूर्जत्वचो दधानाः मनःशिलाविच्छुरिताः अनुलिप्ताः। निषेदुरिति। पद्ॡ विशरणगत्यवसादनेषु। निपूर्वः परोक्षे लिट् ॥ ५५ ॥

तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान्।
दृष्टः कथंचिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥

मल्लि०—तुषारेति। तुषारसंघाता हिमघनास्त एव शिलास्ताः खुराग्रैः समुल्लिखन्विदारयन्दर्पेण कला मधुरध्वनिर्यस्य स दर्पकला विविधैर्भीतैर्गवयैर्गोसदृशमृगविशेषैः कथंचित्कृच्छ्रेण दृष्टः। ककुदमस्यास्तीति ककुद्मान्वृषभोऽसोढः सिंहानां ध्वनिर्येन स सिंहध्वनिमसहमानः सन्। उन्ननादोच्चैर्ननाद। जगर्जेत्यर्थः। स्वभावोक्तिरलङ्कारः। तदुक्तम्— 'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्' इति ॥ ५६ ॥

चा० —तुषारेति। ककुद्मान् वृषभः उन्ननाद जगर्ज। किं कुर्वन् खुराग्रैस्तुषारसङ्घातशिलाः शिलीभूतहिमसंहतीः समुल्लिखन् विदारयन्। कीदृशः दर्पकलोऽत एव विग्नैर्भीतैर्गवयैर्गोसदृशप्राणिविशेषैः कथंचिन्महता कष्टेन दृष्टः वीक्षितः। तथा दर्पादसोढसिंहध्वनिरसोढोऽक्षान्तः सिंहस्य ध्वनिः शब्दो येन। अथवा असोढः सिंहेन ध्वनिर्यस्य सः ॥ ५६ ॥

[1]तत्राग्निमाधाय समित्समिद्धं[2] स्वमेव मूर्त्यन्तरमष्टमूर्तिः।
स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥ ५७ ॥

मल्लि० —तत्रेति। तपसः फलानामिन्द्रत्वादीनां स्वयं विधाता जनयिता। दातेत्यर्थः। अष्टौ मूर्तयो यस्य सोऽष्टमूर्तिरीश्वरः। 'भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः' इति तत्र प्रस्थे स्वं स्वकीयमेव मूर्त्यन्तरं मूर्तिभेदं समिद्भिः समिद्धं दीपितमग्निमाधाय प्रतिष्ठाप्य केनापि

१. अयम्०. २. समृद्धम्०.

कामेन कयापि फलकामनया तपश्चचार चक्रे । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात्कामेनेत्युक्तम् । तस्यावाप्तसमस्तकामत्वात्केनापीत्युक्तम् ॥ ५७ ॥

चा०—तत्रेति । तस्मिन्प्रस्थे स्वमेवात्मीयमेव । मूर्त्यन्तरं मूर्तिविशेषमग्निं समित्समिद्धं समिद्भिर्हव्यकाष्ठैः प्रदीपितमाधायारोप्याष्टमूर्तिरष्टतनुः शम्भुः केनापि कामेन कयापि कामनया तपश्चचार चरतिस्म । कीदृशस्तपसः फलानां स्वर्गापवर्गादीनां स्वयं विधाता कर्ता । अष्टमूर्तिरिति क्षितिजलपवनहुताशनव्योमचन्द्रार्कयजमानाख्या अष्टमूर्तयो यस्य सः ॥ ५७ ॥

टिप्पणी—शिवस्य तपश्चरणे प्रवृत्तौ कापि फलकामना हेतुरितिपदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ५७ ॥

**अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।**
**आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥**

मल्लि०—अनर्घ्येति । अद्रीणां नाथोऽद्रिनाथो हिमवान् । अर्घं मूल्यमर्हतीत्यर्घ्यः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । 'दण्डादिभ्यो यः' इति यप्रत्ययः । अर्घ्यो न भवतीत्यनर्घ्यस्तमनर्घ्यम् । अमूल्यमित्यर्थः । स्वर्ग ओकः स्थानं येषां तेषां स्वर्गौकसां देवानामर्चितम् । देवैः पूज्यमानमित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । तमीश्वरमर्घ्येण पूजार्थोदकेन । 'पादार्घाभ्यां च' इति यत् प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्चयित्वा पूजयित्वास्येश्वरस्याराधनाय सखीभ्यां जयाविजयाभ्यां समेतां प्रयतां नियतां तनूजां सुतां समादिदेशाज्ञापयामास ॥ ५८ ॥

चा०—अनर्घ्यमिति । अद्रिनाथो हिमवान् अर्घ्येणार्घ्योदकादिना तमर्चयित्वा पूजयित्वा अस्य शंभोराराधनाय । सेवार्थं । सखीभ्यां समेतां युक्तां प्रयतां नियतां तनूजां पुत्रीं समादिदेशाज्ञापितवान् । कीदृशं तम् । अनर्घ्यं अपरिच्छेद्यस्वरूपं । तथा दिवौकसां देवानामर्चितं पूज्यं । दिवौकसामिति 'क्तस्य च वर्तमाने' इत्यनेन षष्ठी ॥ ५८ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ ५८ ॥

**प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने ।**
**विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ ५९ ॥**

मल्लि०—प्रत्यर्थीति । गिरीशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूतामपि । सुप्सुपेति समासः । श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम् । सेवका हि सेव्ये दत्तकर्णा भवन्ति । इच्छार्थे सन्प्रत्ययः । 'ज्ञाश्रुस्मृदृशां

सनः' इत्यात्मनेपदम् । तां पार्वतीमनुमेनेऽङ्गीचकार । न प्रतिषिद्धवानित्यभिप्रायः । न चैतावता धीरस्य कश्चिद्विकार इत्याशयः । धीरत्वमेवार्थान्तरन्यासेनाह—विकारेति । विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसंनिधानादिकारणे सति विद्यमानेऽपि येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते त एव धीराः । 'विक्रियन्ते' इति कर्मणि लट् ।। ५९ ।।

चा०—प्रत्यर्थीति । गिरिशः शंभुः समाधिर्नियमस्तस्य प्रत्यर्थिभूतामपि विघ्नकारिणीमपि शुश्रूषमाणां सेवमानां तां अनुमेनेऽङ्गीचकार । कथमनुमेने इत्याह । विकारहेतौ सति विद्यमानेपि येषां चेतांसि न विक्रियन्ते इति कर्मणि । न कर्तरि । शुश्रूषमाणामिति । 'ज्ञाश्रुस्मृदृशां स नः' इत्यात्मनेपदम् ।। ५९ ।।

टिप्पणी—अत्रार्थान्तरन्यासाऽलङ्कारः ।। ५९ ।।

शुश्रूषाप्रकारमेवाह—

अवचितबलिपुष्पा वेदिसंमार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ।। ६० ।।

मल्लि०—अवचितेति । सुकेशी शोभनमूर्धजा । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । सा पार्वत्यवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा वेदेर्नियमवेदिकायाः संमार्गे संमार्जने दक्षा नियमविधेर्नित्यकर्मानुष्ठानस्य यानि जलानि तेषां बर्हिषां कुशानां चोपनेत्र्यानेत्री सती तस्य गिरिशस्य शिरसि चन्द्रस्य पादै रश्मिभिः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । नियमितपरिखेदा निवर्तितपरिश्रमा सत्यहन्यहनि प्रत्यहम् । 'अव्ययं विभक्तिसमीपसमृद्धि—' इत्यादिना नियतार्थेऽव्ययीभावः नपुंसकादन्यतरस्याम्' इत्यच्प्रत्ययः । गिरिशमुपचचार शुश्रूषांचक्रे ।। ६० ।।

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालीदासकृतौ कुमारसंभवे महाकाव्य
उमोत्पत्तिर्नाम प्रथमः सर्गः ।। १ ।।

चा०—अवचितेति । सा सुकेशी गौरी प्रत्यहं प्रतिदिनं गिरिशमुपचचार सिषेवे । विशेषणैस्तामेव सेवामाह । कीदृशी । अवचितानि त्रोटितानि बल्यर्थं पूजार्थं पुष्पाणि यया सा । तथा । वेदिसंमार्गदक्षा वेदिसंमार्गः अग्निकुण्डसंमार्जनं तत्र चतुरा नियमविधिजलानां स्नानादिविधिपानीयानां बर्हिषां च कुशानां चोपनेत्री

सम्पादयित्री । पुनः कीदृशी । तच्छिरश्चन्द्रपादैः तस्य शंभोः शिरसि यश्चन्द्रस्तस्य पादाः किरणास्तैर्नियमितपरिखेदा नियमितस्तिरस्कृतः खेदः कुशाहरणादिश्रमो यस्याः सा । सुकेशीति 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीप् । वेदिसंमार्गदक्षेति । वेदिं संमार्ष्टीति संमार्ग इति कर्मण्यण् । सर्गान्तश्लोके मालिनीछन्दः । तल्लक्षणं ( ननमयययुतेयं मालिनी भोगिलोकैः इति ॥ ६० ॥ )

इति श्रीमालान्वयसाधुश्रीअरडकमल्लसमभ्यर्थितनरवेषसरस्वतीवाचनाचार्य-
श्रीचारित्रवर्द्धनविरचितायां कुमारसंभवटीकायां
शिशुहितैषिण्यां प्रथमः सर्गः ॥ १ ॥

टिप्पणी—पार्वत्या गिरिशोपचारे बलिपुष्पाऽत्रचयनादिपदार्थानां विशेषण-विधयोक्त्या पदार्थहेतुकं काव्यलिङ्गम् ॥ ६० ॥

## द्वितीयः सर्गः

तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥ १ ॥

मल्लि०—तस्मिन्निति ॥ तस्मिन्काले पार्वतीशुश्रूषाकाले तारकेण तारकनाम्ना वज्रणखपुत्रेण केनचिदसुरेण विप्रकृता उपप्लुता दिवभोकः स्थानं येषां ते दिवौकसो देवाः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । द्यौरोक इति पक्षे पृषोदरादित्वात्साधुः । तुरं त्वरितं साहयत्यभिभवतीति तुराषाट् । साहयतेश्चौरादिकात्क्विप् । 'नहिवृत्तिवृषि—' इत्यादिना पूर्वपदस्य दीर्घः । प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टावन्त इत्याचष्टे । तं तुरासाहं देवेन्द्रम् । अजादिषु सड्रूपत्वाभावात् । 'सहेः साढः सः' इति षत्वं न भवति । पुरोधाय पुरस्कृत्य । स्वयंभुवो ब्रह्मण इदं स्वायंभुवम् । संज्ञापूर्वकविधेरनित्यत्वात् 'ओर्गुणः' इति गुणो न । धाम स्थानं ययुः । ब्रह्मलोकं जग्मुरित्यर्थः ॥१॥

चा०—तस्मिन्निति यस्मिन्काले पार्वत्या ईशः शुश्रूषयितुमारब्धस्तस्मिन्काले प्रस्तावे वज्राङ्गजेन तारकेण विप्रकृता उपद्रुता दिवौकसो देवास्तुरासाहमिन्द्रं पुरोधायाग्रेकृत्वा स्वायंभुवं धाम गृहं ययुर्गतवन्तः । स्वयंभुवो ब्रह्मण इदं स्वायंभुवमिति । संज्ञापूर्वको विधिरनित्य इत्यनित्यत्वादोर्गुण इति न गुणः । तुरासाहमिति छान्दसः । क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते । दिवं ओको येषां ते दिवौकसः । दिवशब्दोऽकारान्तोप्यस्ति ॥ १ ॥

टिप्पणी—दिवौकसां स्वयम्भूधामगमने तारकासुरकर्तृकविप्रकृतिपदार्थस्य हेतोर्विशेषणतयाऽभिधानात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १ ॥

तेषामाविरभूद्ब्रह्मा परिम्लान मुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥

मल्लि०—तेषामिति । परिम्लाना परिक्षीणा मुखश्रीर्मुखकान्तिर्येषां तथोक्तानां तेषां देवानां ब्रह्मा सुप्तपद्मानां मुकुलितारविन्दानां सरसां प्रातर्दीधितमान्सूर्यं इवाविरभूत् । प्रकाशोऽभूदित्यर्थः । 'प्रकाशे प्रादुराविः स्यात्' इत्यमरः । सूर्योपमानेन तेषां म्लानिहरणत्वं सूचितम् । अत्रोपमालङ्कारः । तल्लक्षणं तु—'स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चैकपदोपमा ।' इति ॥ २ ॥

चा०—तेषामिति । ब्रह्मा तेषां देवानामाविरभूत्प्रकटीबभूव । कीदृशानां परिम्लानमुखश्रियां दैत्योपद्रवात्परिम्लाना मुखशोभा येषाम् । केषां क इव । सुप्त-

पद्मानां मुकुलितकमलानां सरसां सरोवराणां प्रातः प्रभाते दीधितिमानिव सूर्य इव । अनयोपमया खेदच्छेदकारी प्रसादः सूचितः ॥ २ ॥

**अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥**

मल्लि०—अथेति । अथाविर्भावानन्तरं सर्वे ते देवाः सर्वतः समन्ततो मुखानि यस्य तं सर्वतोमुखम् । चातुर्मुखमित्यर्थः वाचां विद्या, वागीशं सर्वस्य जगतो धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य । अर्थादनपेताभिरर्थ्याभिः । अर्थयुक्ताभिरित्यर्थः । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । वाग्भिरुपतस्थिरे । तुष्टुवुरित्यर्थः । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्' । इत्यात्मनेपदम् ।

चा०—अथेति । अथानन्तरं ते सर्वे देवा अर्थ्याभिरर्थादनपेताभिर्वाग्भिर्वाणीभिः सर्वस्य जगतो धातारं कर्तारं वागीशं ब्रह्माणं प्रणिपत्योपतस्थिरे तुष्टुवुः । कीदृशं । सर्वतोमुखं सर्वतोमुखानि यस्य तं उपतस्थिरे इति उपाद्देवपूजायामित्यात्मनेपदम् ॥ ३ ॥

टिप्पणी—एकस्य देवरूपकर्तृकारकस्य नमस्कृतिस्तुतिक्रियाद्वयसम्बन्धाद्दीपकाऽलङ्कारः । तदुक्तं साहित्यदर्पणे—अथ कारकमेकं स्यादनेकासु क्रियासु चेत् । स्वभावोक्तिरलङ्कारो वा । स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्, इति लक्षणात् ॥३॥

स्तुतिप्रकारमाह 'नमः' इत्यादिभिर्द्वादशभिः श्लोकैः—

**नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

मल्लि०—नम इति । हे भगवन्नित्यध्याहार्यं व्याख्येयम् । सृष्टेः प्राक् । 'अन्यारात्—' इत्यादिनाऽचूत्तरपदयोगे पञ्चमी । केवलात्मन एकरूपाय । 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतेः 'निर्णीते केवलमिति त्रिलिङ्गं त्वेवकृत्स्नयोः' इत्यमरः । पश्चात्सृष्टिप्रवृत्तिकाले । विभज्यतेऽनेनेति विभागः । गुणानां सत्त्वादीनां त्रयमेव विभागो यस्य तस्मै । 'गुणाः सत्त्वं रजस्तमः' इत्यमरः । भेदमुपाधिम् । स्रष्टृत्वादिकमित्यर्थः । उपेयुषे प्राप्तवते । 'उपेयिवाननाश्वाननूचानश्च' इति निपातः । अत एव त्रिमूर्तये ब्रह्मविष्णुरुद्ररूपिणे तुभ्यं नमः । 'नमः स्वस्ति—' इत्यादिना चतुर्थी । उक्तं च—'नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च । तमोरूपाय संहारे त्रिरूपाय स्वयंभुवे ॥' इति ॥ ४ ॥

तामेव स्तुतिमाह—

चा०—नम इति । भो ब्रह्मन् ! तुभ्यं नमः । किम्भूताय तुभ्यं त्रिमूर्तये तिस्रो ब्रह्मविष्णुहररूपा मूर्तयो यस्य तस्मै । तथा सृष्टेः प्राक् पूर्वं केवलात्मने एकरूपाय ।

( असङ्गो ह्ययं पुरुषः ) इति श्रुतेः । पुनः कीदृशाय । गुणत्रयविभागाय गुणानां सत्वरजस्तमसां त्रयस्य विभागार्थं पश्चाद्भेदं ब्रह्मादिलक्षणमुपेयुषे प्राप्तवतः । 'नमःस्वस्तिस्वाहास्वधालंवषट्योगाच्च' इत्यनेन चतुर्थी । उक्तं च—( नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च । तमोमयाय संहारे त्रिरूपाय स्वयंभुवे ।। ) इति ।।४।। अत्र स्वभावोक्तिः । परिणामालङ्कारो वा ।। ४ ।।

यदमोघमपामन्तरुप्तं बीजमज त्वया ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ।। ५ ।।

मल्लि०—यदिति ।। न जायत इत्यजः । हे अज, अपां जलानामन्तस्त्वया यदमोघमवन्ध्यं बीजं वीर्यमुप्तं निक्षिप्तं । 'मुक्तम्' इति पाठे विसृष्टमित्यर्थः । 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः । अतस्ते बीजाच्चराचरं स्थावरजंगमात्मकम् । समाहारे द्वन्द्वैकवद्भावः । विश्वं जगत् । उत्पन्नमिति शेषः । तस्य विश्वस्य । प्रभवत्यस्मादिति प्रभवः कारणं गीयसे । 'अदश्चराचरं विश्वं प्रसवस्तस्य गीयते' इति पाठे अद इदं चराचरं विश्वं तस्य बीजस्य प्रसवो गीयते । लोक इति शेषः । अत्र मनुः—'अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।। इति ।। ५ ।।

चा०—यदमोघमिति । भो अज ! न जायत इत्यजस्तस्य संबुद्धिः सनातन ! त्वयाऽपां मध्येऽमोघं सफलं यद्बीजं वीर्यमुप्तं क्षिप्तं । अतो बीजाच्चराचरं स्थावरजङ्गमात्मकं विश्वं । अत एवं तस्य विश्वस्य प्रभव उत्पत्तिर्गीयसेऽभिधीयसे । तथा च मनुः । ( सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अतएव ससर्जादौ तासु बीजमवासृजत् ।। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।। ५ ।।

टिप्पणी—ब्रह्मणो विश्वप्रभवत्वगानेऽमोघबीजवपनरूपपदार्थस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ।। ५ ।।

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ।। ६ ।।

मल्लि०—तिसृभिरिति ।। एकः सृष्टेः प्राक्केवलस्त्वं तिसृभिरवस्थाभिस्त्रैगुण्यमयीभिर्हरिहरब्रह्मस्वरूपाभिर्महिमानं निजशक्तिमुदीरयञ्जृम्भयन्प्रलयस्थितिसर्गाणामन्तस्थित्युत्पत्तीनां कारणतां गतः । इदं पश्चाद्भेदमुपेयुषे' ( २।४ ) इत्यस्य विवरणमतो न गतार्थत्वदोषः ।। ६ ।।

चा०—तिसृभिरिति । एकस्त्वमद्वितीयः प्रलयस्थितिसर्गाणां प्रलयः संहारः स्थितिः पालनं सर्गः सृष्टिस्तेषां कारणतां हेतुत्वं प्राप्तः नतु परमार्थतः । तथा च

श्रुतिः ( एकमेवाद्वितीयं ब्रह्म ) इति । किं कुर्वन् । तिसृभिः शम्भुविष्णुब्रह्मरूपाभिरवस्थाभिरुपाधिविशेषैर्महिमानं माहात्म्यमुदीरयन् प्रकटयन् ।। ६ ।।

टिप्पणी—यतस्त्वयाऽवस्थात्रयेण महिमोदीरितः अत एक एव प्रलयादित्रयस्य कारणत्वं प्राप्त इत्यर्थे ब्रह्मणः प्रलयस्थितिसर्गाणां कारणत्वप्राप्तावस्थात्रयकरणकमहिमोदीरणपदार्थानां हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ।। ६ ।।

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्तिमतो ब्रह्मणो भेदमाह—

स्त्रीपुंसावात्मभागौ[1] ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ।। ७ ।।

मल्लि०—स्त्रीपुंसाविति ।। स्त्री च पुमांश्च स्त्रीपुंसौ । 'अचतुर–' इत्यादिनाच्प्रत्ययान्तो निपातः । सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेर्द्विधाकृतविग्रहस्य ते तवात्मनो देहस्य भागावात्मभागौ । 'आत्मा जावे धृतौ देहे स्वभावे परमात्मनि' इति विश्वः । तावेव भागौ प्रसूतिभाज उत्पत्तिभाजः । सृज्यत इति सर्गस्तस्य । निजसृष्टेरित्यर्थः । माता च पिता च पितरौ । 'पिता' 'मात्रा' इत्येकशेषः । स्मृतौ । वृद्धैरिति शेषः । अत्र मनुः—'द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ।।' इति ।। ७ ।।

चा०—स्त्रीपुंसाविति । भो ब्रह्मन् ! स्त्रीपुंसौ 'अचतुरविचतुर–०' इत्यादिना निपातः । ते आत्मभागौ अंशौ । कीदृशस्य ते । सिसृक्षया स्रष्टुमिच्छया भिन्नमूर्तेर्द्विधाकृतवपुषः । प्रसूतिभाजो योनिप्रभवस्य सर्गस्य सृष्टेस्तावेव स्त्रीपुंसौ पितरौ माता च पिता च पितरौ "पिता मात्रा" इति एकशेषः । स्मृतौ । कथितौ । तथा च मनुस्मृतिः ( द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ) ।। ७ ।।

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ।। ७ ।।

स्वकालपरिमाणेन[2] व्यस्तरात्रिदिवस्य ते ।
यौ[3] तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ।। ८ ।।

मल्लि०—स्वकालेति ।। स्वकालस्य परिमाणेन 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इत्युक्तरूपेण व्यस्तं विभक्तं रात्रिदिवं रात्र्यहनी यस्य तस्य । यद्यपि 'अचतुर—' आदिसूत्रेण रात्रौ च दिवा च रात्रिदिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि 'दोषामन्यमहः' 'दिवामन्या रात्रिः' इत्यादौ कर्णवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथंचित्प्रयोगबलादाश्रयणी-

१. भावौ. २. परिणामेन.

३. यौ स्वप्नबोधौ तावेव, स्वप्नावबोधौ भूतानां तावेव.

यम् । ते तव यौ तु स्वप्नावबोधौ तावेव भूतानां प्रलयोदयौ संहारसृष्टी । यदाहुः—'यदा स देवो जागर्ति तदैव चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥' इति । एतच्च दैनंदिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥ ८ ॥

चा०—स्वकालेति । भो ब्रह्मन् ! यौ ते स्वप्नावबोधौ स्वप्नो निद्राऽवबोधो जागरणं भूतानां प्राणिनां प्रलयोदयौ तावेव । प्रलयः संहारः उदयः सृष्टिः । कीदृशस्य ते । स्वस्यात्मनः कालस्य परिमाणेन समयप्रमाणेन व्यस्तं विभागीकृतं रात्रिदिवं रात्रिश्च दिवा च रात्रिदिवं 'अचतुरविचतुर०" इत्यादिना समासान्तः । तथा च मनुः ( यदेतत्परिसंख्यातमादावेव चतुर्युगम् । एतद्द्वादशसाहस्रं देवानां युगमुच्यते । दैविकानां युगानां तु सहस्रं परिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च ॥ ) इति । यदा स देवो जागर्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं विलीयते ॥ ८ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ८ ॥

जगद्योनिरयोनिस्त्वं जगदन्तो[1] निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो[2] निरीश्वरः ॥ ९ ॥

मल्लि०—जगदिति । हे भगवन्, त्वं जगद्योनिर्जगत्कारणं स्वयमयोनिरनादित्वादकारणकस्त्वम् । अन्तयतीत्यन्तः । पचाद्यच् । जगतोऽन्तर्जगत्संहर्ता स्वयं निरन्तको नित्यत्वादन्तरहितः । त्वं जगतामादिर्जगदादिः । सृष्टे प्रागपि सन्नित्यर्थः । अतएव त्वमनादिरादिरहितः । त्वं जगतामीशो नियन्ता स्वयं निरीश्वरः । अनियम्य इत्यर्थः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादि श्रुतिरेवात्र प्रमाणम् । अत्रायोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः । बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालंकारः । यथाहुः—'विरोधाभासत्वे विरोधः' इति ॥ ९ ॥

चा०—जगद्योनिरिति । भो ब्रह्मन् ! जगद्योनिस्त्वमयोनिः जगद्योनिर्यस्य स तादृशोऽप्ययोनिः । न विद्यते योनिर्यस्य स अयोनिः रजोगुणोद्रेकवशाज्जगतां योनिरुत्पत्तिस्थानमिति योगिनः । स कथं न योनिरिति विरोधालङ्कारः । तथा त्वं जगदन्तोपि जगतामन्तः संहारस्तमोगुणोद्रेकत्वात् अनन्तकः न विद्यतेऽन्तको नाशकारी यस्य स तादृशः । योऽन्तको न भवति स कथमन्तक इति । न विद्यते आदिर्यस्यासावनादिः । जगत आदिः । य आदिर्न भवति स कथमादिरिति विरोधः । न विद्यते ईश्वरः स्वामी यस्य सोऽनीश्वरोऽपि । जगदीशो जगतः स्वामी । यः ईश्वरो न भवति स कथमीश्वर इति विरोधः । तथा च भगवद्गीतायां ( न जायते म्रियते ) इत्यादि ॥ ९ ॥

---

१. अनन्तो जगदन्तकः, जगदन्तोऽप्यनन्तकः. २. जगदीशोऽप्यनीश्वरः.

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह—

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥

**मल्लि०**—आत्मानमिति ॥ हे भगवन्, त्वमात्मानं लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपमात्मनैव वेत्सि जानासि । सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्विकेति भावः । तथात्मानमात्मनैव । आत्मन्येवेत्यत्रापि संबध्यते । स्वस्मिन्नेव सृजसि । अधिष्ठानमपि स्वयमेवेत्यर्थः । 'स्वे महिम्नि प्रतिष्ठितम्' इति श्रुतेः । कृतिना समर्थेन । इदं सर्वत्र सम्बध्यते । आत्मना स्वेनैवात्मन्येव प्रलीयसे स्वस्मिन्नेव' प्रलीनो भवसि । लीयतेर्दैवादिकात्कर्तरि लट् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात्सर्वत्रात्मनेति तृतीया । न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः ।

**चा०**—आत्मानमिति । आत्मना स्वयमात्मानं वेत्सि जानासि न केनाप्यन्येन । कृतिनात्मना स्वयमात्मानं सृजसि । निर्मासि । न च केनाप्यन्येन त्वं सृज्यसे । तवैव सर्गादिभूतत्वात् । त्वमात्मानात्मन्येव प्रलीयसे प्रलीनो भवति । न केनाप्यन्येन संह्रियसे । एतेन तव ज्ञाता कर्ता संहर्ता नान्योस्तीति दर्शितम् । नित्यस्य भगवतो धर्मरक्षणार्थमधर्मनिर्वहणार्थं च शरीरस्वीकारपरिहारवशादौपचारिकौ सृष्टिसंहारौ ॥ १० ॥

टिप्पणी—अत्रैकस्यैव त्वमितिकर्तृकारकस्य वेदनसर्जनलीनक्रियास्वन्वयाद्दीपकालङ्कारः ॥ १० ॥

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः[1] ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥

**मल्लि०**—द्रव इति ॥ त्वमित्यनुषज्यते । हे भगवन्, त्वं द्रवः सरित्समुद्रादिवद्रसात्मकोऽसि । संघातेन निबिडसंयोगेन कठिनो महिधरादिवत् । स्थूलं इन्द्रियग्रहणयोग्यो घटादिवत् । सूक्ष्मोऽतीन्द्रियः । परमाण्वादिवत् । लघुरुत्पतनयोग्यस्तुलादिवत् । गुरुर्हेमाद्रिवदचलनीयः । व्यक्तः कार्यरूपोऽसि । व्यक्तेतरः कारणरूपश्चासि । एव विभूतिष्वणिमादिषु ते तव । प्रकामस्य भावः प्राकाम्यं यथाकामत्वम् ॥ ११ ॥

**चा०**—द्रव इति । भो ब्रह्मन् ! तव विभूतिषु पृथिव्यादिमहिमासु प्राकाम्यं यथाचारित्वं सर्वं भवतीत्यर्थः । तदेवाह । त्वं द्रवोसि रसात्मकत्वात् । त्वं संघातकठिनोसि संघातेन दृढसंयोगेन कठिनत्वात् । स्थूलोप्यसि इन्द्रियग्रहणयोग्यत्वात् ।

१. गुरुर्लघुः.

सूक्ष्मश्चासि अतीन्द्रियत्वात् । लघुरपि वायुरूपत्वात् गुरुश्चापि महानपीत्यर्थः । आकाशरूपत्वात् । व्यक्तश्चासि दृश्यः । व्यक्तेतरश्चासि अदृश्यः । प्रकृतिपुरुषमयत्वात् । सर्वत्र विरोधालङ्कारो द्रष्टव्यः ॥ ११ ॥

टिप्पणी—एकस्यैव त्वम्पदार्थस्य द्रवादिविषयभेदादनेकधोल्लेखादुल्लेखाऽलङ्कारः ।विरोधालङ्कारश्च ॥ ११ ॥

उद्घातः[1] प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।
कर्मः यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥

मल्लि०—उद्घात इति ॥ हे भगवन्, यासां गिरां वाचामुद्घात उपक्रमः प्रणव ओंकारात्मकः । 'ओंकारप्रणवौ समौ' इति । 'स्यादन्यादानमुद्घात आरम्भः' इति चामरः । इदमुपसंहारस्याप्युपलक्षणम् । 'ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः । दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥' इति निरुक्तपरिशिष्टयोर्यास्कः । नीयन्त एभिरर्थविशेषा इति न्यायाः स्वराः । उक्तं च—स्वरविशेषादर्थप्रतिपत्तिः' । 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति । यासां गिरां त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः स्वरैरुदीरणमुच्चारणम् । यासां कर्म । प्रतिपाद्यमित्यर्थः । यज्ञो ज्योतिष्टोमादिः । न तु चैत्यवन्दनादिरिति भावः । फलं स्वर्गः । कर्मद्वारेति शेषः । कर्मस्वर्गौ ब्रह्मापवर्गयरोप्युपलक्षणे । त्वं तासां गिरां । वेदानामित्यर्थः । प्रभवत्यस्मादिति प्रभवः कारणम् । प्रणेता स्मर्ता वा मतभेदेन ॥ १२ ॥

चा०—उद्गीथ इति । भो ब्रह्मन् ! तासां गिरां वाचां त्वं प्रभवः प्रवर्तको नोत्पादक इति भावः । तासामिति कासां । यासां प्रणव ओंकार उद्गीथ आरम्भः समापकश्च वेदाध्ययनानुष्ठानादावन्ते चोङ्कारः पठ्यते । यासां च त्रिभिर्न्यायैरुदात्तानुदात्तस्वरितैः संहितापदक्रमरूपैर्वा उदीरणमुच्चारणं यासां च कर्म क्रिया यज्ञोऽग्निहोमादिः यासां फलं स्वर्गः ॥ १२ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ १२ ॥

सांख्यमतेन स्तुवन्ति—

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥

मल्लि०—त्वामिति ॥ हे भगवन्, त्वां पुरुषस्यार्थो भोगापवर्गरूपस्तदर्थं प्रवर्तत इति पुरुषार्थप्रवर्तिनीं तां प्रकृतिं त्रैगुण्यात्मकं मूलकारणम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणम्' इति यादवः । आमनन्ति कथ-

---

१. उद्गीथः.

यन्ति । 'म्ना अभ्यासे' इति धातोर्लट् । 'पाघ्राध्मास्थाम्ना–' इत्यादिना मनादेशः । प्रकृतिपुरुषभेदाग्रहणात्प्रकृतिपुरुषाभेदव्यपदेशः । त्वामेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनमुदासीनं कूटस्थं पुरुषं विदुर्विदन्ति । 'विदो लटो वा' इति झेर्जुसादेशः । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिरत्र प्रमाणम् ॥ १३ ॥

चा०—त्वामिति । भो ब्रह्मन् ! पुरुषार्थप्रवर्तिनी प्रकृतिं बुद्धिं त्वामामनन्ति कथयन्ति । साङ्ख्या इति शेषः । पुरुषार्था धर्मादयस्तेषु प्रवर्तते इति तादृशीं । बुद्धेरुपभोगः पुरुष आरोप्यते । तद्दर्शनं तां प्रकृतिं पश्यतीति कर्मण्यण् । दर्शनमुदासीनं निष्क्रियं त्वामेव विदुर्जानन्ति । दृश्या प्रकृतिर्द्रष्टा पुरुष इति साङ्ख्याः ॥

टिप्पणी—एकस्यैव त्वां पदार्थस्य ग्रहीतृभेदात्प्रकृतित्वेन पुरुषत्वेन चोल्लेखादुल्लेखालङ्कारः ॥ १३ ॥

**त्वं पितृणामपि पिता देवानामपि देवता ।**
**परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥**

मल्लि०—त्वमिति ॥ हे भगवन्, त्वं पितृणामग्निष्वात्तादीनामपि पिता । तेषामपि तर्पणीय इत्यर्थः । देवानामिन्द्रादीनामपि देवता । तेषामपि यजनीय इत्यर्थः । परतोऽपि परश्चासि । सर्वोत्तरोऽसीत्यर्थः । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महांस्ततः । महतः परमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति सर्वोत्तरत्वाभिधानात् । वेधसां दक्षादीनामपि विधाता स्रष्टासि ॥ १४ ॥

चा०—त्वमिति । भो ब्रह्मन् ! पितृणामपि पितासि । च पुनः देवानामपि शक्रादीनामपि देवताऽसि । याज्यत्वात् । परतोपीन्द्रियादिभ्यः परश्चासि । तदुक्तम् । ( इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यस्तु परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा ततो महान् । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ) वेधसां दक्षादीनामपि विधाता कर्तासि ॥ १४ ॥

टिप्पणी—एकस्यैव त्वं पदार्थस्य पितृपितृत्वादिविषयभेदादनेकधोल्लेखादुल्लेखालङ्कारः ॥ १४ ॥

**त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः ।**
**वेद्यं[1] च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥ १५ ॥**

मल्लि०—त्वमेवेति ॥ शश्वत्सिद्धः शाश्वतः । शैषिकोऽण्प्रत्ययः । यद्यपि 'कालाट्ठञ्' इति ठञपवादः । अत एव सूत्रकारस्यापि प्रयोगः—'येषां च विरोधः शाश्वतिकः' इति । तथापि प्रयोगवशात्साधुरिति वामन

1. वेद्यं वेदयिता; वेद्यश्च वेदिता.

इति। शाश्वतः प्रयुक्तः शाश्वतस्त्वमेव। हूयत इति हव्यं हविराज्यादिकम्। जुहोतीति होता यजमानश्चासि। भोज्यमभ्यवहार्यमन्नम्। 'भोज्यं भक्ष्ये' इति निपातनात्कुत्वाभावः। भोक्तान्नादश्चासि। वेद्यं साक्षात्कार्यं वस्तु वेदिता साक्षात्कर्ता चासि। ध्याता स्मर्ता च। यत्परं वस्तु ध्येयं तच्चासि। साक्षात्कारसाधनाभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥ १५ ॥

चा०—त्वमेवेति। भो ब्रह्मन्! हव्यं होतव्यं वस्तु त्वमेव। होता यो जुहोति स त्वमेव। भोज्यं यदुपभुज्यते तत्त्वमेव। भोक्ता यो भुङ्क्ते स त्वमेव। शाश्वतो नित्यस्त्वमेव। वेद्यं ज्ञेयं त्वमेव। वेदिता ज्ञाता च त्वमेव। ध्येयं यच्च परमुत्कृष्टं तत्त्वमेव। कर्तृकर्मणोरभेदमाश्रित्यैवं स्तुतिः ॥ १५ ॥

टिप्पणी—अत्राऽप्युल्लेखाऽलङ्कारः ॥ १५ ॥

इति तेभ्यः स्तुतीः श्रुत्वा यथार्था[1] हृदयंगमाः।
प्रसादाभिमुखो वेधाः[2] प्रत्युवाच दिवौकसः ॥ १६ ॥

मल्लि०—इतीति ॥ वेधा ब्रह्मेति तेभ्यो देवेभ्यः। 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी। यथार्थाः सत्या अत एव हृदयं गच्छन्तीति हृदयंगमा मनोहराः। खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः। 'अरुर्द्विषजन्तस्य मुम्' इति मुमागमः। स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभिमुखोऽनुग्रहप्रवणः सन्। दिवौकसो देवान्प्रत्युवाच ॥ १६ ॥

चा०—इतीति। वेधः ब्रह्मा दिवौकसो देवान्प्रत्युवाच। वक्ष्यमाणमित्यर्थात्। किं कृत्वा। इति तेभ्यो देवेभ्यः स्तुतीः श्रुत्वा। कीदृशीः। यथार्थाः सत्याः। तथा हृदयंगमाः मनसः प्रियाः। हृदयंगमा इति "गमश्च" इति खच्। कीदृशो वेधाः। प्रसादाभिमुखः प्रसादेन संमुखः। तेभ्य इति "आख्यातोपयोगे" इति पञ्चमी ।१६।

टिप्पणी—दिवौकसः प्रतिवेधसः कथने इन्द्रादिदेवकर्तृकहृदयङ्गमस्तुतिप्रवणरूपहेतोः पदार्थत्वेनाऽभिधानात्पदार्थहेतुकङ्काव्यलिङ्गम् ॥ १६ ॥

अथ कविराह—

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥

मल्लि०—पुराणस्येति ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति चतुष्टयी चतुर्विधा। 'संख्याया अवयवे तयप्' इति तयप्। 'टिड्ढाणञ्द्वयसच्—' इत्यादिना ङीप्। शब्दानां प्रवृत्तिर्वैखरीप्रमुखा वाग्वृत्तिः। उक्तं च—'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ॥' इति। पुराणस्य पुरातनस्य।

---

१. यथार्थ. २. ब्रह्मा.

पृषोदरादित्वात्साधुः । कवेः कवयितुस्तस्य ब्रह्मणश्चतुर्भिर्मुखैः समीरिता सती। 'तद्धितार्थ-' इत्यादिनोत्तरपदसमासः। समाहारे चतुर्मुखीति स्यात् । चरितार्थान्विवर्थासीत् । चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासो-दित्यर्थः ॥ १७ ॥

चा०—पुराणस्येति । पुराणस्याद्यस्य कवेर्ब्रह्मणश्चतुर्मुखसमीरिता चतुर्भिर्मुखैः समीरितोच्चारिता चतुष्टयीति द्रव्यगुणक्रियाभेदेन शब्दानां प्रवृत्तिश्चरितार्था कृतार्थाऽभूत् । जातिगुणक्रियाद्रव्यस्य भेदेन चतुष्टयीशब्दानां प्रवृत्तिरिति महाभाष्य-कारः । चतुष्टयीति "संख्याया अवयवे तयप्", "ह्रस्वात्तादौ तद्धिते" इति षत्वम् ॥ १७ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ १७ ॥

भगवानाह—

**स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।**
**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ १८ ॥**

मल्लि०—स्वागतमिति ॥ हे प्राज्यविक्रमाः प्रभूतपराक्रमा देवाः । 'प्राज्यं भूरिप्रभूतं च' इति यादवः । स्वान्स्वकीयानधिकारान्नियोगान् । 'उपसर्गस्य घञि-' इति वा दीर्घः । प्रभावैः सामर्थ्यैरवलम्ब्यास्थाय । यथाधिकारं स्थित्वापीत्यर्थः । युगपत्समकालं प्राप्तेभ्यः । युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः । युगबाहुभ्यः । दीर्घबाहुभ्य इत्यर्थः । अजानुबाहुत्वं भाग्यलक्षणम् । वो युष्मभ्यम् । 'बहुवचनस्य वस्नसौ' इति वसादेशः । 'कर्मणा यमभिप्रैति-' इत्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदान-त्वम् । स्वागतं शोभनागमनम् । काकुरत्रानुसंधेया ॥ १८ ॥

किं प्रत्युवाचेत्याह—

चा०—स्वागतमिति । भो प्राज्यविक्रमाः ! प्राज्योऽधिको विक्रमो येषां ते ईदृशा देवा वो युष्मभ्यं स्वागतं शोभनमागमनमस्तीति शेषः । कीदृशेभ्यो वः । स्वानात्मीयानधिकारान्नियोगान् प्रभावैर्महिमाभिरचलं व्याधिष्ठाय युगपत्समकालं प्राप्तेभ्य आगमेभ्यः । नहि सूर्यादयो नभो भ्रमणादिनियोगं त्यक्त्वा समाशिषुरि-त्यर्थः । पुनः कीदृशेभ्यः । युगाबाहुभ्यः युगं हस्तद्वयं तनूप्रमाणं बाहवो येषां तेभ्यः स्वागतं वचनविशेषं सपद्युपस्थिते मित्रे नागतं त्वया इति यत्प्रश्नवचनं तत्स्वागत-मुदाहृतमित्युक्तत्वात् । व इति युष्मभ्य इत्यस्य स्थाने "बहुवचनस्य वस्नसौ" इत्यनेन वसादेशः ॥ १८ ॥

टिप्पणी—अत्र काकुवक्रोक्तिः ॥ १८ ॥

किमिदं[1] द्युतिमात्मीयां न बिभ्रति यथा पुरा।
हिमक्लिष्टप्रकाशानि[2] ज्योतींषीव मुखानि वः॥ १९॥

मल्लि०—किमिति॥ 'वत्साः' इत्युत्तरश्लोकीय (४।२८) संबोधनमात्राप्यनुषञ्जनीयम्। हे वत्साः पुत्रकाः, हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि ज्योतींषि नक्षत्राणीव। 'दीप्तिताराहुताशेषु ज्योतिः' इति शाश्वतः। वो युष्माकं मुखानि पुरा यथा पूर्वमिवात्मीयां द्युतिं न बिभ्रति। इदम् किम्। किंनिबन्धनमित्यर्थः। किमिदमित्यनेन वाक्यार्थः परामृश्यते॥ १९॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

चा०—किमिति। भो देवाः! युष्माकं मुखान्यात्मीयां निजां द्युतिं न बिभ्रति न धारयन्ति। यथा पुरा पूर्वं दधुस्तथेतिशेषः। किमिदं किमेतत् ।ब्रूतेति स्वयमध्यहार्यं। कानीव। हिमक्लिष्टप्रसादानि हिमेन तुषारेण क्लिष्टः कदर्थितः प्रसादो नैर्मल्यं येषां तानि ज्योतींषीव नक्षत्राणीव॥ १९॥

टिप्पणी—अत्रोपमाऽलङ्कारः॥ १९॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

प्रशमादर्चिषामेतदनुद्गीर्ण[3]सुरायुधम्।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव[4] लक्ष्यते॥ २०॥

मल्लि०—प्रशमादिति॥ अर्चिषां तेजसां प्रशमान्निर्वाणानुद्गीर्णसुरायुधम्। अनुदितचित्रप्रभमित्यर्थः। एतद्वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रम्। कुण्ठिता अश्रयो यस्य तत्कुण्ठिताश्रि कुण्ठितकोटीव लक्ष्यते दृश्यते॥ २०॥

साम्प्रतमेकैकस्य विशिष्याह—

चा०—प्रशमादिति। वृत्रस्य हन्तुरिन्द्रस्य कुलिशं वज्रं कुण्ठिताश्रीव कुण्ठिता हतशक्तिरसिर्धारा यस्य तत्तादृशं लक्ष्यते दृश्यते। कीदृक्। अर्चिषां दीप्तीनां प्रशमान्निर्वाणादनुद्गीर्णसुरायुधमनुद्गीर्णमनुच्छ्रितं सुरायुधमिन्द्रधनुर्यस्मात्तत्। कुलिशादस्थिसमूहादिन्द्रचापोदय इत्याहुः। 'कोटिरश्री प्रकर्षे च' इति वैजयन्ती।

टिप्पणी—अत्रोपमाऽलङ्कारः॥ २०॥

किं चायमरि[5]दुर्वारः पाणौ पाशः प्रचेतसः।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः॥ २१॥

मल्लि०—किं चेति॥ किं चायमरिदुर्वारो रिपुदुष्प्रधर्षः प्रचेतसो

---

१. इमाम्; इति. २. प्रभावानि. ३. अनुद्गूर्ण; अनुगूर्ण. ४. कुण्ठतश्री. ५. अपि.

वरुणस्य। 'प्रचेता वरुणः पाशी' इत्यमरः। पाणौ पाशो रज्जुरायुधविशेषः। मन्त्रेण गारुडेन हतवीर्यस्य प्रतिबद्धशक्तेः फणिनः सर्पस्य दैन्यं शोच्यत्वमाश्रितः। अत्र फणिनिष्ठदैन्यस्य पाशेऽसम्भवाद्दैन्यमिव दैन्यमिति कल्पनादसंभवद्वस्तुसंबन्धो निदर्शनालंकारः॥ २१॥

चा०—किञ्चेति। किं चान्यच्चाऽयं प्रचेतसो वरुणस्य पाणौ हस्त पाशोऽस्त्रविशेषो मन्त्रेण हतवीर्यस्य हतं प्रतिबद्धं वीर्यविषादिशक्तिर्यस्य तस्य फणिनः सर्पस्य दैन्यं दीनतामाश्रितः। कीदृशः पाशोऽरिदुर्वारः शत्रुभिर्निषेद्धुमशक्यः॥ २१॥

कुबेरस्य मनःशल्यं शंसतीव पराभवम्।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः॥ २२॥

मल्लि०—कुबेरस्येति॥ अपविद्धा त्यक्ता गदा येन सोऽपबिद्धगदः। अतएव भग्नशाखो द्रुम इव स्थितः कुबेरस्य बाहुर्मनःशल्यम्। दुखहेतुत्वान्मनसः शल्यप्रायमित्यर्थः। पराभवम्। शत्रुकृतमिति शेषः। शंसतीव कथयतीव। लक्षणयानुमापयतीत्यर्थः। बाहौ मुख्यकथनस्यासम्भवादिवशब्दोऽप्यत एव॥ २२॥

चा०—कुबेरस्येति। कुवेरस्याऽपविद्धगदोऽपविद्धा त्यक्ता गदा येन स तादृशो बाहुर्भुजो मनःशल्यं मनसः शल्यभूतं पराभवं शत्रुकृताभिभवं शंसतीव कथयतीव। क इव। भग्नशाखो भग्ना छिन्ना शाखा यस्य तादृशो द्रुम इव॥ २२॥

टिप्पणी—अत्रोपमोत्प्रेक्षयोः संसृष्टिः॥ २२॥

यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम्॥ २३॥

मल्लि०—यम इति॥ अस्तं नाशमिताः प्राप्ताः। अस्तमिति मकारान्तमव्ययम्। तस्य 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः। अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन दण्डेन यमोऽपि भूमिं विलिखन्नमोघेऽपि प्रागिति भावः। अस्मिन्दण्डे निर्वाणालातस्य शान्तोल्मुकस्य। अलातं नाम भूलेखनशलाका तस्य यल्लाघवं क्लैब्यं तत्कुरुते। 'अलातमुल्मुकं ज्ञेयम्' इति हलायुधः। निर्वाणोऽवाते' इति निपातनान्निष्ठानत्वम्। अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः॥ २३॥

चा०—यमोपीति। यमोपि कालोपि अस्मिन् कालदण्डे निर्वाणालातलाघवं निर्वाणस्य प्रशान्तस्याद्धदग्धकाष्ठस्य लाघवमनादरं कुरुते। "निर्वाणोऽवातो" इति निपातः। किं कुर्वन्। अस्तमितत्विषा नष्टदीप्तिना दण्डेन भूमौ विलिखन्॥ २३॥

**अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।**
**चित्रन्यस्ता इव [1]गताः प्रकाशमालोकनीयताम्[2] ॥ २४ ॥**

**मल्लि०**—अमी इति ॥ प्रतापक्षत्या तेजसां क्षयेण शीतला अमी आदित्याश्च । द्वादशेति शेषः । कथम् । केन हेतुनेत्यर्थः । चित्रन्यस्ताश्चित्रलिखिता इव । प्रकाममत्यन्तमालोकनीयतां दृश्यतां गताः प्राप्ताः ॥ २४ ॥

**चा०**—अमीचेति । अमी द्वादशादित्याश्च प्रतापक्षतिशीतलास्तेजःक्षयशीताश्चित्रन्यस्ता इव चित्रलिखिता इव प्रकामालोकनीयतां स्वेच्छानिरीक्षणीयतां कथं गताः प्राप्ताः । 'प्रतापस्तापतेजसोः' इति विश्वः ॥ २४ ॥

टिप्पणी—अत्रोपमालङ्कारः ॥ २४ ॥

**पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।**
**अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥**

**मल्लि०**—पर्याकुलेति ॥ मरुतां वायूनाम् । सप्तसप्तानामिति शेषः । पर्याकुलत्वात्स्खलितगतित्वाद्धेतोर्वेगस्य भङ्गोऽम्भसां जलानां प्रतीपगमनात् । उत्तानावरोहादित्यर्थः । ओघस्य संरोधः प्रवाहप्रतिबन्ध इवानुमीयते ॥ २५ ॥

**चा०**—पर्याकुलेति । मरुतां वायूनां पर्याकुलत्वात् पुञ्जीभूतत्वाद्धेतोर्वेगभङ्गो वेगावरोधोऽनुमीयते ज्ञायते । क इव प्रतीपगमनाद्विपरीतगमादम्भसां जलानामेव संरोधः प्रवाहरोध इव ॥ २५ ॥

टिप्पणी—उपमानुमानयोः संसृष्टिः ॥ २५ ॥

**आवर्जितजटामौलिविलम्बिशशिकोटयः ।**
**रुद्राणामपि मूर्धानः क्षत[3]हुंकारशंसिनः ॥ २६ ॥**

**मल्लि०**—आवर्जितेति ॥ आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः । रुद्राणामपि । एकादशानामिति शेषः । मूर्धानः क्षतं हुङ्कारं शंसन्तीति तथोक्ताः । हुङ्कारक्षत्यनुमापका इत्यर्थः । हुङ्कारशस्त्रा हि रुद्रा इति भावः ॥ २६ ॥

**चा०**—आवर्जितेति । रुद्राणामेकादशानामपि मूर्द्धानः क्षताहंकारशंसिनः । सन्तीतिशेषः । क्षतो नष्टो योऽहंकारोऽभिमानस्तं शंसन्तीति तादृशाः । कीदृशाः । आवर्जिताः स्रस्ता जटा एव मौलयो मुकुटानि तेषु विलम्बिनो अवलम्बमाना शशिकोटिश्चन्द्रलेखा येषु ते तादृशाः ॥ २६ ॥

---

१. आयाताः. २. दर्शिनः, दर्शनम्. ३. अहंकार.

टिप्पणी—भाविकस्वभावोक्त्योरेकाश्रयानुप्रवेशसङ्करः ॥ २६ ॥

लब्धप्रतिष्ठाः प्रथमं यूयं[1] किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥

मल्लि०—लब्धेति ॥ प्रथमं पूर्वं लब्धप्रतिष्ठा लब्धस्थितयः । लब्धावकाशा इत्यन्यत्र । यूयं बलवत्तरैः पौरुषातिरेकात्प्रबलतरैः । निरवकाशैरित्यपरत्र । परैः शत्रुभिरुत्सर्गाः सामान्यशास्त्राणि 'मा हिंस्यात्' इत्येवमादीनि । अपोह्यन्त एमिरित्यपवादैः 'गामालभेत' इत्यादिभिर्विशेषशास्त्रैरिव किं कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः । कृतविषयसंकोचरूपबाधा इत्यन्यत्र । 'विषयसंकोच एव बाधः' इत्याचार्याः । निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसंकोच इत्यलमतिगहनावगाहनेन ॥ २७ ॥

चा०—लब्धप्रतिष्ठेति । भो देवाः ! प्रथमं पूर्वं लब्धप्रतिष्ठाः प्राप्तस्थितयो यूयं बलवत्तरैर्बलिष्ठैः परैः शत्रुभिः किं कृतव्यावृत्तयो विहितास्पदभङ्गाः किमिति प्रश्नः । कै क इव । अपवादैरुत्सर्गा इव । यथा प्राक् प्राप्तस्थाना उत्सर्गाः कर्मण्यनित्यादिशास्त्राणि अपवादैरिति । "आतोऽनुपसर्गे कः" इत्यादिविशेषलक्षणैः कृतव्यावृत्तयो भवन्ति ॥ २७ ॥

टिप्पणी—अत्रोपमालङ्कारः ॥ २७ ॥

तद्ब्रूत वत्साः किमितः प्रार्थयध्वं[2] समागताः ।
मयि सृष्टिर्हि लोकानां[3] रक्षा युष्मास्ववस्थिता ॥ २८ ॥

मल्लि०—तदिति ॥ तत्तस्मात्कारणात् । हे वत्साः पुत्रकाः । 'वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सं तु वक्षसि' इति विश्वः । स्वयं पितामहत्वाद्वत्सा इत्यामन्त्रयते । संभूयागताः समागताः इतो मत्तः किं प्रार्थयध्वम् । किमिच्छतेत्यर्थः । ब्रूत । लोकरक्षणे यूयमेव कर्तार इत्याह—मयि लोकानां सृष्टी रक्षा युष्मास्ववस्थिता । अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥ २८ ॥

चा०—तद्ब्रूतेति । भो वत्साः पुत्रकास्तद्ब्रूत कथयत । समागताः यूयमितो मत्सकाशात्किं प्रार्थयध्वे सन्देहपूर्वके प्रश्ने किंशब्दः । हि यतो मयि स्रष्टरि लोकानां भुवनानां सृष्टिः । रक्षा युष्मासु भवत्सु अवस्थिताऽऽयत्ता ॥ २८ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ २८ ॥

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास[4] वासवः[5] ॥ २९ ॥

---

१. न खलु स्थ बलोत्तरैः. २. प्रार्थयध्वे. ३. भूतानाम्. ४. चोदयामास; प्रेरयामास. ५. वृत्रहा.

**मल्लि०**—तत इति ॥ ततो भगवत्प्रश्नानन्तरं वासव इन्द्रो गुरुं बृहस्पतिम् । 'गुरुर्गीष्पतिपित्राद्यौ' इत्यमरः । मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन नेत्राणां सहस्रेण नोदयामास प्रेरयामास । सहस्रग्रहणमास्थातिशयार्थम् । अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥ २९ ॥

**चा०**—तत इति । ततो ब्रह्मवचनानन्तरं वासव इन्द्रो गुरुं बृहस्पतिं नेत्रसहस्रेण प्ररयामास प्रेरितवान् । वक्तुमितिशेषः । कीदृशेन मन्दानिलेन कमलवनं तद्वदच्छो भवति तादृशेन स्वतो निमेषाणां नेत्राणामिच्छावशाच्चालने युज्यते ॥२९॥

टिप्पणी—कमलाकर इव शोभते इत्यर्थे लुप्तोपमा ॥ २९ ॥

**स द्विनेत्रं[1] हरेश्चक्षुः[2] सहस्रनयनाधिकम् ।**
**वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥**

**मल्लि०**—स इति ॥ हरेरिन्द्रस्य । 'इन्द्रो दुश्च्यवनो हरिः' इति हलायुधः । सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकम् । तदगोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य तद्द्विनेत्रम् । प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः । चक्षुश्चक्षुर्भूतः । स च वाचस्पतिः । कस्कादित्वादलुक्सत्वे । 'षष्ठ्या पतिपुत्र—' इत्यादिना सत्वमिति स्वामी । तन्न, छन्दोविषयत्वात् । प्राञ्जलिः सन् । जलजासनं ब्रह्माणमिदमुवाच चक्षुष्ट्वारोपस्य प्रकृतोपयोगात्परिणामालङ्कारः ॥ ३० ॥

**चा०**—स इति । वाचस्पतिः प्राञ्जलिर्बद्धाञ्जलिर्जलजासनं ब्रह्माणमिदं वक्ष्यमाणमुवाचोक्तवान् । किंभूतः । सहस्रनयनाधिकं हरेरिन्द्रस्य द्विनेत्रं द्वे नेत्रे यस्य तादृशमपि चक्षुश्चक्षुरिव कस्कादित्वात्सकारादेशः । सहस्रं नयनानि समाहृतानि सहस्रनयनं पात्राद्यन्तस्य नेति विषेधात्स्त्रीलिङ्गाभावः ॥ ३० ॥

**एवं यदात्थ[3] भगवन्नामृष्टं नः परैः पदम् ।**
**प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि[4] प्रभो ॥ ३१ ॥**

**मल्लि०**—एवमिति ॥ हे भगवन् षड्गुणैश्वर्यसम्पन्नः यदात्थ 'कृतव्यावृत्तयः परैः' (२।२७) इति यद्ब्रवीषि । 'ब्रुवः पञ्चानाम्—' इत्यादिनाहादेशः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । आहेति भूते णलन्तभ्रमवदिति । आहेत्युपलक्षणम् । तदेव सत्यम् नोऽस्माकं पदमधिकारः परैः शत्रुभिरामृष्टमाक्षिप्तम् । हे प्रभो, प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः । सर्वान्तर्यामीत्यर्थः । कथं न ज्ञास्यसि न वेत्सि । वर्तमानेऽपि

१. द्विनेत्रः. २. दशचक्षुः शताधिकम्. ३. यथा ४. ज्ञास्यति प्रभुः

वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः। 'अपन्हवे ज्ञः' 'अकर्मकाच्च' इत्यात्मनेपदविकल्पः ॥ ३१ ॥

उक्तमेव प्रपञ्चयति—

चा०—किमुवाचेत्याह। एवमिति। भो भगवन्! एवं लब्धप्रतिष्ठा इत्यादि यदात्थ वदसि। परैः शत्रुभिर्नोऽस्माकं पदं स्थानमामृष्टं परिहृतं प्रभुरीश्वरः कथं न ज्ञास्यति अपि तु ज्ञास्यत एव। कीदृशः प्रभुः। एकमेकं प्रत्येकं विनियुक्तोऽवस्थापित आत्मा येन सः। ज्ञास्यत इति "अपह्नवे ज्ञः" "अकर्मकाच्च" इत्यात्मनेपदम्। वर्तमानेपि लट् प्रयोगः। पदसंस्कारपक्षे साध्यः। यथा श्वो गमिष्यसीत्यादौ ॥ ३१ ॥

टिप्पणी—हे प्रभो कथं न ज्ञास्यसि अपितु ज्ञास्यस्येवेत्यन्यार्थविगमादर्थापत्तिरलङ्कारः ॥ ३१ ॥

उक्तमेव प्रपञ्चयति—

भवल्लब्धवरोदीर्णस्तारकाख्यो[1] महासुरः।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥

मल्लि०—भवदिति ॥ भवतस्त्वत्तो लब्धेन वरेणोदीर्ण उद्धतः तारक इत्याख्या नामधेयं यस्य स तारकाख्यः। महानसुरो महासुरः। 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः। धूमकेतुरुत्पातविशेष इव लोकानामुपप्लवायोपद्रवायोत्थित उत्पन्नः ॥ ३२ ॥

कैः पदमामृष्टमित्याह—

चा०—भवदिति। भवल्लब्धवरोदीर्णो भवत्सकाशाल्लब्धो वरो येनात एवोदीर्णो लङ्घितमर्यादः प्रवृद्धो वा तारकाख्यस्तारकनामा महासुरो लोकानामुपप्लवाय विनाशायोत्थितः। क इव। धूमकेतुरिव धूमाकरः केतुर्धूमकेतुः। यथा धूमकेतुर्लोकनाशायोत्तिष्ठति। तथाऽयमपीत्यर्थः ॥ ३२ ॥

टिप्पणी—अत्रोपमालङ्कारः ॥ ३२ ॥

पुरे तावन्तमेवास्य तनोति[2] रविरातपम्।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥ ३३ ॥

मल्लि०—पुर इति ॥ अस्य तारकस्य पुरे रविः सूर्यस्तावन्तं तावन्मात्रमेवातपं तनोति। यावन्मात्रेण यावतैव। यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा। अल्प परिमाणेनेत्यर्थः मात्रा परिच्छदे। अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विकासः साध्यते निष्पाद्यते

---

१. त्वया दत्त, भवद्दत्त २. करोति,

कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशत इत्यभिप्रायः ॥ ३३ ॥

तस्योदीर्णत्वमाह—

चा०—पुर इति । सूर्योऽस्य पुरे नगरे तावन्तमेव तत्परिमाणमेवातपमुद्योतमातनोति विस्तारयति । यावन्मात्रेण यावता तापेन दीर्घिकाकमलोन्मेषो वापीपद्मविकाशः साध्यते जन्यते । नत्वधिकं तद्भयात् ॥ ३३ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेशसङ्करः ॥ ३३ ॥

**सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।**
**नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥**

मल्लि०—सर्वाभिरिति ।। चन्द्रस्तं तारकं सर्वदा । कृष्णपक्षेऽपीत्यर्थः । सर्वाभिः कलाभिर्निषेवते । 'कला तु षोडशो भागः' इत्यमरः । केवलां हरचूडामणीकृतां शिवशिरोमणीकृतां लेखां नादत्ते न गृह्णाति ॥ ३४ ॥

चा०—सर्वाभिरिति । चन्द्रः सर्वदा सर्वकालं सर्वाभिरखिलाभिः कलाभिस्तं निषेवते । केवलां हरस्य शिवस्य चूडायां जटायां मणीकृतां लेखां नादत्ते न गृह्णाति । तस्य खण्डेन्दुना क उपयोग इति भावः ॥ ३४ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकालङ्कारश्चेति द्वयोरेकाश्रयानुप्रवेशसङ्करः ॥ ३४ ॥

**व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ।**
**न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥**

मल्लि०—व्यावृत्तेति ।। वायुः स्तेनस्य भावः कर्म वा स्तेयं चौर्यम् । 'स्तेनाद्यन्नलोपश्च' इति यत्प्रत्ययो नलोपश्च । कुसुमानां स्तेयं तस्मात्स्तेयाभियोगाद्दण्डाद्वा साध्वसं भयं तस्माद्धेतोरुद्याने व्यावृत्तगतिः । निवृत्तोद्यानसंचारः सन्नित्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । तत्पार्श्वे तत्समीपे । तालस्य वृन्तैरुद्ग्रन्थ्यते । तालस्येव वृन्तमस्येति वा तालवृन्तं तस्यानिलात्व्यजनसंचारपवनादधिकं यथा तथा न वाति । 'व्यजनं तालवृन्तकम्' इत्यमरः ॥ ३५ ॥

चा०—व्यावृत्तेति । तत्पार्श्वे तस्य समीपे वायुर्वातिस्तालवृन्तानिलाधिकं व्यजनपवनादधिकं यथा स्यात्तथा न वाति । अपि तु व्यजनपवनसमानमेव वहति । कीदृशो वायुः । उद्याने कुसुमस्तेयसाध्वसात् । उपवनेषु पुष्पाहरणत्रासात् व्यावृत्तगतिर्णिवृत्तप्रसरः । यद्यहमधिकं वहेयं तर्हि कदाचिदुद्यानपुष्पापहारादपराधी भवेयमिति भावः ॥ ३५ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकालङ्कारश्चेति द्वयोरेकाश्रयानुप्रवेश-सङ्करः ॥ ३५ ॥

**पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।**
**उद्यानपालसामान्यमृतवस्तमुपासत ॥ ३६ ॥**

मल्लि०—पर्यायेति ॥ ऋतवः षड् वसन्तादयः पर्यायसेवां क्रम-सेवामुत्सृज्य पुष्पाणां संभारे संग्रहे तत्पराः । आसक्ताः सन्त इत्यर्थः । 'तत्परे प्रसितासक्तौ' इत्यमरः । उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकमुपासते सेवन्ते । शीतोष्णादि दोषप्रकाशनं तु दूरापास्तमित्यर्थः ॥ ३६ ॥

चा०—पर्यायेति । ऋतवो वसन्तादयः षट् पर्यायसेवां क्रमसेवनमुत्सृज्य परित्यज्योद्यानपालसामान्यं यथा स्यात्तथा । उद्यानपालैः समानमेव सामान्यम् वाटिकारक्षणसमानमित्यर्थः । तं तारकं सेवन्ते । कीदृशा ऋतवः । पुष्पाणां संभारः समूहः स्वहस्तसंपादने करणे तत्पराः परायणाः ॥ ३६ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेश-सङ्करः ॥ ३६ ॥

**तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।**
**कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥ ३७ ॥**

मल्लि०—तस्येति ॥ सरितां पतिः समुद्रस्तस्य तारकस्योपायनानां प्राभृतानां योग्यानि । 'प्राभृतं तु प्रदेशनम् । उपायनम्' इत्यमरः । रत्नान्यम्भसामन्तरा निष्पत्तेः परिपाकपर्यन्तम् । विकल्पादसमासः । कथमपि महता यत्नेन प्रतीक्षते । कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः ॥ ३७ ॥

चा०—तस्येति । सरितां पतिः समुद्रोऽम्भसां जलानामन्तर्मध्ये आनिष्पत्तेंनिष्पत्तिं पाकं कथमपि केनापि प्रकारेण रत्नानि मणीन् प्रतीक्षते रत्ननिष्पत्ति यावत्कथमपि प्रतीक्षां करोति निष्पत्तौ सत्यां रत्नानि गृहीत्वा तस्योपहारीकरोति । न मुहूर्तमपि विलंबने समर्थः । तद्भयात् । कीदृशानि तस्य तारकस्योपायनयोग्यानि उपहारानुरूपाणि ॥ ३७ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेश-सङ्करः ॥ ३७ ॥

**ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा[1] निशि ।**
**स्थिरप्रदीपतामेत्य भुजंगाः पर्युपासते ॥ ३८ ॥**

---

१. प्रहिताः

मल्लि०—ज्वलदिति ॥ किंचेति चार्थः। ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ज्वाला येषां ते वासुकिप्रमुखा भुजंगाः सर्पाः। सिद्धाश्च ध्वन्यन्ते। 'भुजंगः सिद्धसर्पयोः' इत्यमरः। निशि स्थिरप्रदीपतामनिर्वाणदीपत्वमेत्यैनं तारकं पर्युपासते परिवृत्य सेवन्ते ॥ ३८ ॥

चा०—ज्वलदिति। वासुकिप्रमुखा भुजङ्गाः स्थिरप्रदीपतामविनश्वरदीपत्वमेत्य गत्वा निशि रात्रावेनं तारकं पर्युपासते सेवन्ते। कीदृशाः। ज्वलन्मणिशिखाः ज्वलन्त्यः प्रदीप्यमाना मणिशिखा येषां ते ॥ ३८ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः भाविकश्चेति द्वयोरेकाश्रयानुप्रवेशसङ्करः ॥ ३८ ॥

तत्कृतानुग्रहापेक्षी [1]तं मुहुर्दूतहारितैः।
अनुकूलयतीन्द्रोऽपि [2]कल्पद्रुमविभूषणैः ॥ ३९ ॥

मल्लि०—इन्द्रोपि तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षते इति तथोक्तः सन्। मुहुर्दूताहारितैर्दूतप्रापितैः कल्पद्रुमाणां विभूषणैः। तत्प्रसूनैरित्यर्थः। तं तारकमनुकूलयत्यनुकूलं करोति ॥ ३९ ॥

चा०—तत्कृतेति। इन्द्रोपि शक्रोपि दूतहारितैः प्रापितैः कल्पद्रुमविभूषणैः कल्पपादपालंकारैर्मुक्ताहारादिभिस्तं मुहुर्वारंवारमनुकूलयति प्रसादाभिमुखीकरोति। कीदृशः। तेन तारकेण कृतो योऽनुग्रहः प्रसादस्तमपेक्षत इति। अन्यसुराणां का कथेत्यपि शब्दार्थः ॥ ३९ ॥

टिप्पणी—स्वभावोक्तिरचङ्कारः भाविकश्चेत्युभयोरेकाश्रयानुप्रवेशसङ्करः ॥ ३९ ॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत्प्रत्यपकारेण[3] नोपकारेण दुर्जनः ॥ ४० ॥

मल्लि०—इत्थमिति। इत्थमुक्तप्रकारेण रविशशिपवनोदधिभुजंगसुरेन्द्रैराराध्यमानोऽपि भुवनत्रयं क्लिश्नाति पीडयति। तथाहि। दुर्जनः प्रत्यपकारेण प्रतीकारेणैव शाम्येच्छान्तो भवेत्। उपकारेण तु न शाम्येत्। प्रत्युत प्रकुप्यतीति भावः ॥ ४० ॥

चा०—इत्थमिति। इत्थमुक्तरीत्या सुरैराराध्यमानोपि स भुवनत्रयं क्लिश्नाति सन्तापयति। उक्तमेतदित्याह। दुर्जनः प्रत्यपकारेण निग्रहेण शाम्येच्छान्तो भवति उपकारेण न शाम्येदिति संभवनायां लिङ् ॥ ४० ॥

टिप्पणी—अत्र सामान्यार्थेनोत्तरार्द्धगतेन विशेषार्थस्य पूर्वार्द्धगतस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः ॥ ४० ॥

---

१. प्रत्यहम् २. स्वर्गद्रुमं ३. प्रत्युपकारेण.

तेनामरवधूहस्तैः[1] सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥

मल्लि०—तेनेति ॥ तेन तारकेणामरवधूहस्तैः । सुकुमारैरिति भावः । तैरपि सदयमलूना अवतंसार्थं छिन्नाः पल्लवा येषां ते नन्दनद्रुमाः । छेदाश्च पाताश्च छेदपातास्तेषाम् । अभिजानतीत्यभिज्ञाः । कृद्योगात्कर्मणि षष्ठी । क्रियन्ते ॥ ४१ ॥

चा०—तेनेति । तेन तारकेण नन्दनद्रुमाः शक्रोद्यानवृक्षाश्छद्मपातानां छेदाश्च पाताश्च तेषामभिज्ञातारः क्रियन्ते । कीदृशाः । अमरवधूहस्तैः सुराङ्गनाकरकमलैः सदयमालूनानि पल्लवानि येषां ते । कर्णपूराद्यभरणार्थमेव देवविलासिनीभिर्येषां पल्लवमात्रं परं परं गृहीतं तेऽधुना मूलं छित्वा पत्यन्त इत्यर्थः ॥ ४१ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः । भाविकाऽलङ्कारश्चेत्युभयोः सङ्करः । ४१ ।

वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरवन्दीनां बाष्पसीकरवर्षिभिः ॥ ४२ ॥

मल्लि०—वीज्यते इति ॥ हि यस्मात्कारणत्स तारकः संसुप्तः सन् । श्वाससाधारणो निश्वाससमानोऽनिलो येषां तैः ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः । बाष्पशीकरवर्षिभिः । तासां स्त्रीणां रोदनस्यायमवसर इति भावः । सुरवन्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः । 'पग्रहापग्रहौ वन्द्याम्' इत्यमरः । चामरैर्वीज्यते ॥ ४२ ॥

चा०—वीज्यत इति । स तारकः सुरवन्दीभिर्बलादपहृत्य नीताभिः सुराङ्गनाभिश्चामरैर्वीज्यते निर्वाज्यते । कीदृशैः । दुःखादुत्पन्नेन श्वासेन मुखवातेन साधारणस्तुल्यो मिश्रितोऽनिलो येषां तैः'। तथा बाष्पशीकरवर्षिभिरश्रुजलकणवर्षणशीलैः । कीदृक् सः । सुप्तः शयितः सन् । वीज्यत इति धातूनामनेकार्थत्वाद्विजगतिकुत्सनयोरित्यस्य विपूर्वस्य रूपम् । नत्वजेस्तस्य "अजेर्व्यघञपोः" इति भावे वीयते इति स्यात् । बन्दीनामितिपाठे चामरापेक्षया षष्ठी चामराणां कर्तृत्वं च ॥ ४२ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः । भाविकालङ्कारश्चेति सङ्करः ॥ ४२ ॥

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

मल्लि०—उत्पाट्येति ॥ तेन तारकेण हरितां सूर्याश्वनाम् । हरित्सूर्ये च सूर्याश्वे वर्णे च हरिते दिशि' इति विश्वः । खुरैः शफैः क्षुण्णानि चूर्णितानि । एतेन तेषामत्यौन्नत्यं सूचितम् । मेरुशृङ्गा-

---

१. हस्तसदया,

ण्युत्पाट्य स्वेषु वेश्मसु। वेश्मस्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः। आक्रीडन्त एष्वित्याक्रीडाः। ते च पर्वताः कल्पिताः कृताः॥ ४३॥

चा०—उत्पाटचेति। तेन तारकेण मेरुशृङ्गाण्युत्पाटचोन्मूल्य स्वेषु वेश्मसु गृहेषु आक्रीडपर्वताः कृताः कल्पिताः। कीदृशानि। हरितानामश्वानां खुरैः क्षुण्णानि पिष्टानि एतेनात्युच्चत्वमुक्तं। आक्रीडचते येषु ते आक्रीडास्ते च ते पर्वताश्चाक्रीडपर्वताः॥ ४३॥

टिप्पणी—स्वभावोक्तिभाविकयोरेकाश्रयानुप्रवेशसङ्करः॥ ४३॥

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम्।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम्॥ ४४॥

मल्लि०—मन्दाकिन्या इति॥ सांप्रतं संप्रति मन्दाकिन्या भागीरथ्या दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयो जलमेव। शिष्यते इति शेषं शिष्टम्। कर्मण्यण्प्रत्ययः। 'त्रिष्वन्यत्रोपयुज्यते' इति नपुंसकत्वम्। तर्हि कनककमलानि क्व गतानीत्याह—हेमेति। हेमाम्भोरुहाण्येव सस्यानि तेषां तु तस्य वाप्यस्तद्वाप्य एव धाम स्थानम्। सर्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः॥ ४४॥

चा०—मन्दाकिन्या इति। सांप्रतमिदानीं तद्वाप्यस्तस्य दीर्घिका हेमाम्भोरुहसस्यानां हेमाम्भोरुहाण्येव सस्यानि धान्यानि फलानि तेषां धाम स्थानम्। मन्दाकिन्या आकाशगङ्गायाः पयः शेषं वर्तते। किंभूतं पयः। दिग्वारणमदाविलम्। दिग्वारणानां दिग्गजानां मदेनाविकलं कलुषम्। एतेन मन्दाकिन्या दिग्गजानां मदोश्मनिर्वृतिमात्रमुपयोगो ननु देवविद्याधरादीनां कोप्युपयोगः स्त्रीकनककमलनामपहृतत्वात्। संप्रत्येव सांप्रतं प्रज्ञादित्वादण्। ननु कथं शेषमिति यत्तु यजन्ताः पुंसीति महाभाष्यं। उच्यते प्रायिकमेतदिति। 'गृहवृदनिश्चिगमश्च' इत्यादौ न्यासः। भावे घञन्तं प्रति पुंस्त्वमुक्तं कर्मादि यजन्तेन नालिङ्गतेति वल्लभभट्टशिष्य इति शेषम्॥ ४४॥

टिप्पणी—स्वभावोक्तिभाविकयोरेकाश्रयानुप्रवेशसङ्करः॥ ४४॥

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते।
खिलीभूते विमानानां तदापातभयात्पथि॥ ४५॥

मल्लि०—भुवनेति॥ तस्य तारकस्यापातात्समापत्तेर्भयाद्विमानानां पथि खिलीभूतेऽप्रहतीभूते सति। 'द्वे खिलाप्रहते समे' इत्यमरः। स्वर्गिभिर्देवैर्भुवनानामालोकने प्रीतिर्नानुभूयते॥ ४५॥

चा०—भुवनेति। स्वर्गिभिर्देवैर्भुवनालोकनप्रीतिर्मनुष्यादिदर्शनपरितोषोनानु-

भूयते नोपयुज्यते । कस्मिन्सति तदापातभयात्तस्य तारकस्य य आपातः श्येनवन्निपतनं ततो भयात् विमानानां पथि मार्गे खिलीभूते शून्ये कृते सति तद्भयात् संकुचिता देवा गृहादपि बहिर्भवितुं न न शक्नुवन्तीति भावः ॥ ४५ ॥

टिप्पणी—स्वभावोक्तिभाविकयोरेकाश्रयानुप्रवेशसङ्करः ॥ ४५ ॥

**यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।**
**जातवेदोमुखान्मायी [1]मिषतामाच्छिनत्ति नः ॥ ४६ ॥**

**मल्लि०**—यज्वभिरिति ॥ यज्वभिर्विधिवदिष्टवद्भिः 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । विततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविर्मायी मायावी । व्रीह्यादित्वादिनिप्रत्ययः । स तारको नोऽस्माकं मिषतां पश्यताम् । पश्यत्सु सत्स्वित्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । जातवेदा वह्निरेव मुखं तस्माज्जातवेदोमुखादाच्छिनत्ति । आक्षिप्य गृह्णातीत्यर्थः ॥ ४६ ॥

चा०—यज्वभिरिति । मायी मायावान् स तारको विततेष्वध्वरेषु यज्ञेषु मिषतां स्पर्धमानानामहंपूर्विकया ग्रहीतुमिच्छतां नोऽस्माकं हव्यं हविर्जातवेदोमुखादाच्छिनत्ति अपहरति । कीदृशं हविर्यज्वभिर्याज्ञिकैः संभृतं संचितम् । यज्वभिरिति 'सुयजोर्ङ्वनिप्' इति ङ्वनिप् । न इति हव्यापेक्षया संबन्धे "षष्ठी चानादरे" इति षष्ठी । यद्वा नोऽस्माकं जातवेदा एव मुखं तस्मात् ( अग्निमुखा वै वेदाः ) इति श्रुतिः । मायीति व्रीह्यादिपाठादिन् । मिष स्पर्धायां धातुः ॥ ४६ ॥

टिप्पणी—स्वभावोक्तिभाविकयोरेकाश्रयानुप्रवेशसङ्करः ॥ ४६ ॥

**उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।**
**देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥**

**मल्लि०**—उच्चैरिति ॥ किंचेति चार्थः । तेन तारकेणोच्चैरुन्नत उच्चैःश्रवा नाम हयो रत्नमिव हयरत्नमश्वश्रेष्ठः रत्नश्रेष्ठे मणावपि' इति विश्वः । अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम् । मूर्तिमदित्यर्थः । आहिताग्न्यादित्वान्निष्ठायाः परानपातः । चिरकालार्जितमिन्द्रस्य यश इवाहार्यपहृतम् ॥ ४७ ॥

चा०—उच्चैरिति । उच्चैश्रवाः हयरत्नमश्वश्रेष्ठस्तेनाहारि हृतम् । हयरत्नं किमिव । चिरकमलार्जितं चिरकालेनोपार्जितं देहबद्धं कृतशरीरम् । इन्द्रस्य यश इव हयरत्नं हृतमित्यर्थः ॥ ४७ ॥

टिप्पणी—अत्रोत्प्रेक्षाभाविकस्वभावोक्तीनामेकाश्रयानुप्रवेशसङ्करः ॥ ४७ ॥

---

१. पिबताम्,

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सांनिपातिके ॥ ४८ ॥

मल्लि०—तस्मिन्निति ॥ क्रूरे घातुके । 'नृशंसो घातुकः क्रूरः' इत्यमरः । तस्मिन्नसुरे नोऽस्माकं सर्वे उपायाः संनिपातदोषत्रयस्य प्रकोपजे सांनिपातिके विकारे ज्वरादौ । 'संनिपाताच्च' इति वक्तव्याठ्ठक् । वीर्यवन्ति सारवन्त्यौषधानीव प्रतिहतक्रिया विफलप्रयोगा भवन्ति ॥ ४८ ॥

ननु तस्मिन् सामाद्युपायाः किमिति न प्रयुज्यन्ते इत्याशङ्क्याह—

चा०—तस्मिन्निति । क्रूरे दुष्टाशये तस्मिन् नोऽस्माकं सर्वे उपायाः सामादयः प्रतिहतक्रियाः प्रतिहता नष्टा क्रिया सामर्थ्यं येषां ते तादृशा जाताः । कस्मिन् कानीव सांनिपातिके त्रिदोषोत्पन्नविकारे व्याधौ वीर्यवन्ति शक्तिमन्ति औषधानीव भेषजानीव । प्रयुज्यमानान्यपि न फलवन्तीत्यर्थः । 'विकारो रोगविकृती' इति वैजयन्ती ॥ ४८ ॥

टिप्पणी—अत्रोपमाभाविकस्वभावोक्तीनामेकाश्रयानुप्रवेशसंकरः ॥ ४८ ॥

तदेव प्रतिहतक्रियत्वमाह—

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्[१][२] ॥ ४९ ॥

मल्लि०—जयाशेति ॥ किंचेति चार्थः । नूनमनेन वयं जेष्याम इति यत्र हरिचक्रेऽस्माकं जयाशा विजयाशंसा । आसीदिति शेषः । प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेनास्य तारकस्य कण्ठे निष्कमुरोभूषणमर्पितमिवेत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितमित्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्तिजातमिति भावः । 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥ ४९ ॥

प्रतिहतक्रियत्वमेवाह—

चा०—जयाशेति । यत्र चक्रेऽस्माकं जयाशाः नूनमनेन चक्रेण वयमरीन् जेष्याम इत्यभिलाषस्तेन हरिचक्रेणास्य तारकस्य कण्ठे निष्क इव वक्षोऽलंकार इवार्पितो दत्तः । कीदृशेन चक्रेण । प्रतिघातोत्थितार्चिषा प्रतिघातेनाभिघातेन उत्थितान्यर्चींषि यस्मात्तादृशेन कण्ठच्छेदाभावादलङ्कारत्वमिति ॥ ४९ ॥

अत्रोत्प्रेक्षाभाविकस्वभावोक्तीनामेकाश्रयानुप्रवेशसङ्करः ॥ ४९ ॥

---

१. निष्कः  २. अर्पितः

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति तटाघातं[1] निर्जितैरावता गजाः ॥ ५० ॥

मल्लि०—तदीयेति । अद्य सम्प्रति निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य तारकस्येमे तदीया गजाः पुष्कराश्चावर्तकाश्च नामादयो येषां तेषु तोयदेषु मेघेषु तटाघातं वप्रक्रीडाभ्यस्यन्ति ॥ ५० ॥

चा०—तदीया इति । तदीयास्तत्संबन्धिनो गजाः पुष्करावर्तकादिषु तोयदेषु प्रलयमेघेषु तटाघातं वप्रप्रहारक्रीडामभ्यस्यन्ति क्रीडन्ति । कीदृशा गजाः । निर्जितैरावताः निर्जितऐरावता इन्द्रगजो यैस्तेऽत एव परं निर्जितसुकरिणां प्रहारक्षमाः ॥ ५० ॥

टिप्पणी—अत्र भाविकस्वभावोक्तीनामेकाश्रयोऽनुप्रवेशसङ्करः ॥ ५० ॥

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

मल्लि०—तदिति ॥ तत्तस्मात्कारणात् । हे विभो स्वामिन्, मोक्तुं भवं त्यक्तुमिच्छवो मुमुक्षवो विरक्ता भवस्य संसारस्य शान्तये निवृत्तये कर्मैव बन्धस्तं छिनत्तीति कर्मबन्धच्छित्तं धर्ममिव। आत्मज्ञानहेतुभूतमिति शेषः। 'तमेव विदित्वातिमृत्युमेति' इति ज्ञानादेव मुक्तिः। तस्य तारकस्य शान्तये नाशाय। सेनां नयतीति सेनानीश्चमूपतिः। 'सत्सूद्विष—' इत्यादिना क्विप्। तं सेनान्यं कंचित्स्रष्टुमिच्छामः। वयमिति शेषः ॥ ५१ ॥

एवं पराभवमुपदर्श्यागमप्रयोजनमाह—

चा०—तदिति । तत्तस्माद्धेतोस्तच्छान्तये तस्य नाशार्थं भो विभो भो स्वामिन्! सेनान्यं सेना नयतीति सेनानीस्तं सेनापतिं स्रष्टुं निर्मितुमिच्छामः । प्रार्थनायां लोट् । के कमिव । भवस्य संसारस्य नाशाय कर्मबन्धच्छिदं कर्मरूपाः पाशास्तच्छेदिनं निवृत्तिलक्षणं धर्मं मुमुक्षव इव मोक्तुमिच्छवो योगिन इव । स्रष्टुमिच्छाम इति धातुसबन्धे प्रत्ययः । स्रष्टुमित्यपपाठ एव ॥ ५१ ॥

टिप्पणी—अत्रोपमाऽलङ्कारः ॥ ५१ ॥

सेनानीसृष्टेः फलमाह—

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥ ५२ ॥

मल्लि०—गोप्तारमिति ॥ सुरसैन्यानां देवतासेनानां गोप्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोधाय। 'पुरोऽव्ययम्' इति गतित्वात्

---

१. तटा घातान्

'नमस्पुरसोर्गत्योः इति सकारः। गां पृथ्वीं त्रायन्त इति गोत्रास्तान्भिनत्तीति गोत्रभिदिन्द्रो जयश्रियं बन्दीमिव बन्दीकृतां स्त्रियमिव शत्रुभ्यः सकाशात्प्रत्यानेष्यति प्रत्याहरिष्यति तं स्रष्टुमिति पूर्वेण संबन्धः॥ ५२॥

इन्द्रादीनां सृष्टेराधानत्वात् तं किमर्थमित्याह—

चा०—गोप्तारमिति। सुरसैन्यानां गोप्तारं रक्षकं यं सेनान्यं पुरस्कृत्याग्रेकृत्वा गोत्रभित् गोत्रानद्रीन् भिनत्तीति गोत्रभिदिन्द्रः शत्रुभ्यो रिपुभ्यो बन्दीमिव कारागृहस्थितां नारीमिव जयश्रियं प्रत्यानेष्यति पुनराहरिष्यति। उभयोरपि प्रत्यानयनं। पुरस्कृत्येति "पुरोऽव्ययम्" इति गतिसंज्ञात्वात् "नमस्पुरसोर्गत्योः" इति सकारादेशः॥ ५२॥

टिप्पणी—उपमालङ्कारः॥ ५२॥

वचस्यवसिते[1] [2]तस्मिन्ससर्ज गिरमात्मभूः।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा[3]॥ ५३॥

मल्लि०—वचसीति॥ तस्मिन्बार्हस्पत्ये वचस्यवसिते परिसमाप्ते सत्यात्मभूर्ब्रह्मा गिरं वाचं ससर्ज जगादेत्यर्थः। सा गीः सौभाग्येन मनोहरत्वेन। 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः गर्जिताद् गर्जितस्य वानन्तरं प्रवृत्तां वृष्टिं जिगाय जितवती। गर्जितपरत्वाद्वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः॥ ५३॥

चा०—वचसीति। तस्मिन् वचसि देववाक्ये उपरते समाप्ते सति आत्मभूर्ब्रह्मा गिरं ससर्जावोचत। या गीः गर्जितानन्तरां वृष्टिं सौभाग्येन साफल्येन जिगाय जितवती। यथा वृष्ट्या प्रागर्जितस्य सफलीकरणं। तथा ब्रह्मवाक्यस्यापि सेनापतिसंपादनेन सफलीकरणं द्योत्यते इत्यर्थः। जिगायेति "सन्लिटोर्जेः" इति कुत्वम्॥ ५३॥

टिप्पणी—आत्मभूगिरो गर्जितानन्तरवृष्टेरसम्बन्धेऽपि तत्सम्बन्धोक्त्या वृष्टिमिव वृष्टिं ( वृहस्पतिवाग् वृष्टि ) इत्यादि कल्पनादसम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः॥ ५३॥

संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम्।
न त्वस्य सिद्धौ[4] यास्यामि सर्गव्यापारमात्मना॥ ५४॥

मल्लि०—संपत्स्यत इति॥ अयं वो युष्माकं कामो मनोरथः सेनानीरूपः संपत्स्यते सेत्स्यति। कश्चित्कियानपि कालः प्रतीक्ष्यताम्। तु किंतु तस्य सेनान्यः सिद्धौ विषय आत्मना स्वयं सर्गः सृष्टिरेव व्यापारस्तं न यास्यामि। नाहं स्रक्ष्यामीत्यर्थः॥ ५४॥

---

१. उपरते  २. तस्य  ३. या  ४. सिद्धयो,

चा०—संपत्स्यत इति । भो देवाः ! वो युष्माकं सेनानीसमुत्पत्तिलक्षणकामोऽभिलाषः संपत्स्यते भविष्यति । कश्चित्कालः समयः प्रतीक्ष्यतां प्रतीक्षा क्रियाताम् । इदानीमेव किमिति नेत्याह । यतोऽस्य कार्यस्य सिद्धये निष्पत्तये आत्मना स्वयमेव सर्गव्यापारं सृष्टिलक्षणं अहं न यास्यामि न गमिष्यामि ॥ ५४ ॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ ५४ ॥

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ ५५ ॥

मल्लि०—इत इति ॥ इतो मत्त एव प्राप्तश्रीर्लब्धोदयः स दैत्यस्तारकासुर इतो मत्त एव क्षयं नाशं नार्हति । तथाहि । अन्यो वृक्षस्तावदास्ताम् विषस्य वृक्षो विषवृक्षोऽपि संवर्ध्यं कुतश्चित्कारणात्सम्यग् वर्धयित्वा स्वयं छेत्तुमसांप्रतमनर्हः । असांप्रतमित्यनेन निपातेनाभिहितत्वाद्वृक्ष इति द्वितीयान्तो न भवत्यनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न विभक्तिः परिगणनस्य प्रायिकत्वात्' इति ॥ ५५ ॥

कस्मान्न क्रियते इत्याह—

चा०—इत इति । स तारको दैत्योऽसुर इतोऽस्मान्नः प्राप्तश्रीः प्राप्तैश्वर्यः । अत इत एव मत्त एव क्षयं विनाशं नार्हति किमित्यत आह । यतो विषवृक्षोऽपि संवर्ध्य वर्द्धयित्वा स्वयं छेत्तुमसाम्प्रतमयुक्तम् । असाम्प्रतशब्देन निपातेनोक्तत्वाद् वृक्षशब्दात् द्वितीया न भवति अनुक्तकर्मण्येव तद्विधानादिह तु कर्मण उक्तत्वात् ।५५।

टिप्पणी—उत्तरार्द्धगतेन सामान्यार्थेन पूर्वार्द्धगत विशेषार्थस्य समर्थनादर्थान्तरन्यासाऽलङ्कारः ॥ ५५ ॥

वृतं[1] तेनेदमेव [2]प्राङ्मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं[3] लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

मल्लि०—वृतमिति ॥ प्राक्पूर्वं तेनासुरेणेदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । मया चास्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् । 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति संप्रदानत्वाच्चतुर्थी । कर्तव्यं चैतदित्याह—लोकान्दग्धुमलं शक्तम् । पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः । तस्य तपस्तत्तपो वरेण वरदानेन शमितमिति शेषः ॥ ५६ ॥

र्तीह त्वयैवायं लोकोपद्रवः कृत इत्याह—

चा०—वृतमिति । तेन तारकेणेदमेव पूर्वोक्तं सर्वाभिभवसामर्थ्यं वृतं याचितं । मया चास्मै दैत्याय प्रतिश्रुतमङ्गीकृतम् । किमित्यङ्गीकृतमित्याह । हि यतो लोकान्

१. वृतः, २. अहम्, आदौ, ३. अंशमितम्,

दग्धुमलम् समर्थं तत्तपस्तस्य तपो वरेण शमितं शान्ति नीतम्। अन्यथा तत्तपसाधिकोपद्रवः कृतः स्यात्। असम इति 'प्रत्यङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति संप्रदानत्वम् ॥ ५६ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ५६ ॥

संयुगे सांयुगीनं [1]तमुद्यतं प्रसहेत कः।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥

मल्लि०—संयुग इति ॥ संयुगे युद्ध उद्यन्तं व्याप्रियमाणम्। संयुगे साधुं सांयुगीनम्। 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः। तं तारकं निषिक्तस्य क्वचित्क्षेत्रे क्षरितस्य। 'नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणम्।' इति स्वामी। तस्य नीललोहितस्य धूर्जटेः रेतसः शुक्रस्यांशादृतेंऽशं विनान्यः कः प्रसहेताभिभवेत्। प्रहसनमभिभवः' इति वृत्तिकारः ॥ ५७ ॥

तर्ह्यस्मास्वेव तज्जयसामर्थ्यं निधीयतामित्यत आह—

चा०—संयुगे इति। निषिक्तस्य प्रजार्थमाहितस्य नीललोहितस्य रेतसो महादेववीर्यस्यांशाद्भागादृते विना तदंशतनयं वर्जयित्वेत्यर्थः। भवतां मध्ये सांयुगीनं रणपण्डितं तारकं संयुगे रणे उद्यतं उत्तिष्ठमानं कः प्रसहेत सोढुं कः शक्नुयात्। अपितु न कोपि। संयुगे साधुः सांयुगीनस्तं 'प्रतिजनादिभ्यः खञ्' इतिखञ्प्रत्ययः। अंशादिति 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमी ॥ ५७ ॥

टिप्पणी—तं कः प्रसहेत अर्थान्न कोपीत्यन्यार्थागमादर्थापत्तिरलङ्कारः ॥५७॥

कथमसावीदृक्शक्तिरित्याह—

स हि देवः परं ज्योतिस्तमःपारे [2]व्यवस्थितम्।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥

मल्लि०—स इति ॥ स देवो नीललोहितस्तमसः पारे परतो व्यवस्थितं तमोगुणातीतं परं ज्योतिः परमात्मा हि। अतएव मया परिच्छिन्नप्रभावर्द्धिरवगाढमहिमातिशयो न भवति तथा विष्णुना च न। अतस्तस्यासाध्यं नास्तीत्यर्थः ॥ ५८ ॥

यद्यस्माकं न सामर्थ्यं तर्हि शम्भोरपि कथं स्यादित्याह—

चा०—सहीति। हिं यस्माद्धेतोः स देवस्तमसोऽविद्यायाः पारे प्रतिष्ठितं संसारव्यतीतं परमुत्कृष्टं ज्योतिः परमात्माख्यं तेजः। अतएव मया नापि विष्णुना न परिच्छिन्नप्रभावर्द्धिः न परिछिन्ना न ज्ञाता प्रभावस्य महिम्नो ऋद्धिः सम्पदस्येति तादृशोऽत एव तत्र शक्तः समर्थ इति भावः ॥ ५८ ॥

---

१. उद्यन्तम्, युद्धयन्तम्, २. प्रतिष्ठितम्,

टिप्पणी—लोहवत् अयोधातुमिव शम्भोर्मन इत्युपमानोपमेयभावादुपमाऽलङ्कारः ॥ ५८ ॥

संप्रति तदंशोत्पत्तावुपायं दर्शयति—

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥

मल्लि०—उमेति ॥ ते कार्यार्थिनो यूयं संयमस्तिमितं समाधिनिश्चलं शंभोर्मन उमारूपेणोमासौन्दर्येण ! 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः । अयस्कान्तेन मणिविशेषेण । 'कस्कादिषु च' इति सकारः । लोहवदयोधातुमिव । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययो मृग्यः आक्रष्टुमाहर्तुं यतध्वमुद्युक्ता भवत ॥ ५९ ॥

चा०—उमेति । भो देवास्ते यूयमुमारूपेण गौरीसौन्दर्येण शंभोरीश्वरस्य मनस्त्वाक्रष्टुमपहर्तुं यतध्वं यत्नं कुरुत । किंभूतं मनः । संयमस्तिमितं समाधिनिश्चलं । किंवत् । अयस्कान्तेन लोहवत् । यथा अयस्कान्तेन चुम्बकपाषाणेन लोह आकृष्यते । अयस्कान्त इत्यत्र "अतः कृकमि०" इति सकारः ॥ ५९ ॥

न च गत्यन्तरमस्तीत्याह—

उभे एव क्षमे [1]वोढुमुभयोर्बीजमाहितम् ।
सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥

मल्लि०—उभे इति ॥ उभयोः शंभोर्मम चाहितं निषिक्तं बीजं तेजो वोढुं सोढुं सा वोमा शंभोरष्टमूर्तेस्तस्येयं तदीया जलमयी मूर्तिर्वा मम । न तृतीयेत्यर्थः । वा शब्दो द्वन्द्वार्थे न त्वन्यार्थे । एतदेवोदाहृत्येत्थमेव व्याख्यातं गणव्याख्याने । अत्र दीपकालङ्कारः । प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्योश्चौपम्यस्य गम्यत्वात् । यथाह भोजराजः—'प्रस्तुतानामप्रस्तुतानां चौपम्यस्य गम्यत्वे दीपकम्' इति । न चेयं तुल्योगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलास्तुतविषयत्वेन चोत्थानादिति ।। ६० ॥

चा०—उभ इति । उभयोर्द्वयोराहितं निक्षिप्तं बीजं वीर्यं उभे एव द्वे एव स्त्रियौ वोढुं धारयितुं क्षमे समर्थे । कयोः के इत्यत आह । सा वा गौरी शंभोः । तदीयस्य तस्य प्रभोरियं तदीया शंभुसम्बन्धिनी जलमयी मूर्तिर्जलस्वरूपा तनुश्च मम ब्रह्मणः बीजं सोढुं क्षमा । शंभोरष्टमूर्तित्वाज्जले मूर्तिः । प्रसङ्गात्सादृश्यद्योतनायात्माभिधानं वा शब्दश्चार्थे अवधारणे च ॥ ६० ॥

---

१. सोढुम्,

तस्यात्मा शितिकण्ठस्य [1]सैनापत्यमुपेत्य वः।
मोक्ष्यते सुरबन्दीनां [2]वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥

मल्लि०—तस्येति ॥ तस्य शितिकण्ठस्याष्टमूर्तेरात्मा पुत्र इत्यर्थः। 'आत्मा वै पुत्रनामासि' इति श्रुतेः। वो युष्माकं सेनापतेर्भावः सैनापत्यम् 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्ययः। उपेत्य प्राप्य वीर्यविभूतिभिः शौर्यसंपत्तिभिः सुरबन्दीनां वेणीर्मोक्ष्यते विस्रंसयिष्यति। तारकासुरं हनिष्यतीति भावः ॥ ६१ ॥

चा०—तस्येति। तस्य शितिकण्ठस्य शम्भोरात्मपुत्रो वो युष्माकं सेनापत्यं सेनानामाधिपत्यमुपेत्य प्राप्य वीर्यविभूतिभिः पराक्रमसमृद्धिभिः सुरबन्दीनां वेणीः कचोच्चयान्, मोक्ष्यते मोचयिष्यति ॥ ६१ ॥

टिप्पणी—अद्भुतस्य भविष्यत शितिकण्ठात्मजकर्तृकसुरबन्दीवेणीमोक्षणरूपपदार्थस्य ब्रह्मण उक्त्या प्रत्यक्षायमाणत्वेन भाविकाऽलङ्कारः। अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः। यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतमिति लक्षणात् ॥६१॥

इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे।
मनस्याहितकर्तव्यास्तेऽपि देवा[3] दिवं ययुः ॥ ६२ ॥

मल्लि०—इतीति ॥ विश्वस्य योनिः कारणम्। 'योनिः स्त्रीणां भगस्थाने कारणं ताम्रिके पणे' इति वैजयन्ती। विबुधान्सुरानिति व्याहृत्याभिधाय तिरोदधेऽन्तर्हितवान्। ते देवा अपि मनस्याहितं कर्तव्यं यैस्ते तथोक्ताः सन्तो दिवं स्वर्गं ययुः प्रापुः ॥ ६२ ॥

चा०—इतीति। इति पूर्वोक्तं विबुधान् व्याहृत्योक्त्वा विश्वयोनिर्ब्रह्मा तिरोदधेऽन्तर्हितः। तेऽपि देवा अपि मनस्याहितकर्तव्याश्चित्तसमारोपितकार्या दिवं प्रति स्वर्गं प्रति ययुर्गतवन्तः। दिवमिति "कर्मप्रवचनीययुक्ते द्वितीया" ॥ ६२ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ६२ ॥

तत्र निश्चित्य कंदर्पमगमत्पाकशासनः।
मनसा कार्यसंसिद्धौ[4] त्वराद्विगुणरंहसा ॥ ६३ ॥

मल्लि०—तत्रेति। पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रस्तत्र हरचित्तकर्षणकृत्ये कंदर्पं निश्चित्य। साधकत्वेनेति शेषः। कार्यसंसिद्धौ त्वरयौत्सुक्येन द्वौ गुणौ यस्य तद्द्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन। 'गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' इति वैजयन्ती। मनसागमत्। सस्मारेत्यर्थः। गमेर्लुङ्। लृदित्वाच्च्लेरङादेशः ॥ ६३ ॥

---

१. सेनापत्यम्, २. वेणीबन्धानदूषितान्, ३. प्रति, ४. कर्मसंसिद्धिः, कार्य-संसिध्यै, कार्यसंसिद्धिः।

चा०—तत्रेति । तत्र स्वर्गे निश्चित्य हरगौरीसमागमकरणे कामदेव एव समर्थ इति सचिवैः सह पर्यालोच्य पाकशासन इन्द्रो मनसा चित्तेन कन्दर्पमगमत्सस्मारेत्यर्थः । कीदृशेन मनसा । कार्यसंसिद्धित्वराद्विगुणरंहसा कार्यस्य हरगौरीसमागमस्य या संसिद्धिः सम्यङ् निष्पत्तिस्तस्यां या त्वरा संभ्रमस्तया द्विगुणं रंहो वेगो यस्य तत्तेन ॥ ६३ ॥

टिप्पणी—पाकशासनस्य मनसा कन्दर्पस्मरणे कार्यसिद्धौ साधकत्वेन कन्दर्पनिश्चयपदार्थस्य हेतोः पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ६३ ॥

अथ स[1] ललितयोषिद्भ्रूलताचारुशृङ्गं[2]
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा[3] ॥ ६४ ॥

मल्लि०—अथेति । अथ स्मरणानन्तरम् । स स्मृत इत्यर्थः । पुष्पं धनुर्यस्य स पुष्पधन्वा कामः । 'वा संज्ञायाम्' इत्यनङ् । 'ललितं त्रिषु सुन्दरम्' इत्यमरः । ललितायाः सुन्दर्या योषितो भ्रुवौ लते इव चारुणी शृङ्गे कोटि यस्य तत्तथोक्तं चापम् । रतिः स्मरप्रिया । 'रतिः स्मरप्रिया' इत्यमरः । तस्या वलयपदानि कङ्कणस्थानान्यङ्कश्चिह्नं यस्य स तथोक्ते कण्ठ आसज्य लगयित्वा । चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूतांकुरमेवास्त्रं यस्य स तथोक्तः प्राञ्जलिः सन् । शतमखमिन्द्रमुपतस्थे सङ्गतवान् । सङ्गतिकरणार्थादात्मनेपदम् । अत्र स्वभावोक्तिः 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ६४ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये ब्रह्मसाक्षात्कारो

नाम द्वितीयः सर्गः ।

चा०—अथेति । अथानन्तरं स्मरणानन्तरं पुष्पकेतुः कामः शतमखमिन्द्रमुपतस्थे संगमेनाराधितवान् । कीदृशः । प्राञ्जलिः कृताञ्जलिः । किं कृत्वा । रतिवलयपदाङ्के कण्ठे चापमासज्ज्यारोप्य । रत्याः स्वकान्ताया यानि कटकानि वलयानि तेषां पदमालिङ्गनावसाने मुद्रा सैवाङ्कश्चिह्नं यस्य तादृशे । कीदृशं चापं । सुललिता विलसन्ती या योषिद्भ्रूलता वरकामिनीभ्रूवल्लरीतद्वच्चारु मनोहरं

---

१. सुललित २. शार्ङ्गम् ३. पुण्यकेतुः ।

श्रृङ्गमग्रं यस्य तत्तथा। पुनः कीदृशः। हस्तेऽर्पिता दत्ताश्चूताङ्कुरा एव अस्त्रं येन स उपतस्थे इति। उपाद्देवपूजेति वक्तव्यात्सङ्गतिकरणादात्मनेपदम् ॥ ६४ ॥

इति श्रीमालान्वयसाधु श्रीशालिगनन्दनसाधु श्रीअरडकमल्लसमभ्यर्थित-
नरवेषसरस्वती वाचनार्यश्रीचारित्रवर्धनविरचितायां
कुमारतात्पर्यदीपिकायां शिशुहितैषिण्यां
द्वितीयः सर्गः ॥ २ ॥

# तृतीयः सर्गः

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनपेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

मल्लि०—तस्मिन्निति । मघोन इन्द्रस्याक्ष्णां सहस्रं त्रिरावृत्ता दशापरिमाणमेषामिति त्रिदशान्देवान् । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये—' इति डच्प्रत्ययः । उक्तार्थत्वात्सुचो निवृत्तिः । विहाय त्यक्त्वा तस्मिन्कामे युगपत्पपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः । ननु सुचिरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन्पक्षपात इत्याशङ्क्यार्थान्तरंन्यस्यति—प्रायो भूम्ना प्रभूणामाश्रितेषु सेवकेषु विषये गौरवमादरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम् । फलतन्त्राः प्रभवो न तु गुणतंत्रा इति भावः । ॥ १ ॥

चा०—तस्मिन्निति । मघोन इन्द्रस्याक्ष्णां चक्षुषां सहस्रं विदशाम् देवान् विहाय त्यक्त्वा तस्मिन्काले युगपदेकदैव पपात । पतितं । कुतो देवान्विहायेत्याह । प्रयोजनापेक्षितया प्रयोजनानुरोधेनाश्रितेषु प्रभूणां स्वामिनां गौरवं प्रायश्चलमस्थिरम् ॥ १ ॥

स वासवेनासनसंनिकृष्टमितो निषीदेति [1]विसृष्टभूमिः ।
भर्तुः प्रसादं[2] प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥

मल्लि०—स इति । स कामो वासवेनेन्द्रेणासनस्य सिंहासनस्य संनिकृष्टं संनिहितमासनसंनिकृष्टं यथा तथा । शेषषष्ठ्यायं समासः । कृद्योगलक्षणया तु न । 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात् । इतो निषीदेहोपविशेति विसृष्टभूमिर्दत्तावकाशः सन् । भर्तुः स्वामिनः प्रसादमनुग्रहं मूर्ध्ना प्रतिनन्द्य सम्भाव्य मिथो रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । एनमिन्द्रमेवं वक्ष्यमाणप्रकारेण वक्तुं प्राक्रमतोपक्रान्तवान् । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ॥ २ ॥

चा०—स इति । स कामो भर्तुरिन्द्रस्य प्रसादमनुग्रहं मूर्ध्ना प्रतिपद्य स्वीकृत्य मिथो रहसि शक्रमेवं वक्ष्यमाणप्रकारं वक्तुं प्राक्रमत प्रारेभे । कीदृशः कामः । वासवेन इत आसनसंनिकृष्टं सिंहासनसमीपे निसृष्टभूमिः । निसृष्टा भूमिर्यस्मै सः । प्राक्रमतेति । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ॥ २ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ २ ॥

---

१. निसृष्ट. २. प्रतिवन्द्य.

आज्ञापय ज्ञातविशेष ! पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि [1]संवर्धितमाज्ञया ते ॥ ३ ॥

मल्लि०—आज्ञापयेति ॥ हे पुंसां ज्ञातविशेष ज्ञातसार । ज्ञातपुंविशेषेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । आज्ञापय । तदिति शेषः । उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगर्निबन्धः । किं तदित्याह--लोकेषु ते तव यत्करणीयं कर्तव्यमस्ति । संस्मरणेन प्रवृत्तमुत्पन्नं ते तवानुग्रहं प्रसादमाज्ञया नियोगेन संवर्धितं वृद्धिं गमितमिच्छामि । संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्धय । क्वचित्कर्मणि नियुङ्क्ष्वेत्यर्थः । अन्यथा ये नास्ति परितोष इति भावः । तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः ॥ ३ ॥

चा०--आज्ञापयेति । भोः पुंसां ज्ञातविशेष ज्ञातोविशेषस्तारतम्यभावो येन तत्संबुद्धौ भो शक्र ! लोकेषु भुवनेषु यत्ते करणीयं कार्यमस्ति तदाज्ञापय ब्रूहि । तत्र हेतुमाह । संस्मरणप्रवृत्तमुत्पन्नमनुग्रहं प्रसादं तवाज्ञया संवर्द्धितुं द्विगुणीकर्तुमिच्छामि । स्मरणादेव मयि प्रसादो जातः । आदेशसंप्रदानेन द्विगुणीभवतीत्यर्थः । पुंसां ज्ञातविशेषेणात्यनेनात्मन इतरेभ्य उत्कर्षो द्योतितः ॥ ३ ॥

टिप्पणी—स्वभावोक्तिरलङ्कारः ॥ ३ ॥

न च मे किंचिदसाध्यमस्तीत्याह—

केनाभ्यसूया [2]पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥ ४ ॥

मल्लि०—केनेति ॥ पदकाङ्क्षिणा स्वाराज्यकामेन केन पुंसा नितान्तदीर्घैरतिप्रभूतैस्तपोभिस्ते तवाभ्यसूयेर्ष्या जनिता । तं ब्रूहीति शेषः । किमर्थम् । यावद्यतः स भवद्वैर्याहितसायकस्य संहितबाणस्यास्य मत्कार्मुकस्य निदेशे वर्तत इति निदेशवर्त्याज्ञावशो भवति । अविलम्बेनैव भविष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥ ४ ॥

प्रश्नपूर्वं सामर्थ्यमाह—.

चा०—केनेति । स्वर्गेऽतिफलाभिलाषिणा केन पुंसा बहुभिः संचितैस्तपोभिरतवाभ्यसूया जनिता कृतेति शेषः । स पुमान् तावत्संहितबाणस्य मम चापस्याज्ञाकारी भवतु । असूयाशब्दः कण्ड्वादियगन्तः ॥ ४ ॥

टिप्पणी—मदनकर्तृकेन्द्रशत्रुद्रुतवशीकरणरूपाद्भुतपदार्थस्य भविष्यतः प्रत्यक्षीयमाणत्वाद्भाविकालङ्कारः । मदनबाणवशीभूतं सर्वमिदं जगदिति सुप्रसिद्धमिति यथावद्वर्णनात्स्वभावोक्तिर्वा ॥ ४ ॥

---

१. संवर्धितुम्, २. फल,

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।
बद्धश्चिरं तिष्ठतु सुन्दरीणा[1]मारेचितभ्रूचतुरैः [2]कटाक्षैः ॥ ५ ॥

मल्लि०—असंमत इति ॥ तवासंमतः कः पुनर्भवः पुनरुत्पत्तिः । संसार इति यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयान्मुक्तिमार्गं प्रपन्नस्तं वद । यतः सोऽप्यारेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु । आरेचितलक्षणं तु—'स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः ॥' इति ॥ ५ ॥

चा०—असंमत इति । भो स्वामिन् ! तवासंमतोऽनभीष्टः पुनर्भवक्लेशभयात् पुनर्भवे संसारे यः क्लेशो जन्ममरणादिस्तस्य भयं तस्मान्मोक्षमार्गं प्राप्तः । सुन्दरीणां कटाक्षैर्बद्धश्चिरं तिष्ठतु कीदृशैः कटाक्षैः । आरेचितभ्रूललितैः आरेचिता नर्तिता या भ्रुवस्ताभिर्मनोहरः ॥ ५ ॥

टिप्पणी—अत्रापि भाविकाऽलङ्कारः ॥ ५ ॥

धर्मार्थावधिकृत्याह—

अध्यापितस्योशनसापि नीतिं प्रयुक्तराग[3]प्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥

मल्लि०—अध्यापितस्येति ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रमध्यापितस्यापि अपि शब्दाच्छुक्रशिष्याणामप्रधृष्यत्वं गम्यते । 'गतिबुद्धि—' इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । ते द्विषस्तव शत्रोः कस्यार्थधर्मौ प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् । 'प्रार्थने प्रणिधिः चरे' इति यादवः । प्रवृद्ध ओघः सिन्धोर्नद्यास्तटाविव पीडयामि वद ॥ ६ ॥

चा०—अध्यापितस्येति । भोः स्वामिन ! कस्य ते द्विषः शत्रोरर्थधर्मौ पीडयामि वद । कः काविव प्रवृद्ध ओघः प्रवाहः सिन्धोर्नद्यास्तटाविव । कीदृशस्य ते द्विषः । प्रयुक्तरागप्रणिधिः प्रयुक्तः प्रहितो राग एव प्रणिधिश्चरो यस्मै तस्य । पुनः कीदृशस्य । उशनसापि शुक्रेणापि नीतिमर्थशास्त्रमध्यापितस्य । रागात्कामात् शक्त्या धर्मार्थयोर्नाशः ॥ ६ ॥

---

१. आरोपित, २. विलासैः, ३. प्रणिधेः,

टिप्पणी--प्रवृद्ध ओघः सिन्धोस्तटाविव, अहं कस्याऽर्थधर्मौ पीडयामीत्युपमानोपमेयभावादुपमाऽलङ्कारः ॥ ६ ॥

काममधिकृत्याह—

**कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥ ७ ॥**

मल्लि०—कामिति । एकः पतिर्यस्याः सैकपत्नी पतिव्रता । 'नित्यं सपत्न्यादिषु' इति ङीप् । तस्या व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावाम् । दृढव्रतामित्यर्थः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । चारुतया सुन्दरत्वेन हेतुना लोलं मनस्त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् । स्वयं गृह्णातीति स्वयंग्राहा । 'विभाषा ग्रहः' इति णप्रत्ययः । न च जलचर एव ग्राह इति नियमः । जलचरे ग्राह एवेति नियमादिति । स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूतामिच्छसि । त्वदर्थे पतिव्रतामपि व्रताद्भ्रंशयिष्यामीत्यर्थः ॥ एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः--'अहल्यायै जारः' इति ॥ ७ ॥

चा०—कामिति । भो स्वामिन् । कामेकपत्नीं एक एव पतिर्यस्याः सा तां पतिव्रतां नितम्बिनीं स्त्रियमिच्छसि । कीदृशीं नितम्बिनीं । चारुतया रम्यतया लोलं चपलं ते मनःप्रविष्टाम् । पुनः कीदृशीं । मुक्तलज्जाम् । पुनः कीदृशीं । कण्ठे स्वयंग्राहनिषक्तबाहुं स्वयं गृह्णाति इति स्वयंग्राहः स्वयंग्राहो निषक्तो स्थापितौ बाहू यस्यास्तां । ननु कथं स्वयंग्राहेति ग्रह एव ग्राहः प्रज्ञादित्वादण् ॥ ७ ॥

टिप्पणी—पतिव्रतां स्त्रियमपीच्छसि चेत्तदा त्वदर्थे तामपि व्रताद्भ्रंशयिष्यामीत्यर्थे भाविकाऽलङ्कारः ॥ ७ ॥

त्रिविधा नायिका । स्वकीया परकीया साधारणी चेति । तत्र परकीयां प्रत्युक्तम् । इतरे प्रत्याह—

**कयासि कामिन्सु[1]रतापराधात्पादानतः कोपनयावधूतः ।**
**यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥ ८ ॥**

मल्लि०—कयेति ॥ हे कामिन्कामुक, सुरतापराधात् । अन्यासङ्गादित्यर्थः । पादानतः प्रणतः सन् । कोपनया कोपनशीलया कया स्त्रियावधूतस्तिरस्कृतोऽसि । तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमत एव प्रवालशय्याशरणं करिष्यामीति ॥ ८ ॥

---

१. सहसापराधः,

चा०—कयासीति । भो कामिन् ? सुरतापराधात्कया कोपनया सकोपया स्त्रिया पादानतश्चरणपतितस्त्वमवधूतस्तिरस्कृतोसि । तस्याः शरीरं दृढानुतापं दृढः पश्चात्तापो यत्र तत्प्रवालशय्याशरणं करिष्यामि । पल्लवशयनीयं रक्षितृ यस्य तत्तादृशं । 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ ८ ॥

टिप्पणी—भाविकाऽलङ्कारः ॥ ८ ॥

**प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।**
**बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥**

मल्लि०—प्रसीदेति ॥ हे वीर, प्रसीद प्रसन्नो भव । वज्रं कुलिशं विश्राम्यतु । उदास्तामित्यर्थः । मदीयैः शरैर्मोघीकृतबाहुवीर्यो विफलीकृतभुजशक्तिः कतमो दैत्यदानवादिषु यः कश्चन सुरारिः । 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति डतमचप्रत्ययः । कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु । किमु वक्तव्यं पुंभ्य इत्यर्थः । सकृद्भीतः सर्वतो बिभेतीति भावः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥ ९ ॥

चा०—प्रसीदेति । भो वीर ! प्रसीद वज्रं विश्राम्यतु तिष्ठतु उभयत्र प्रार्थनायां लोट् । मदीयैर्धर्मसंबन्धिभिः शैरर्बाणैः कतमः सुरारिर्दैत्यः स्त्रीभ्योऽपि बिभेतु । प्राप्तकाले लोट् । मोघीकृतबाहुवीर्यः मोघीकृतं विफलीकृतं बाहुवीर्यं भुजबलं यस्य सः । कीदृशीभ्यः स्त्रीभ्यः । कोपस्फुरिताधराभ्यः कोपेन स्फुरितोऽधरोष्ठो यासां ताभ्यः । कतम इति दैत्यादिभेदेन सुरारीणां बहुत्वाज्जातिपरिप्रश्ने डतमच् ॥ ९ ॥

टिप्पणी—भवदाज्ञाम्प्राप्य सुरारिं स्त्रीद्वारा वशीभूतं करिष्यामीत्यद्भुतपदार्थस्य भविष्यतः प्रत्यक्षायमाणत्वाद्भाविकाऽलङ्कारः ॥ ९ ॥

**तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।**
**कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ १० ॥**

मल्लि०—तवेति ॥ किं बहुना, तव प्रसादानुग्रहात्कुसुमायुधोऽप्यतिदुर्बलास्त्रोऽप्यहमेकं मधुं वसन्तमेव सहायं लब्ध्वा पिनाकः पाणौ यस्य स पिनाकपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' । यस्य हरस्यापि । हरः पिनाकी चेत्यतिदारुण इति भावः । धैर्यच्युतिं धैर्यहानिं कुर्याम् । कर्तुं शक्नुयामित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । अन्ये धन्विनो धनुर्भृतो मम के । न केऽपीत्यर्थः । किं शब्दः कुत्सायाम् । 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः ॥ १० ॥

कुतस्तवैवं सामर्थ्यमित्याह—

चा०—तवेति । भो स्वामिन् ! तव प्रसादात्कुसुमायुधोप्यहं पुष्पबाणोपि एकमेव मधुं वसन्तं सहायं लब्ध्वा प्राप्य पिनाकपाणेर्धनुर्हस्तस्यापि हरस्य धैर्यच्युतिं

नाशं कुर्याम् । सम्भावनायां लिङ् । अन्ये धन्विनो धानुष्का मम के । अपि तु मत्पुरस्तान्निष्फला इत्यर्थः । धनुर्हस्तस्य धैर्यनिराकरणं द्योतयितुं पिनाकपाणेरिति- पदस्य न पौनरुक्त्यं । पिनाकः पाणौ यस्येति 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति परनिपातः । अन्यथा 'सप्तमीविशेषणे बहुव्रीहौ' इति पूर्वनिपातेन भाव्यम् ॥ १० ॥

टिप्पणी—भाविकाऽलङ्कारः । अन्ये धन्विनो मम के न केऽपीत्यन्यार्थगमा- दर्थापत्तिरलङ्कारश्चेति द्वयोः संसृष्टिः ॥ १० ॥

**अथोरुदेशादवतार्य पाद[1]माक्रान्तिसंभावितपादपीठम् ।**
**[2]संकल्पितार्थे विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥ ११ ॥**

मल्लि०—अथेति ॥ अथ स्मरवाक्यश्रवणानन्तरमाखण्डलः सहस्राक्ष ऊरुदेशात्पादमाक्रान्त्याक्रमणेन संभावितं पादपीठं यस्मिंस्तद्यथा तथाव- तार्य संकल्पितार्थे हरचित्ताकर्षणरूपे विषये विवृतात्मशक्तिम् । 'कुर्यां हरस्यापि—' ( ३ । १० ) इत्यादिना प्रकटीकृतस्वसामर्थ्यं काम स्मरमिदं वक्ष्यमाणं बभाषे ॥ ११ ॥

चा०—अथेति । अथाभिमतश्रवणानन्तरमाखण्डलः शक्रः उरुदेशाज्जङ्घाप्रदेशा- त्पादमवतार्य काममिदं वक्ष्यमाणं बभाषे जगाद । कीदृशं पादम् । आक्रान्तिसम्भा- वितपादपीठम् । आक्रान्त्याक्रमणेन संभावितं सफलीकृतं पादपीठं येन तादृक् । कीदृशं कामं । संकल्पितेऽर्थे शम्भोर्धैर्यच्युतिलक्षणे कार्ये विवृता प्रकटीकृता स्वशक्ति- र्येन तम् ॥ ११ ॥

टिप्पणी—आखण्डलस्य कामम्प्रत्युक्तावात्मशक्तिप्रकटीकरणरूपपदार्थस्य हेतोः विशेषणविधयोक्त्या पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ११ ॥

**सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।**
**वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ १२ ॥**

मल्लि०—सर्वमिति ॥ हे सखे ! सखे इति संबोधनं गौरवार्थम् । सर्वमेतत्त्वय्युपपन्नं सिद्धम् । मम कुलिशं वज्रं भवांश्चोभे अस्त्रे । तत्र वज्रं तपोवीर्येण तपोबलेन महत्सु प्रबलेषु कुण्ठं प्रतिबद्धप्रसरम् । त्वमस्त्रं सर्वतोगामि च साधकं च । तापसेष्वप्यकुण्ठमित्यर्थः ॥ १२ ॥

किं जगादेत्याह—

चा०—सर्वमिति । हे सखे मित्र ! यत्त्वयोक्तं तत्सर्वं त्वय्युपपन्नं सम्भावितं यतो ममोभे अस्त्रे कुलिशं वज्रं भवाश्च त्वं च । द्वयोर्मध्ये स्मरस्योत्कर्षमाह । वज्रं तपोवीर्यमहत्सु तप एव वीर्यं तेन महान्तस्तेषु कुण्ठं भग्नसामर्थ्यं । त्वं ममास्त्रं

---

१. अक्रान्ति, २. संकल्पितेऽर्थे,

सर्वतोगामि सर्वत्राप्रतिहतगतिः । मुनीनामपि रागजननात् । साधकं च कार्यसंपादकं च । अस्त्रापेक्षया षण्ढत्वं । सख इत्याह्वानं सेवकेपि गौरवार्थम् ॥ १२ ॥

**अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।**
**व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥**

मल्लि०—अवैमीति ॥ हे सखे, ते सारं बलमवैमि वेद्मि । अतः खल्वत एवात्मसमं मत्तुल्यं त्वां गुरुणि महति कार्ये 'तस्मै हिमाद्रेः—(३ । १६) इति वक्ष्यमाणे नियोक्ष्ये । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकादात्मनेपदनियमः । तथाहि । सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—कृष्णेन विष्णुना । धरतीति धरः । पचाद्यच् । भुवो धरो भूधरस्तस्य भावस्तत्तां भूधरताम् । भूधरणशक्तिमित्यर्थः । अवेक्ष्य ज्ञात्वा शेषः सर्पराजो देहोद्वहनाय स्वदेहमुद्वोढुम् । 'क्रियार्थोपपदस्य—'इत्यादिना चतुर्थी । व्यादिश्यते नियुज्यते । शेषशायी हि भगवान् ॥ १३ ॥

चा०—अवैमीति । ते तव सारं बलमवैमि जानाम्यतः खलु त्वां गुरुणि कार्ये कर्तव्ये नियोक्ष्ये आज्ञापयामि । किंभूतं त्वाम् । आत्मसमं स्वतुल्यं । उक्तेऽर्थे दृष्टान्तमाह । कृष्णेन विष्णुना भूधरतां पृथ्वीधारकत्वमवेक्ष्य पर्यालोच्य देहोद्वहनायात्मदेहधारणार्थं शेषो व्यादिश्यते आज्ञाप्यते । धरतीति धरः पचाद्यच् । भुवोधरः भूधरस्तस्य भावस्तत्ता ॥ १३ ॥

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—

**आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।**
**निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव[1] ॥ १४ ॥**

मल्लि०—आशंसतेति ॥ वृषाङ्के हरे बाणगतिं बाणप्रसरमाशंसता कथयता । 'कुर्यां हरस्यापि पिनाकपाणेः' (३ । १०) इत्यादिनेति शेषः । त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायम् । 'ईषदसमाप्तौ—' इत्यादिना कल्पप्प्रत्ययः । कथमेतदित्याह—इदानीमुच्चैरुन्नताद्विषो येषां तेषामुच्चैर्द्विषां यज्ञांशभुजां देवानाम् । एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते । ईप्सितमाप्तुमिष्टमेतदेव हरे बाणप्रयोगरूपमेव निबोध । हरायत्तं बुद्ध्यस्वेत्यर्थः । 'बुध बोधने' इति धातोर्लोट् । अत्र 'आशंसता प्रार्थयमानेन' इति नाथव्याख्यानमनाथव्याख्यानम् । आङ्पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात् । याच्ञार्थत्वस्याप्रामाणिकत्वात् । 'कुर्यां हरस्यापि—' (३ । १०) इत्यत्रानयोरभावादयोगाच्चेति ॥ १४ ॥

---

१. अर्थमत्र.

चा०—आशंसतेति। वृषाङ्के हरे बाणगतिं आशंसता त्वया नोऽस्माकं कार्यं प्रतिपन्नकल्पमङ्गीकृतप्रायं। अत्र शंभुविषय एकबाणप्रयोगे उच्चैर्द्विषां प्रबलशत्रूणां यज्ञांशभुजां देवानामीप्सितमर्थं निबोध जानीहि ॥ १४ ॥

किं तत्कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्याह—

**अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः।**
**स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभू[1]र्ब्रह्मणि योजितात्मा ॥ १५ ॥**

मल्लि०—अमी इति ॥ हि यस्मादमी देवा जयाय शत्रुजयार्थं भवस्य हरस्य वीर्यप्रभवं तेजःसंभूतं सेनापतिमुशन्ति कामयन्ते। 'वश कान्तौ' इति धातोर्लट्। ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः स्थानं ब्रह्माङ्गभूः। कृतमन्त्रन्यास इत्यर्थः। ब्रह्मणि निजतत्त्वे 'वेदस्तत्त्वं तपो ब्रह्मब्रह्मा' इत्युभयत्राप्यमरः। योजितात्मा नियमितचित्तः। मंत्रन्यासपूर्वकम् ब्रह्म ध्यायन्नित्यर्थः। स भवश्च त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः। अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥ १५ ॥

तदेवेप्सितमाह—

चा०—अमी इति। अमी देवा जयाय शत्रुपरिभवाय हरस्य वीर्यप्रभवं शुक्रसमुद्भवं सेनान्यं सेनापतिमुशन्ति वाञ्छन्ति। वश कान्तौ कान्तिरिच्छा। स ईशस्त्वदेकेषुनिपातसाध्यः तवैकबाणनिक्षेपेण साध्यः। कीदृशः सः। ब्रह्माङ्गभूः ब्रह्मा अङ्गतः पुत्रो यस्य सः। पुनः कीदृशः। ब्रह्मनियोजितात्मा ब्रह्मणि परमात्मनि नियोजितो निक्षिप्त आत्मा चित्तं येन स तथा ॥ १५ ॥

**तस्मै हिमाद्रेः प्रयतां तनूजां [2]यतात्मने रोचयितुं यतस्व।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥**

मल्लि०—तस्मा इति ॥ यतात्मने नियतचित्ताय तस्मै भवाय। 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्चतुर्थी। प्रयतां हिमाद्रेस्तनूजां पार्वतीं रोचयितुं यतस्व। भवितव्यं चात्र पार्वत्यैवेत्याह—योषित्सु स्त्रीषु मध्ये। 'यतश्च निर्धारणम्' इति सप्तमी। क्षमा शक्ता तस्य हरस्य वीर्यं रेतस्तस्य निषेकः क्षरणं तस्य भूमिः क्षेत्रं सा पार्वत्येवेत्यात्मभुवा ब्रह्मणोपदिष्टम्। 'उभे एव क्षमे वोढुम्' (२। ६०) इत्यादिनोक्तमित्यर्थः ॥ १६ ॥

चा०—तस्मा इति। तस्मै हराय अद्रिः प्रयतां तनूजां पार्वतीं रोचयितुं यतस्व यत्नं कुरु। 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी। कीदृशाय तस्मै। यतात्मने नियतचित्ताय योषित्सु स्त्रीषु तद्वीर्यनिषेकभूमिः। तस्य शम्भोर्वीर्यस्य रेतसो

---

१. ब्रह्मनियोजितात्मा. २. जितात्मने,

निषेको निक्षेपस्तस्य भूमिः । स्थानं सैव पार्वती क्षमेति आत्मभुवा ब्रह्मणोपदिष्टं कथितम् ॥ १६ ॥

सापीदानीं संनिकृष्टैव तस्येत्याह—

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥ १७ ॥**

मल्लि०—गुरोरिति ॥ नगेन्द्रकन्या पार्वती च गुरोः पितुर्नियोगाच्छासनाधित्यकायां हिमाद्रेरूर्ध्वंभूमौ । 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । तपस्यन्तं तपश्चरन्तम् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः । ततः शतृप्रत्ययः । स्थाणुं रुद्रमन्वास्ते । उपास्ते इत्यर्थः । इतीदं मयाप्सरसां मुखेभ्यः श्रुतम् । न चैतदैतिह्यमात्रमित्याह—स वर्गः सोऽप्सरसां गणो मत्प्रणिधिर्मम गूढचरः । 'प्रणिधिः प्रार्थने चर' इति यादवः ॥ १७ ॥

सा दूरस्था चेद्भवती तदा दर्शनं विना कथं तत्प्ररोचना स्यादित्याह— .

बा०—गुरोरिति । गुरोः पितुर्नियोगान्नगेन्द्रकन्या पार्वती अधित्यकायामद्रेरुपरिभूभौ तपस्यन्तं तपश्चरन्तं स्थाणुमीश्वरमन्वास्ते सेवते इत्यप्सरसां देवाङ्गनानां मुखेभ्यो मया श्रुतं । यतः स वर्गोऽप्सरसां गणो मत्प्रणिधिर्मम चरः । पूर्वश्लोकापेक्षया चकारः ॥ १७ ॥

**तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।**
**अपेक्षते [1]प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥**

मल्लि०—तदिति ॥ तत्तस्मात्सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ । देवकार्यं कुरु । आशिषि लोट् । अयमर्थः प्रयोजनमर्थान्तरभाव्यः कारणान्तरसाध्य एव । तच्च कारणान्तरं पार्वतीसंनिधानमिति भावः । 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने ।' इति विश्वः । तथापि बीजसाध्योऽङ्कुरो बीजाङ्कुर उदयादुत्पत्तेः प्रागम्भ इव त्वामुत्तमं प्रत्ययं चरमं कारणमपेक्षते । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः ॥ १८ ॥

चा०—तद्गच्छेति तत्तस्माद्धेतोः सिद्ध्यै गच्छ । देवकार्यं कुरु । अयमर्थः इदं प्रयोजनं कुमारजन्मलक्षणमर्थान्तरभव्य एव कारणान्तरेण भविष्यन्नेव त्वामुत्तमं प्रत्ययं कारणं लब्ध्यै लाभाय यथोत्पत्तेः प्राक् पूर्वं बीजाङ्कुरो निमित्तकारणमम्भः अपेक्षते । यद्यपि समवायिकारणादेवाङ्कुरोत्पत्तिस्तथाप्यात्मलाभाय यथा जलापेक्षी

---

१. प्रत्ययसङ्गलब्धौ,

एवं शम्भोरेव भावी सेनानीजन्मलक्षणोऽर्थः सहकारिकारणत्वेन त्वामपेक्षत इत्यर्थः। भव्य एवेति भव्यशब्दः कर्तरि निपातः। 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः॥ १८॥

**[1]तस्मिन्सुराणां विजयाभ्युपाये तवैव [2]नामास्त्रगतिः कृती त्वम्।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म॥ १९॥**

मल्लि०--तस्मिन्निति। सुराणां विजयाभ्युपाये जयस्योपायभूते तस्मिन्हरेऽस्त्रगतिरस्त्रप्रसरस्तवैव नाम। नामेति संभावनायाम्। अन्येषां तु संभावनापि नास्तीति भावः। अतस्त्वं कृती कृतार्थः। तथाहि। अप्रसिद्धमप्यनन्यसाधारणमेव कर्म पुंसां यशसे हि। इदं तु प्रसिद्धमसाधारणं चेत्यातियशस्करमिति भावः॥ १९॥

चा०--अस्मिन्निति। भो काम! सुराणां विजयाभ्युपायेऽस्मिन् शम्भौ तवैवास्त्रगतिर्नान्यस्येति शेषः। अतस्त्वमेव कृती कुशलः। हि यतोऽनन्यसाधारणमप्रसिद्धमल्पमपि कर्म पुंसां यशसे कीर्तये किं पुनर्महत्॥ १९॥

प्रोत्साहनार्थं स्तौति--

**सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम्।**
**चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः॥ २०॥**

मल्लि०--सुरा इति॥ एते सुराः समभ्यर्थयितारो याचितारः। कार्यं प्रयोजनं त्रयाणां विष्टपानामपि संबन्धि। सर्वलोकार्थमित्यर्थः। कर्म ते तव चापेन। न त्वन्येनेति भावः। अतिहिंस्रमतिघातुकं च न। अहो बत इति संबोधने। 'अहो बतानुकम्पायां खेदे संबोधनेऽपि च' इति विश्वः। अथवा अहो आश्चर्ये। बतेत्यामन्त्रणे संतोषे चेति। 'बतामन्त्रणसंतोषखेदानुक्रोशविस्मये' इति विश्वः। स्पृहणीयं च' इति नानार्थकोषः॥ २०॥

चा०--सुरा इति। एते सुराः समभ्यर्थयितारः प्रार्थयितारः त्रयाणामपि विष्टपानां लोकानां कार्यं प्रयोजनं। तत्रापि ते चापेन कर्म व्यापारः। तदपि चातिहिंस्रं न। अतस्त्वं स्पृहणीयवीर्योऽसि अभिलषणीयपराक्रमोऽसि। अहो बताश्चर्यान्विक्ये॥ २०॥

**मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव।**
**[3]समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य॥ २१॥**

मल्लि०--मधुरिति॥ हे मन्मथ, असौ मधुश्च वसन्तोऽपि ते साहचर्यात्सहचरत्वादेवानुक्तोऽप्यप्रेरितोऽपि सहायः सहकार्येव। तथा-

---

१. अस्मिन्, २. काम, ३. समीरणश्चोदयिता, समीरणः प्रेरयिता,

हि। समीरणो वायुर्हुताशनस्याग्नेर्नोदयिता प्रेरको भवेति केन व्यादिश्यते। अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः। स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथङ्निर्दिष्ट इति प्रतिवस्तूपमालंकारोऽयम्। तदुक्तम्—'यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि। गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता॥' इति॥ २१॥

चा०—मधुरिति। भो मन्मथ! अनुक्तोऽपि मदाज्ञां विनाप्ययं मधुर्वसन्तः साहचर्यात्सहचरत्वात्सहाय एव सहगाम्येव। अनाज्ञप्तः कथमित्यत आह। हुताशनस्याग्नेः प्रेरयितोद्दीपयिता भवेत्यमुना प्रकारेण समीरणो वायुः केन व्यादिश्यते। अपितु न केनापि॥ २१॥

तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे।
[1]ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः॥ २२॥

मल्लि०—तथेति॥ तथास्त्विति भर्तुः स्वामिनः शेषामिव प्रसाददत्तां मालामिव। प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः। 'माल्याक्षतादिदाने स्त्री शेषा' इति वैजयन्तीकेशवौ। आज्ञां मूर्ध्नादाय शिरसा गृहीत्वा मदनः प्रतस्थे। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। इन्द्र ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श। हस्तस्पर्शेन संभावयामासेत्यर्थः। 'शेषामिवाज्ञाम्' इत्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः संदेहसंकर इति। यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा। अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता। शेषादानं तु संदिग्धमिति॥ २२॥

चा०—तथेति। मदनो भर्तुः स्वामिनः शक्रस्याज्ञामादेशं तथास्त्वितिशेषामिव मूर्ध्नाऽऽदाय प्रतस्थे ययौ। इन्द्रो हस्तेन तदङ्गं स्मरस्याङ्गं पस्पर्श प्रोत्साहनार्थं हस्ततलेन स्फालितवानित्यर्थः। कीदृशेन। ऐरावतास्फालनकर्कशेन ऐरावतस्य गजस्याऽऽस्फालनं तेन कर्कशो यस्तेन॥ २२॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः। स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनमिति लक्षणात्॥ २३॥

स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः।
अङ्गव्ययप्रार्थितकार्यसिद्धिः[2] स्थाण्वाश्रमं हैमवतं जगाम॥ २३॥

मल्लि०—स इति॥ स मदनोऽभिमतेन प्रियेण सख्या सुहृदा माधवेन वसन्तेन रत्या स्वदेव्या च साशङ्कं संकटमापतितमिति सभयमनुप्रयातः सन्। तथाङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः। शीर्वा

---

१. दिग्वारण, २. कर्मसिद्धिः,

मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः। हैमवतं हिमवती भवं स्थाणोरुद्रस्याश्रमं जगाम ॥ २३ ॥

चा०—स इति। स स्मरो हिमवति भवं हैमवतं स्थाण्वाश्रमं शंभोराश्रयं जगाम ययौ। कीदृशः। अभिमतेनाभीष्टेन सख्या मित्रेण माधवेन वसन्तेन रत्या भार्यया च साकं यथा स्यात्तथा दुष्करमिदं कर्मेत्याशङ्कयानुप्रयातोऽनुगतः। पुनः कीदृशोऽङ्गस्य व्ययेनापि नाशेनापि प्रार्थिताङ्गीकृता कार्यसिद्धिर्येन सः ॥ २३ ॥

तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती।
संकल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥

मल्लि०—तस्मिन्निति ॥ तस्मिन्वने स्थाण्वाश्रमे संयमिनां समाधिमतां मुनीनां तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तते इति प्रतिकूलवर्ती विरोधी मधुर्वसन्तः संकल्पयोनेर्मनोभवस्याभिमानभूतम्। गर्वहेतुभूतमित्यर्थः। कार्यकारणयोरभेदोपचारः। आत्मानं निजस्वरूपमाधाय संनिधाय जजृम्भे प्रादुर्बभूव। वसन्तधर्मान्प्रवर्तयामासेत्यर्थः ॥ २४ ॥

चा०—तस्मिन्निति। तस्मिन्वने मधुर्वसन्तः संकल्पयोनेः स्मरस्याभिमतरूपमात्मानं पुष्पादिरूपेणाधायोत्पाद्य जजृम्भे उल्ललासेत्यर्थः। कीदृशो वसन्तः। संयमिनां शान्तानां तपः समाधेस्तपसि यः समाधिश्चित्तैकाग्रता तत्प्रतिकूलवर्ती विपक्षः। उत्कण्ठाजनकत्वेन समाधिभङ्गत्वात् ॥ २४ ॥

कुबेरगुप्तां[1] दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥ २५ ॥

वसन्तधर्मानाह—

मल्लि०—कुबेरेति। उष्णरश्मौ सूर्ये साहसिके च नायके समयं दक्षिणायनकालं संगमकालं च विलङ्घ्याकाण्डे व्यतिक्रम्य कुबेरगुप्तां धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षितां च दिशमुदीचीं स्त्रीलिङ्गाक्षिप्तां कांचिन्नायिकां च गन्तुं चलितुं संगन्तुं च प्रवृत्ते सति दक्षिणा दिग्दाक्षिण्यवती नायिका च मुखेनाग्रभागेन वक्त्रेण च। वहतीति वहः। पचाद्यच्। गन्धस्य वहं गन्धवहमनिलं व्यलीकेन दुःखेन निश्वासस्तं व्यलीकनिश्वासमिव। 'दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवस्तुनोः' इति वैजयन्ती। उत्ससर्ज प्रवर्तयामास। स्वभर्तरि समयोल्लङ्घनेन पराङ्गनासंगतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिंचिद्वदा दुःखान्निश्वसन्तीति भावः। उत्तरायणे सति मलयानिला प्रवृत्ताः इति वाक्यार्थः। अत्रोत्प्रेक्षालंकारः। न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम्।

---

१. जुष्टाम्,

केवलविशेषसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते। अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते। न च श्लेष एव प्रकृताप्रकृतविषयः, उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात्। तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः। स च व्यलीकनिश्वासरूपचेतनधर्मसंभावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन्नभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यसिद्धयङ्गभूत इत्युत्पश्यामः॥ २५॥

चा०—कुबेरेति। दक्षिणदिङ्मुखेन मधोः प्रारम्भेण गन्धवहं मलयानिलं व्यलीकमप्रियं इति वियोगलक्षणं निश्वासमिव मुखेन ससर्ज चिक्षेप। कस्मिन् सति उष्णरश्मावादित्ये समयं दक्षिणायनं विलङ्घ्यातिक्रम्य कुबेरगुप्तां कुबेररक्षितां दिशमुत्तराशां गन्तुं यातुं प्रवृत्ते कृतारम्भे सति। मधौर्हि रविरुत्तराशां प्रयाति दक्षिणानिलोपि वाति। यदा प्रियं समयं शपथमतिक्रम्य कुत्सितेन वरेण पुष्पं कुरूपं नायिकां प्रयाति तदा दक्षिणानुकूला नायिका। दुःखादुच्छ्वासं मुञ्चतीतिध्वन्यर्थः। वहतीति वहः पचाद्यच्। गन्धस्य वहः गन्धवहः। 'व्यलीकं त्वप्रियेऽनृते' इति वैजयन्ती॥ २५॥

असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि।
पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण॥ २६॥

मल्लि०—असूतेति॥ अशोको वृक्षविशेषः सद्यः स्कन्धात्प्रकाण्डात्प्रभृत्येव स्कन्धादारभ्येत्यर्थः। भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः। भाष्यं च 'मूलात्प्रभृत्यग्राद्वृक्षांस्तक्ष्णुवन्ति' इति 'कार्तिक्याः प्रभृत्याग्रहायणी मासे' इत्यादि सपल्लवानि कुसुमान्यसूत। उभयमप्यजीजनदित्यर्थः। आसिञ्जितो नूपुरो यस्य तेन। सिञ्जधातोः 'अकर्मक—' इत्यादिना कर्तरि क्तः। सुन्दरीणां पादेन संपर्कं ताडनं नापैक्षत। 'सनूपुररवेण स्त्रीचरणेनाभिताडनम्। दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत्॥' इति। तथाहि—'पादाहृतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः। आलोकितः कुरुबकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति' इति॥ २६॥

चा०—असूतेति। सद्यो वसन्तागमक्षण एवाशोको वृक्षः स्कन्धात्प्रभृत्येव विटपादारभ्यैव सपल्लवानि सपत्राणि कुसुमानि पुष्पाण्यसूताजीजनत्। सुन्दरीणां स्त्रीणां पादेन संपर्कं ताडनं नापैक्षत न प्रतीक्षितवान्। कीदृशेन पादेन। आसिञ्जितनूपुरेण सुरणितमञ्जीरेण स्त्रीचरणेन ताडितोऽशोकः पुष्पयतीति कविसंप्रदायस्तथापि वसन्तकालस्य बलवत्तरत्वात्तदपेक्षा नासीदित्यभिप्रायः॥ २६॥

टिप्पणी—अशोकरूपैककर्तृकारकस्य सपल्लवकुसुमजननसुन्दरीपादसम्पर्कान-

पेक्षणक्रिययोरन्वयाद्दीपकालंकारः । तदुक्तम्—अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति ॥ २६ ॥

**सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

मल्लि०—सद्य इति । मधुर्वसन्त एवेषुकारः प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन् । 'पत्रं वाहनपक्षयोः' इत्यमरः । नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन्नवचूतबाणे समाप्तिं नीते सति सद्यो मनोभवस्य धन्विनो नामाक्षराणीव, द्विरेफान्भ्रमरान्निवेशयामास निदधौ । अत्र प्रवालपत्र इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वं रूपं यन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥ २७ ॥

चा०—सख्युरिति । नवचूतबाणे नीते संपूर्णे जाते सति मधुर्वसन्तः सख्युर्मित्रस्य मनोभवस्यानङ्गस्य नामाक्षराणीव नाम्नोऽक्षराणि वर्णानिव भृङ्गान् भ्रमरा निवेशयामास न्यस्तवान् । कीदृशे नवचूतबाणे । प्रवालोद्गमः पल्लवाविर्भावः स एव चारूणि रम्याणि पत्राणि पक्षा यस्य तस्मिन् । बाणस्तु सपक्षो लिखितस्वनामाक्षरो भवति । 'पत्रं वाहनपक्षयोः' इत्यमरः ॥ २७ ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया[1] स्म चेतः ।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥**

मल्लि०—वर्णेति । कर्णिकारं कर्णिकारकुसुमम् । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्युत्पन्नस्य तद्धितस्य 'पुष्पमूलेषु बहुलम्' इति लुक् । एवमन्यत्रापि द्रष्टव्यम् । वर्णप्रकर्षे वर्णोत्कर्षे सत्यपि निर्गन्धतया हेतुना चेतो दुनोति स्म पर्यतापयत् । 'लट् स्मे' इति भूतार्थे लट् । तथाहि । प्रायेण विश्वसृजो विधातुः प्रवृत्तिर्गुणानां सामग्र्यविधौ साकल्यसंपादनविषये पराङ्मुखी । सर्वत्रापि वस्तुनि किंचिद्वैकल्यं संपादयति । यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥ २८ ॥

चा०—वर्णप्रकर्ष इति । कर्णिकारं पुष्पवर्णप्रकर्षे सति वर्णस्य रूपस्योत्कर्षे विद्यमानेऽपि निर्गन्धतया गन्धरहितत्वेन चित्तं दुनोति स्म पीडयति स्म । तत्किमिति न सुगन्धि । अत आह । गुणानां सामग्र्यं संपूर्णता तस्य विधौ करणे विश्वसृजो ब्रह्मणः प्रवृत्तिः प्रायेण पराङ्मुखी । विधिः सर्वगुणसुन्दरं कमपि न सृजतीत्यर्थः । उक्तार्थनिश्चायकोऽर्थान्तरन्यासः ॥ २८ ॥

---

१. निर्गन्धमिति.

**बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ २९ ॥**

मल्लि०—बालेन्द्विति । अविकाशभावान्निर्विकाशत्वान्मुकुलभावाद्धेतोर्बालेन्दुरिव वक्राण्यतिलोहितान्यतिरक्तानि पलाशानि किंशुकपुष्पाणि । 'पलाशे किंशुकः पर्णः' इत्यमरः । वसन्तेन पुंसा समागतानां संगतानां वनस्थलीनां स्त्रीणां सद्यः सद्यो दत्तानि । पुराणेऽत्रतिलौहित्याभावादिति भावः । नखक्षतानीव बभुः । अत्र वसन्तस्य वनस्थलीनां च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति । 'नखक्षतानीव' इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति । सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येत्रोत्तिष्ठत इत्युभयोरेककालतैव । विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यत इति हि लक्षणम् ॥ २९ ॥

चा०—बालेन्द्विति । पलाशानि किंशुकपुष्पाणि बभुर्भान्ति स्म । किंभूतानि बालेन्दुवक्राणि बालचन्द्रवत्कुटिलानि । कस्माद्विकाशाभावात् । पुनः कीदृशानि । स्वभावादतिलोहितान्यरुणानि । अत्रोत्प्रेक्षते । वसन्तेन समागतानां जातसङ्गानां वनस्थलीनां सद्यस्तत्क्षणं नखक्षतानीव । तान्यपि कुटिलानि ताम्राणि च भवन्ति ॥ २९ ॥

**लग्नद्विरेफाञ्जनभक्तिचित्रं मुखे मधुश्रीस्तिलकं [1]प्रकाश्य ।**
**रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ ३० ॥**

मल्लि०—लग्नेति । मधुश्रीर्वसन्तलक्ष्मीर्लग्नद्विरेफा एवाञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं तिलकं पुष्पविशेषमेव तिलकं विशेषकम् । मुखं प्रारम्भस्तस्मिन्नेव मुखे वक्त्रे प्रकाश्य प्रकटय्य बालारुणकोमलेन बालार्कसुन्दरेण रागेणारुणिम्ना तेनेव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं चूतप्रवालोष्ठमलंचकार प्रसाधयामास । अत्र रूपकालंकारः ॥३०

चा०—लग्नेति । मधुश्रीर्वसन्तलक्ष्मीर्मुखे आदौ तिलकं वृक्षं लग्नद्विरेफाञ्जनभक्तिचित्रं लग्ना ये द्विरेफा भृङ्गास्त एवाञ्जनभक्तिः कज्जलरचना तया चित्रं रम्यं निवेश्य रचयित्वा रागोऽरुणिम्ना चूतप्रवालोष्ठं चूत आम्रस्तस्य प्रवाल एव पल्लव एव ओष्ठस्तमलंचकार भूषितवती । अन्यापि मुखं कज्जलविच्छित्तिविचित्रं तिलकं कृत्वा ताम्बूलादिरागेणोष्ठमलंचकारेति छायार्थः । 'मुखं तु वदने मुख्य आदौ द्वाराभ्युपाययोः' इति विश्वः ॥ ३० ॥

टिप्पणी—मधुश्रीरूपैककर्तृकारस्य प्रकाशनप्रसाधनाक्रियाद्वयेऽन्वयाद्दीपकालंकारः । चूतप्रवाले ओष्ठत्वसमारोपणाद्रूपकालंकारश्च ॥ ३० ॥

---

१. निवेश्य,

मृगाः प्रियालद्रुममञ्जरीणां[1] रजःकणैर्विघ्नितदृष्टिपाताः।
मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः॥ ३१॥

मल्लि०—मृगा इति। प्रियालद्रुमा राजादनवृक्षाः। 'राजादनः प्रियालः स्यात्' इत्यमरः। तेषां मञ्जर्यस्तासां रजःकणैर्विघ्निताः संजातविघ्ना दृष्टीनां पाताः प्रसादा येषां ते तथोक्ताः मदोद्धता मृगाः प्रत्यनिलमनिलाभिमुखं मर्मरा मर्मरशब्दवन्तः पत्रमोक्षा जीर्णपर्णपाता यासु ता वनस्थलीर्विचेरुर्वनप्रदेशेषु चरन्ति स्म। 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति चरतेः सकर्मकत्वम्॥ ३१॥

चा०—मृगा इति। मृगा वनस्थलीः प्रत्यनिलं वाताभिमुखं विचेरुर्भ्रमन्ति स्म। कीदृशाः। प्रियालद्रुममञ्जरीणां प्रियालवृक्षाणां मञ्जरीणां रजःकणैः धूलिकणिकाभिर्विघ्नितः प्रतिहतो दृष्टिपातो येषां ते। पुनः कीदृशाः। मदोद्धताः। कीदृग्भूतावनस्थलीः। मर्मरशब्दो भवति येषां ते पत्रमोक्षाः यासु तथाभूताः॥३१॥

चूताङ्कुरस्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य॥ ३२॥

मल्लि०—चूताङ्कुरेति। चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः। 'सरभावपथे रक्ते कषायः' इति केशवः। पुमान्कोकिलः। पुंग्रहणं प्रागल्भ्यद्योतनार्थम्। मधुरं चुकूजेति यत्तत्कूजनमेव मनस्विनीनां मानविघाते रोषनिरासे दक्षं स्मरस्य वचनं मानं त्यजतेत्याज्ञावचनं जातम्। कोकिलकूजितश्रवणानन्तरं स्मराज्ञप्ता इव मानं जहुरित्यर्थः॥ ३२॥

चा०—चूताङ्कुरेति। पुंस्कोकिलः श्रेष्ठकोकिलो यन्मधुरं चुकूज शब्दितवान्। कीदृशः। चुताङ्कुरास्वादेन कुसुमास्वादेन कषायकण्ठो विशादकण्ठः। तदेव कूजनं स्मरस्य वचनं जातमभूत्। किंभूतं वचनं। मनस्विनीमानविघातदक्षं मानिनीमानखण्डने प्रवीणं वर्णवद्रसेपि कषायादिव्यवहार औपचारिकः॥ ३२॥

टिप्पणी—मनस्विन्यः कोकिलकूजिताकर्णनानन्तरं स्मराज्ञप्ता इव मानं जहुरित्यर्थे फलिते गम्योत्प्रेक्षाऽलंकारः॥ ३२॥

हिमव्यपायाद्विशदाधराणा[2]मापाण्डरीभूतमुखच्छवीनाम्।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु॥ ३३॥

मल्लि०—हिमेति। हिमस्य व्यपायादपगमाद्विशदा नीरुजा अधरा ओष्ठा यासां तासामापाण्डरीभूतमुखच्छवीनाम्। कुङ्कुमपरिहारादिति भावः। किंपुरुषाङ्गनानां पत्रविशेषकेषु पत्ररचनासु स्वेदोद्गमः पदं चक्रे।

१. प्रियालु० २. आपाण्डुरीभूत०

घर्मोदयात्स्वेदोदयोऽभूदित्यर्थः। विशदाधरत्वं मधूच्छिष्टराहित्यादिति हेमन्तेषु नार्यो बिम्बोष्ठेषु मधुच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम् ॥ ३३ ॥

चा०—हिमेति। किंपुरुषाङ्गनानां किन्नरीणां पत्रविशेषकेषु पत्रावलीतिलकेषु स्वेदोद्गमः पदं स्थानं चक्रे चकार। कीदृशीनां हिमव्यपायाच्छीतनाशाद्विशदाधराणां विशदा निर्मला अधरा यासां तथा। पुनः कीदृशानां। आपाण्डुरीभूतमुखच्छवीनां किंचित्पाण्डुरीभूता मुखदीप्तिर्यासां। यद्यपि वसन्तस्याकाले प्रवृत्तत्वात्पूर्वं तुषारस्याभावस्तथापि सामान्यरूपेण वर्णनमित्यदोषः ॥ ३३ ॥

टिप्पणी—पूर्वार्द्धोपात्तविशेषणद्वयस्य साभिप्रायत्वात्परिकरालंकारः। तदुक्तम्—उक्तिर्विशेषणैः साऽभिप्रायैः परिकरो मत इति ॥ ३३ ॥

तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम्।
प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥ ३४ ॥

मल्लि०—तपस्विन इति। स्थाणोर्वनमोको येषां ते तपस्विनस्तत्रत्या मुनयः। समानकाले आद्यन्तावस्था आकालिकीम्। अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीमित्यर्थः। 'आकालिकडाद्यन्तवचने' इति समानकालादिकट्प्रत्ययः प्रकृतेराकाल आदेशश्च निपातितः। 'टिड्ढाणञ्–' इत्यादिना ङीप्। केचिदकालाद्देहादध्यात्मादित्वाद्भवार्थे ठगित्याहुः। तामाकालिकीं मधुप्रवृत्तिं वीक्ष्य प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां मनसां कथंचिदीशा नियन्तारो बभूवुः ॥ ३४ ॥

चा०—तपस्विन इति। स्थाणुवनौकसः शंभोराश्रमवासिनो वनौकसस्तापसाः कथंचित्कृच्छ्रेण मनसामीशाश्चित्तानां प्रभवो बभूवुर्जाताः। किं कृत्वा। आकालिकीमकालोत्पन्नां तां मधुप्रवृत्तिं वसन्तलक्ष्मीं वीक्ष्य दृष्ट्वा। कीदृशानां मनसां। प्रयत्नसंस्तम्भितविक्रियाणां प्रयत्नेन संस्तम्भिता निरुद्धा विक्रिया विकारो येषाम्। आकालिकीमित्यध्यात्मादित्वाट्ठञ् ॥ ३४ ॥

तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥

मल्लि०—तमिति। आरोपितमधिज्यं कृतं पुष्पचापं येन तस्मिन्रतिर्द्वितीया यस्य तस्मिन्रतिसहाये मदने तं देशं स्थाण्वाश्रमं प्रपन्ने प्राप्ते सति द्वन्द्वानि स्थावराणि जंगमानि च मिथुनानि काष्ठोत्कर्षः। 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः। तां गतो यः स्नेह इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः। स एव रसस्तेनानुविद्धं संपृक्तं भावं रत्याख्यं शृङ्गारभावं क्रियया कार्यभूतया चेष्टया विवव्रुः प्रकटीचक्रुः। शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थः ॥ ३५ ॥

चा०—तं देशमिति । द्वन्द्वानि मिथुनानि काष्ठाग्रतस्नेहरसानुविद्धं काष्ठां परां कोटिं गतः प्राप्तो यः स्नेहो रसो रागस्ताभ्यामनुविद्धं व्याप्तं भावं चित्ताभिप्रायं क्रियया चेष्टया विवव्रुः प्रकटीचक्रुः । क्व सति आरोपितपुष्पचापे आरोपितः सज्जीकृतः पुष्पचापो येन तस्मिन् रतिद्वितीये रतिप्तहोय मदेन तं देशं तमाश्रमं प्राप्ते सति ॥ ३५ ॥

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।**
**शृङ्गेण च[1] स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥**

ताश्चेष्टां आह 'मधु' इत्यादिभिश्चतुर्भिः—

मल्लि०—मध्विति । द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरः । उपचारात्तदर्थोऽपि द्विरेफ उच्यते । यथाह कैयटः—'शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते । यथा भ्रमरशब्दस्य द्विरेफत्वाद्द्विरेफो भ्रमरः' इति । कुसुममेवैकं साधारणं पात्रं तस्मिन्मधु मकरन्दम् । 'मधु मद्ये पुष्परसे' इति विश्वः । स्वां प्रियां भृङ्गीमनुवर्तमानोऽनुसरन्पपौ । तत्पीतशेषं पपावित्यर्थः । कृष्णश्चासौ सारः शबलश्च कृष्णसारः कृष्णमृगः । 'वर्णो वर्णेन' इति समासः । स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं मृगीं शृङ्गेणाकण्डूयत कषितवान् । 'कण्ड्वादिभ्यो यक्' इति यक् । ततः कर्तरि लङ् ॥ ३६ ॥

चा०—मध्विति । द्विरेफो भृङ्गः कुसुमैकपात्रे पुष्पमेवैकपात्रं चषकं तस्मिन् स्वां प्रियां भृङ्गीमनुवर्तमान आवर्ज्य यत्र मधु मकरन्दं पपौ । कृष्णसारः शृङ्गेण मृगीमकण्डूयत । कीदृशीं मृगीं संस्पर्शनिमीलिताक्षीं संस्पर्शसुखमुकुलितनेत्रां । सहपानं कण्डूयनं च कामाभिप्रायसूचकम् ॥ ३६ ॥

टिप्पणी—अत्र वसन्ततौं कामोद्भवाद्द्विरेफस्य प्रियानुवर्तिनः एकपात्रभोजनं कृष्णसारस्य शृङ्गेण मृगीस्पर्शनं स्वभावसिद्धमिति स्वभावोक्तिः ॥ ३६ ॥

**ददौ [2]रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।**
**अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ ३७ ॥**

मल्लि०—ददाविति । रसादतिरागात्करेणुः करिणी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुस्तस्य गन्धोऽस्यास्तीति पङ्कजेरणुगन्धि गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकोऽर्धं यथातथोपभुक्तेनार्द्धजग्धेन बिसेन जायां संभावयामास । स्वजग्धशेषं ददावित्यर्थः ॥ ३७ ॥

चा०—ददाविति । करेणुर्हस्तिनी सरःपङ्कजरेणुगन्धि सरासि यानि पङ्कजानि

---

१. संस्पर्श    २. सरः पङ्कज,

तेषां रेणुः परागस्तस्य गन्धोस्यास्तीति तादृशं गण्डूषजलं गजाय ददौ । रथाङ्ग-नामा चक्रवाकोऽर्द्धोपभुक्तेन भक्षितेन बिसेन मृणालेन जायां चक्रवाकीं संभावयामास सम्मानितवान् ॥ ३७ ॥

टिप्पणी—सामगते वसन्ततौ स्त्रीपुरुषयोरन्योऽन्यक्रीडनं स्वभावसिद्धमिति स्वभावोक्तिरलङ्कारः ॥ ३७ ॥

**गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।**
**पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्बे[1] ॥ ३८ ॥**

मल्लि०—गीतान्तरेष्विति । किंपुरुषः किंनरः श्रमवारिलेशैः स्वेदोद-बिन्दुभिः किंचिदीषत्समुच्छ्वासिता विश्लेषिताः पत्रलेखा यस्य तत् । पुष्पाणामासवो मद्यं पुष्पासवः । पुष्पोद्भवमद्यमित्यर्थः । वसन्ते मधूकस्य संभवात्पुष्पवासितमिति केचित् । तेनाघूर्णिताभ्यामुद्भ्रान्ताभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्बे चुचुम्ब ॥ ३८ ॥

चा०—गीतेति । किंपुरुषः किन्नरः प्रियामुखं चुचुम्ब । कीदृशं मुखं । गीता-न्तरेषु श्रमवारिलेशैः स्वेदकणैरीषत्समुच्छ्वासिता विकसिता पत्रावली यत्र तत् । पुनः कीदृशं पुष्पैर्भावितेनासवेनाघूर्णिताभ्यां शोभत इति यत् तत् ॥ ३८ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ ३८ ॥

**पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।**
**लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥**

मल्लि०—पर्याप्तेति । पर्याप्ताः समग्राः पुष्पस्तबका एव स्तना यासां ताभ्यः । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीप् । स्फुरन्तः प्रवालाः पल्लवा एवौष्ठास्तैर्मनोहराभ्यो लता एव वध्वस्ताभ्यः सकाशात्तरवोऽपि । लिङ्गादेव पुंस्त्वं गम्यते । विनम्राः शाखा एव भुजा-स्तैर्बन्धनान्यवापुः । ताभिरालिङ्गिता इत्यर्थः । स्थावराणामपि मदन-विकारोऽभूत्किमुतान्येषामिति भावः । एतच्च तरुलतानामपि चेतनत्वा-दुक्तम् । यथाह मनुः—'अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विताः' इति । अत्र रूपकालंकारः ॥ ३९ ॥

चा०—पर्याप्तेति । तरवोप्यचेतना लतावधूभ्यो लताभ्य एव स्त्रीभ्यो विनम्र-शाखा भुजबन्धनानि विनम्रशाखा एव भुजास्तैर्बन्धनान्यालिङ्गनान्यवापुः । कीदृ-शीभ्यः पर्याप्ताः संपूर्णाः पुष्पस्तवका एव स्तना यासां ताभ्यस्तथा स्फुरन्तः प्रवालाः पल्लवा एवौष्ठास्तैर्मनोहराभ्यः ॥ ३९ ॥

१. चुचुम्ब,

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव।
आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

मल्लि०—श्रुतेति। अस्मिन्क्षणे वसन्ताविर्भावकाले भगवान्हरः श्रुताप्सरोगीतिरपि। दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः। प्रसंख्यानपर आत्मानुसंधानपरो बभूव। तथाहि। आत्मनश्चित्तस्येश्वराणां नियन्तृणाम्। वशिनामित्यर्थः। विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः। घञर्थे कप्रत्ययः। जातु कदाचिदपि समाधिभेदे समाधिभञ्जने प्रभवः समर्था न भवन्ति ॥ ४० ॥

चा०—श्रुतेति। अस्मिन् क्षणे वसन्तसमये श्रुताप्सरोगीतिरपि श्रुताप्सरसां गीतिर्येन तादृशोपि हरः प्रसंख्यानपरः समाधिनिष्ठो बभूवाभूत्। मघाप्सरसां गीतिस्मरणात्किमिति न समाधिभङ्ग इत्याह। आत्मेति आत्मशब्देन तु लक्षणया षडिन्द्रियाण्युच्यन्ते। तेषामीश्वराणां समाधेर्नियमस्य भङ्गः विघ्ना जातु कदाचित् प्रभवः समर्था न भवन्ति ॥ ४० ॥

टिप्पणी—उत्तरार्द्धगतसामान्यार्थेन पूर्वार्द्धगतविशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः ॥ ४० ॥

लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः।
मुखार्पितैकाङ्गुलिसंज्ञयैव माचापलायेति गणान्व्यनैषीत् ॥ ४१ ॥

मल्लि०—लतेति। अथ लतागृहद्वारं गतो वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डो नन्दी नन्दिकेश्वरः। 'नन्दी भृङ्गिरिटिस्तुण्डिनन्दिनौ नन्दिकेश्वरे' इति कोशः। मुखेऽर्पितायाः सरोषविस्मयस्तिमितावलोकं निहिताया एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनयैव। 'संज्ञास्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' इत्यमरः। गणान्प्रमथांश्चापलाय चापलं कर्तुं मा भवतेति। 'क्रियार्थोपपदस्य—' इत्यादिना चतुर्थी। व्यनैषीच्छिक्षितवान् ॥ ४१ ॥

चा०—लतेति। लतागृहद्वारि लतामयगृहद्वारदेशे गतः स्थितो नन्दी प्रतीहारो मुखार्पितैकाङ्गुलिसंज्ञयैव वदनारोपितैकाङ्गुल्यनिषेधसूचनेनैव माचापलायेति चापल्यार्थं मा चेष्टध्वमिति गणान् व्यनैषीच्छिक्षितवान्। प्रभोर्निकटे वक्तुमनुचितत्वान्मुखार्पितैकाङ्गुलिसंज्ञयैवेति लोकव्यवहारः। कीदृशो नन्दी। वामप्रकोष्ठार्पित हेमवेत्रः। वामे प्रकोष्ठेऽर्पितो न्यस्तः सुवर्णस्य दण्डो येन। चापलायेति। 'हायनान्तयुवादिभ्योण्' इति युवादिपाठादण् ॥ ४१ ॥

टिप्पणी—स्वभावोक्तिः ॥ ४१ ॥

न केवलं गणा एव विनीताः, किंतु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—

**निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।**
**तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥**

मल्लि०—निष्कम्पेति । निष्कम्पवृक्षम् । इदमुद्भिज्जोपलक्षणम् । निभृतद्विरेफं निश्चलभृङ्गम् । स्वेदजोपलक्षणमेतत् । मूकाण्डजं निःशब्दपक्षिसरीसृपादिकम् । एतेनाण्डजजातिरुक्ता । शान्तमृगप्रचारम् । जरायुजोपलक्षणमेतत् । सर्वमेव काननं तच्छासनान्नन्दीश्वराज्ञया चित्रार्पितारम्भं चित्रलिखितारम्भमिवावतस्थे । 'नृगवाद्या जरायुजाः । स्वेदजाः कृमिदेशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः' इत्यमरः ॥ ४२ ॥

चा० —निष्कम्पेति । सर्वं काननमेव तच्छासनात्तदादेशाच्चित्रार्पितारम्भमिवालेख्यनिहितारम्भमिवावतस्थे स्थितं । कीदृशं वनं । निष्कम्पवृक्षं कम्परहिता वृक्षा यत्र तत् । पुनः कीदृशं । शान्तमृगप्रचारं शान्तो मृगाणां प्रचारो भ्रमणं यत्र तत् । अवतस्थ इति 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् ॥ ४२ ॥

टिप्पणी—अत्रोत्प्रेक्षालङ्कारः ॥ ४२ ॥

**दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे ।**
**प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥**

मल्लि०—दृष्टिप्रपातमिति । कामः प्रयाणे यात्रायां पुरोगतः शुक्रो यस्मिन्देशे तं पुरःशुक्रं देशमिव । 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्तते ।' इति प्रतिषेधात् । तस्य दृष्टिप्रपातं दृग्विषयं परिहृत्य प्रान्तेषु पार्श्वदेशेषु संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां शाखा यस्य तत् । तिरोधानयोग्यमिति भावः । भूतपतेः शिवस्य ध्यानास्पदं समाधिस्थानम् । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । विवेश ॥ ४३ ॥

चा०—दृष्टीति । कामो भूतपतेर्हरस्य ध्यानास्पदं समाधिस्थानं विवेश प्रविष्टवान् । किं कृत्वा । दृष्टेः प्रपातः पतनं तत्परिहृत्य । कस्मिन् कमिव प्रयाणे यात्रायां पुरः सम्मुखं शुक्रमिव । यथा भगवान्न पश्यति तथा विवेशेत्यर्थः । किंविधं ध्यानास्पदं । प्रान्तेषु निकटेषु संसक्तनमेरुशाखं संसक्ता लग्ना नमेरूणां शाखा यत्र तम् । शुक्रायाभिमुखी यात्रा नेष्टा । तदुक्तं ज्योतिःशास्त्रे ( प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च । अपि शक्रसमो राजा हतसैन्यो निवर्तते ॥ ) इति ॥ ४३ ॥

टिप्पणी—यथा यात्रायां लोकः पुरःशुक्रदेशं परित्यज्य गच्छति तथा कामः

नन्दिदृग्विषयं परित्यज्य भूतपतेरास्पदं विवेशेत्यर्थः पुरः शुक्रं देशमिव तस्य दृष्टिप्रपातमित्युपमानोपमेयभावादुपमाऽलङ्कारः ॥ ४३ ॥

**सदेवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।**
**आसीनमासन्नशरीरपातस्त्रियम्बकं[1] संयमिनं ददर्श ॥ ४४ ॥**

मल्लि०—स इति । आसन्नशरीरपात आसन्नमृत्युः स कामः शार्दूलचर्मणा व्यवधानवत्याम् । व्याघ्रचर्मास्तृतायामित्यर्थः । 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्राशस्त्यादिति भावः । देवदारुद्रुमवेदिकायामासीनमुपविष्टं संयमिनं समाधिनिष्ठं त्रियम्बकं त्रिनेत्रं ददर्श । केचित्साहसिकाः 'त्रिलोचनम्' इति पेठुः । त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसो महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥ ४४ ॥

चा०—स इति । आसन्नशरीरपातः आसन्नः शरीरपातः शरीरनाशो यस्य । स कामो देवदारुद्रुमाणां वेदिकायामधोभागविरचितस्थण्डिले आसीनमुपविष्टं संयमिनं ध्यानासक्तं त्र्यम्बकं त्रिलोचनं ददर्शाऽद्राक्षीत् । कीदृश्यां वेदिकायां शार्दूलचर्मव्यवधानवत्यां व्याघ्रचर्मवेष्टितायाम ॥ ४४ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः । आसन्नशरीरपात इति कामविशेषणस्य साभिप्रायत्वात्परिकरालङ्कारश्च ॥ ४४ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति—

**पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।**
**उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

**मल्लि०—पर्यङ्केति । पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धमृजुरायतश्चर्ज्वायतस्तं संनमितावुभावसौ यस्य तं तथोक्तम् । वृत्तिविषये उभशब्दस्थान उभयशब्दप्रयोग इत्युक्तं कैयटेन । उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य संनिवेशः संस्थानं तस्मादङ्कमध्ये प्रफुल्लं राजीवं पङ्कजं यस्य तमिव स्थितम् । वीरासने वसिष्ठः—'एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥' इति । तथा योगसारे—'उत्तानिते करतले करमुत्तानितं परम् । आदायाङ्गतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥' इति ॥ ४५ ॥**

इतः षड्भिः कुलकं—

चा०—पर्यङ्केति । कीदृशं शंभुं पर्यङ्कबन्धस्थिरपूर्वकायं पर्यङ्कनामासनविशेषस्तस्य बन्धो रचना तेन स्थिरो निश्चलः पूर्वकायो यस्य स तम् । पुनः कीदृशं ऋजू

---

1. त्रिलोचनम्,

स्पष्टौ आयतौ च ईषत्सन्नमितावन्यूनाधिकाभावेनोभयौ अंसौ यस्य स तम्। उत्प्रेक्षते। उत्तानपाणिद्वयसन्निवेशादुत्तानस्योर्ध्वमुखस्य पाणिद्वयस्य सन्निवेशात्स्थापनादङ्कमध्ये प्रफुल्लराजीवमिव प्रफुल्लं राजीवं पद्मं यस्येति तादृशमिव ॥ ४५ ॥

टिप्पणी—अङ्कमध्ये प्रफुल्लराजीवमिव स्थितं तमित्युत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ ४५ ॥

[1]भुजंगमोन्नद्धजटाकलापं [2]कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां [3]कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥

मल्लि०—भुजंगमेति ॥ भुजंगमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम्। कर्णावसक्तम्। कर्णावलम्बीत्यर्थः। अत एव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तं कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां ग्रन्थिमतीं बन्धनयुक्तां कृष्णत्वचं कृष्णमृगाजिनं दधानम् ॥ ४६ ॥

चा०—भुजङ्गमेति। पुनः कीदृशं। भुजङ्गमाबद्धजटाकलापं भुजङ्गमेन वासुकिना बद्धो जटाकलापो येन तम्। पुनः कीदृशं करावसक्तद्विगुणाक्षसूत्रं करे अवसक्तं निक्षिप्तं द्विगुणमक्षसूत्रं येन तम्। अक्षैरुद्राक्षैः पूर्णं सूत्रमक्षसूत्रं। मध्यमपदलोपीसमासः। पुनः कीदृशं। मृगत्वचं मृगचर्म दधानं। किंभूतां मृगत्वचं कण्ठप्रभासङ्गविशेषनीलां कण्ठस्य प्रभया आसङ्गः संयोगस्तेन विशेषेण नीला श्यामा ताम्। पुनः कीदृशीं। ग्रन्थिमतीं स्कन्धदेशे ग्रन्थियुक्ताम् ॥ ४६ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ ४६ ॥

किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां [4]विरतप्रसङ्गैः।
नेत्रैरविस्पन्दितपक्ष्ममालैर्[5]लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥

मल्लि०—किंचिदिति। किंचित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः। 'तारकाक्ष्णः कनीनिका' इत्यमरः। भ्रूविक्रियायां भ्रूविक्षेपे विरतप्रसङ्गैः प्रसक्तिरहितैरविस्पन्दितपक्ष्ममालैरचलितपक्ष्मपङ्क्तिभिरधःप्रसृता मयूखा येषां तैरधोमयूखैर्नेत्रैः। त्रिनेत्रत्वाद्बहुवचनम्। लक्ष्यीकृतघ्राणं नासाग्रनिविष्टदृष्टिमित्यर्थः। 'करणान्यबहिष्कृत्य स्थाणुवन्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः ॥' इति योगसारे ॥ ४७ ॥

चा०—किंचिदिति। पुनः कीदृशं नेत्रैर्लक्ष्यीकृतघ्राणं लक्ष्यीकृतो विलोकितो नासापुटो येन स तम्। कीदृशैः नेत्रैः? किंचित्प्रकाशस्तिमिताग्रतारैः। किंचित्प्रका-

---

१. उद्बद्ध, आबद्ध, २ कर्णावतंस, ३. मृगत्वचम्,
४. विगत, ५. लक्ष्मीकृत,

शेन स्तिमिता निश्चलोग्रा प्रचण्डा तारा कनीनिका येषां तानि तैः। पुनः कीदृशः। भ्रूविक्रियायां विरतप्रसङ्गैः भ्रूकम्पादौ विरतो निवृत्तः प्रसङ्गः प्रसारो येषां तैः। तथा अविस्पन्दिता निश्चला पक्ष्ममाला येषां तैः ॥ ४७ ॥

टिप्पणी—अत्रापि स्वभावोक्तिरलङ्कारः ॥ ४७ ॥

अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरंगम्।
अन्तश्चराणां मरुतां निरोधा[1]न्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥

मल्लि०—अवृष्टीति। अन्तश्चरन्तीत्यन्तश्चरास्तेषां मरुतां प्राणादीनां निरोधाद्धेतोरवृष्टिसंरम्भमविद्यमानवर्षसंभ्रममम्बुवाहमिव स्थितम्। एतेन प्राणनिरोधः सूचितः। अनुत्तरंगमनुद्भूततरंगमपामाधारे ह्रदमिव स्थितम्। एतेनापाननिरोधः सूचितः। तथा निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपमिव स्थितम्। एतेन शेषवायुनिरोधः सूचितः। 'निवातावाश्रयावातौ' इत्यमरः ॥ ४८ ॥

चा०—अवृष्टीति। पुनः कीदृशमिव अन्तश्चराणामभ्यन्तराणां मरुतां वायूनां निरोधात् अवृष्टिसंरम्भं अम्बुवाहमिव न विद्यते वृष्टिसंरम्भो गर्जिताद्याडम्बरो यस्य स तम्। पुनः कीदृशमिव। अनुत्तरङ्गमनुद्धतास्तरङ्गा यत्र तदृशमपामाधारमिव ह्रदमिव। निर्वातनिष्कम्पं प्रदीपमिव वाताभावेन कम्परहितम्। ॥ ४८ ॥

टिप्पणी—अत्र वाच्योत्प्रेक्षालङ्कारः ॥ ४८ ॥

कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः।
मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥ ४९ ॥

मल्लि०—कपालेति। कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तो ब्रह्मरन्ध्रात् पञ्चम्यास्तसिल्। उदितैरुद्भूतैर्ज्योतिःप्ररोहैस्तेजोङ्कुरैर्मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्येन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥ ४९ ॥

चा०—कपालेति। पुनः कीदृशं शिरस्त उत्तमाङ्गादुदितैरुत्थितैर्ज्योतिः प्ररोहैस्तेजोङ्कुरैः बालस्य कलामात्रस्येन्दोर्लक्ष्मीं कान्तिं ग्लपयन्तं तिरस्कुर्वन्तम्। किम्भूतैर्ज्योतिःप्ररोहैः कपालनेत्रान्तरलब्धमार्गैः कपाले यन्नेत्रं तदन्तरे रन्ध्रे लब्धो मार्गो यैस्तैः। कीदृशीमिन्दोर्लक्ष्मीं मृणालसूत्राधिकसौकुमार्यां। मृणालसूत्रादप्यधिकं सौकुमार्यं यस्यास्ताम् ॥ ४९ ॥

टिप्पणी—कपालनेत्रच्छिद्रद्वारा प्राप्तमार्गैर्ब्रह्मरन्ध्रादुत्पन्नैस्तेजोऽङ्कुरैर्बालेन्दोर्लक्ष्मीं ग्लपयन्त यथावद्वस्तुवर्णनात्स्वभावोक्तिरलङ्कारः ॥ ४९ ॥

---

१. निर्वात.

**मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं [1]क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

**मल्लि०**—मन इति । नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः संचारो यस्य तत्तथोक्तम् । समाधिना प्रणिधानेन वश्यं वशंगतम् । यत्प्रत्ययः । 'प्रणिधानं समाधानं समाधिश्च समाश्रयः' इति हलायुधः । मनो हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य । तथा च वसिष्ठः—'यतो निर्याति विषयान्यस्मिश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥' इति । क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः । यं न क्षरतीत्यक्षरमविनाशिनं विदुर्विदन्ति । 'विदो लटो वा' इति झेर्जुस् । तमात्मानमात्मनि स्वस्मिन्नवलोकयन्तं साक्षात्कुर्वन्तम् । स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥ ५० ॥

**चा०**—मन इति । कीदृशं । हृदि समाधिवश्यं समाधेरेकाग्रताया वश्यमायत्तं मनो निवेश्य आत्मनि स्वदेहे तमात्मानमवलोकयन्तं पश्यन्तं । तमिति कमित्याह । वेदविदो अक्षरमविनाशिनं यं विदुर्जानन्ति । कीदृशं मनः । नवद्वारनिषिद्धमार्गं नवद्वारेभ्यो निषिद्धा निवृत्ता वृत्तिर्यस्य तत् ॥ ५० ॥

टिप्पणी—अत्रापि स्वभावोक्तिरलङ्कारः ॥ ५० ॥

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।**
**नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥**

**मल्लि०**—स्मरेति । स्मरः कामस्तथाभूतं पूर्वोक्तरूपं मनसाप्यधृष्यमयुग्मनेत्रं विषमाक्षमदूरात्पश्यन् । साध्वसेन सन्नहस्तो विश्लथपाणिः सन् । स्वहस्तात्स्रस्तं शरं चापमपि चापं च नालक्षयन्न विवेद । भीतो मुह्यतीति भावः ॥ ५१ ॥

**चा०**—स्मर इति । स्मरः कन्दर्पः मनसाप्यधृष्यमभिभवितुमशक्यं तथाभूतं पूर्ववर्णितं त्रिनेत्रमीशमदूरं निकटे पश्यन्नतएव साध्वससन्नहस्तः साध्वसेन भयेन सन्नः कम्पमानो हस्तो यस्य सः । स्वहस्तात् स्रस्तं पतितं शरं बाणं चापमपि धनुरपि नालक्षयन्नाज्ञासीत् । शरावापमितिपाठे शराः अवाप्यंतेऽनेनेति शरावापो धनुः ॥ ५१ ॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ ५१ ॥

**निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५२ ॥**

**मल्लि०**—निर्वाणेति । अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम् । नष्टप्रायमित्यर्थः । अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण संधुक्षयन्तीव

---

१. वेदविदः ।

पुनरुज्जीवयन्तीव स्थिता वनदेवताभ्याम् सखीभूताभ्यामनुप्रयातानुगता स्थावरराजकन्या पार्वत्यदृश्यत दृष्टा ॥ ५२ ॥

चा०—निर्वाणेति । अथानन्तरमेतस्मिन्नेवावसरे वनदेवताभ्यां सखीभ्यामनुप्रयाताऽनुगता स्थावरराजकन्या पार्वती अदृश्यत दृष्टा । कीदृशी निर्वाणभूयिष्ठं शान्तप्रायं अस्यानङ्गस्य वीर्यं वपुर्गुणेन देहसौन्दर्येण सन्धुक्षयन्तीवोद्दीपयन्तीव ।५२।

टिप्पणी—वनदेवताद्वयानुगता पार्वती स्मरस्य नष्टप्रायं वीर्यं शरीरसौन्दर्येण पुनरुज्जीवयन्तीव स्मरेणादृश्यतेत्यर्थे वाच्योत्प्रेक्षाऽलङ्कारः ॥ ५२ ॥

तामेवाह चतुर्भिः—

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं[1] वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥

मल्लि०—अशोकेति । अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत्तथोक्तम् । आकृष्टहेमद्युतीन्याहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम् । मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् । 'सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि' इत्यमरः । वसन्तपुष्पाण्येवाभरणं वहन्ती ॥ ५३ ॥

चतुर्भिः कुलकम्—

चा०—अशोकेति । कीदृशी पार्वती । वसन्तपुष्पाभरणं वहन्ती । वसन्तपुष्पाणामाभरणं वहन्ती दधाना । कीदृशं वन्तपुष्पाभरणं अशोकपुष्पैर्निर्जितो निर्भर्त्सितः पद्मरागमणिर्यत्र तत् । पुनः कीदृशं । आकृष्टा हेम्नो द्युतिर्येन तत् । तादृशं कर्णिकारं पुष्पं यत्र तत् । पुनः कीदृशं । मुक्ताकलापीकृतसिन्दुवारं पुष्पं यत्र तत् ॥ ५३ ॥

टिप्पणी--अत्र विशेषणानां साभिप्रायत्वात्परिकरालङ्कारः स्वभावोक्तिर्वा ।५३।

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
[2]पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५४ ॥

मल्लि०—आवर्जितेति । स्तनाभ्यां किंचिदावर्जिते वेषदानमितेव तरुणार्कस्य राग इव रागो यस्य तत् । बालार्कारुणमित्यर्थः । उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । वासो वसानाच्छादयन्ती । अत एव पर्याप्तपुष्पस्तबकावनम्रा पल्लविनी किसलयवती संचारिणी लतेव । स्थितेति शेषः ॥ ५४ ॥

चा०—आवर्जितेति । पुनः कीदृशी । किंचिदिव स्तनाभ्यां आवर्जिता नम्रा । पुनः कीदृशी । तरुणार्करागं तरुणार्को निवेदितो यो रविस्तस्येव रागोऽरुणिमा यस्य

---

१. सिन्दुवारम्, २. सुजातपु.

तद्वासो वसनं वसाना परिदधाना । तत्रोत्प्रेक्षते । सा केव सुजातपुष्पस्तवकावनम्रा सुजाताभ्यां सुन्दराभ्यां पुष्पस्तवकाभ्यां गुच्छाभ्यामवनम्रा पल्लविनी पल्लवयुक्ता संचारिणी जङ्गमा लतेव ॥ ५४ ॥

टिप्पणी—अत्र किञ्चिदिव लतेवेत्युत्प्रेक्षार्थकसद्भावे तरुणार्कस्य राग इव रागो यस्येत्यर्थे च उत्प्रेक्षालुप्तोपमयोः संसृष्टिः ॥ ५४ ॥

**स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसर[1]दामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण मौर्वी[2] द्वितीयामिव कार्मुकस्य ॥ ५५ ॥**

मल्लि०—स्रस्तामिति । स्थानविदा निक्षेपयोग्यस्थानवेदिना स्मरेण न्यासीकृतां निक्षेपीकृताम् । कर्मणि प्रभवतीति कार्मुकं धनुः । 'कर्मण उकञ्' इत्युकञ्प्रत्ययः । तस्य द्वितीयां मौर्वीमिव स्थिताम् । अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनिर्यातनायापयुज्यत इति भावः । नितम्बात्स्रस्तां चलितां केसरदाम बकुलमाला सैव काञ्ची तां पुनःपुनरवलम्बमाना हस्तेन धारयन्ती ॥ ५५ ॥

चा०—स्रस्तेति । पुनः कीदृशी । नितम्बाच्छ्रोणितटात्स्रस्तां स्खलितां केसर-पुष्पकाञ्चीं बकुलपुष्पमेखलां पुनः पुनः वारंवारमवलम्बमाना यथास्थानमारोप-यन्ती । उत्प्रेक्षते । काञ्चीं कामिव । स्थानविदा स्थानविक्षेपस्थानं वेत्तीति तादृशेन स्मरेण न्यासीकृतां निक्षेपीकृतां कार्मुकस्य धनुषो द्वितीयां मौर्वीमिव ॥ ५५ ॥

टिप्पणी—स्थानाभिज्ञेन कामेन निक्षेपीकृतां चापस्याऽपरां मौर्वीमिव केसर-दामकाञ्चीमवलम्बमानेत्यर्थे वाच्योत्प्रेक्षाऽलङ्कारः ॥ ५५ ॥

**सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।**
**प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ५६ ॥**

मल्लि०—सुगन्धीति । सुगन्धिभिर्निश्वासैर्विवृद्धतृष्णम् । बिम्बतुल्योऽ-धरो बिम्बाधरः । 'वृत्तौ मध्यपदलोपः स्यात्' इति वामनः । तस्यासन्न-चरं संनिकृष्टचरं द्विरेफं भृङ्गं प्रतिक्षणं संभ्रमेण लोलदृष्टिश्चञ्चलाक्षी सती लीलारविन्देन निवारयन्ती ॥ ५६ ॥

चा०—सुगन्धीति । पुनः कीदृशी लीलारविन्देन क्रीडाकमलेन प्रतिक्षणं द्विरेफं निवारयन्ती । कीदृशं द्विरेफं सुगन्धिनिश्वासविवृद्धतृष्णं सुगन्धौ निश्वासे विवृद्धा तृष्णा यस्य तमत एव बिम्बाधरे आसन्नं निकटं चरति भ्रमतीति तादृशं । पुनः कीदृशी सा संभ्रमलोलदृष्टिः संभ्रमेण साध्वसेनेतस्ततो निरीक्षणवशाच्चञ्चला दृष्टिर्यस्याः सा । बिम्बसदृशोऽधरो बिम्बाधर इति मध्यमपदलोपी समासः ॥५६॥

---

१. पुष्पकाञ्चीम्, २. द्वितीयमौर्वीमिव,

टिप्पणी—बिम्बतुल्योऽधरो बिम्बाधारः इति मध्यपदलोपिसमासे मध्यपदस्य तुल्यसदृशवदिवाद्यन्यतमस्य लोपे लुप्तोपमाऽलङ्कारः ॥ ५६ ॥

तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि [1]पुष्पचापः [2]स्वकार्यसिद्धिं [3]पुनराशशंसे ॥ ५७ ॥

मल्लि०—तामिति । सर्वावयवेष्वनवद्यामगर्ह्याम् । 'अवद्यपण्य–' इति निपातः । रतेः कामकलत्रस्यापि ह्रीपदं लज्जानिमित्तमादधानाम् । न्यूनतामावहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामो जितेन्द्रिये । दुर्जयेऽपीत्यर्थः । शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनराशशंसे चकमे । पूर्वं 'साध्वससन्नहस्तः' (३.५१) इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥ ५७ ॥

चा०—तां वीक्ष्येति । पुष्पकेतुरनङ्गस्तामुमां वीक्ष्य जितेन्द्रिये शूलिनि शंभौ स्वकर्मसिद्धिं स्वस्य कर्मणो वशीकरणस्य सिद्धिं पुनराशशंस । कीदृशीं ताम् । सर्वावयवानवद्यां सर्वेष्ववयवेषु हस्तादिषु रम्याम् । पुनः कीदृशीं रतेरपि कामस्त्रिया अपि ह्रीपदं लज्जास्थानमादधानां कुर्वाणां आशशंसेति शंसु स्तुतावित्यस्य रूपम् । नत्वाङः शासु इच्छायामित्यात्मनेपदिनः ॥ ५७ ॥

टिप्पणी—स्वभावोक्तिः ॥ ५७ ॥

[4]भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।
योगात्स चान्तः[5] परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥

मल्लि०—भविष्यत इति । उमा च भविष्यतः पत्युः शंभोः प्रतिहारभूमिं द्वारदेशं समाससाद । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । स शंभुश्चान्तः परमात्मेति संज्ञा यस्य तत्परं मुख्यम् । 'परं दूरान्मुख्येषु' इति यादवः । ज्योतिर्दृष्ट्वा साक्षात्कृत्य योगाद्ध्यानात् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । उपारराम उपारतः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥ ५८ ॥

चा०—उपासितुमिति । सा गौरी पिनाकपाणिं हरमुपासितुं सेवितुं प्रतिहारभूमिं द्वारदेशं समाससाद गता । तदैव स च शंभुरन्तर्गतमात्मसंज्ञं परं ब्रह्म परमुत्कृष्टं ज्योतिर्दृष्ट्वा योगादुपारराम व्यरंसीत् । उपाररामेति "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । उभावपि चकारौ तुल्यकालसूचकौ ॥ ५८ ॥

टिप्पणी—स्वभावोक्तिः ॥ ५८ ॥

---

१. पुष्पकेतु, २. स्वकर्मसिद्धिम्, ३. आशशंस,
४. उपासितुं सा च पिनाकपाणिम्, ५. अन्तर्गतम्,

**ततो भुजंगाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।**
**शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥ ५९ ॥**

मल्लि०—तत इति । ततो भुजंगाधिपतेः शेषस्य फणाग्रैरधो भूमेरधः कथंचिदतियत्नेन धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः । वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनः संचारो येन स कृतप्राणविमुक्तिरीशो निबिडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥ ५९ ॥

चा०—तत इति । ततो ज्योतिर्दर्शनानन्तरमीशो निबिडं दृढं पर्यङ्कबन्धमासनविशेषं बिभेद तत्याज । कीदृशः । भुजङ्गाधिपतेः शेषस्य फणाभिरधः अधोविभागे कथंचित्कृच्छ्रेण धृतो भूमिभागः प्रदेशो यत्र सः । कीदृश ईशः । शनैः कृतप्राणविमुक्तिः कृता प्राणानां वायूनां विमुक्तिर्निरोधत्यागो येन सः ॥ ५९ ॥

टिप्पणी—स्वभावोक्तिः ॥ ५९ ॥

**तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम्[1] ॥ ६० ॥**

मल्लि०—तस्मा इति । अथ नन्दी तस्मै भगवते । क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेनोपेताम् । सर्वार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनो भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशामेनां शैलसुतां प्रवेशयामास च । ६० ।

चा०—तस्मा इति । नन्दी प्रतीहारस्तस्मै हराय प्रणिपत्य शुश्रूषया सेवयोपेतां शैलसुतां शशंसाकथयत् । एनां भर्तुः शंभोः भ्रूक्षेपमात्रानुमितप्रवेशां भ्रूक्षेपमात्रेणानुज्ञातः प्रवेशो यस्याः सा तां प्रवेशयामास च ॥ ६० ॥

टिप्पणी—एकस्य नन्दिरूपकर्तुः प्रणिपातप्रवेशक्रिययोरन्वयाद्दीपकालङ्कारः ॥ ६० ॥

**तस्याः सखीभ्यां प्रणिपातपूर्वं स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥**

मल्लि०—तस्या इति । तस्याः पार्वत्याः सखीभ्यां पूर्वोक्ताभ्यां स्वहस्तेन लून उपचितः पल्लवभङ्गभिन्नः किसलयशकलमिश्रः शिशिरात्ययस्य वसन्तस्य सम्बन्धी पुष्पोच्चयः पुष्पप्रकारः । 'हस्तादाने चेरस्तेये' इति घञ्विषयत्वात्कवीनामयं प्रामादिकः प्रयोग इति वल्लभः । त्र्यम्बकपादमूले प्रणिपातपूर्वं नमस्कारपूर्वकं व्यकीर्यत विक्षिप्तः ॥ ६१ ॥

चा०—तस्या इति । तस्याः पार्वत्याः सखीभ्यां वनदेवताभ्यां प्रणिपातपूर्वं

---

१. अनुमित,

शंभुं प्रणिपत्य त्र्यम्बकपादमूले शंभोश्चरणमूले स्वहस्तलूनः शिशिरात्ययस्य वसन्तस्य पुष्पोच्चयः पुष्पराशिर्व्यकीर्यत विक्षिप्तः। कीदृशः पुष्पोच्चयः पल्लवभङ्गभिन्नः पल्लवभङ्गैः खण्डैर्मिश्रितः। स्वहस्तभूत इति पाठे भूतशब्द इवार्थे इति कैयटका व्याचक्षते। यथा मातृभूतः पितृभूत इति ॥ ६१ ॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ ६१ ॥

**उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम्।**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥**

मल्लि०—उमेति। उमापि नीलालकानां मध्ये शोभत इति तथोक्तम्। अलकन्यस्तमित्यर्थः। नवकर्णिकारं विस्रंसयन्ती कर्णाच्च्युतः पल्लवो यस्य तेन मूर्ध्ना वृषभध्वजाय प्रणामं चकार। क्रियाग्रहणात्संप्रदानत्वम् ॥ ६२ ॥

चा०—उमेति। उमापि मूर्ध्ना शिरसा वृषभध्वजाय हराय प्रणामं चकार। कीदृशी नवकर्णिकारं पुष्पं प्रणामवशाच्चालयन्ती विस्रंसयन्ती। कीदृशं पुष्पं नीलालकमध्यशोभि श्यामलानामलकानां मध्ये शोभत इति। कीदृशेन मूर्ध्ना कर्णाच्च्युतपल्लवो यत्र तादृशेन ॥ ६२ ॥

टिप्पणी—एकस्य पार्वतीरूपकर्तृकारकस्य विस्रंसनप्रणतिक्रिययोरन्वयेन दीपकालङ्कारः ॥ ६२ ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन।**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥**

मल्लि०—अनन्येति। सा कृतप्रणामा देवी भवेन हरेण। अन्यां न भजतीति तमनन्यभाजम् 'भजो ण्विः' इति ण्विप्रत्ययः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। पतिमाप्नुहीति तथ्यं सत्यमेवाभिहितोक्ता उत्तरत्र तथैव संभवादिति भावः। अभिदधातेर्ब्रूवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः। तथाहि। ईश्वरव्याहृतयो महापुरुषोक्तयः कदाचिदपि लोके भुवने। 'लोकस्तु भुवने जने' इत्यमरः। विपरीतं विसंवादिनमर्थमभिधेयं न पुष्णन्ति। न बोधयन्तीत्यर्थः ॥ ६३ ॥

चा०—अनन्येति। भवेनेशेन सोमा तथ्यमेव सत्यमेवेत्यभिहिता कथिता इतीति किं अनन्यभाजं न अन्यां स्त्रियं भजत इति अनन्यभाक् तं पतिं वल्लभमाप्नुहीति कथं सत्यमित्याह। ईश्वरव्याहृतयः सर्वज्ञा वाचः कदाचित्परिपाके फलसमये विपरीतमर्थमयथार्थं न पुष्णन्ति किं तु यथार्थमेवेत्यर्थः ॥ ६३ ॥

टिप्पणी—अत्र पूर्वार्द्धोपात्तविशेषार्थस्योत्तरार्द्धगतसामान्यार्थेन समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ॥ ६३ ॥

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ६४ ॥**

मल्लि०--काम इति । कामस्तु बाणावसरं प्रतीक्ष्योमासंनिधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं पतङ्गवच्छलभवत् । 'समौ पतङ्गशलभौ' इत्यमरः । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । वह्निमुखं विविक्षुः प्रवेष्टुमिच्छुः । विशतेः सन्नन्तादुप्रत्ययः । उमायाः समक्षमक्ष्णः समीपमुमासमक्षम् । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तोऽच्प्रत्ययः । हरे बद्धलक्ष्यः सन् । शरासनस्य ज्यां मौर्वीं मुहुराममर्श परामृष्टवान् ॥ ६४ ॥

चा०—काम इति । कामस्तु मदनो बाणावसरं बाणक्षेपस्य समयं प्रतीक्ष्य मुहुर्वारंवारं शरासनज्यां धनुर्मौर्वीमाममर्श उपपस्पर्श । कीदृशः कामः । उमासमक्षं उमायाः प्रत्यक्षे हर एव बद्धं लक्ष्यं येन सः । पुनः । किंभूतः पतङ्गवच्छलभवद्वह्निमुखमग्नेर्मुखं प्रवेष्टुमिच्छुः ॥ ६४ ॥

टिप्पणी—पतङ्गवदित्यत्र तुल्यार्थवतेः सत्त्वादुपमालंकारः । एकस्य कामस्य कर्तुः प्रतीक्षणाऽऽमर्शक्रियाद्वयेऽन्वयाद्दीपकश्चेत्युभयोः संसृष्टिः ॥ ६४ ॥

**अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥**

मल्लि०—अथेति । अथ गौरी । तपोऽस्यास्तीति तपस्वी । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । तस्मै तपस्विने गिरिशाय ताम्ररुचा रक्तवर्णेन करेण भानुमतोंऽशुमतो मयूखैर्विशोषितां मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकामुपनिन्ये समर्पितवती ॥६५॥

चा०—अथेति । अथानन्तरं गौरी गिरीशाय ताम्ररुचा अरुणकान्तिना करेण भानुमतः सूर्यस्य मयूखैः किरणैर्विशोषितां मन्दाकिनीपुष्करबीजमालां गङ्गापद्माक्षमालामुपनिन्ये अढौकयत् । कीदृशाय तपस्विने यतात्मने ॥ ६५ ॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ ६५ ॥

**प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।**
**संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥**

मल्लि०--प्रतिग्रहीतुमिति । त्रिलोचनश्च प्रणयिप्रियत्वादर्थिप्रियत्वात्तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे । पुष्पे धनुर्यस्य स पुष्पधन्वा कामश्च । 'वा संज्ञायाम्' इत्यनङादेशः संमोह्यतेनेनेति संमोहनं नाम । नामेति प्रसिद्धौ अमोघं बाणं सायकं धनुषि समधत्त संहितवान् ॥ ६६ ॥

चा०—प्रतीति । त्रिलोचनः प्रणयिप्रियत्वात् प्रणयिनां भक्तानां प्रियस्तस्य भावस्तत्वं तस्माद्भक्तवत्सलत्वात्तामक्षमालां प्रतिग्रहीतुं स्वीकर्तुमुपचक्रमे उद्युक्तो-

भूत् । पुष्पधन्वा च कामः संमोहनं नामामोघं सफलं बाणं धनुषि समधत्त समयोजयत् । चकारौ तुल्यकालद्योतकौ ॥ ६६ ॥

टिप्पणी— अत्रापि स्वभावोक्तिः ॥ ६६ ॥

हरस्तु [1]किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ ६७ ॥

मल्लि०—हर इति । हरस्तु हरोऽपि चन्द्रोदयारम्भेऽम्बुराशिरिव किंचिदीषत्परिलुप्तधैर्यः न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । बिम्बफलतुल्योऽधरोष्ठो यस्य तस्मिन्नुमामुखे विलोचनानि व्यापारयामास । त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥ ६७ ॥

चा०—हरेति । हरस्तूमामुखे पार्वतीमुखे विलोचनानि व्यापारयामास प्रेरितवान् । कीदृशः किंचित्परिवृत्तधैर्यः संमोहनशरसंधानवशाद्गलितधैर्यः । कीदृश उमामुखे बिम्बफलाधरोष्ठे बिम्बफलवदधरोष्ठे यस्य तस्मिन् । क इव चन्द्रोदयारम्भे चन्द्रोदयोपक्रमेऽम्बुराशिरिव यथा चन्द्रोदयमासाद्य समुद्रः किंचिद्गांभीर्यमुत्सृज्य क्षणमुद्वेलो भवति न मर्यादामतिवर्तते । महाशयत्वात् । तथायमप्यतिवशित्वादित्यर्थः ॥ ६७ ॥

टिप्पणी—अत्रोपमालंकारः ॥ ६७ ॥

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥ ६८ ॥

मल्लि०—विवृण्वतीति । शैलसुतापि स्फुरद्बालकल्पैर्विकसरकोमलनीपसदृशैः । पुलकितैरित्यर्थः । 'ईषदसमाप्तौ—' इत्यादिना कल्पप्प्रत्ययः । 'अङ्गैर्भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्यस्तविलोचनेन व्रीडाविभ्रान्तनेत्रेण मुखेनासाचि साचि संपद्यमाना साचीकृता तिर्यक्कृता । 'तिर्यगर्थे साचि तिरः' इत्यमरः । तस्थौ । ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्या अप्युदितो रतिभाव इति भावः ॥ ६८ ॥

चा०—विवृण्वतीति । शैलसुतापि शंभोः सानुरागदर्शनोत्पन्नरोमाञ्चवशाद्बालकदम्बकल्पैरवयवैर्भावं साधिकाख्यं विवृण्वतीं प्रकटयन्ती मुखेन साचीकृता तिर्यग्भूता तस्थौ । कीदृशेन मुखेन चारुतरेण । पुनः कीदृशेन पर्यस्तविलोचनेन पर्यस्ते अधः पतिते विलोचने यस्य तेन ॥ ६८ ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतो विकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥ ६९ ॥

---

१. परिवृत्त.

मल्लि०—अथेति। अयायुग्मानि नेत्राणि यस्य सोऽयुग्मनेत्रस्त्रिनेत्रो वशित्वाज्जितेन्द्रियत्वादिन्द्रियक्षोभं पूर्वोक्तमिन्द्रियविकारं पुनर्बलवद्दृढं निगृह्य निवार्य स्वचेतोविकृतेः स्वचित्तविकारस्य हेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुर्दिशामुपान्तेषु दृष्टिं ससर्ज प्रसारयामास॥ ६९॥

चा०—अथेति। अथानन्तरमयुग्मनेत्रः शंभुः वशित्वाज्जितेन्द्रियत्वादिन्द्रियक्षोभं पार्वत्यभिलाषरूपं विकारं बलवदत्यर्थं निगृह्य निराकृत्य दिशामुपान्तेषु दृक्प्रदेशेषु दृष्टिं नेत्रं ससर्ज प्रेरयामास। कीदृशः स्वचेतो विकृतेर्विकारहेतुं कारणं दिदृक्षुर्द्रष्टुमिच्छुः॥ ६९॥

टिप्पणी—अत्र स्वभावोक्तिः॥ ६९॥

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम्॥ ७०॥

मल्लि०—स इति। स भगवान्दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं नतांसमाकुञ्चितः सव्यपादो यस्य तम्। आलीढाख्यस्थानके स्थितमित्यर्थः। चक्रीकृतचारुचापं मण्डलीकृतसौम्यकोदण्डं प्रहर्तुमभ्युद्यतमात्मयोनिं मनोभवं ददर्श। आलीढलक्षणमाह यादवः—'स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृति॥ समानौ स्यात्समपदमालीढं पदमग्रतः। दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्ययः'॥ ७०॥

चा०—स दक्षिणेति। स ईदृशो ईशो आत्मयोनिं कन्दर्पं ददर्शाद्राक्षीत्। किंभूतमात्मयोनिं दक्षिणापाङ्गनिविष्टमुष्टिं दक्षिणनेत्रप्रान्ते निविष्टा स्थिता मुष्टिर्यस्य तम्। पुनः कीदृशं। चक्रीकृतश्चक्राकारीकृतश्चारुचापो येन तम्। पुनः कथंभूतं आकुञ्चितसव्यपादं। ईषत्कुञ्चितो नामितः सव्यो वामः पादो येन तम्। पुनः कथंभूतं नतांसं नतिस्कन्धं। प्रहर्तुमभ्युद्यतं प्रहाराय कृतोद्यमम्॥ ७०॥

टिप्पणी—अत्र स्वभावोक्तिः॥ ७०॥

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात॥ ७१॥

मल्लि०—तप इति। तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तस्य हरस्य तृतीयादक्ष्णः स्फुरन्नुद्दीप्यमान उदर्चिरुद्भूतज्वालः कृशानुरग्निः सहसातर्कितमेव। 'अतर्किते तु सहसा' इत्यमरः। निष्पपात किल निरुवक्राम खलु॥ ७१॥

चा०—तप इति। किलेत्यागमे। तस्य शम्भोस्तृतीयादक्ष्णो नेत्रात्सहसाकस्मा-

रकृशानुर्वह्निर्निष्पपात निर्गतवान् । कीदृशस्य तस्य तपःपरामर्शविवृद्धमन्योः तपः-परामर्शेन विवृद्धो मन्युः कोपो यस्य । पुनः कीदृशस्य भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य भ्रुवोर्भङ्गः कुटिलता तेन दुष्प्रेक्ष्यं द्रष्टुमशक्यं मुखं यस्य तस्य । कीदृशः कृशानुः स्फुरन्नुदर्चिः स्फुरन् जाज्वल्यमान उद्गतमर्चिः शिखा यस्य सः ॥ ७१ ॥

टिप्पणी—स्वभावोक्तिः ॥ ७१ ॥

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।**
**तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ७२ ॥**

मल्लि०—क्रोधमिति । हे प्रभो स्वामिन्, क्रोधं संहर निवर्तय निवर्तय । 'चापले द्वे भवत इति वक्तव्यम्' इति वार्तिकेन द्वित्वम् । 'संभ्रमेण वृत्तिश्चापलम्' इति काशिका । इत्येवं मरुतां देवानां गिरो वाचः खे व्योम्नि यावच्चरन्ति प्रवर्तन्ते तावत्तत्कालमेव भवस्य नेत्राज्जन्म यस्य स भवनेत्रजन्मा । 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । स वह्निर्मदनं भस्मैवावशेषो यस्य तं भस्मावशेषं चकार । ददाहेत्यर्थः ॥ ७२ ॥

चा०—क्रोधमिति । यावत्ख आकाशे मरुतां देवानामिति गिरो वाण्यश्चरन्ति प्रसरन्ति । इतीति किम् । हे प्रभो स्वामिन् ! क्रोधं संहर । तावद्भवनेत्रजन्मा हरनेत्रोद्गतः स वह्निर्मदनं भस्मावशेषं यस्य तादृशं चकार ॥ ७२ ॥

टिप्पणी—स्वभावोक्तिः ॥ ७२ ॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥**

मल्लि०—तीव्रेति । तीव्राभिषङ्गप्रभवेणातिदुःसहाभिभवसंभवेन । 'अभिषङ्गस्त्वभिभवे सङ्गे आक्रोशनेऽपि च' इति वैजयन्ती । इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया कर्त्रा । रतिर्मदनभार्या मुहूर्तमज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती कृतोपकारेव बभूव । सहसा दुःखोपनिपातान्मुमूर्च्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारत्वोक्तिः ॥ ७३ ॥

चा०—तीव्रेति । मुहूर्तं रतिः कामपत्नी तीव्राभिषङ्गप्रभवेण तीव्रो दुःसहो योऽभिषङ्गो दुःखं तस्मात्प्रभव उत्पत्तिर्यस्य तेन मोहेन मूर्च्छया अज्ञातभर्तृव्यसना अज्ञातं भर्तुः कामस्य व्यसनं मरणं यया साऽतएव कृतोपकारेव बभूव । कीदृशेन मोहेन इन्द्रियाणां चक्षुरादीनां वृत्तिं व्यापारं संस्तम्भयता प्रतिबध्नयता ॥ ७३ ॥

टिप्पणी—अत्रोत्प्रेक्षालंकारः ॥ ७३ ॥

तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसंनिकर्षं [1]परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

मल्लि०—तमिति । तपस्वी तपोनिष्ठो भूतपतिः शिवस्तपसो विघ्नमन्तरायभूतं तं काममाशु वज्रोऽशनिर्वनस्पतिं वृक्षमिवावभज्य भङ्क्त्वा स्त्रीसंनिकर्षं स्त्रीसंनिधानं परिहर्तुमिच्छन् । तस्यानर्थहेतुत्वादिति भावः । सभूतः सगणः सन्नन्तर्दधे ॥ ७४ ॥

चा०—तमिति । तपस्वी जितेन्द्रियः सभूतः सगणो भूतपतिरन्तर्दधेऽदृष्टोऽभूत् । किं कृत्वा । तपसो विघ्नभूतं तं काममाशु शीघ्रमवभज्य विनाश्य । किं कामिव । वज्रं वनस्पतिमिव तरुमिव । कीदृशो भूतपतिः स्त्रीसन्निकर्षं नैकट्यं परिहर्तुकामस्त्यक्तुमिच्छन् ॥ ७४ ॥

टिप्पणी—अत्रोपमालंकारः ॥ ७४ ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥

मल्लि०—शैलात्मजा पार्वत्यप्युच्छिरस उन्नतशिरसो महतः पितुरभिलाषं हरो वरोऽस्त्विति मनोरथं ललितं सुन्दरमात्मनो वपुश्च व्यर्थं निष्फलं समर्थ्य विचार्य सख्योः समक्षं पुर इति च हेतुनाधिकं जातलज्जा । समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः । शून्या निरुत्साहा सती कथंचित्कृच्छ्रेण भवनस्याभिमुखी जगाम ॥ ७५ ॥

चा०—शैलेति । शैलात्मजापि पार्वत्यपि उच्छिरस उन्नतस्कन्धस्य पितुर्जनकस्य शंभवे दास्यामीत्यभिलाषं मनोरथं व्यर्थं समर्थ्य ज्ञात्वा च पुनरात्मनः स्वस्य ललितं सुन्दरं वपुः शरीरं समर्थ्य शून्याशून्यचित्ता सती भवनाभिमुखी स्वगृहाभिमुखं जगाम ययौ । कीदृशी सख्योर्जयाविजययोः समक्षं प्रत्यक्षमभूदिति हेतोरधिका जाता लज्जा यस्यां सा ॥ ७५ ॥

टिप्पणी—पितुरात्मनश्चाभिलाषललितशरीरवैयर्थ्यविगमस्याधिकलज्जायाश्च हेत्वोः पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गम् ॥ ७५ ॥

[2]सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः[3] ॥ ७६ ॥

---

१. परिहर्तुकामः सोऽन्तर्दधे. २. अथ स, ३. दीर्घीकृतात्मा,

मल्लि०—सपदीति । सपद्यद्रिर्हिमवान्रुद्रस्य संरम्भात्कोपाद्भीत्या । 'संरम्भः संभ्रमे कोपे' इति विश्वः । मुकुलिताक्षीं निमीलितनेत्राम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । 'षिद्गौरादिभ्यश्च' इति ङीष् । अनुकम्पितुमर्हामनुकम्प्याम् । 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीं नलिनीं बिभ्रत्सुरगज इव वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन् । पन्थानं प्रतिगता मार्गानुसारिणी स गतिर्यस्य प्रतिपथगतिरासीत् । पन्थानमनुसृत्य जगामेत्यर्थः ॥ ७६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्याया समेतः श्रीकालिदास-
कृतौ कुमारसंभवे महाकाव्ये मदनदहनो
नाम तृतीयः सर्गः ।

चा०—अथेति । अथानन्तरं सोऽद्रिर्हिमवान् रुद्रसंरम्भभीत्या रुद्रस्य शंम्भोः संरम्भो रोषस्तद्भवेन मुकुलिताक्षीं निमीलितनेत्रामनुकम्प्यां दयायोग्यां दुहितरं पुत्रीं दोर्भ्यां भुजाभ्यामादाय गृहीत्वा प्रतिपथगतिः प्रतिपथं गतिर्यस्य स आसीत् बभूव । क इव । दन्तलग्नां पद्मिनीं कमलिनीं बिभ्रद्दधानः सुरगज इव ऐरावण इव । कीदृशः सः । वेगदीर्घीकृतात्मा वेगेन दीर्घीकृतः प्रसारित आत्मा देहो येन सः । प्रतिपथेति 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तः ॥ ७६ ॥

टिप्पणी—दन्तलग्नां पद्मिनीं बिभ्रत् सुरगज इवाद्रिरित्युपमानोपमेयभावादुपमाऽलङ्कारः ॥ ७६ ॥

इति श्रीमालान्वयसाधु श्रीसालिगनन्दनसाधु श्रीअरडकमल्लसमभ्यर्थित
नरवेषसरस्वती वाचनाचार्यश्रीचारित्रवर्धनविरचितायां कुमार-
तात्पर्यदीपिकायां तृतीयः सर्गः ॥ ३ ॥

—: ० :—

## चतुर्थः सर्गः

मूर्च्छिता रतिरित्युक्तम् । संप्रति तद्वृत्तान्तमेवाह—

**अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।**
**विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥**

मल्लि०—अथेति । अथानन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा मोहपरायणा मोहैकशरणा सती । 'परायणमभिप्रेते तत्परे परमाश्रये' इति यादवः । विवशा मूढत्वान्निश्चेष्टा कामवधू रतिः । असह्या दुःसहा वेदना यस्मिंस्तत्तथोक्तम् । विधवाया गतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति नववैधव्यम् । नवग्रहणं दुःसहत्वद्योतनार्थम् । प्रतिपादयिष्यतानुभावयिष्यता । क्रियार्थक्रियायां लृट् । 'विधिना दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः । विबोधिता । वैधव्यानुफलोयं विधिरिति भावः । अस्मिन्सर्गे वियोगिनीवृत्तानि—'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी' इति लक्षणात् ॥ १ ॥

चा०—अथेति । अथानन्तरं विधिना दैवेन मोहपरायणा मूर्च्छाविष्टाऽत एव विवशा विह्वला सती कामवधू रतिः प्रबोधिता । कीदृशेन विधिना असह्यवेदनमतिदुःसहनववैधव्यमभर्तृकत्वं प्रतिबोधयिष्यता ज्ञापयितुम् । प्रतिबोधयिष्यतेति लृङ्विध तुमर्थे लृट् ॥ १ ॥

टिप्पणी—मदनदहनानन्तरं मूर्च्छैकशरणाया निश्चेष्टाया रतेरसह्यदुःखं नववैधव्यमनुभावयिष्यन् विधिश्चैतन्यं सम्पादितवानित्यर्थः । विधिकर्तृके रतिचैतन्यसम्पादने नववैधव्यानुभावलक्षणहेतोर्विशेषणविधयोक्त्या पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १ ॥

**अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।**
**न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्त[1]दर्शनम् ॥ २ ॥**

मल्लि०—अथेति । सा रतिः प्रलयान्ते मूर्च्छावसाने । 'प्रलयो नष्टचेष्टता' इत्यमरः । उन्मिषिते उन्मीलिते विलोचने । अवधानं परं प्रधानं ययोस्तेऽवधानपरे दिदृक्षयावहिते चकार । द्रष्टव्याभावात्तु न विवेदेत्याह—नेति । प्रियं काममतृप्तयोस्तृप्तिं न गतयोः । नित्यदिदृक्षमाणयोरित्यर्थः । तयोर्लोचनयोः । दर्शनक्रियापेक्षया संबन्धे षष्ठी । अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्मभूतस्य तमत्यन्तविलुप्तदर्शनं सन्तं न विवेद न ज्ञातवती । प्रियनाशापरिज्ञानाद्दिदृक्षांचक्र इति तात्पर्यार्थः ॥ २ ॥

---

1. निमग्न,

चा०—अवधानेति । सा रतिः प्रलयान्तोन्मिषिते प्रलयो नष्टचेष्टता तस्यान्ते नाशे उन्मिषिते विकसिते विलोचने अवधानपरे एकाग्रे चकार कृतवती । अतृप्तयोः प्रियदर्शनं सदालसतां प्राप्तयोस्तयोर्नेत्रयोः प्रियं काममत्यन्तनिमग्नदर्शनं अत्यंत-निमग्नं नष्टं दर्शनं यस्येति तादृशं न विवेद न ज्ञातवती । तन्नाशस्यासम्भाव्य-त्वात् । तयोरिति सम्बन्धे षष्ठी ॥ २ ॥

टिप्पणी—एकस्या एव रतेः कर्म्याश्चकारविवेदेत्युभयक्रियान्वयाद्दीपका-लङ्कारः ॥ २ ॥

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥

मल्लि०—अयीति । अयीति प्रश्ने । 'अयि प्रश्नानुनययोः, इति विश्वः । अयि जीवितनाथ, जीवसि कच्चिदित्यभिधायोत्थितया तया रत्या पुरोऽग्रे क्षितौ पुरुषस्याकृतिरिवाकृतिर्यस्य तत्पुरुषाकृति केवलमेकं हरकोपानलभस्म ददृशे दृष्टम् । न तु पुरुष इति भावः ॥ ३ ॥

चा०—अयीति । तयोरन्या पुरोग्रे पुरुषाकृति पुरुषस्येवाकृतिराकारोस्य तद्धर-कोपानलभस्म हरस्य कोपाग्नेर्भस्म केवलं ददृशे दृष्टं नतु कान्त इति शेषः । किंभूतया तया । अयीति कोमलामन्त्रणे भो जीवितनाथ प्राणनाथ जीवसीत्यभि-धायोक्त्वोत्थितया ॥ ३ ॥

टिप्पणी—उत्तरार्द्धे पुरुषाकृतिरिवाकृतिर्यस्येत्यर्थे लुप्तोपमालङ्कारः । हरकोपेऽ-नलत्वसमारोपणाद्रूपकालंकारश्चेति द्वयोः संसृष्टिः ॥ ३ ॥

अथ सा पुनरेव विह्वला वसुधालिङ्गन[1]धूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

मल्लि०—अथेति । अथ भस्मदर्शनानन्तरं पुनरेव विह्वला विक्लवा वसुधालिङ्गनधूसरस्तनी वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । विकीर्णमूर्धजा विकीर्णा विक्षिप्ता मूर्धजाः केशा यस्याः सा तथोक्ता सा रतिः स्थलीं वनभूमिम् । तत्रत्यान्प्राणिन इत्यर्थः । 'जानपदकुण्डगोण-स्थल–' इत्यादिना ङीष् । समदुःखां स्वतुल्यशोकां कुर्वतीव विललाप परिदेवितवती । 'विलापः परिदेवनम्' इत्यमरः ॥ ४ ॥

चा०—अथेति । अथानन्तरं सा रतिः पुनरेव विललाप । कीदृशी वसुधा-लिङ्गनधूसरस्तनी वसुधालिङ्गनेन भूमिलुण्ठनेन धूसरौ मलिनौ स्तनौ यस्याः सा ।

---

१. धूसराकृतिः.

विकीर्णमूर्धजा प्रसृतकेशविह्वला व्याकुला। पुनः कीदृशी स्थलीं समदुःखमिव कुर्वती कुर्वाणा ॥ ४ ॥

टिप्पणी—स्थलीं समदुःखां कुर्वतीव विललापेत्यर्थे स्थल्याः स्वतुल्यशोकत्वोत्प्रेक्षणादत्र वाच्योत्प्रेक्षाऽलंकारः ॥ ४ ॥

उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया।
तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

मल्लि०—उपेति। तव यत्करणं गात्रम्। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि' इत्यमरः। कान्तिमत्तया सौन्दर्येण हेतुना विलसनशीलानाम्। 'वौ कषलस–' इत्यादिना घिनुण्प्रत्ययः। उपमीयते येन तदुपमानमभूत्। तत्करणमिदमीदृशी दशामवस्थां गतम्। भस्मीभूतमित्यर्थः। तथापि न विदीर्ये न विदीर्णा भवामि। कर्तरि लट्। तथाहि। स्त्रियः कठिनाः खलु। कठिनत्वादविदीर्यमाणत्वमित्यर्थः। कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः। 'धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता। स्मितपूर्वं तथालापो विलास इति कीर्तितः ॥' इति ॥ ५ ॥

चा०—उपमानेति। भो प्रियतम! तव करणं गात्रं कान्तिमत्तया रम्यतया कामिनां यूनां कामतुल्योऽयमित्युपमानमभूत्। तदिदं गात्रमीदृशीं भस्मरूपामवस्थां दशां गतं प्राप्तं। अहं तु न विदीर्णा भवामि। कर्मकर्तरि रूपं। खलु यतः स्त्रियः कठिनाः। 'करणं साधकतमं क्षेत्रगात्रेन्द्रियाणि च' इति ॥ ५ ॥

टिप्पणी—स्त्रियः कठिनत्वाद्धेतोः स्त्री अहं न विदीर्णा भवामीत्यर्थे कठिनत्वहेतुना विदीर्णाभावरूपकार्यस्य समर्थनात्कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासाऽलंकारः ॥ ५ ॥

क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः।
नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥ ६ ॥

मल्लि०—क्वेति। हे प्रिय, क्षतसेतुबन्धनो भग्नसेतुबन्धो जलसंघातो जलौघो नलिनीमिव। जलैकायत्तजीवितामिति शेषः। त्वदधीनजीवितां त्वदायत्तप्राणां मां क्व नु विनिकीर्य कुत्र वा निक्षिप्य क्षणभिन्नसौहृदः क्षणत्यक्तसौहार्दः सन्। विद्रुतः पलायितोऽसि। सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम्। सुहृदो भावः सौहृदम्। युवादित्वादण्प्रत्ययः। 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः। 'अणि हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः। हृद्भूतस्याण्विधाने तूभयपदवृद्धिः स्यात्। यथा सुहृदो भावः सौहार्दमिति। तदेवाह वामनः–'सौहृददौर्हृदशब्दावनणि हृद्भावात्' इति ॥ ६ ॥

चा०—क्वान्विति। भो स्मर! त्वदधीनजीवितां त्वदायत्तप्राणां मां विनिकीर्य

त्यक्त्वा क्षणभिन्नसौहृदः क्षणमात्रेण भिन्नं विदीर्णं सौहृदं स्नेहो यस्य स क्व नु विद्रुतः पलायितोऽसि। कः कामिव। क्षतसेतुबन्धनः क्षतं स्फोटितं सेतुबन्धनं येन सः जलसङ्घातो जलपूरो नलिनीमिव ॥ ६ ॥

टिप्पणी—यथा जलौघः सेतुबन्धनं छित्वा जलाधीनप्राणां कमलिनीं विहाय क्वापि गच्छति तथा सौहार्दबन्धनं छित्वा भवद्गतजीवनां मां विहाय क्व गतोऽसीति भावार्थः। जलसंघातः कमलिनीमिव मामित्युपमानोपमेयभावादुपमाऽलंकारः ॥ ६ ॥

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥

मल्लि०—कृतेति। हे प्रिय, त्वं मे मम विप्रियमप्रियं कृतवान्नासि। मया च ते तव प्रतिकूलमप्रियं न कृतम्। अकारणं निष्कारणमेव। परस्परापकाररूपकारणाभावेऽपीत्यर्थः। क्रियाविशेषणमेतत्। विलपन्त्यै। त्वद्दर्शनार्थिन्या अपीति भावः। रतये किं कथं दर्शनं न दीयते। क्रियाग्रहणाच्चतुर्थी ॥ ७ ॥

चा०—कृतवानिति। भो प्रिय! त्वं मे विप्रियमनभिमतं न कृतवानसि। मया च ते प्रतिकूलं न कृतं अतो विलपन्त्यै रतये अकारणं कारणं विनैव दर्शनं किं न दीयते ॥ ७ ॥

टिप्पणी—दर्शनाप्रदानस्य परस्परविप्रियाचरणरूपकारणाभावेऽपि दर्शनाप्रदानरूपकार्योत्पत्तेर्विभावनाऽलङ्कारः। तदुक्तं दर्पणे—विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ॥ ७ ॥

विप्रियमाशङ्कते—

स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम्।
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा[1] ॥ ८ ॥

मल्लि०—स्मरसीति। हे स्मर, गोत्रस्खलितेषु नामव्यत्यासेषु। 'गोत्रं नाम्न्यचले कुले' इति विश्वः। मेखलागुणैर्बन्धनं स्मरस्युत स्मरसि वा। 'विकल्पे किं किमुत च' इत्यमरः। च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तान्यवतंसोत्पलताडनानि। सधूलिक्षेपताडनानीत्यर्थः। स्मरसि वा। अपकारस्मरणादिदमदर्शनमिति भावः ॥ ८ ॥

चा०—स्मरसीति। दर्शनादाने कारणमाशङ्कते। भो स्मर! गोत्रस्खलितेषु गोत्रं सपत्नीनाम तत्र स्खलितेषु मेखलागुणैः काञ्चीसूत्रैर्बन्धनम् स्मरसि। अथ च्युतकेशरदूषितेक्षणानि च्युतेन केशरेण किञ्जल्केन दूषिते व्याकुलिते नेत्रे यैस्तानि

1. ताडनानि च.

अवतंसोत्पलताडनानि च कर्णपूरोत्पलताडनानि स्मरसि । बन्धनताडनजनितरोष-बलाद्दर्शनं न ददासीति भावः ॥ ८ ॥

**हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।**
**उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥**

मल्लि०—हृदय इति । हृदये वससीति स्मरवाक्यानुवादः । इत्येवं रूपं मत्प्रियं यदवोच उक्तवानसि । 'ब्रुञो लुङि वच उम्' इत्युमागमः । तत्कैतवमवैमि मिथ्येति मन्ये । इदं वचनमुपचारपदं परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानम् । कैतवस्थानमिति यावत् । न चेत्त्वमनङ्गोऽशरीरः । कथं रतिरक्षताऽविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥ ९ ॥

चा०—हृदय इति । भो प्रिय ! मे हृदये त्वं वससीति यन्मे प्रियमवोचः अवादीः तत्कैतवं धूर्तत्वमवैमि जाने । कथमित्याह । इदं चेदुपचारपदं वाक्यं न भवति तर्हि त्वं कथमनङ्गो देहरहितः । रतिस्त्वक्षता आधारभूतस्य हृदयस्य नाशे आधेयभूताया ममापि नाशो युक्तस्तदभावात्तदुक्तमलीकमित्यर्थः ॥ ९ ॥

टिप्पणी—त्वमनङ्गः रतिरक्षतेति हेतोः हृदये वससीति त्वद्वचनं कैतवमवैमि मन्ये इत्यर्थे मन्ये शब्दस्योत्प्रेक्षासूचकत्वेन गम्योत्प्रेक्षाऽलङ्कारः । हृदये वससीति त्वद्वचसोऽसत्यत्वे अनङ्गः अक्षता रतिरिति पदार्थद्वयस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधाद्विरोधाभासालंकारश्चेत्यलंकारत्रयस्य साङ्कर्यम् ॥ ९ ॥

नच मे कश्चिद्विचारः किंतु लोकः शोच्यत इत्याह—

**परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।**
**विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥**

मल्लि०—परलोकेति । परलोकं प्रति नवप्रवासिनोऽचिरप्रोषितस्य । अनेनानुगमनकालानतिपातः सूच्यते । तव पदवीं मार्गं प्रतिपत्स्ये । त्वामनुगमिष्यामीत्यर्थः । अतो मे नास्ति विचार इति भावः । किंतु विधिना दैवेनैष जनो लोको वञ्चितः प्रतारितः । देहिनां सुखं त्वदधीनं त्वय्यधीनं खलु । अधिशब्दस्य शौण्डादिकत्वात् 'सप्तमी शौण्डैः' इति समासः । 'अध्युत्तरपदात्' इति खप्रत्ययः । एवमन्यत्रापि सुखप्रदाभावे कुतः सुखमिती भावः ॥ १० ॥

चा०—परेति । भो स्मर ! परलोकनवप्रवासिनो स्वर्गलोकाचिरयामिनोपि तव पदवीं मार्गमहं प्रतिपत्स्ये आश्रयिष्ये देहत्यागादिति शेषः । परं विधिना दैवेन जनो वञ्चितः खलु । यतो देहिनां नृणां सुखं त्वदधीनं त्वदायत्तम् ॥ १० ॥

तदेवाह—

रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥

मल्लि०—रजनीति । हे प्रिय, रजनीतिमिरेणावगुण्ठित आवृते पुरमार्गे घनशब्दविक्लवा गर्जितभीताः प्रियाः कामिनां वसतिं प्रापयितुं त्वदृते त्वां विना । 'अन्यारादितरर्ते—' इत्यादिना पञ्चमी । क ईश्वरः शक्तः । न कश्चिदित्यर्थः । न हि कामान्धानां भीतिरस्तीति भावः ॥११॥

चा०—रजनीति । भो प्रिय ! रजनीतिमिरावगुण्ठिते रात्रितमच्छन्ने पुरमार्गे घनशब्दविक्लवाः मेघशब्देन विह्वलाः कामिनीः कामिनां भर्तॄणां वसतिं प्रापयितुं नेतुं त्वदृते त्वां विना क ईश्वरः । अपि तु न कापि त्वयि सत्यभिसारिकास्तोमो मेघगर्जितं न गणयतीति भावः । त्वदृते इति आरादितरर्ते पञ्चमी । प्रापयितुमिति गत्युपसर्जनीभूतत्वाद्द्विकर्मकता ॥ ११ ॥

टिप्पणी—अन्धकारावृते राजपथे घनगर्जितभीताः प्रियाः कामिनांवसतिं प्रापयितुं त्वमन्तरा क ईश्वरो न कोपीत्यत्यार्थागमादर्थापत्तिरलंकारः ॥ ११ ॥

नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥ १२ ॥

मल्लि०—नयनानीति । अरुणानि नयनानि घूर्णयन्भ्रमयन् । तथा पदे पदे प्रतिपदम् । वीप्सायां द्विरुक्तिः । वचनानि स्खलयन्विपर्यासयन्प्रमदानां वारुणीमदो मद्यमदोऽधुना त्वय्यसति विडम्बनानुकृतिमात्रम् । मदनाभावे मदस्य निष्फलत्वादिति भावः । तथा च शिशुपालवधे—'तां मदो दयितसंगमभूषः' ( १० । ३३ ) इति ॥ १२ ॥

चा०—नयनानीति । भो अनङ्ग ! त्वयि असति अविद्यमाने प्रमदानां स्त्रीणां वारुणीमदो मदिराजनिताक्षविताऽधुना सांप्रतं विडम्बना प्रहासः । किं कुर्वन् अरुणानि नयनानि घूर्णयन् पुनः किंकुर्वन् पदे पदे वचनानि स्खलयन् कामशरमन्तरेण लज्जाकारीति भावः ॥ १२ ॥

अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्गमोक्ष्यति ॥ १३ ॥

मल्लि०—अवगम्येति । हे अनङ्ग अशरीर, प्रियबन्धोः प्रियसखस्य तव वपुः शरीरं कथीकृतमकथा कथा संपद्यमानं कृतं शब्दमात्रावशिष्टमवगम्य ज्ञात्वा निष्फलोदयः । उद्दीप्याभावादुद्दीपनवैकल्यमिति भावः । निशाकरश्चन्द्रो बहुले कृष्णपक्षे गतेऽपि तनुतां कार्श्यं दुःखं यथा तथा कृच्छ्रान्मोक्ष्यति । वृथा वृद्धिरिति दुःखयिष्यत इत्यर्थः ॥ १३ ॥

चा०—अवगम्येति । भो प्रिय ! प्रियबन्धोः प्रियमित्रस्य तव कथोक्तं कथामात्रशेषं वपुरवगम्य विज्ञाय बहुलेऽपि गते अतीते सति निशाकरश्चन्द्रस्तनुतां कृशतां दुःखं कष्टेन मोक्ष्यति त्यक्ष्यति । यतो निष्फलोदयः कामोपभोगराहित्यात् ॥ १३ ॥

**हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः ।**
**वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥ १४ ॥**

मल्लि०—हरितेति । हरितं चारुणां च । 'वर्णो वर्णेन' इति तत्पुरुषः । हरितारुणं चारु बन्धनं वृन्तं पुङ्खश्च यस्य स तथोक्तः । कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितोऽनुमापितश्च । चूतवर्णकार्यंत्वात्कलशब्दस्येति भावः । नवचूतप्रसवो नवचूतकुसुमं संप्रति कस्य बाणतां शरत्वं गमिष्यति वद । अन्यस्य पुष्पबाणस्याभावादिति भावः ॥ १४ ॥

चा०—हरितेति । भो अनङ्ग ! सम्प्रति नवचूतप्रसवो नूतनाम्रपुष्पं त्वदभावे कस्य बाणतां गमिष्यति वद ब्रूहि । कीदृशो हरितारुणचारुबन्धनः । हरितं नीलमीषदरुणं चारु रम्यं बन्धनं वृन्तं यस्य स तथा । तदास्वादनात्कलो मधुरो यः कोकिलशब्दस्तेन सूचितः ॥ १४ ॥

**अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।**
**विरुतैः करुणस्वनैरियं गुरुशोकामनुरोदतीव माम् ॥ १५ ॥**

मल्लि०—अलीति । त्वयानेकशो बहुशो धनुषः कार्मुकस्य गुणकृत्ये मौर्वीकार्ये गुणवत्कर्मणि च नियोजिताधिकृतेयमलिपङ्क्तिः करुणस्वनैर्दीनस्वनैर्विरुतैः कूजितैर्गुरुशोकां दुर्भरदुःखाम् । 'गुरुस्तु गोष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे' इति शब्दार्णवः । मामनुरोदितीव उपसर्गात्सकर्मकत्वम् । 'रुदादिभ्यः सार्वधातुके' इतीडागमः ॥ १५ ॥

चा०—अलीति । भो स्मर ! अनेकशो बहुवारं धनुषश्चापस्य गुणकृत्यै प्रत्यञ्चाकरणाय नियोजितैषा अलिपंक्तिर्भृङ्गश्रेणिः करुणस्वरैः षड्जादिस्वरैर्गुरुशोकामतिदुःखां मामनुरोदितीव शोचतीव स्त्रीजाते रोदनमुचितं 'गुणो मौर्व्यप्रधानयोः' इत्यमरः ॥ १५ ॥

टिप्पणी—अत्र वाच्योत्प्रेक्षाऽलङ्कारः ॥ १५ ॥

**प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।**
**रतिदूतिपदेषु कोकिलां मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥**

मल्लि०—प्रतिपद्येति । तावत्पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्योत्थितः सन् । मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु । सुरतदूतीस्थानेष्वादिशाज्ञापय । प्रगल्भानामेव

दौत्याधिकार इति भावः। ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद्ध्रस्वः। 'अपि माषं मषं कुर्याच्छन्दोभङ्गे त्यजेद्गिरम्' इति केचित्। 'उणादयो बहुलम्' इति बहुलग्रहणाद्ध्रस्व इति वल्लभः॥ १६॥

चा०—प्रतिपद्येति। पुनरपि मनोहरं रम्यं वपुः प्रतिपद्य प्राप्योत्थितस्त्वं तावदिति दूतिपदेषु रतिः सुरतं तदर्थं इतिपदानि तेषु कोकिलामादिशाज्ञापय। कीदृशी कोकिलां। मधुरालापनिसर्गपण्डितां मधुरालापे मधुरवाक्ये निसर्गपण्डितां स्वभावप्रवीणाम्॥ १६॥

टिप्पणी—एकस्य कामस्य कर्तुः प्राप्त्युत्थानादेशक्रियात्रयेऽन्वयाद्दीपकालंकारः॥ १६॥

**शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च।**
**सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे॥ १७॥**

मल्लि०—शिरसेति। हे स्मर, शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि। 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः। सात्त्विकान्तरोपलक्षणमेतत्। 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू। अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः॥' इति। उपगूढान्यालिङ्गनानि च। नपुंसके भावे क्तः। तान्यनुभूतप्रकाराणि रह एकान्ते सुरतानि च संस्मृत्य मे शान्तिर्नास्ति। अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षास्तीति केचित्॥ १७॥

चा०—शिरसेति। हे स्मर! तान्यनेकप्रकाराणि ते तव सुरतानि च रह एकान्ते संस्मृत्य स्मृत्वा शान्तिः शमनं निवृत्तिर्मे नास्ति कीदृशानि शिरसा प्रणिपत्य प्रणामपूर्वकं याचितानि सवेपथूनि सकम्पान्युपगूढानि च संस्मृत्येति शेषः॥ १७॥

टिप्पणी—रतेः शान्त्यभावे आलिङ्गनसुरतस्मरणस्य हेतोर्वाक्यार्थत्वेनोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः॥ १७॥

**रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम्।**
**ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते॥ १८॥**

मल्लि०—रचितमिति। हे रतिपण्डित रतिकुशल, त्वया ममाङ्गेष्ववयवेषु स्वयं रचितम् ऋतुरस्य प्राप्त आर्तवं वासन्तम्। 'ऋतोरण्' इत्यण्प्रत्ययः। कुसुमप्रसाधनं पुष्पाभरणमिदं ध्रियतेऽवतिष्ठते। धृञ् अवस्थाने' इति धातोस्तौदादिकात्कर्तरि लट्। तव तत्प्रसाधकं चारु सुन्दरं वपुस्तु न दृश्यते॥ १८॥

चा०—रचितमिति। भो रतिपण्डित! सुरतप्रवीण! त्वया स्वयमेव ममाङ्गेष्ववयवेषु रचितं ऋतोः सम्बन्ध्यार्तवं वासन्तमिदं कुसुमप्रसाधनं कुसुममेव प्रसाधनं भूषणं ध्रियते तिष्ठति। तव तद्वपुर्न दृश्यते॥ १८॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ १८ ॥

[1]विबुधैरसि यस्य दारुणैरसमाप्ते [2]परिकर्मणि स्मृतः ।
तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १९ ॥

मल्लि०—विबुधैरिति । दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैर्देवैः । अनभिज्ञत्वं च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसाधने । 'परिकर्म प्रसाधनम्' इत्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्मितरागं कुर्वेह्यागच्छ ॥ १९ ॥

चा०—विबुधैरिति । हे अनङ्ग ! त्वं तमिमं दक्षिणेतरं वामं चरणं निर्मितरागं विरचितालक्तकं कुरु । एह्यागच्छ । तमिति किं यस्य चरणस्य परिकर्मणि प्रसाधने असमाप्ते सति दारुणैर्निर्दयैर्देवैः स्मृतोसि ॥ १९ ॥

टिप्पणी—अत्र कामस्य कर्तुः कुरु एहीति क्रियाद्वयेऽन्वयाद्दीपकालंकारः ॥१९॥

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥

मल्लि०—अहमिति । अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः । 'पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे' इति वैजयन्ती । एत्यागत्य पुनस्तेऽङ्काश्रयण्युत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । हे प्रिय, दिवि स्वर्गे चतुरैः सुरकामिनीजनैरप्सरोगणैर्यावन्न विलोभ्यसे विलोभयिष्यसे । 'यावत्पुरानिपातयोर्लट्' इति लट् ॥ २० ॥

चा०—इयमिति । इयमहं पतङ्गवर्त्मना पतङ्गोऽग्निरेव वर्त्म तेनोपेत्यागत्य पुनस्ते अङ्काश्रयिणी भवामि उत्सङ्गस्थायिनी भवामि । भो प्रिय ! यावच्चतुरैः सुरकामिनीजनैर्दिवि स्वर्गे न विलोभ्यसे ॥ २० ॥

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥

मल्लि०—मदनेनेति । हे रमण, त्वामनुयामि यद्यप्यनुगमिष्याम्येव । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । किंतु रतिर्मदनेन विनाकृता । वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । क्षणमात्रं जीविता किलेतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥ २१ ॥

चा०—मदनेनेति । भो प्रिय ! मदनेन विना स्मररहिता अक्षता रतिः

---

१. विबुधैस्त्वमनङ्ग. २. प्रतिकर्मणि,

क्षणमात्रं किल जीविता। मे मम इदं वचनीयमपवादो व्यवस्थितमारब्धम्। भो रमण! यद्यपि त्वामग्निप्रवेशादनुयामि गच्छामि। तथापि भस्मीकृतमदनेन विना रतिः कथ जीवितेति लोकापवादः स्थित इत्यर्थः॥ २१॥

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च॥ २२॥

मल्लि०—क्रियतामिति। परलोकेऽन्तरितस्य व्यवहितस्य। मृतस्येत्यर्थः। ते तव मयान्त्यमण्डनं कथं केन प्रकारेण क्रियताम्। क्रियतामित्यत्र कामचारे लोट् बोध्यः। द्रुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः। कुतः। अङ्गेन च जीवितेन च समं सहैवातर्कितामविचारितां गतिं गतोऽसि। इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः॥ २२॥

चा०—क्रियतामिति। परलोकान्तरितस्य व्यवहितस्य ते मया अन्त्यमण्डनं प्रान्तसंस्कारभूषणं कथं क्रियताम्। परिप्रश्ने लोट्। कथं क्रियतामित्यत आह। यत्कारणात् अङ्गेन गात्रेण च जीवितेन च सममेव युगपदेव अतर्कितां गतिं मरणदशां गतोसि प्राप्तोसि अन्यस्य मरणेपि शरीरमात्रं तिष्ठति। शरीरस्य च भूषणं संभवति॥ २२॥

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्ण[1]धन्वनः।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं[2] च यत्॥ २३॥

मल्लि०—ऋजुतामिति। शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य। 'धनुषश्च' इत्यनङादेशः। ते तव मधुना वसन्तेन सह 'मधुर्दत्ये वसन्ते च चैत्रे च' इति विश्वः। सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितमपाङ्गवीक्षणम्। त इत्यनुषङ्गः। तच्च स्मरामि॥ २३॥

चा०—ऋजुतामिति भो। स्मर! उत्सङ्गनिषक्तधन्विनः उत्सङ्गे निषक्तं स्थापितं धनुर्येन स तस्य शरं ऋजुतां नयतः प्रापयतस्ते मधुना वसन्तेन सह सस्मितां सहासां कथां तत्प्रसिद्धं नयनोपान्तविलोकितं च कटाक्षवीक्षणं स्मरामि॥ २३॥

क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम्॥ २४॥

मल्लि०—क्वेति। हृदयं गच्छतीति हृदयंगमो हृद्यः। खच्प्रकरणे

१. निषङ्गः निषक्त, २. विलोकितानि च,

'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। ते तव सखा कुसुमैरायोजितमारचितं कार्मुकं येन कार्मुकनिर्माता मधुर्वसन्तः क्व नु क्व वा। गत इति शेषः। अथवा सोऽप्युग्ररुषा तीव्रकोपेन पिनाकिनेश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिम्। भस्मतामित्यर्थः। न गमितः खलु न प्रापितः किम्। 'जिज्ञासानुनये खलु' इत्यमरः॥ २४॥

चा०—क्वन्विति। भो प्रिय! ते हृदयंगमोऽभीष्टः कुसुमैरायोजितः कार्मुकः येन स मधुर्वसन्तः क्व नु वर्तत इति शेषः। उग्ररुषोत्कटरोषेण पिनाकिना रुद्रेण सोपि मधुः सुहृद्गतां संश्रितां गतिं भस्मीभावं गमितो न खलु॥ २४॥

अथ तैः परिदेविताक्षरैर्हृदये [1]दिग्धशरैरिवाहतः।[2]
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः॥ २५॥

मल्लि०—अथेति। अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः शरैरिवाहतः सन्। 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः। मधुर्वसन्त आतुरामापन्नां रतिमभ्युपपत्तुमनुग्रहीतुम्। आश्वासयितुमित्यर्थः। 'अभ्युपपत्तिरनुग्रहः' इत्यमरः। आत्मानं पुरोऽदर्शयत्। आविरभूदित्यर्थः॥ २५॥

चा०—अथेति। अथानन्तरं तैः परिदेविताक्षरैः परिदेवितस्य विलापस्याक्षरैरर्दितः पीडितो मधुर्वसन्त आतुरां दुःखितां रतिमभ्युपपत्तुं रक्षितुमात्मानं पुरतोऽग्रेऽदर्शयत् दर्शयति स्म। तैः कैरिव दिग्धफलैरिव दिग्धैर्विलिप्तैः फलैर्लोहिभागैरिव॥

टिप्पणी—दिग्धशरैरिव परिदेविताक्षरैरित्यत्र विलापाक्षरेषु दिग्धशरत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः॥ २५॥

तमवेक्ष्य रुरोद सा भृशं [3]स्तनसंबाधमुरो जघान च।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते॥ २६॥

मल्लि०—तमिति। सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद। स्तनौ संबाध्य स्तनसंबाधम्। 'परिक्लिश्यमाने च' इति णमुल्। उरो जघान ताडितवती च। तथाहि। स्वजनस्याग्रतो दुःखं विवृतमपसारितं द्वारं कपाटं यस्य तदिवोपजायत आविर्भवति। उच्छृङ्खलं प्रवर्तत इत्युत्प्रेक्षाभिप्रायः॥ २६॥

चा०—तमवेक्ष्येति। सा रतिस्तं वसन्तमवेक्ष्य दृष्ट्वा भृशं रुरोद स्तनसम्बाधं स्तनसंकटमुरो वक्षो जघान च ताडयामास। हि यतः स्वजनस्य पुरः दुःखं विवृतद्वारमिव विवृतमुद्घाटितं द्वारं यस्य तादृशमुपजायत उत्पद्यते॥ २६॥

---

१. दिग्धफलैः २. इवार्दितः. ३. गुरु-

टिप्पणी—पूर्वार्द्धे एकस्या एव रतेः कर्त्र्याः अवेक्षणरोदनहननक्रियास्वन्वयाद्दीपकालङ्कारः । उत्तरार्द्धगतेन सामान्यार्थेन पूर्वार्द्धगतस्य विशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः । दुःखस्य विवृतद्वारत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारश्चेत्यलङ्कारत्रयम् ॥ २६ ॥

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
[1]तदिदं कणशो [2]विकीर्यते पवनैर्भस्म [3]कपोतकर्बुरम् ॥ २७ ॥

मल्लि०—इतीति । दुःखमस्याः संजातं दुःखिता । संजातदुःखेत्यर्थः । तारकादित्वादितच् । सा रतिरेनं वसन्तमित्युवाच च । चकारः पूर्वोक्तसमुच्चयार्थः । हे वसन्त, पश्य सुहृदस्त्वत्सखस्य किं स्थितं किमुपस्थितम् तदिदं कपोतकर्बुरं पारावतशबलं कणशश्चूर्णीभूतम् । अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैर्विकीर्यते विक्षिप्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥ २७ ॥

चा०—इतीति । दुःखिता रतिरेनं वसन्तमुवाच हे वसन्त ! सुहृदो मित्रस्य स्थितं सम्पन्नं तदिदं कपोतकर्बुरं धूसरं भस्म पवनैः कणशः कणं विक्षिप्यते ॥२७॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ २७ ॥

अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

मल्लि०—अयीति । अयि स्मर, संप्रति दर्शनं देहि । एष माधवो वसन्तः पर्युत्सुकस्त्वद्दर्शनोत्कण्ठितः । त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्याह—नृणां पुरुषाणां दयितासु प्रेमानवस्थितमस्थिरम् । चलमित्यर्थः । सुहृज्जने प्रेम तु न चलं खलु ॥ २८ ॥

चा०—अयीति । अयीति कोमलामन्त्रणे । भो प्रिय । संप्रति दर्शनं देहि । भो स्मर ! एष माधवो वसन्तस्त्वद्दर्शने पर्युत्सुकः समुत्कण्ठितो नृणां पुंसां दयितासु स्त्रीषु प्रेमाऽनवस्थितमस्थिरं सुहृज्जने न खलु चलं । यद्यपि मे दर्शनं न ददासि तथापि मित्राय देहीत्यर्थः ॥ २८ ॥

टिप्पणी—माधवं प्रति कामकर्तृकात्मदर्शनदाने सुहृज्जनविषयकप्रेमाविचलनस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् । उत्तरार्द्धगतसामान्यार्थेन पूर्वार्द्धगतविशेषार्थस्य समर्थनादर्थान्तरन्यासाऽलङ्कारश्च ॥ २८ ॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह—
गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनेन[4] धूमिताम् ॥ २९ ॥

---

१. यदिदं- २. प्रकीर्यते- ३. कपोतपाण्डुरम्- ४. व्यसनप्रधूमिताम्,

मल्लि०—गत इति। सा ते सखाऽनिलाहतो वायुताडितो दीप इव गत एव न निवर्तते। अहमस्य दीपायमानस्य दशा वर्तिरिव। तिष्ठामीति शेषः। 'दशा वर्त्यवस्थायां वस्त्रान्तं स्युर्दशा अपि' इति विश्वः। कुतः। अविषह्यव्यसनेन सोढुमशक्यदुःखप्रकर्षेण धूमितां संजातधूमां मां पश्य। धूमवत्त्वान्नष्टदीपदशासाम्यं धूमश्च व्यसनमेवेत्यर्थः॥ २९॥

चा०—गत इति। भो मधो। अनिलाहतो निर्वाणो दीप इव ते सखा स्मरो गत एव न निवर्तते न प्रत्यागच्छति। अविषह्यव्यसनप्रधूमितां अविषह्येण दुःसहेन व्यसनेन दुःखेन प्रधूमितां मां पश्य। अहमस्य कामस्य दीपस्य दशेव वर्ते इति शेषः। दशापि प्रधूमिता भवति॥ २९॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः॥ २९॥

अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव।
बिसतन्तुगुणस्य कारितं धनुषः [1]पेलवपुष्पपत्रिणः॥ ३०॥

मल्लि०—अमुनेति। ननु मदन पार्श्ववर्तिना सहचरेणामुना वसन्तेन ससुरासुरं सुरासुरसहितं जगद्बिसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि कोमलानि पुष्पाण्येव पत्रिणो बाणा यस्य तस्य तव धनुष आज्ञां कारितम्। जगदाज्ञा कारितेत्यर्थः। 'हृक्रोरन्यतरस्याम्' इति जगतः कर्मत्वम्॥ ३०॥

चा०—अमुनेति। ननु पार्श्ववर्तिना समीपवर्तिनाऽमुना वसन्तेन बिसतन्तु-गुणस्य बिसतन्तुर्मृणालसूत्रमेव गुणो यस्य तस्य पेलवपुष्पपत्रिणः पेलवानि कोमलानि पुष्पाण्येव पत्रिणो बाणा यस्य तादृशस्य तव धनुषः ससुरासुरं जगदाज्ञामादेशं कारितम्॥ ३०॥

टिप्पणी—पूर्वार्द्धोत्तरार्द्धयोः दीपस्मरयोर्दशारत्योश्चोपमानोपमेयभावादुपमा-द्वयम्॥ ३०॥

विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता।
[2]अनपायिनि [3]संश्रयद्रुमे गजभग्ने पतनाय वल्लरी॥ ३१॥

मल्लि०—विधिनेति। ननु वसन्त, कामवधे मदनवधे मां विमुञ्चता वर्जयता। असारयतेत्यर्थः। विधिना दैवेन। विशसति हिनस्तीति विशसो घातुकः। पचाद्यच्। विशसस्य कर्म वैशसम्। युवादित्वादण्प्रत्ययः। अर्धवैशसमर्धवधः कृतम्। 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः। पत्युः स्वस्य चाश्रयाश्रयिभूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः। तथा चैक-देशवधे देशान्तरस्यापि वधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति

१. कोमल; पेशल; २. अनघापि हि, ३. संश्रियद्रुमे.

तात्पर्यम् । एतदेवोपपादयति—अनपायिन्यनपायित्वेन विश्वस्ते संश्रयद्रुमे आश्रयवृक्षे गजभग्ने सति वल्लरी लता पतनाय भवतीति शेषः । पतितुमेव सालमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥ ३१ ॥

चा०—विधिनेति । ननु कामवधे मदननाशने मां विमुञ्चता त्यजता विधिना दैवेनार्धवैशसं नृशंसत्वं क्रूरत्वं कृतम् । आधारभूतस्य स्मरस्य नाशसामर्थ्यान्मन्नाशोऽपि प्राप्त एवेति भावः । द्रुमे गजभग्ने सत्यनघाप्यखण्डितापि वल्लरी वल्ली पतनायैव ॥ ३१ ॥

टिप्पणी—आश्रयाश्रयिभूतयोः स्मररत्योरेकत्वात्स्मरवधेन रतेरपि वध उचित इति तमकुर्वन्नेव विधिर्हतवान् रतिमिति पूर्वार्द्धोपात्तविशेषार्थस्योत्तरार्द्धगतसामान्यार्थेन समर्थनादर्थान्तरन्यासाऽलङ्कारः ॥ ३१ ॥

संप्रत्यनन्तरकर्तव्यं प्रार्थयते—

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय [1]पत्युरन्तिकम् ॥ ३२ ॥

मल्लि०—तदिति । तत्तस्मात्कारणादुक्तप्रकारेण । अन्यथापि मरणस्यावश्यंभावादित्यर्थः । अनन्तरं भवतेदं वक्ष्यमाणं बन्धुजनप्रयोजनं बन्धुकृत्यं क्रियताम् । प्रार्थनायां लोट् । तदेवोपदिशति—ननु वसन्त, विधुरां विवशां मां ज्वलनातिसर्जनादग्निदानात्पत्युरन्तिकं प्रापय अग्निप्रवेशनं कारयेत्यर्थः ॥ ३२ ॥

चा०—तदिदमिति । भो मधो । तत्तस्माद्धेतोरनन्तरं भवता त्वया बन्धुजनप्रयोजनं बन्धुकृत्यमिदं क्रियतां प्रार्थनायां लोट् । इदं किमित्याह । भो वसन्त । ज्वलनातिसर्जनादग्निदानाद्विधुरां दुःखितां पत्युर्भर्तुरन्तिकं समीपं प्रापय नय । ( अनुमरणेन स्वपतिलोकप्राप्तिः ) इति श्रुतेः ॥ ३२ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ ३२ ॥

कर्तव्यश्चायमर्थः स्त्रीणामित्याह—

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते[2] ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

मल्लि०—शशिनेति । कौमुदी चन्द्रिका शशिना सह याति । शशिन्यस्तमिते स्वयं नश्यतीत्यर्थः । तडित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति । कर्तरि लट् । प्रमदाः स्त्रियः पतिवर्त्मगच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्य इत्येतद्विचेतनैः । अविवेकिभिरपीत्यर्थः । नाथस्तु 'पृथग्जनैः' इति पपाठ । प्रतिपन्नं ज्ञातम् । 'अलवणा यवागूः' 'अनुदरा

---

१. भर्तुः, २. विलीयते,

कन्या' इतिवदल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः। पतिवर्त्मगा इत्यत्र स्मृतिः—'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सास्त्री ज्ञेया पतिव्रता ॥' इति ॥ ३३ ॥

चा०—शशिनेति। हि यतः प्रमदा स्त्रियः पतिवर्त्मगा भर्तुर्मार्गगामिन्य इति विचेतनैरचेतनैरपि प्रतिपन्नं विहितं। किं पुनः सचेतनाया ममेति शेषः। कैरित्याह। शशिना चन्द्रेण सह कौमुदी ज्योत्स्ना अस्तं याति। मेघेन सह तडिद्विद्युदपि विलीना भवति। ननु शशिना मेघेन चेत्यत्र द्वयोः प्रधानात्कथं 'सहयुक्तेऽप्रधाने' इति तृतीया। उच्यते। यस्य क्रियया सम्बन्धः शब्देन प्रतिपाद्यस्तस्यैव प्राधान्यं विवक्षितं। नतु सम्बन्ध इति ॥ ३३ ॥

टिप्पणी—पूर्वार्द्धोपात्तविशेषार्थस्योत्तरार्द्धगतसामान्यार्थतः समर्थनादर्थान्तरन्यासाऽलङ्कारः ॥ ३३ ॥

**अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना।**
**नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥**

मल्लि०—अमुनेति ॥ अमुना पुरोवर्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव। एवकारो मण्डनान्तरनिवृत्त्यर्थः। कषायितस्तनी रञ्जितस्तनी। रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे' इति वैजयन्ती। नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि निधास्यामीत्यर्थः ॥ ३४ ॥

अनुमरणे धाष्ट्र्यमाह—

चा०—अमुनेति। भो मधो। सुभगेनातिवल्लभेनामुनाऽनेनैव प्रियगात्रभस्मना प्रियगात्रस्य भस्म प्रियगात्रभस्म तेन कषायितस्तनी कषायितावनुलिप्तौ स्तनौ यस्याः साहं यथा नवपल्लवसंस्तरे नूतनप्रवालशयने तथा विभावसावग्नौ तनुं गात्रं रचयिष्यामि निधापयिष्यामि ॥ ३४ ॥

टिप्पणी—अत्र यथा शब्दस्येवार्थत्वान्नवपल्लवसंस्तरे इव विभावसावित्युपमानोपमेयभावादुपमालङ्कारः ॥ ३४ ॥

**कुसुमास्तरणे सहायतां बहुशः सौम्य [गतस्त्वमावयोः।**
**कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥**

मल्लि०—कुसुमेति ॥ हे सौम्य साधो, त्वमावयो रतिपञ्चबाणयोर्बहुशो बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः। संप्रति प्रणिपाताञ्जलिना याचितः। अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः। आशु मे चितां काष्ठचयं कुरु कुरुष्व। यथेह तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥ ३५ ॥

या कृताङ्गरागा पल्लवसंस्तरे शेतेस्म तस्यै कथमहमग्निं ददामीत्याह—

चा०—कुसुमेति। भो सौम्य सुंदरावयव। कुसुमास्तरणे पुष्पशय्यायां सहायतां

साहाय्यं त्वं बहुशो बहुवारं गतः प्राप्तोसि संप्रत्यधुनापि मया प्रणिपातपूर्वकेनाञ्जलिना याचितः प्रार्थितवान् । तच्छीघ्रं चितां काष्ठरचनां कुरु । 'सौम्यः स्यात्सुन्दरे सोमदैवते' इत्यमरः ॥ ३५ ॥

टिप्पणी—अत्र स्वभावोक्तिरलङ्कारः ॥ ३५ ॥

तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥ ३६ ॥

मल्लि०—तदन्विति ॥ तच्चिताकरणमन्वनन्तरं मय्यर्पितं मदर्पितं ज्वलनमग्नि दक्षिणवातवीजनैर्मलयमारुतसंचारणैस्त्वरयेः । त्वरितं ज्वलयेत्यर्थः । त्वराहेतुमाह—ते तव विदितं खलु 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । तद्योगात्कर्तरि षष्ठी । यथा येन प्रकारेण स्मरो मां विना क्षणमपि नोत्सहते न हृष्यति । तथा त्वया ज्ञातमेवेत्यर्थः ॥ ३६ ॥

चा०—तदन्विति । भो वसन्त ! तदनु पश्चान्मदर्पितं मह्यं दत्तं ज्वलनमग्नि । दक्षिणवातवीजैर्मलयानिलविक्षेपकैस्त्वरयेः संधुक्षणं कुर्याः । स्मरः कन्दर्पो मद्विना क्षणमपि खलु निश्चितं यथा नोत्सहते सोढुं न शक्नोति तथा ते विदितं । मदिति पृथग्विनेति पञ्चमी ॥ ३६ ॥

टिप्पणी—उत्तरार्द्धगतवाक्यार्थः पूर्वार्द्धगतवाक्यार्थं प्रति हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३६ ॥

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र [1]तं मया सहितः पास्यति ते स बान्धवः ॥ ३७ ॥

मल्लि०—इतीति ॥ अपि चेत्येवं विधाय कृत्वा नावावाभ्यामेक एव सलिलस्याञ्जलिर्दीयताम् । तमञ्जलिं स ते बान्धवः सखा स्मरः परत्र परलोके मया सहितोऽविभज्य पास्यति ॥ ३७ ॥

चा०—इतीति । इति चापि विधाय एवमग्नि दत्वा नो आवयोरेक एव सलिलाञ्जलिर्दीयतां । न द्वावितिशेषः । यत् यतो हेतोस्तव स बान्धवः स्मरो मया सहितः परत्र परलोक अविभज्य अविभागेन पास्यति ॥ ३७ ॥

परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥

मल्लि०—परलोकेति ॥ किंच हे माधव वसन्त, परलोकविधौ पिण्डोदकादिकर्मणि स्मरमुद्दिश्य विलोलाः पल्लवा यासु ताः सहकारमञ्जरीश्चूतवल्लरीर्निर्वपेर्देहि । हि यस्मात्कारणात्ते सखा स्मरः प्रियाश्चूतप्रसवा यस्य स तथोक्तः ॥ ३८ ॥

---

१. यत्,

चा०—परलोकेति । हे माधव वसन्त ! स्मरमुद्दिश्य परलोकस्य विधावौर्ध्वं-देहिके विलोलपल्लवा चलत्किसलयाः सहकारमञ्जरीः सहकारस्याम्रस्य मञ्जर्यस्ता निवपेर्दद्याः 'निवापः पितृतर्पणम्' इत्यभिधानचिन्तामणिः । हि यतस्ते सखा स्मरः प्रियचूतप्रसवः प्रियोऽभीष्टश्चूतस्याम्रस्य प्रसवो यस्येति तादृशः ॥ ३८ ॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरी ह्रदशोषविक्लवां[1] प्रथमा वृष्टिरिवान्वकम्पयत्[2] ॥ ३९ ॥

मल्लि०—इतीति । इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् । कृतनिश्चयामिति यावत् । रतिमाकाशभवा सरस्वत्यशरीरा वाग्घ्रद-शोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । प्रथमा वृष्टिर्वर्षमिवान्वकम्पयदनुकम्पितवती । सदय-मुवाचेत्यर्थः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः ॥ ३९ ॥

चा०—इतीति । इत्येवं देहविमुक्तये शरीरत्यागाय स्थितां कृतनिश्चयां रति-माकाशभवा अदृश्या सरस्वती वाणी अन्वकम्पयदनुकम्पितवती । कामिव ह्रदशोष-विह्वलां ग्रीष्मे ह्रदशोषेण व्याकुलां शफरीं मत्सीं प्रथमा वृष्टिरिव आषाढान्ते समुत्पन्ना यथा वृष्टिः शफरीमनुकम्पयति ॥ ३९ ॥

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि[3] ॥ ४० ॥

मल्लि०—कुसुमेति ॥ हे कुसुमायुधपत्नि रते, तव भर्ता चिराच्चिरं दुर्लभो न भविष्यति । किंत्वचिरमेव सुलभो भविष्यतीत्यर्थः । किंच शृणु । तत्कर्मेति शेषः । येन कर्मणा स ते भर्ता हरलोचनस्यार्चिर्ज्वाला । 'ज्वाला भासो न पुंस्यर्चिः' इत्यमरः । तस्मिञ्शलभत्वं पतङ्गत्वं गतः । 'समौ पतङ्गशलभौ' इत्यमरः ॥ ४० ॥

चा०—कुसुमायुधेति । हे कुसुमायुधपत्नि ! कुसुमायुधः पतिर्यस्यास्तत्सम्बुद्धौ भो रते ! तव भर्ता चिराच्चिरकालं दुर्लभो दुष्प्राप्यो न भविष्यति । किन्तु कियत्यपि कालेऽतीते भर्तारं प्राप्स्यसीत्यर्थः । येन कर्मणा हरलोचनार्चिषि हरनेत्र-ज्वालायां शलभत्वं शलभभावं गतः प्राप्तस्तच्छृणु । अपराधेनासौ सत्पथायुष्यस्य विनाशो नत्वात्यन्तिक इति भावः ॥ ४० ॥

तदेव कर्मोपाचष्टे—

अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥

मल्लि०—अभिलाषेति ॥ उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेति शेषः ।

---

१. विह्वलाम्, २. अन्वकम्पत, ३. हरलोचनार्चिषाम्,

प्रजापतिर्ब्रह्मा स्वसुतायां सरस्वत्यामभिलाषमनुरागमकरोत्। अथ तेन प्रजापतिना विक्रियामिन्द्रियविकारं निगृह्य निरुध्याभिशप्तः सन्। एतत् फलं दाहात्मकं स्वकर्मफलमन्वभूत् ॥ ४१ ॥

अपराधत्वमेवाह—

चा०—अभिलाषमिति। भो रते! उदीरितेन्द्रियः। उदीरितान्युद्रिक्तानीन्द्रियाणि यस्यासौ अवशेन्द्रिय इत्यर्थः। प्रजापतिर्ब्रह्मा स्वसुतायां स्वदुहितरि अभिलाषमिच्छामकरोत् चक्रे। अथान्तरं तेन ब्रह्मणा विक्रियां विकारं निगृह्य निराकृत्याभिशप्तः कृताभिशाप एतत्फलं देहदाहरूपमन्वभूदनुभूतवान् ॥ ४१ ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन [1]नियोजयिष्यति ॥ ४२ ॥
इति चाह स धर्मयाचितः [2]स्मरशापावधिदां सरस्वतीम्।
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥

मल्लि०—परिणेष्यतीति। इतीति च॥ धर्मेण धर्माख्यप्रजापतिना याचितः प्रार्थितः स भगवान्ब्रह्मा। तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतोऽभिमुखीकृतो हरः शिवो यदा पार्वतीं परिणेष्यत्युद्वक्ष्यति तदोपलब्धसुखः प्राप्तानन्दः सन्। स्मरं कामं स्वेन वपुषा नियोजयिष्यति। इत्येवं स्मरशापस्यावधिदामवसानदायिनीं सरस्वतीं वाचं चाह। एवं शापावधिमप्युक्तवानित्यर्थः। ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह—वशिनो जितेन्द्रियाश्चाम्बुधराश्चाशनेरमृतस्य चेत्युभयोर्योनयः प्रभवः वशिपक्षेऽशन्यमृतशब्दौ कोपप्रसादपरौ। अन्यत्र वैद्युताग्न्युदकपरौ। युग्मकम्। ॥ ४२-४३ ॥

शापान्तमाह—

चा०—परिणेष्यतीति। इति चाहेति। युग्मं। आहेत्यग्रिमश्लोकेनान्वयः। सरस्वतीं वाणीं कामपत्नीमित्याह। किं तदित्याह। तपसा तत्प्रवणीकृत आत्मैकपरायणतां नीतो हरो यदा पार्वतीं परिणेष्यति तदोपलब्धसुखः प्राप्तसौख्यः स ईशः स्वेन वपुषा स्वदेहेन स्मरं कामं संयोजयिष्यति युक्तीकरिष्यति। धर्मयाचितो धर्मेण सृष्टिरक्षार्थं प्रार्थितः स ब्रह्मा स्मरशापान्तभवां स्मरस्य शापान्तोत्पन्नां सरस्वतीं वाचमुवाच। ननु कथं तथा शप्तवान्। कथं चेत्थमुवाचेत्याह। वशिनः स्वामिनो घनाश्च मेघा अशनेर्वज्रस्यामृतस्य चोभयोर्योनय उत्पादका भवन्ति। मेघाः कदाचिद्वज्रं क्षिपन्ति कदाचित्तोयं एवं प्रभवोपीत्यर्थः। वज्रामृतोपमौ

१. स योजयिष्यति, २. स्मरशापान्तभवाम्,

निग्रहानुग्रहौ कुर्वन्ति । आहेति शब्दः कालसामान्यवाचकः । तिङन्तप्रतिरूपकः । तथाच भट्टिप्रयोगः ('परिघोरुभुजानाह हसन्तीस्वागतं कपीन् ) इति ॥ ४२-४३ ॥

**तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।**
**रविपीतजला तपात्यये पुनरोघेन हि [1]युज्यते नदी ॥ ४४ ॥**

**मल्लि०— तदिति ॥ हे शोभने, तत्तस्मात्कारणाद्भवितव्यो भविष्यन्प्रियसंगमो यस्य तत्तथोक्तमिदं वपुः परिरक्ष । तथाहि । रविपीतजला नदी तपात्यये प्रावृषि । 'प्रावृट् तपात्यये' इति हलायुधः । पुनरोघेण प्रवाहेण युज्यते संगच्छते हि ॥ ४४ ॥**

चा०—तदिदमिति । तत्तस्माद्धेतोः हे शोभने ! इदं वपुः परिरक्ष । किदृग् वपुः । भवितव्यप्रियसङ्गमं भवितव्यः प्राप्तव्यः प्रियसङ्गमा येन तत् । यतस्तपात्यये ग्रीष्मान्ते रविपीतजला रविणा सूर्येण पीतं जलं यस्याः सा नदी पुनरोघेण मेघजनितेन पूरेण पूर्यते पूर्णा भवति पूर्यत इति कर्तरि यद्वा कर्मणि प्रयोगः । भवितव्येति । भूप्राप्तावित्येतस्य प्रयोगो नतु भवतेरकर्मकत्वात् । यद्वा 'कृत्यल्युटो बहुलम्' इति कर्तरि तव्यप्रत्ययः ॥ ४४ ॥

**इत्थं रतेः किमपि भूतमदृश्यरूपं मन्दीचकार मरणव्यवसायबुद्धिम् ।**
**तत्प्रत्ययाच्चकुसुमायुधबन्धुरेना[2]माश्वासयत्सुचरितार्थपदैर्वचोभिः । ४५ ।**

**मल्लि०—इत्थमिति ॥ इत्थमनेन प्रकारेणादृश्यरूपं किमपि भूतं कश्चित्प्राणी । 'युक्ते क्ष्मादावृते भूत प्राण्यतीते समे त्रिषु' इत्यमरः । रतेर्मदनदाराणां मरणव्यवसायबुद्धि मरणोद्योगबुद्धि मन्दीचकार । निवारयामासेत्यर्थः । मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । अथ कुसुमायुधबन्धुर्वसन्तश्च तत्प्रत्ययात्तस्मिन्भूते विश्वासात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैर्वचोभिर्वाक्यैराश्वासयत् । सर्वथा ते देवताप्रसादात्प्रियसंगमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥ ४५ ॥**

चा०—इत्थमिति । इत्थमेवमदृश्यरूपं किमपि भूतं कोपि प्राणी रतेः कामवल्लभायाः मरणव्यवसायबुद्धि मरणोद्यमबुद्धि मतिं मन्दीचकार शिथिलीचक्रे । कुसुमायुधबन्धुर्वसन्तस्तत्प्रत्ययाच्च तस्य भूतस्य विश्वासात्सुचरितार्थपदैः सुचरितार्थान्यनुमेयत्वेन कृतार्थानि पदानि येषु तैः । वचोभिरेनां रतिमाश्वासयदाश्वासितवान् । वसन्ततिलकावृत्तं । तल्लक्षणं च ( उक्ता वसन्ततिलका तभजा जगौ गः ) ॥ ४५ ॥

---

१. पूर्यते, २. एताम्,

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा [1]परिपालयांबभूव ।
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥

मल्लि०—अथेति ॥ अथानन्तरं व्यसनेन दुःखेन कृशा मदनवधूरतिरुपप्लवान्तं विपदवधिं किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य । 'सायंचिरम्' इत्यादिना ट्युप्रत्ययः । शशिनश्चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयांबभूव प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ४६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसुरिविरचितया
सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदास-
कृतौ कुमारसंभवे महाकाव्ये रतिविलापो नाम
चतुर्थः सर्गः ॥ ४ ॥

चा०—अथेति । अनन्तरं मदनवधू रतिरुपप्लवान्तं वियोगस्यान्तमवसानं प्रतिपालयाम्बभूव प्रतीक्षते स्म । कीदृशी व्यसनकृशा व्यसनेन दुःखेन क्षामा । का कमिव । किरणपरिक्षयधूसरा किरणपरिक्षयेण धूसरा कलुषा दिवातनस्य दिनभवस्य शशिनश्चन्द्रस्य लेखा प्रदोषमिव । रात्रिमुखामिव । पुष्पिताग्रावृत्तं । अयुजि न युगरेफतो जकारो युजि च न जौ जरगाश्च पुष्पिताग्रा ॥ ४६ ॥

इति श्री मालान्वयसाधु श्रीशालिगनन्दनसाधु श्री अरडकमल्लसमभ्यर्थित
वाचनाचार्य श्री चारित्रवर्धनविरचितायां कुमारतात्पर्य-
दीपिकायां शिशुहितैषिण्यां चतुर्थः सर्ग ॥ ४ ॥

—: ० :—

---

१. प्रतिपालयाबभूव,

## पञ्चमः सर्गः

**तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।**
**निनिन्द रूपं हृदयेन पार्वती [1]प्रियेषु सौभाग्यफला हि चारुता ॥१॥**

मल्लि०—तथेति ॥ पर्वतस्यापत्यं स्त्री पार्वती तथा तेन प्रकारेणाक्ष्णोः समीपे समक्षं पुरतः। 'अव्ययं विभक्तिसमीपसमृद्धि-' इत्यादिनाव्ययीभावः। मनोभवं मन्मथं दहता भस्मीकुर्वता पिनाकिनेश्वरेण भग्नः खण्डितो मनोरथोऽभिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं निनिन्द। धिङ् मे रूपं यद्धरमनोहरणाय नालमिति गर्हितवतीत्यर्थः। युक्तं चैतदित्याह-तथाहि। चारुता सौन्दर्यं प्रियेषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता। सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते। नो चेद्विफलं तदिति भावः। अस्मिन्सर्गे वंशस्थं वृत्तम्- 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १ ॥

चा०—तथेति। सा पार्वती हृदयेन चित्तेन रूपं सौन्दर्यं निनिन्द निर्भर्त्सितवती! कीदृशी तथा तेन प्रकारेण पिनाकिना हरेण भग्नमनोरथा भग्नः खण्डितो मनोरथो हरो मे भर्ता स्यादित्येवंरूपोऽभिलाषो यस्याः सा तथा। कीदृशेन पिनाकिना। समक्षं प्रत्यक्षमेव मनोभवं कामं दहता ज्वालयता। किमित्येतावतैव रूपं निनिन्देत्याह, प्रियेष्वित्यादि। यस्माच्चारुता सुन्दरता प्रियेषु सौभाग्यफला सौभाग्यमेव फलं यस्याः सा तथा। येन रूपेण प्रियवल्लभा न भवति। तद्रूपं व्यर्थमित्यर्थः। सर्गे चात्र वंशस्थं वृत्तम्। तल्लक्षणं—जतौ तु वंशस्थमुदीरितं जरौ। इति ॥१॥

टिप्पणी—तदेव चारुत्वं प्रशस्तं यत्पतिपु विषये सौभाग्यफलकं भवति पार्वत्याश्चारुत्वं तथाभूतं नास्तीति युक्तमेव मनसा निजरूपस्य गर्हणमिति भावः। तुर्यपादप्रतिपाद्यसामान्यार्थेन पादत्रयप्रतिपाद्यस्य पार्वतीकर्तृकात्मरूपगर्हणस्य विशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ १ ॥

**इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।**
**अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥**

मल्लि०—इयेषेति ॥ सा पार्वती समाधिमेकाग्रतामास्थायावलम्ब्य तपोभिर्वक्ष्यमाणनियमैः करणभूतैरात्मनः स्वस्यावन्ध्यरूपतां सफलसौन्दर्यं कर्तुमियेषेच्छति स्म। तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः। अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयमवाप्यते। किं तद्द्वयम्। तथाभूता विधा प्रकारो

---

१. प्रिये हि·

यस्य तत्तथाविधं प्रेम स्नेहः येनार्धाङ्गहरा हरस्य भवेदिति भावः। तादृशः पतिश्च। यो मृत्युंजय इति भावः। द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्तृवाल्लभ्यं जीवद्भर्तृकत्वं चेति। तच्च तपश्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः। अत्र मनुः—'यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम्। तत्सर्वं तपसा प्राप्यं तपो हि दुरितक्रमम्॥' इति॥ २॥

चा०—इयेषेति। सा गौरी समाधिमास्थाय नियमं कृत्वा तपोभिर्वक्ष्यमाणव्रतविशेषैरात्मानोऽवन्ध्यरूपतां सफलरूपत्वं कर्तुमियेषेष्टवती। ननु सुकरोपायं त्यक्त्वा किमिति क्लेशकरे तपसि प्रावर्ततेत्याह। अन्यथा तपश्चरणाभावे वा द्वयं कथं प्राप्यते लभ्यते। किं तद्द्वयं। तथाविधमर्द्धशरीरहारि प्रेम तादृशः सकललोकाराध्यः पतिश्च अवन्ध्यरूपतामिति त्वतलौ गुणवचन न पुंवद्भावो वक्तव्यः। यद्वा। अवंध्यं तद्रूपं चेति॥ २॥

टिप्पणी—उत्तरार्द्धप्रतिपाद्यवाक्यार्थं प्रति पूर्वार्द्धप्रतिपाद्यवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ २॥

**निशम्य चैनां तपसे कृतोद्यमां सुतां [1]गिरीशप्रतिसक्तमानसाम्।**
**उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात्॥ ३॥**

मल्लि०—निशम्येति॥ मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वैनां पार्वतीं वक्षसा परिरभ्यालिङ्ग्य महतो मुनिव्रतात्तपसो निवारयन्त्युवाच। मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् 'वारणार्थानामीप्सितः' इति नापादानत्वं तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् "ध्रुवमपायेऽपादानम्" इत्यपादानत्वमेव स्यात्। यथाह भाष्यकारः—'यच्च मिथ्या संप्राप्य निवर्तते तत्र ध्रुवमपायेऽपादानमिति प्रसिद्धम्' इति॥ ३॥

चा०—निशम्येति। मेना एनां सुतां गौरीं त्रिनेत्रं हरं प्रतिसक्तमानसां प्रतिबद्धमानसां तपसे कृतोद्यमां निशम्य श्रुत्वा वक्षसा परिरभ्योवाच। कीदृशी मेना। महतो मुनिव्रतान्निवारयन्ती निषेधयन्ती॥ ३॥

टिप्पणी—एकस्या एव मेनायाः कर्त्र्याः श्रवणाऽऽलिङ्गननिवारणभ्रुविक्रियास्वन्वयाद्दीपकालङ्कारः॥ ३॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह—

**मनीषिताः सन्ति [2]गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः।**
**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्त्रिणः॥ ४॥**

---

१. गिरीशं प्रति सक्त; त्रिनेत्रं प्रति सक्त. २. गृहेपि.

मल्लि०—मनीषिता इति ॥ हे वत्से, मनस ईषिता इष्टा मनीषिताः। शकन्ध्वादित्वात्साधुः। देवताः शच्यादयो गृहेषु सन्ति। त्वं तामाराधयेति शेषः। तपः क्व तवेदं तावकम्। 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्प्रत्ययः। 'तवकममकावेकवचने' इति तवकादेशः। वपुश्च क्व। तथाहि। पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत। पतत्रिणः पुनः पक्षिणस्तु पदं न सहेत। अतिसौकुमार्याद्दिव्योपभोगभोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः। अत्र दृष्टान्तालंकारः ॥ ४ ॥

चा०—मनीषिता इति। इति ध्रुवेच्छामिति। युग्मं। देवताराधनार्थं चेत्तर्हि तर्हि तपश्चर्या न कर्तव्या। भो वत्से पुत्रि! मनीषिता अभीष्टदेवता गृहेषु सन्ति। सन्तु देवतास्तथापि तपः क्लेशरूपं क्व। तावकं त्वदीयं सुकुमारं वपुः क्व च। दृष्टान्तेनैतदेव समर्थयति। पेलवं पेशलं शिरीषं पुष्पं भ्रमरस्य भृङ्गस्य पदमवस्थितिं सहेत। षट्पदभारं सोढुं शक्नोतीत्यर्थः। पुनः पतत्रिणः पक्षिणो न ॥४॥

टिप्पणी—तपसो बलवद्देहसाध्यत्वात् पार्वतीवपुषश्चातिकोमलत्वादनयोर्महद्वैषम्यात्पूर्वार्द्धे विषमाऽलङ्कारः। पूर्वार्द्धप्रतिपाद्येऽर्थे परार्द्धप्रतिपाद्यार्थस्य दृष्टान्तरूपत्वाद्दृष्टान्ताऽलङ्कारश्च ॥ ४ ॥

इति [1]ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात्।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥

मल्लि०—इतीति ॥ इत्येवमनुशासत्युपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां पार्वतीमुद्यमादुद्योगात्तपोलक्षणान्नियन्तुं न शशाक समर्था नाभूत्। तथाहि। ईप्सितार्थे इष्टार्थे स्थिरनिश्चयं मनो निम्नाभिमुखं पयश्च कः प्रतीपयेत्प्रतिकूलयेत्। प्रतिनिवर्तयेदित्यर्थः। निम्नप्रवणं पय इवेष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः। अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालंकारः ॥ ५ ॥

चा०—इति ध्रुवेच्छामिति। इतीत्थं ध्रुवेच्छां दृढेच्छां सुतामनुशासतीं शिक्षयन्ती उद्यमात्तपःकरणरूपान्नियन्तुं निवारयितुं न शशाक न समर्थाभवत्। अर्थान्तरन्यासमाह। ईप्सितार्थस्थिरनिश्चयमभीष्टार्थकरणनिष्ठं मनश्चित्तं निम्नाभिमुखं गम्भीराभिमुखं पयस्तोयं कः प्रतीपयेत् व्यावर्तयितुं शक्नुयात्। अपितु न कोपि प्रतीपयेदिति प्रतीपं करोतीत्यर्थे णिच् ॥ ५ ॥

कदाचिदासन्नसखीमुखेन मनोरथज्ञं पितरं मनस्विनी।
अयाचितारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥ ६ ॥

मल्लि०—कदाचिदिति ॥ अथ कदाचिन्मनस्विनी स्थिरचित्ता सा

---

१. व्रतेच्छाम्.

पार्वती मनोरथज्ञमभिलाषाभिज्ञं पितरं हिमवन्तमासन्नसख्याप्तखी सैव मुखमुपायः। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः।' तेन फलोत्पत्तिरन्तोऽवधिर्यस्य तस्मै तपःसमाधत्ते तपोनियमार्थमात्मनः स्वस्यारण्यनिवासं वनवासमयाचत। 'दुह्याच्–' इत्यादिना द्विकर्मकत्वम् ॥ ६ ॥

चा०—कदाचिदिति। सा मनस्विनी साभिमाना मनोरथज्ञं हरप्राप्तिलक्षणाभिलाषविदं पितरं आसन्नसखीमुखेन निकटसखीद्वारा आत्मनोऽरण्यनिवासं तपःसमाधये तपःप्राप्त्यर्थं यः समाधिस्तस्मै अयाचत याचितवती। कीदृशाय। फलोदयान्ताय फलस्य उदय उत्पत्तिरन्तोऽवधिर्यस्य तस्मै ॥ ६ ॥

टिप्पणी—पार्वतीकर्तृकात्मारण्यनिवासयाचने तपः समाधिपदार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ६ ॥

अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥७॥

मल्लि०—अथेति ॥ अथ गौर्यनुरूपेण योग्येनाभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्विति कृतानुमतिः सती पश्चात्तपःसिद्ध्युत्तरकालं प्रजासु जनेषु तदाख्यया तस्या गौर्याः संज्ञया प्रथितम्। गौरीशिखरमिति प्रसिद्धमित्यर्थः। शिखण्डिमत्। न तु हिंस्रप्राणिप्रचुरमिति भावः। शिखरं शृङ्गं जगाम ययौ। ७।

चा०—अथेति। अनन्तरं गौरी शिखरं जगाम। कीदृशं शिखरं। शिखण्डिमत् शिखण्डिनो मयूरास्तद्युक्तं। कीदृशी गौरी। गुरुणा पित्रा कृताभ्यनुज्ञा। कीदृशेन गुरुणा। अनुरूपाभिनिवेशतोषिणा अनुरूपो योग्यो योऽभिनिवेशः शंभुप्राप्तिलक्षण आग्रहस्तेन तुष्टेन। पुनः कीदृशेन। गरीयसा पूज्येन। कीदृक् शिखरं। प्रजासु लोकेषु पश्चाद्गौरीतपश्चरणान्तरं तदाख्यया तस्या गौर्या आख्यया नाम्ना प्रथितं विख्यातम् ॥ ७ ॥

टिप्पणी—गौर्याः शिखण्डिमच्छिखरगमने पितुरभ्यनुज्ञायाः पदार्थस्य विशेषणविधयोक्त्या पदार्थहेतुकं काव्यलिङ्गम् ॥ ७ ॥

विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम्।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

मल्लि०—विमुच्येति ॥ अहार्यनिश्चया निवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिर्यष्टिभिः प्रतिसरैः प्रमृष्टं चन्दनं स्तनान्तगतं येन तं तथोक्तं हारं मुक्तावलीं विमुच्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो

यस्य तत्तथोक्तं वल्कलं कण्ठलम्बि स्तनात्तरीयभूतं बबन्ध। धारयामासेत्यर्थः ॥ ८ ॥

चा०—विमुच्येति। सा बाला गौरी हारं मुक्ताकलापं विमुच्योत्तार्य तदास्य हारस्थाने वल्कलबन्धं निहितवती। कीदृशं हारं। क्रीडावशाद्विलोलाश्चञ्चला या यष्टयो हारलता मौक्तिकपङ्क्तयस्ताभिः प्रविलुप्तचन्दनमङ्गरागो यस्मिंस्तम्। कीदृशं वल्कलं। बालारुणबभ्रु नवोदितोनूरुकपिशं। पुनः कीदृक्। पयोधरयोः स्तनयोर्य उत्सेध उच्छ्रायस्तेन विशीर्णा त्रुटयन्ती संहतिः सन्धिबन्धो यस्मिंस्तत्। एतेन हारेणेव वल्कलेऽनापि शोभोऽभूदित्यर्थः। कीदृशी सा अहार्यनिश्चयाऽहार्यो हेतुमशक्यो निश्चयो यस्याः सा ॥ ८ ॥

टिप्पणी—अत्र विशेषणानां साभिप्रायत्वात्परिकरालङ्कारः ॥ ८ ॥

**यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम्।**
**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥**

मल्लि०—यथेति॥ तस्या देव्या आननं तदाननं प्रसिद्धैर्भूषितैः। 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः। रोहन्तीति रुहाः। 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। शिरसि रुहास्तैः शिरोरुहैर्मूर्धजैर्यथा मधुरं प्रियमभूत्। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। जटाभिरप्येवं मधुरमभूत्। तथाहि पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरपङ्क्तिभिरेव न किंतु सह शैवालसङ्गेन सशैवालसङ्गमपि। 'तेन सहेति तुल्ययोग' इति बहुव्रीहिः। प्रकाशते। शैवलेनापि शोभत एवेत्यर्थः॥ ९ ॥

चा०—यथेति। प्रसिद्धैर्विख्यातैः शिरोरुहैः केशैर्यथा तदाननं तस्या मुखं मधुरं रम्यं तथा जटाभिरपि रम्यमभूत्। उक्तमथ दृष्टान्तेन द्रढयति। पङ्कजं षट्पदश्रेणिभिरेव परं केवलं न प्रकाशते। किंतु सशैवालसङ्गमपि शैवालसंपर्कसहितमपि शोभते ॥ ९ ॥

टिप्पणी—तदाननं प्रसिद्धैः शिरोरुहैरिव जटाभिरपि मधुरमभूदित्यर्थे शिरोरुहजटापदार्थयोरुपमानोपमेयभावादुपमा। पूर्वार्द्धप्रतिपाद्यविशेषार्थस्योत्तरार्द्धप्रतिपाद्यसामान्यार्थेन समर्थनादर्थान्तरन्यासश्चेत्युपमानुप्राणितोऽर्थान्तरन्यासाऽलङ्कारः ॥ ९ ॥

**प्रतिक्षणं सा कृतरोमविक्रिया व्रताय मौञ्जीं त्रिगुणां बभार याम्।**
**अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम् ॥ १० ॥**

मल्लि०—प्रतीति। सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात्कृतरोमाञ्चां त्रिगुणां त्रिरावृतां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार। तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया

मौञ्ज्यास्या देव्या रसनागुणस्यास्पदं स्थानं जघनम्। सह रागेण सरागं सलोहितमकारि कृतम्। सौकुमार्यातिशयादिति भावः॥ १०॥

चा०—प्रतिक्षणमिति। प्रतिक्षणं मुहुर्मुहुर्व्रताय व्रतार्थं कृतरूपविक्रिया कृततापसवेषा सा गौरी त्रिगुणां त्रिरावृत्तां यां मौञ्जीं मुञ्जरज्जुं बभार दधौ। तया मौञ्ज्या अस्या देव्या रसनागुणास्पदं काञ्चीगुणस्थानं सरागं लोहितमकारि कृतम्। मौञ्ज्याः कर्कशत्वात्प्राप्रतिबन्धनत्वाच्चारुणतापादनम्। कीदृश्या तया। तत्पूर्वनिबद्धया प्रथमबद्धया॥ १०॥

टिप्पणी—पर्वत्या व्रतार्थं परिधृता त्रिगुणमुञ्जमेखला तस्या अतिसुकुमारं जघनं सलोहितं चकारेत्यर्थः। परुषया मेखलया सुकुमारतरस्य जघनस्य सरागत्वविधानं स्वभावसिद्धमिति स्वभावोक्तिः॥ १०॥

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः॥ ११॥

मल्लि०—विसृष्टेति॥ तया देव्या विसृष्टरागात्त्यक्तलाक्षारसरञ्जनादधरादधरोष्ठान्निवर्तितः। 'निसृष्टरागात्' इति पाठे नितरां त्यक्तलाक्षारागात्। रागत्यागेन निष्प्रयोजनत्वादिति भावः। तथा स्तनाङ्गरागेणारुणितादरुणीकृतात्। पतनसमये तस्य स्तनयोरुपरोधादिति भावः। कन्दुकाच्च निवर्तितः। कुशाङ्कुराणामादानेन लवनेन परिक्षता व्रणिता अङ्गुलयो यस्य स तथोक्तः करः पाणिरक्षसूत्रप्रणय्यक्षमालासहचरः कृतः॥

चा०—विसृष्टेति। तया देव्या करो हस्तो अक्षसूत्रप्रणयी अक्षसूत्रे जपमालायां स्नेहवान् कृतः। कीदृशः करः। विसृष्टरागाद्विसृष्टस्त्यक्तो रागोऽलक्तकादिर्येन तादृशादधरात् स्तनाङ्गरागारुणितात्स्तनाङ्गरागेण रक्तात्कन्दुकाच्च निवर्तितो निवारितः। पुनः कीदृशः। कुशाङ्कुरादानेन ग्रहणेन परिक्षतः परिपाटिताङ्गुलिर्यस्य सः। प्राक्करो लाक्षारसेनाधरं रञ्जते क्रीडाकन्दुके च शक्तोऽभूत्। इदानीं तस्यानुचितत्वान्निवर्तित इत्यर्थः॥ ११॥

टिप्पणी—अत्र पादत्रयोपात्तानां करविशेषणानां साभिप्रायत्वात्परिकराऽलङ्कारः॥ ११॥

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले॥ १२॥

मल्लि०—महार्हेति॥ महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यते स्म। पुष्पाधिकशौकुमार्यादिति भावः। सा देवी बाहुलतामपधत्त उपधानीकरोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते

स्थण्डिले भूमावेवाशेत शयितवती। तथा निषेदुष्युपविष्टा च। 'क्वसुश्च' इति क्वसुः। 'उगितश्च' इति ङीप्। भूमावेव शयनादिव्यवहारो न जातू परीत्यर्थः ॥ १२ ॥

चा०—महार्हेति। या गौरी महार्हशय्यापरिवर्तनच्युतैः महार्हायां निर्मूल्यायां शय्यायां परिवर्तनानि तैः कृत्वा पतितैः च्युतैः स्वकेशपाशनिवेशितपुष्पैरपि दूयते स्म खिद्यते स्म। सा बाहुलतोपधायिनी बाहुलतामुपदधाति गण्डूकृतां नयतीति तादृशे केवले तृणाद्यावरणरहित स्थण्डिले एव भूमावेव निषेदुष्युपविष्टाऽशेत सुष्वाप व्रतवशात्स्थण्डिलशयनम् ॥ १२ ॥

टिप्पणी—यस्याः पार्वत्याः पूर्वं सौकुमार्यातिशयात्स्वकेशैरपि क्लेशः तस्याः साम्प्रतं भूमिशयनेनापि न क्लेशः इत्येकस्मिन्नेव पार्वतीशरीरे सौकुमार्यपारुष्ययोर्विरूपयोः संघटनातो विषमाऽलङ्कारः। तदुक्तं दर्पणे—विरूपयोः संघटना या च तद्विषमं मतम् ॥ १२ ॥

**पुनर्ग्रहीतुं नियमस्थया तया [1]द्वयेऽपि [2]निक्षेप इवार्पितं द्वयम्।**
**लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥ १३ ॥**

मल्लि०—पुनरिति॥ नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनर्ग्रहीतुं पुनरानेतुं निक्षेपोऽर्पितमिव निक्षेपत्वेनार्पितं किमु। क्वचित्। 'द्वयीषु' इति प्रामादिकः पाठः। कुत्र द्वये किं द्वयमर्पितमित्याह तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलासदृष्टं चञ्चलावलोकितं च। व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्चार्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः॥ १३ ॥

चा०—पुनर्ग्रहीतुमिति। देव्या व्रतवशाद्विभ्रमगतिचंचलः प्रेक्ष्यतेत्युक्ते तत्रोत्प्रेक्षते। कविः। नियमस्थया व्रतस्थया तया गौर्या पुनर्ग्रहीतुं द्वयेषु द्वयं निक्षेपमिव निक्षिप्यत इति निक्षेपमर्थितं न्यस्तं। केषु किमित्याह। तेन तन्वीषु लतासु विलासचेष्टितं विलासगतिर्हरिणाङ्गनासु मृगीषु विलोलदृष्टिश्चञ्चलत्वं। द्वयमिति सामान्योपक्रमान्नपुंसकनिर्देशः॥ १३ ॥

टिप्पणी—तपस्यन्त्यां पार्वत्यां विलासचेष्टितविलोलदृष्टयोरदर्शनात् लताहरिणाङ्गनयोर्दर्शनात्तत्र द्वयमर्पितमिवेत्युत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः॥ १३ ॥

**अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत्।**
**गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥**

मल्लि०—अतन्द्रितेति॥ सा देवी स्वयमेवातन्द्रितासंजाततन्द्रा सती। तारकादित्वादितच्प्रत्ययः। वृक्षकान्स्वल्पवृक्षान्। 'अल्पे' इत्यल्पार्थे क-

---

१. द्वयीषु. २. निक्षेपम्. ३. दृष्टिम्.

प्रत्ययः। घटावेव स्तनौ तयोः प्रस्रवणैः प्रसृतपयोभिर्व्यवर्धयत्। गुहः कुमारोऽपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम्। अग्रजातानामित्यर्थः। येषां वृक्षकाणां संबन्धि पुत्रवात्सल्यं सुतप्रेम नापाकरिष्यति। उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्तिष्यत इत्यर्थः॥ १४॥

चा०—अतन्द्रितेति। अतन्द्रिता निरालसा सा घटस्तनप्रस्रवणैर्घटावेव स्तनौ तयोः प्रस्रवणैः स्वयमेव वृक्षकान् व्यवर्धयत् वर्धयामास। प्रथमाप्तजन्मनां प्रथमं लब्धजन्मनां येषां वृक्षाणां गुहोपि कार्तिकेयोपि पुत्रवात्सल्यं पुत्रस्नेहं नापाकरिष्यति न दूरीकरिष्यति॥ १४॥

टिप्पणी—यतो वृक्षाः पार्वत्या घटस्तनप्रस्रवणैर्वर्द्धिता अतस्तेषु पार्वत्याः पुत्रप्रेम गुहो न निवर्तिष्यत इत्यर्थः। अत्रोत्तरार्द्धप्रतिपाद्यवाक्यार्थे पूर्वार्द्धप्रतिपाद्य-वाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ १४॥

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने॥ १५॥

मल्लि०—अरण्येति॥ अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिता हरिणाश्च तस्यां देव्यां तथा विशश्वसुर्विस्रम्भं जग्मुः। 'समौ विस्रम्भविश्वासौ' इत्यमरः। यथा कुतूहलादौत्सुक्यात्तदीयैर्हरिण-संबन्धिभिर्नयनैर्नेत्रैः। करणैः। स्वकीये लोचने सखीनां पुरः पुरतः अनेन तेषां संबन्धसहत्वमुक्तम्। अमिमीत। अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः। केचित्तु सा पार्वती तदीयैर्नेत्रैः कुतूहलात्पुरोऽग्रे वर्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वादात्मन इत्याहुः। 'माङ् माने' इत्यस्मा-द्धातोर्लङ्। इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः॥ १५॥

चा०—अरण्येति। तस्यां गौर्यां हरिणास्तथा विशश्वसुर्विश्वासं प्रापुः। यथा स तदीयैर्हरिणसम्बन्धिभिर्नयनैर्नेत्रैः कुतूहलात्कौतुकात्पुरोऽग्रतः सखीनां लोचने अमिमीत। कानि विस्तृतानीति परिच्छेदं कृतवती व्रतस्थत्वान्नात्मना। कीदृशो हरिणाः। अरण्यबीजाञ्जलिदानलालिताः। आरण्यबीजानि नीवारादयस्तेषां दानं तेन लालिताः ये ते॥ १५॥

टिप्पणी—पार्वत्यां हारिणानां विश्वस्तत्वे हरिणनेत्रैरात्मनेत्रमानविधानस्य हेतुत्वात् वाक्यार्थहेतुककाव्यलिङ्गम्॥ १५॥

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम्।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते॥ १६॥

मल्लि०—कृतेति। कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकाम्।

कृतहोमामित्यर्थः। त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं त्वगुत्तरासङ्गवतीम्। अधीतमस्या अस्तीत्यधीतिनीं स्तुतिपाठादिकुर्वतीम्। 'इष्टादिभ्यश्च' इतीनिप्रत्ययः। तां देवीं दिदृक्षवो द्रष्टुमिच्छव ऋषयो मुनयोऽभ्युपागमन्समुपागताः। न चात्र कनिष्ठसेवादोष इत्याह—धर्मवृद्धेषु वयो न समीक्ष्यते न प्रमाणीक्रियते। सति धर्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः। तथा च मनुः—'न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥' इति॥ १६॥

चा०—कृतेति। तां गौरीं दिदृक्षवो द्रष्टुमिच्छवो मुनयोऽभ्युपागमन् समाजग्मुः। कीदृशीं तां। कृताभिषेकां। कृतः विहित अभिषेकः स्नानं यया सा। तथा हुतजातवेदसं हुतो जातवेदा अग्निर्यया तां। त्वग्वल्कलं त्वगुत्तरासङ्गमुत्तरीयमस्या अस्तीति तां। कथमल्पवयसं महान्तः वयमागता इत्यत आह। धर्मवृद्धेषु तपोगरिष्ठेषु वयो न समीक्ष्यते न विचार्यते। त्वगुत्तरासङ्गवतीमित्यत्र बहुव्रीहिमत्वर्थीययोः समानार्थत्वात्कथं मतुप्। उच्यते। एकीयमतमेतदिति। कर्मधारयादपि मत्वर्थीयः। यद्वा त्वचा उत्तरासङ्गवतीति तृतीया समासः॥ १६॥

टिप्पणी—तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः॥ १६॥

**विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि।**
**नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम्॥ १७॥**

**मल्लि०**—विरोधीति॥ विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिरुज्झितपूर्वमत्सरं त्यक्तपूर्ववैरम्। हिंसारहितमित्यर्थः। द्रुमैरभीष्टप्रसवैरिष्टफलैरर्चिताः पूजिता अतिथयो यस्मिंस्तत्तथोक्तम्। नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः संचिता अनला अग्नयो यस्मिंस्तत्तथोक्तं तच्च तपोवनम्। पावयतीति पावनं बभूव। अहिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः॥ १७॥

चा०—विरोधीति। तच्च तपोवनं पावनं पवित्रं बभूव। सर्वाण्यपि विशेषणानि। विरोधिसत्त्वैर्गोव्याघ्रादिभिरुज्झितं त्यक्तवैरं यत्र तत् द्रुमैः कृत्वेष्टैरभीष्टैः प्रसवैः फलैः पुष्पैरचिता अतिथयो यत्र तत्। नवानामुटजानां पर्णगृहाणां मध्ये संभृतः संचितोऽनलोऽग्निर्यत्रात एव पावनम्॥ १७॥

**यदा फलं [1]पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम्।**
**तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे॥ १८॥**

**मल्लि०**—यदेति॥ सा देवी यदा यस्मिन्काले तावता तावत्प्रमाणेन

---

१. सर्वसमाधिसाधनम्.

पूर्वतपःसमाधिना पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त। अशक्यममंस्तेत्यर्थः। तदा तत्काले। अविलम्बेनेत्यर्थः। स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्यमनपेक्ष्याविगणय्य महद्दुश्चरं तपश्चरितुं साधयितुं प्रचक्रम उपचक्रमे ॥ १८ ॥

चा०—यदेति। सा गौरी यदा तावता तावन्मात्रेण पूर्वतपःसमाधिना कांक्षितं वाञ्छितं लभ्यं प्राप्यं नामंस्त नाज्ञासीत्। तस्य शरीरमार्दवं निजदेहसौकुमार्यमनपेक्ष्य महद्दुष्करं तपश्चरितुं कर्तुं प्रचक्रमे प्रारेभे। अमंस्तेति 'हनः सिच्' इति कित्करणेन ज्ञापकादनुनासिकलोपाभावः ॥ १८ ॥

क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या [1]च ससारमेव च ॥ १९ ॥

मल्लि०—क्लममिति ॥ या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं प्राप तया देव्या मुनीनां चरितं तीव्रं तपो व्यगाह्यत प्रविष्टम्। अत्रोत्प्रेक्षते—ध्रुवमस्या वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम्। अत एव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठिनमेव। तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपः क्षमत्वमित्युत्प्रेक्षार्थः ॥ १९ ॥

चा०—क्लममिति। या गौरी कन्दुकलीलयापि कन्दुकोल्लासनेनापि क्लमं परिश्रमं ययौ प्राप। तया मुनीनामपि चरितं व्यगाह्यताचरितं। तत्रोत्प्रेक्षते। ध्रुवमस्या वपुः कांचनपद्मनिर्मितं सुवर्णकमलैः सृष्टं। यतः प्रकृत्या स्वभावेन मृदु कोमलं ससारमेव च दृढम् ॥ १९ ॥

शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥

मल्लि०—शुचाविति ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजामग्नीनां मध्यगता सती। नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजो विजित्य न विद्यतेऽन्यत्र दृष्टिर्यस्याः सानन्यदृष्टिः सती सवितारं सूर्यमैक्षत ददर्श। 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः' इति स्मरणात्। पञ्चाग्निमध्ये तपश्चचारेत्यर्थः तत्र सवितैव पञ्चमोऽग्निः—'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात् ॥ २० ॥

चा०—शुचाविति। सा गौरी नेत्रप्रतिघातिनीं दृशोः प्रतिहतिकारिणीं प्रभां दीप्तिं विजित्यानन्यदृष्टिस्तद्गतनेत्रा सती सवितारं सूर्यमैक्षताद्राक्षीत्। पञ्चतपो-

---

1. हि०

व्रतं चकारेत्यर्थः । कीदृशी सा । शुचावप्याषाढे मासि ज्वलतां चतुर्णां हविर्भुजामग्नीनां मध्यगता मध्यस्थिता । पुनः कीदृशी ! शुचिस्मिता निर्मलेषद्धासा । तथा सुमध्यमा शोभनं मध्यमं यस्याः सा ॥ २० ॥

[1]तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ।२१।

मल्लि०—तथेति ॥ सवितुः सूर्यस्य गभस्तिभिः किरणैस्तथा पूर्वोक्तप्रकारेणातितप्तं संतप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप। यथा रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः । किन्त्वस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैर्मन्दंमन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम् । तयोः सौकुमार्यादित्यर्थः ॥ २१ ॥

चा०—तथेति । तथा तेन प्रकारेण सवितुः सूर्यस्य गभस्तिभिः किरणैस्तप्तमपि तदीयं मुखं गौरीवक्त्रं कमलश्रियं पद्मशोभां प्राप । यथा रवितापात्पद्मं विकसति । तथा तदपीत्यर्थः । अस्य मुखस्य दीर्घयोरपाङ्गयोर्दृगन्तयोः शनैः शनैः श्यामिकया कालिम्ना पदं स्थानं कृतम् ॥ २१ ॥

अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिर्न [2]वृक्षवृत्तिव्यतिरिक्त[3]साधनः ।२२।

मल्लि०—अयाचितेति ॥ अयाचितोपस्थितमप्रार्थितोपनतं केवलमम्बूदकं रसात्मकस्यामृतमयस्योडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिरभ्यवहारकर्म बभूव । तावन्मात्रसाधनकोऽभूदित्यर्थः । साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः । किलेति प्रसिद्धौ । वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणाविधिर्न बभूव । वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसिद्धम् । अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥ २२ ॥

चा०—अयाचितेति । तस्या देव्याः । किलेत्यागमे पारणाविधिः शरीरयात्रा वृत्तिव्यतिरिक्तसाधनो वृक्षवृत्तेर्व्यतिरिक्तमधिकं साधनमुपकरणं यस्येति तादृशो न बभूव । कथमित्याह । ततोऽयाचितं प्राप्तमम्बु जलं पारणा । केवलं रसात्मकस्य पीयूषमयस्योडुपतेश्चन्द्रमसो रश्मयश्च वृक्षाणां जीवनोपायोऽम्बुचन्द्ररश्मय इत्यतो वृक्षतुल्या तस्या वृत्तिरभूदित्यर्थः ॥ २२ ॥

---

१. तथाभितप्तम्; तथापि तप्तम्. २. वृक्षवृत्तिः. ३. साधनम्.

**निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन [1]सा ।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥**

मल्लि०—निकामेति । विविधेन पञ्चविधेनेत्यर्थः । नभश्चरेण खेचरेण । आदित्यरूपेणेत्यर्थः । इन्धनसंभृतेन काष्ठसमिद्धेन वह्निना निकाममत्यन्तं तप्ता साम्बिका तपात्यये ग्रीष्मान्ते । प्रावृषीत्यर्थः । 'नवैर्वारिभि रुक्षिता सिक्ता सती भुवा पञ्चाग्नितप्तया सहोर्ध्वगमूष्माणं वाष्पममुञ्चत् । 'ग्रीष्मोष्मवाष्पमूष्माणम्' इति यादवः ॥ २३ ॥

चा०—निकामेति । तपात्यये ग्रीष्मापगमे नवैर्वारिभिरुक्षिता सिक्ता सा गौरी भुवा सह ऊर्ध्वगमूष्माणममुञ्चत्तत्याज । भूमिरपि ग्रीष्मोत्तंसो मेघजलैः सिक्ता वाष्पं मुञ्चति । कीदृशी । नभश्चरेण सौरेण इन्धनसंभृतेन च काष्ठजनितेन द्विविधेन वह्निना निकामतप्ता ॥ २३ ॥

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥२४॥**

मल्लि०—स्थिता इति ॥ उदकस्य बिन्दव उदबिन्दवः । 'मन्थौदन–' इत्यादिनोदकशब्दस्योदादेशः । प्रथम उदबिन्दवः । प्रथमविशेषणाद्बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वं च गम्यते । तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः । तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यं च गम्यते । अनन्तरं ताडितो व्यथितोऽधर ओष्ठो यैस्तैस्तथोक्तैः एतेनाधरस्य मार्दवं गम्यते । ततः पयोधरयो स्तनयोरुत्सेध उपरिभागे निपातेन पतनेन चूर्णिता जर्जरिताः कुचकाठिन्यादिति भावः । तदनु वलीषूदररेखासु स्खलिताः । निम्नोन्नतत्वादिति भावः । इत्थं चिरेण न तु शीघ्रम् । प्रतिबन्धबाहुल्यादिति भावः । नाभिं प्रपेदिरे प्रविष्टा न तु निर्जग्मुः । एतेन नाभेर्गाम्भीर्यं गम्यते । अत्र प्रतिपदमर्थवत्वात्परिकरालंकारः ॥ २४ ॥

चा० – स्थिता इति । प्रथमोदबिन्दवः पूर्वप्रवृत्ता जलबिन्दवः क्रमेण तस्या नाभिं प्रपेदिरे प्राप्ताः । चिरप्राप्तौ हेतुमाह । कीदृशाः । पक्ष्मसु अक्षिलोमपंक्तिषु क्षणं स्थिता सान्द्रत्वात् । ततस्ताडिताधरास्ताडितोऽधरो यैस्ते । तत्र पयोधरोत्सेधनिपातचूर्णिताः स्तनयोरुत्सेध उच्छ्रायस्तत्र निपातेन चूर्णिताः । ततो वलीषु उदररेखासु स्खलिताः । 'मन्थौदन०' इत्यादिनोदादेशः ॥ २४ ॥

**शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।**
**व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षमाः ॥२५॥**

---

१. च.

मल्लि०—शिलाशयामिति ॥ निरन्तरासु नीरन्ध्रास्वन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयस्तास्वन्तरवातवृष्टिषु । न निकेते गृहे वसतीत्यनिकेतवासिनीम् । अनावृतदेशवासिनीमित्यर्थः । शिलायां शेते इति शिलाशयां शिलातलशायिनीम् । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । तां पार्वतीं 'साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । तस्य कर्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपास्तडिन्मयैर्विद्युद्रूपैतैरवलोकनैर्व्यलोकयन्निव । इवेति चक्षुषा विलोकनमेवोत्प्रेक्ष्यते । साक्ष्यं तु 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति प्रमाणसिद्धत्वान्नोत्प्रेक्ष्यमित्यनुसंधेयम् ॥ २५ ॥

चा०—शिलेति । क्षपा रात्रय उन्मिषितस्तडिन्मयैर्विलोकितैस्तां गौरीं व्यलोकयन् ददृशुः । तां । शिलाशयां शिलायां शेते या सा ताम् । तथा निरन्तरासु अविच्छिन्नासु अन्तरवातवृष्टिषु वातान्वितवृष्टिषु । सतीष्वपि अनिकेतवासिनीं उत्प्रेक्षते । महत्तपसो दुष्करस्य तपसः साक्ष्ये स्थिता इव अन्तरवातवृष्टिष्विति अन्तरमध्यस्थिता वाता यत्र ताश्च वृष्टयश्चेति कर्मधारयः ॥ २५ ॥

**निनाय [1]सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।**
**परस्पराक्रन्दिनि चक्रवाकयोः पुरा वियुक्ते मिथुने कृपावती ॥ २६ ॥**

मल्लि०—निनायेति ॥ सा पार्वती । उत्किरन्ति क्षिपन्तीत्युत्किराः । 'इगुपधज्ञा'—इत्यादिना कः । अत्यन्तं हिमानामुत्किरा अनिला यासु ताः सहस्यरात्रीः पौषरात्रीः । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । उदके वास उदवासः 'पेषंवासवाहनधिषु च' इत्युदादेशः । उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिन्यन्योन्यमाक्रोशिनि पुरोऽग्रे वियुक्ते विरहिणि । वियोगं प्राप्त इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोश्चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती निनाय । दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः । 'अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः' इति मनुः ॥ २६ ॥

चा०—निनायेति । उदवासतत्परा जलनिवासपरायणा सा गौरी सहस्यरात्रीः पौषस्य निशा निनायातिवाहितवती । कीदृशीः । अत्यन्तहिमोत्किरानिलाः अत्यन्ततुषाराधिवासितसंयुक्ताः । कीदृशी गौरी । पुरोऽग्रतोवियुक्ते परस्पराक्रन्दिनि परस्परमन्योन्यमार्तवशब्दान् कुर्वाणे चक्रवाकयोर्मिथुने द्वये कृपावती सदया । स्वयं वियोगे व्यथानुभवात् । उदवासेति 'पेषं वासवाहनधिषु च' इत्युदादेशः ॥ २६ ॥

---

१. अत्यर्थहिमोत्तरानिलाः.

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना।**
**तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥**

**मल्लि०**—मुखेनेति ॥ सा पार्वती निशि रात्रौ पद्मवत्सुगन्धिना सुरभिणा। 'गन्धस्येत्–' इत्यादिनेकारः। प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्रं दलं तेन शोभत इति तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः पद्मसंपदो यासां तासामपां सरोजसंधानं पद्मसंघट्टनमकरोदिव। इत्युत्प्रेक्षालंकारः पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालंकारो व्यज्यत इत्युभयोः संकरः ॥ २७ ॥

**चा०**—मुखेनेति। सा गौरी निशि रात्रौ पद्मसुगंधिना पद्मवत्सुगन्धिना प्रवेपमानः कंपमानोऽधरं एव पत्रं दलं तेन शोभत इति तादृशेन मुखेन तुषारवृष्टिक्षतपद्मसम्पदां तुषारेण हिमवृष्ट्याक्षता नष्टा पद्मसम्पद्यासामपां सरोजसन्धानमिव कमलसृष्टिमिवाकरोद्वयधत्त। अत्र शरद्वसंतयोः शीतोष्णसाम्याच्छिशिरस्य हिमान्तर्गतत्वात्तपश्चर्यावर्णनम् ॥ २७ ॥

**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः।**
**तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति[1] च तां पुराविदः ॥ २८ ॥**

**मल्लि०**—स्वयमिति ॥ स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि। 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः। तया देव्या पुनस्तत्पर्णवर्तनमप्यपाकीर्णमपाकृतम्। अतः पर्णापाकरणाद्धेतोः। प्रियं वदतीति प्रियंवदा। 'प्रियवशे वदः खच्' इति खच्प्रत्ययः। 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः। तां पार्वतीं पुराविदः पुराणज्ञास्तपःकरणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सापर्णेति वदन्ति। नामान्तरसमुच्चयार्थश्चाकार। अत्र 'अपर्णाम्' इत्यपपाठः इति शब्दाभिहितद्वितीयानुपपत्तेः। यथाह वामनः–'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति। स्वयं प्रियंवदाः परेशामपि प्रियवादभाजनानि भवन्तीति भावः ॥

**चा०**—स्वयमिति। स्वयं विशीर्णद्रुमपर्णवृत्तिता स्वयमेव विशीर्णयति तं द्रुमपर्णं वृक्षपत्रमेव वृत्तिर्यस्यास्तद्भावस्तत्ता सा हि तपसः पराकाष्ठा कोटिः। तया गौर्या शीर्णं पर्णमपाकृतं त्यक्तं। अतो हेतोः पौराणिकाः प्रियंवदां प्रियवादिनीं तां अपर्णामिति अभुक्तं पर्णं ययेत्यपर्णा सा तामिति वदन्ति। अत्रेतिशब्दे कर्मणः विहितत्वादपर्णामिति चिन्त्यम् ॥ २८ ॥

---

१. अपर्णामिति.

[1]मृणालिकापेलवमेवमादिभिर्व्रतैः [2]स्वमङ्गं [3]ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९ ॥

मल्लि०—मृणालिकेति ॥ मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयमङ्गं शरीमेवमुक्तप्रकारतोयाग्निमध्यवासव्रतमादिर्येषां तैर्व्रतैरहश्च निशा चाहर्निशम् । समाहारे द्वन्द्वैकवद्भावः अत्यन्तसंयोगे द्वितीया । ग्लपयन्ती कर्शयन्ती सा पार्वती कठिनैः क्लेशसहैरित्यर्थः । शरीरैरुपार्जितं संपादितं तपस्विनामृषीणां तपो दूरमत्यन्तमधश्चकार तिरश्चकार । अतिशिश्य इत्यर्थः । तपस्विभिरप्येवं तपः कर्तुं न शक्यत इति तात्पर्यार्थः ॥ २९ ॥

चा०—मृणालिकेति । सा गौरी कठिनैः शरीरैरुपार्जितमपि तपस्विनां तपो दूरमधश्चकारात्यर्थमधः कृतवती । किं कुर्वती । एवमादिभिस्तपोग्न्यादिभिर्व्रतैर्मृणालिकापेलवं कोमलं स्वमङ्गदेहमहर्निशं ग्लपयन्ती कृशं कुर्वाणा ॥ २९ ॥

टिप्पणी—२९–३० श्लोकयोर्मध्ये प्रक्षिप्तोऽयं दृश्यते—

सुराः समुद्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शंभुवशक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजिहेतुम् ॥ १ ॥

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥

मल्लि०—अथेति ॥ अथानन्तरमजिनं कृष्णमृगत्वक् । आषाढः प्रयोजनमस्येत्याषाढः पालाशदण्डः । 'पालाशो दण्ड आषाढः' इत्यमरः । 'विशाखाषाढादण्मन्थदण्डयोः' इत्यण्प्रत्ययः । तयोर्धरस्तथोक्तः प्रगल्भवाक्प्रौढवचनो ब्रह्ममयेन वैदिकेन तेजसा । ब्रह्मवर्चसेनेत्यर्थः । ज्वलन्निव स्थितः । इवशब्दो निर्धारणार्थः । कश्चिदनिर्दिष्टो जटिलो जटावान् । ब्रह्मचारीति शेषः । पिच्छादित्वादिलच्प्रत्ययः । शरीरबद्धो बद्धशरीरः । शरीरवानित्यर्थः । वाहिताग्न्यादिषु पाठात्साधुः । प्रथमाश्रमो यथा ब्रह्मचर्याश्रम इव । यथाशब्द इवार्थे । तपोवनम् । देव्या इति शेषः । विवेश प्रविष्टवान् ॥ ३० ॥

चा०—अथेति । अथानन्तरं कश्चिदनिर्दिष्टो जटिलो ब्राह्मणो देव्यास्तपोवनमाश्रमं विवेश प्रविष्टवान् । कीदृशोऽजिनाषाढधरः अजिनं मृगचर्म आषाढः पालाशो दण्डस्तयोर्धरः । पचाद्यच् प्रगल्भवाक् । प्रौढवचनः । पुनः कीदृशः ब्रह्ममयेन तेजसा ब्राह्मेण ज्वलन्निव देदीप्यमान इव । तत्रोत्प्रेक्षते । शरीरबद्धो विग्रहवान्

१. कोमल. २. तदङ्गम्. ३. क्षपयन्ति.

प्रथमाश्रम इव ब्रह्मचर्याश्रम इव। 'पालाशो दण्ड आषाढः' इत्यभिधानचिन्तामणिः ॥ ३० ॥

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती।**
**भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥३१॥**

मल्लि०—तमिति ॥ अतिथिषु साध्व्यातिथेयी। 'पथ्यतिथि–' इत्यादिना ढञ्प्रत्ययः। 'टिड्ढाणञ्'—इत्यादिना ङीप्। पार्वती तं ब्रह्मचारिणं बहुमानपूर्वया। बहुमानः पूर्वो यस्यास्तया। गौरवपूर्वयेत्यर्थः। सपर्ययार्चया 'सपर्यार्चार्हणाः समाः' इत्यमरः। प्रत्युदियाय प्रत्युज्जगाम। कथं समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत आह—साम्ये सत्यपि निविष्टचेतसां स्थिरचित्तानां वपुर्विशेषेषु व्यक्तिविशेषेष्वतिशयितं गौरवं यासु ता अतिगौरवसहिताः क्रियाश्चेष्टा भवन्ति। प्रवर्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः ॥ ३१ ॥

चा०—तमिति। आतिथेयी अतिथौ साध्वी 'पथ्यतिथिवसतिस्वपतेर्ढञ्'। पार्वती बहुमानपूर्वया बहुगौरवपुरस्सरया सपर्यया पूजया कृत्वा तं ब्रह्मचारिणं प्रत्युदियाय प्रत्युत्थिता। ननु सापि स्वयं तत्तुल्या। कथं तस्मै प्रत्युज्जगामेत्याह। निविष्टचेतसां निविष्टं प्रशान्तं चेतो येषां ते तेषां साम्येति तुल्येपि वपुर्विशेषेषु स्वरूपातिशयेषु क्रियाः श्रेष्ठाः अधिगौरवा भवन्ति। अधिकगौरवसहिताभवन्तीत्यर्थः ॥ ३१ ॥

**विधिप्रयुक्तां [1]परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम्।**
**उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥**

मल्लि०—विधीति ॥ स ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं च विश्रामं च विनीय नामेत्यपरमार्थे। अथोमामृजुनैव विलासरहितेनैव चक्षुषा पश्यन्ननुज्झितक्रमोऽत्यक्तोचितपरिपाटीकः सन्। वक्तुं प्रचक्रमे प्रारेभे ॥ ३२ ॥

चा० — विधीति। विधिप्रयुक्तां यथोक्तप्रकारेण कृतां सत्क्रियां पूजां प्रतिगृह्य स्वीकृत्य क्षणं परिश्रमं च विनीय स्फोटयित्वा ऋजुनैव रागादिरहितेन चक्षुषोमां पश्यन्न उज्झितोऽत्यक्तः क्रमः परिपाटी येन स विप्रो वक्तुं प्रचक्रमे प्रारेभे नामेति प्रसिद्धौ ॥ ३२ ॥

**[2]अपि क्रियार्थं सुलभं समित्कुशं [3]जलान्यपि स्नानविधिक्षमाणि ते।**
**[4]अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥३३॥**

मल्लि०—अपीति ॥ अत्रापिशब्दः प्रश्ने। क्रियार्थं होमादिकर्मानु-

---

१. प्रतिगृह्य. २. अयि, ३. अयि, ४. अयि,

ष्ठानार्थम्। समिधश्च कुशाश्च समित्कुशम्। 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः। सुलभमपि सुलभं कच्चित्। जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यान्यपि कच्चित्। किञ्च स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्तसेऽपि। देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः। युक्तं च नामैतत्। खलु यस्माच्छरीमाद्यं धर्मसाधनम्। धर्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनम्। सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते। अतएव 'सततमात्मानमेव गोपयीत' इति श्रुतिः॥ ३३॥

तमेव क्रममाह—

चा०—अयिक्रियार्थमिति। अयीति परिप्रश्ने। भो पार्वति! क्रियार्थं होमादिकर्मार्थं समित्कुशं सुलभं समिधश्च कुशाश्च समित्कुशं। 'जातिरप्राणिनाम्' इत्येकवद्भावः। जलान्यपि ते तव स्नानविधौ योग्यानि। अपि स्वशक्त्या स्वसामर्थ्येन तपसि प्रवर्तसे। देहमपीडयित्वा कच्चित्तपः कुरुषे इत्यर्थः। खलु यत आद्यं प्रथमं धर्मसाधनं धर्मार्जनोपायः शरीरम्॥ ३३॥

अपि[1] त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम्।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा॥ ३४॥

मल्लि०—अपीति॥ त्वयावर्जितेन सिक्तेन वारिणा संभृतं जनितमासां वीरुधां लतानां प्रवालं पल्लवमनुबन्ध्यप्यनुस्यूतं किम्। यत्प्रवालं चिरोज्झितश्चिरकालत्यक्तो लाक्षारागो येन तत्तथापि पाटलम्। स्वभावरक्तमित्यर्थः। तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससाधरेण। 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः। तुलां साम्यमारोहति। गच्छतीत्यर्थः। अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि 'तुल्यार्थैरतुलोपमाभ्याम्'—इति न तृतीयाप्रतिषेधस्तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति॥ ३४॥

चा०—अयीति। अयि पार्वति! आसां पुरोवर्तिनीनां वीरुधां लतानां प्रवालं किसलयं त्वदावर्जितवारिसंभवं त्वद्दत्ततोयोपचितमनुबन्धि संपन्नं यत्प्रवालं ते दन्तवाससाऽधरेण तुलां साम्यमारोहति प्राप्नोति। कीदृशेन। चिरोज्झितालक्तकपाटलेन चिरमुज्झितस्त्यक्तोऽलक्तको लाक्षारसो येन स चासौ पाटलश्च तेन॥ ३४॥

अपि[2] प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव[3] प्रयुञ्जते॥ ३५॥

मल्लि०—अपीति॥ करस्थान्दर्भान्प्रणयेन स्नेहेनापहरन्तीति ते

१. अयि, २. अयि, ३. सापत्न्यम्,

तथोक्तेषु । सापराधेष्विति भावः । 'करस्थदर्भप्रणयापराधिषु' इति पाठे दर्भाणां प्रणयेन प्रार्थनयापराधिषु हरिणेषु विषये ते मनः प्रसन्नमपि न क्षभितं किम् । सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः । हे उत्पलाक्षि, ये हरिणाः प्रचलैश्चञ्चलैर्विलोचनैर्नेत्रैस्तवाक्षिसादृश्यं प्रयुञ्जत इवाभिनयन्तीव । प्रसन्नत्वान्मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः । 'उत्पलक्षेपचलैः' इति पाठान्तर उत्पलकम्पचलैः । भावानयने द्रव्यानयनमिति न्यानेन क्षिप्यमाणोत्पलचलैरित्यर्थः ॥ ३५ ॥

चा०—अयीति । अयि ! हरिणेषु ते मनः प्रसन्नमनाविलं । कीदृशेषु करस्थेषु दर्भेषु कुशेषु यः प्रणयः प्रार्थना तेनापराधिषु ये हरिणाः । उत्पलाक्षेपचलैरुत्पलानामाक्षेपः प्रेरणं तद्वच्चलैर्विलोचनैस्तवाक्षिसापत्न्यमिव स्पर्धामिव प्रयुञ्जते कुर्वन्तीव ॥ ३५ ॥

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥

मल्लि०—यदिति ॥ हे पार्वति, रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते । लोकैरिति शेषः । तद्वचो न व्यभिचरति न स्खलतीत्यव्यभिचारि सत्यम् । 'यत्राकृतिस्तत्र गुणाः' 'न सुरूपाः पापसमाचारा भवन्ति' इत्यादयो लोकवादा न विसवादमासादयन्तीत्यर्थः । किमिति ज्ञायते–तथाहि । हे उदारदर्शने आयताक्षि ! सुरूपे इत्यर्थः । अथवोन्नतज्ञाने । विवेकवतीत्यर्थः । ते तव शीलं सद्वृत्तम् । शीलं स्वभावे सद्वृत्ते' इत्यमरः । तपस्विनामप्युपदिश्यतेऽनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं प्राप्तम् । मुनयोऽपि, त्वां वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः ॥ ३६ ॥

चा०—यदुच्यतेति । भो गौरि ! यदिदं वच उच्यते । रूपं पापवृत्तये न पापव्यापाराय न । तद्वचोऽव्यभिचारि सत्यम् । तथाचोक्तं । यत्राकृतिस्तत्र गुणा वसन्तीति । तथाहि, । हे उदारदर्शने ! उदारे विस्तृते दर्शने नयने यस्यास्तत्संबुद्धौ । ते शीलं वृत्तं तपस्विनामपि मुनीनामपि उपदेशतां गतं प्राप्तं । मुनयोऽपि त्वां वीक्ष्य सद्वृत्तौ प्रवर्तन्ते इत्यर्थः ॥ ३६ ॥

विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥

मल्लि०—विकीर्णेति ॥ एष महीधरो हिमवान् । सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । विकीर्णैः पर्यस्तैः सप्तर्षीणां

१. प्रवाहिभिः,

सम्बन्धिभिर्बलिभिः पुष्पोपहारैः प्रहसन्ति ये, तथोक्तैर्दिवोऽन्तरिक्षाच्च्युतै-र्गाङ्गैः सलिलैस्तथा न पावितः। अनाविलैरकलुषैस्त्वदीयैश्चरितैर्यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः ॥ ३७ ॥

चा०—विकीर्णेति। भो पार्वति! यथाऽनाविलैर्निर्मलैस्त्वदीयैस्तव संबन्धिभिश्चरितैः सान्वयः सपुत्रपौत्र एष महीधरो हिमाचलः पावितः पवित्रीकृतः। तथा दिवः स्वर्गाच्च्युतैः पतितैर्गाङ्गैः सलिलैर्न। किंभूतैः सलिलैः। विकीर्णो विक्षिप्तः सप्तर्षिभिर्यो बलिः पूजा तेन प्रहासिभिः सस्मितैः ॥ ३७ ॥

**अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति [1]भाविनि।**
**त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥**

**मल्लि०**—अनेनेति। हे भाविनि प्रशस्ताभिप्राये, अनेन कारणेन धर्मः सविशेषं सातिशयमद्य मे। त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः। 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः। तत्र सारः श्रेष्ठः प्रतिभाति। यद्यस्मात्कारणान्मनसो निर्विषयावर्थकामौ यस्यास्तया त्वयैको धर्म एव प्रतिगृह्य स्वीकृत्य सेव्यते। यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः, अतः सर्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥ ३८ ॥

चा०—अनेनेति। भो भामिनि! प्रशस्ताभिप्राये अनेन चरित्रेणाद्य प्राक्श्रुतापि त्रिवर्गसारस्त्रिवर्गस्य धर्मार्थकामलक्षणस्य मध्ये सारः श्रेष्ठो मे मम स धर्मः सविशेषं विशिष्टं यथा स्यात्तथा प्रतिभाति। यत् यतो मनो निर्विषयार्थकामया मनसि निर्विषयौ निराश्रयावर्थकामौ यस्यास्तया। त्वया एकएव धर्मः प्रतिगृह्य स्वीकृत्य सेव्यते। एतद्गजनिमीलकयैव तस्या धर्मोत्कर्षं सूचितवान् ॥ ३८ ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति—

**प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि।**
**यतः[2] सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥**

**मल्लि०**—प्रयुक्तेति ॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परमन्यं संप्रतिपत्तुमवगन्तुं नार्हसि। हे संनतगात्रि संनताङ्गि। 'अङ्गगात्रकण्ठेभ्यः' इति वक्तव्यान्ङीप्। यतः कारणान्मनस ईषिभिर्मनीषिभिर्विद्वद्भिः। शकन्ध्वादित्वात्साधुः। सतां संगतं सख्यं सप्तभिः पदैरापद्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते। तच्चावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः। 'साप्तपदीनं सख्यम्' इति निपातनात्साधु ॥ ३९ ॥

इदानीं तन्मनोरथं जिज्ञासुः पृच्छति—

चा०—प्रयुक्तेति। भो संनताङ्गि! मां परमुदासीनं संप्रतिपत्तुं ज्ञातुं नार्हसि।

---

१. भामिनि, २. यथा,

कीदृशम् । आत्मना स्वयमेव प्रयुक्तसत्कारविशेषः प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तम् । यतः सतां साधूनां मनीषिभिर्बुधैः साप्तपदीनं संगतमुच्यते । सप्तभिः पदैरवाप्यत इति वाक्यं 'साप्तपदीनं सख्यम्' इति मित्रविषये निपातनं । येन सह सप्तपदानि वचनान्युच्चारितानि स सखेत्यर्थः । तदावयोर्वाग्व्रातीयं जातमित्यर्थः ॥ ३९ ॥

[1]अतोत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं [2]प्रतिवक्तुमर्हसि ॥ ४० ॥

मल्लि०--अत इति ॥ हे तपोधने, अतः सख्याद्धेतोरत्र बहुक्षमाम् । बहूक्तिसहाम् यद्वा क्षमावतीम् । भवतीं त्वां द्विजातिभावाद्ब्राह्मणत्वादुपपन्नचापलः सुलभधाष्टर्योयं जनः । स्वयमित्यर्थः । किंचित्प्रष्टुं मनो यस्य स किञ्चित्प्रष्टुमनाः प्रष्टुकामः । 'तुं काममनसोरपि' इति मकारलोपः । रहसि भवं रहस्यं गोप्यं न चेत्प्रतिवक्तुमर्हसि ॥ ४० ॥

चा०--अत इति । हे तपोधने ! तप एव धनं यस्यास्तत्संबुद्धौ । अद्यातः सखिभावाद्बहुक्षमां भवतीं किंचिदयं मल्लक्षणो जनः प्रष्टुमनाः प्रष्टुं मनो यस्य तादृशः । कीदृशोऽयं । द्विजातिभावात् ब्राह्मण्यादुपपन्नं प्राप्तं चापलं धाष्टर्यं येन सः । चेद्यदि रहस्यं गोप्यं प्रतिगोप्तुं नार्हसि । यदि रहस्यं वक्षि तदा पृच्छामीत्यर्थः । चापलेति युवादिपाठादण् ॥ ४० ॥

प्रष्टव्यमाह--

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद ॥ ४१ ॥

मल्लि०--कुल इति ॥ प्रथमस्य वेधसो हिरण्यगर्भस्य कुलेऽन्ववाये प्रसूतिरुत्पत्तिः । 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः' इति ब्रह्मपुराणवचनात् । वपुः शरीरं त्रयाणां लोकानां सौन्दर्यमिवोदितमेकत्र समाहृतम् ऐश्वर्यसुखं संपत्सुखममृग्यमन्वेषणीयं न भवति । किन्तु सिद्धमेवेत्यर्थः । वयो नवम् । यौवनमित्यर्थः । अतः परमतोऽन्यत्किं तपःफलं स्याद्वद । अस्ति चेदिति शेषः । किञ्चिदस्तीत्यर्थः ॥ ४१ ॥

प्रष्टव्यमाह--

चा०--कुल इति । प्रथमस्य वेधसो ब्रह्मणः कुले वंशे ते जन्म प्रजापतेर्वा ( एकप्रथं यत्पर्वताः ) इति श्रुतिः । त्रिलोकसौन्दर्यमिवोत्थितं वपुश्च । ऐश्वर्यसुख चामृग्यमप्रार्थनीयं । अन्येन दुर्लभमित्यर्थः । नवं यौवनं वयश्च । अतः परं तव किं तपः फलं स्यात् । यत्तपसा फलमुत्पद्यते तज्जातमेव ॥ ४१ ॥

---

१. अद्य, २. प्रतिगोप्तुम्,

भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च [1]कृशोदरि त्वयि ॥ ४२ ॥

मल्लि०—भवतीति ॥ दुःसहात्सोढुमशक्यादनिष्टाद्भर्त्रादिकृतादपि मनस्विनीनां धीरस्त्रीणामीदृशी तपश्चरणलक्षणा प्रतिपत्तिः प्रवृत्तिः। 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये इति केशवः । भवति नाम। नामेति सम्भावनायाम् । विचारमार्गे प्रहितेन चेतसा चित्तेन तदनिष्टं च । हे कृशोदरि ! त्वयि न दृश्यते । विचार्यमाणे तदपि नास्त्यसम्भावितत्वादित्यर्थः ।। ४२ ॥

स्त्रीणां वैधव्यदुःखादपि तपसि प्रवृत्तिर्भवतीत्याशङ्क्याह—

चा०—भवतीति । अनिष्टाद्वैधव्यलक्षणादपि ईदृशी तपश्चर्यालक्षणा प्रतिपत्तिरनुष्ठानं मनस्विनीनां मानिनीनां नामेति संभाव्ये भवति । कीदृशात् अनिष्टात् दुःसहात् । भो तनूदरि ! विचारमार्गप्रहितेन विचारमार्गप्रेषितेन चेतसा तच्चानिष्टं त्वयि न दृश्यते ॥ ४२ ॥

अनिष्टाभावमेव प्रपञ्चयति—

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु ! कुतः पितुर्गृहे ।
[2]पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥

मल्लि०—अलभ्येति । हे सुभ्रु! इयं त्वदीयाकृतिर्मूर्तिरलभ्यो लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा तथोक्ता । दृश्यत इति शेषः । असम्भावितश्चायमर्थ इत्याह–पितुर्गृहे विमाननावमानः कुतः। न सम्भाव्यत एवेत्यर्थः । 'सुभ्रु ! कुतस्तातगृहेऽवमाननम्' इति पाठान्तरकरणं तु साध्वसमेवोक्तोपपत्तिसम्भवात् । अन्यत्रापि 'सुभ्रु! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्' । इत्यादिप्रयोगदर्शनाद्वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः । न चान्यस्माद्भावीत्याह—पराभिमर्शः परधर्षणं तु तव नास्ति । पन्नगरत्नसूचये फणिशिरोमणिशलाकां ग्रहीतुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । करं हस्तं कः प्रसारयेत् 'सुभ्रु' इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति । तेन ह्रस्वः प्रामादिक इति केचित् । अन्ये तु 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्र 'अलाबूः' 'कर्कन्धूः' इत्युकारान्तस्याप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अतएवाह वामनः—'ऊकारादप्यूङ्प्रकृतेः' इति ॥ ४३ ॥

---

१. तनूदरि, २. परावमर्शः,

चा०—अलभ्येति । भो पार्वति ! इयं तवाकृतिरलभ्यशोकाभिभवाऽलभ्यः प्राप्तुमयोग्यः शोकेनाभिभवस्तिरस्कारो यस्याः सा । तादृशी दृश्यत इति शेषः । अथ चापमानजनिताद्वैराग्यादेवमित्याह । तव परावमर्शो नास्ति । पन्नगरत्नसूचये सर्परत्नशलाकायै कः करं प्रसारयेदपि तु न कोपि । नदीसंज्ञाप्रतिषेधात्सुभ्रूशब्दाद्-ध्रस्वश्चिन्त्यः । अस्य संबद्धौ ह्रस्व इति केचित् ॥ ४३ ॥

**किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।**
**वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥**

मल्लि०—किमितीति । हे गौरि ! किमिति केन हेतुना यौवने त्वयाभरणान्यपास्य विहाय । वृद्धस्य भावो वार्धकम् । मनोज्ञादित्वाद् वुञ्प्रत्ययः । 'वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि' । इति विश्वः । तत्र शोभत इति वार्धकशोभि वल्कलं धृतम् । प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका विभावरी रात्रिररुणाय सूर्याय कल्पते यद्यरुणं गन्तुं कल्पते किम् । वद ब्रूहि । 'क्रियार्थोपपदस्ये–' त्यादिना चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं संघटत इति भावः ॥ ४४ ॥

चा०—किमिति । भो गौरि ! अपि च यौवने आभरणानि भूषणान्यपास्य त्यक्त्वा वार्द्धकशोभि वृद्धानां भावो वार्द्धं वार्द्धमेव वार्द्धकं तत्र शोभत इति तादृक् वल्कलं धृतं वद । स्फुटचन्द्रतारके स्फुटाः प्रकटाश्चन्द्रतारकाश्च यत्र तादृशे प्रदोषे रात्रिमुखे यदि विभावरी रात्रिररुणाय कल्पते संपद्यते । न । किन्तु अरुणाय रात्रिः प्रभात एव संपद्यत इत्यर्थः । भूषणानां चन्द्रनक्षत्रोपमानं वल्कलस्यारुणतोपमानं 'त्रियामा यामिनी भौती तमी तमा विभावरी' इत्यभिधानचिन्तामणिः ॥ ४४ ॥

तपःप्रयोजनं निराकर्तुमाह—

**दिवं यदि प्रार्थयसे वृथा श्रमः, पितुः प्रदेशास्तव देवभूमयः ।**
**अथोपयन्तारमलं समाधिना, न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥**

मल्लि०—दिवमिति ॥ दिवं स्वर्गं प्रार्थयसे कामयसे यदि तर्हि श्रमस्तपश्चरणप्रयासो वृथा निष्फलः । यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । तव पितुर्हिमवतः प्रदेशा देवभूमयः स्वर्गपदार्थाः इत्यर्थः । अथोपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसालम् । न कर्तव्यमित्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । तथाहि । रत्नं कर्तृ । नान्विष्यति न मृगयते । ग्रहीतारमिति शेषः । किंतु तद्रत्नं मृग्यते ग्रहीतृभिरिति शेषः । न हि वरार्थं त्वया तपसि वर्तितव्यं किंतु तेनैव त्वदर्थमिति भावः ॥ ४५ ॥

तपः प्रयोजनं निराकर्तुमाह—

चा०—दिवमिति । यदि तपसा दिवं स्वर्गं प्रार्थयसे इच्छसि । तर्हि श्रमः

प्रयासो वृथा यतस्तव पितुर्हिमवतः प्रदेशा एव देवभूमयः। अथो रयन्तारं भर्तारं प्रार्थयसे तर्हि समाधिना तरसा नियमेनालं पूर्यतां। यतो। रत्नं कर्तृ। नान्विष्यतीति ग्रहीतारमित्यर्थात् प्राप्तम्। किं तर्हि। तदेव रत्नमन्यैर्ग्रहीतृभिर्मृग्यते। त्वां भार्यां के न वाञ्छन्तीति भावः। समाधिनेति प्रकृत्यादित्वात्तृतीया। अलं शब्दोत्र निषेधार्थो न पर्याप्त्यर्थः॥ ४५॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह—

**निवेदितं निश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते।**
**न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम्॥ ४६॥**

मल्लि०—निवेदितमिति। सोष्मणा निश्वसितेन निश्वासवायुना निवेदितम्। चिन्तानुभावेनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेनेत्याह-मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति। कुतः? ते तव। 'कृत्यानां कर्तरि वा' इति षष्ठी। प्रार्थयितव्यः प्रार्थयितुमर्हः एव न दृश्यते। प्रार्थितदुर्लभः प्रार्थितो यो दुर्लभः स कथं भविष्यति? नास्त्येवेत्यर्थः॥ ४६॥

वरं कामयस इति वचनश्रवणशमनं विश्वासं परीक्ष्याह—

चा०—निवेदितमिति। सोष्मणोष्णेन निःश्वसितेन किं निवेदितं सूचितं तवाभिलषितं। तथापि मे मनः संशयमेव गाहते प्राप्नोति। ते त्वया प्रार्थयितव्योऽभिलषणीय एव न दृश्यते। यद्यस्तीत्याह। तर्हि प्रार्थितदुर्लभः कथं पुनर्भविष्यति। रत्नभूतत्वाद्भवत्या इतिभावः॥ ४६॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह—

**अहो! स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते।**
**उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः॥ ४७॥**

मल्लि०—अहो इति। अहो चित्रम्। तवेप्सित आप्तुमिष्टो युवा कोऽपि स्थिरः कठिनः। वर्तत इति शेषः। कुतः। यो युवा चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धना अत एव लम्बिन्यस्ताः श्लथलम्बिनीः कलमाः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्गला जटा उपेक्षते यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः॥ ४७॥

चा०—अहोस्थिर इति। स तवेप्सितस्तवेष्टः कोप्यद्भुतस्वरूपो युवा तरुणः अहो आश्चर्यं स्थिरो निश्चलः। यः चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गतेऽवतंसोत्पलरहिते कपोलदेशे श्लथबन्धिनीः शिथिलबन्ध जटा उपेक्षते। कीदृशीः। कलमाग्रपिङ्गलाः॥ ४७॥

**मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।**
**शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥४८॥**

**मल्लि०**—मुनिव्रतैरिति । मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रमत्यन्तं कर्शितां कृशीकृतां दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदत्वाच्च श्यामीकृतानि विभूषणस्थानानि यस्यास्तां तथोक्ताम् । अत एव दिवाहनि शशाङ्करेखामिव स्थितां त्वां पश्यतः सचेतसो जीवतः कस्य पुंसो मनो न दूयते न परितप्यते । अपि तु सर्वस्यैवेत्यर्थः ॥ ४८ ॥

**चा०**—मुनिव्रतैरिति । भो पार्वति ! मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रकर्शितां भृशकृशां त्वां पश्यतः सचेतसः सहृदयस्य कस्य मनो हृदयं न विदीर्यते न स्फुटति ! अपितु सर्वस्य । त्वां कीदृशीं । दिवाकराप्लुष्टविभूषणास्पदां दिवाकरेण प्लुष्टानि दग्धानि भूषणान्यलंकारस्थानानि यस्यास्तां । त्वां कामिव । दिने शशाङ्कलेखामिव । दीर्यतइति कर्मकर्तर्यात्मनेपदम् ॥ ४८ ॥

**अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।**
**करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥४९॥**

**मल्लि०**—अवैमीति । तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्यगर्वेण कर्त्रा । वञ्चितं विप्रलब्धमवैमि वेद्मि । यः प्रियश्चतुरं मधुरमवलोकत इति चतुरावलोकिनोऽरालपक्ष्मणः कुटिलरोम्णः । 'अरालं वृजिनं जिह्मम्' इत्यमरः । अस्य त्वदीयस्य चक्षुष आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति दृष्टिपथं न गच्छतीत्यर्थः । तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः ॥ ४९ ॥

**चा०**—अवैमीति । हे गौरि ! तव प्रियं सौभाग्यमदेन गर्वेण वञ्चितमहमवैमि जाने । यः प्रियो यस्य तव चक्षुषो नेत्रस्य आत्मीयं स्वं वक्त्रं लक्षविषयं न करोति । कीदृशस्य चक्षुषश्चतुरावलोकिनः चतुरेण निरीक्षणविशेषेणावलोकितुं शीलं यस्य तत्तस्य । पुनः कीदृशस्य । अरालपक्ष्मणः अरालानि कुटिलानि पक्ष्माणि यस्य तस्य । त्वदवलोकनेनैव तस्य जन्म सफलं । य आत्मानं त्वां न दर्शयति स निर्भाग्य एवेति भावः ॥ ४९ ॥

**कियच्चिरं श्राम्यसि गौरि ! विद्यते ममापि पूर्वाश्रमसंचितं तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥५०॥**

**मल्लि०**—कियदिति ॥ हे गौरि, कियत्किंप्रमाणकम् । किमवधिकमित्यर्थः । चिरं श्राम्यसि तपस्यसि । अत्यन्तसंयोगे द्वितीया । ममापि पूर्वाश्रमः प्रथमाश्रमो ब्रह्मचर्याश्रमस्तत्र संचितं संपादितं तपो विद्यते

अर्धश्चासौ भागश्च तेन तस्य तपसोऽर्धभागेनैकदेशेन काङ्क्षितमिष्टं वरमुपयन्तारं लभस्व। तं वरं साधु सम्यग्वेदितुं ज्ञातुमिच्छामि। यद्यसौ योग्यो भवति तदा संमतिरिति भावः॥ ५०॥

चा०—कियच्चिरमिति। हे गौरि! कियच्चिरं कियतं समयं श्राम्यसि तपस्यसि। ममापि पूर्वाश्रमसंचितं पूर्वाश्रमो ब्रह्मचर्यं तेनोपार्जितं तपः विद्यते। तदर्द्धभागेन तस्य तपसोऽर्द्धभागेन काङ्क्षितं वाञ्छितं वरं लभस्व प्राप्नुहि। तं च वरं साधु सम्यग् वेदितुं ज्ञातुमिच्छामि। यदि स योग्यो भवति तदा ममापि सम्मतिरितिभावः॥ ५०॥

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम्।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत॥ ५१॥

मल्लि०—इतीति। इतीत्थं द्विजन्मना द्विजेन प्रविश्यान्तर्गत्वा। आप्तवद्रहस्यमुद्घाट्येत्यर्थः। अभिहितोक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था नाभूत्। लज्जयेति शेषः। अथोऽनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं विवर्तितं विचालितमनञ्जनं व्रतवशाद्वर्जितकज्जलं नेत्रं यस्मिन्कर्मणि तत्तथैक्षत नेत्रसंज्ञयैव प्रत्युत्तरं वाचयांचकारेत्यर्थः॥ ५१॥

चा०—इतीति। द्विजन्मना विप्रेण प्रविश्येतीत्थमभिहितोक्ता सा गौरी मनोगतं वरं शंसितुं वक्तुं न शशाक न समर्थाऽभूत्। अथानन्तरं परिपार्श्ववर्तिनीं समीपस्थां सखीं विवर्तितानञ्जननेत्रं यथा स्यात् विवर्तितं चालितमनञ्जनं कज्जलरहितं नेत्रं यस्मिन् कर्मणि तत्तथैक्षतादृक्षीत्। त्वं वक्ष्वेति नेत्रचालनेन सखीं प्रेरितवतीत्यर्थः॥ ५१॥

सखी तदीया तमुवाच वर्णिनं निबोध साधो! तव चेत्कुतूहलम्।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः॥ ५२॥

मल्लि०—सखीति॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम्। 'वर्णः प्रशस्तः' इति क्षीरस्वामी। सोऽस्यास्तीति वर्णी तं ब्रह्मचारिणम्। 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः। उवाच ब्रूते स्म। किमिति। हे साधो विद्वन्! तव कुतूहलं चेत्। श्रोतुमस्तीति शेषः। तर्हि निबोधाव-गच्छ। आकर्णयेत्यर्थः। 'बुध अवगमने' इति धातोर्भौवादिकाल्लोट्। श्रोतव्यं किं तदाह— यस्मै लाभायेदं यदर्थम्। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्' इति वार्तिकनियमात्क्रियाविशेषणम्। एतया पार्वत्याम्भोजं पद्ममुष्णवारणमातपत्रमिव वपुः शरीरं तपःसाधनं कृतम्। तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः॥ ५२॥

चा०—सखीति। तदीया तस्या इयं तदीया सखी तं वर्णिनं ब्रह्मचारिणमुवाच। भो साधो! चेत्तव कुतूहलं तर्हि निबोध शृणु। यदर्थं यस्यार्थमेतया गौर्या वपुस्तपस्साधकं कृतं। किमिव। उष्णवारणं अम्भोजमिव। पद्मस्यातपवशाद्यथा म्लानिमा स्यात्तथा वपुषस्तपसेत्यर्थः। 'वर्णी स्याद्‌ब्रह्मचारिणि' इति हैमः ॥५२॥

'दृङ्मनःसङ्गसंकल्पो जागरः कृशतारतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश॥' इति। तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति 'इयम्' इत्यादिभिः षड्भिः श्लोकैः—

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी।**
**अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥**

मल्लि०—इयमिति। मानिनीन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवतीयं पार्वत्यधिश्रियोऽधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादींश्चतसृणां दिशामीशानिन्द्रयमवरुणकुबेरान्। 'तद्धितार्थे–'त्यादिनोत्तरपदसमासः। अवमत्यावधूय मदनस्य निग्रहान्निबर्हणाद्धेतोः। अकामुकत्वादित्यर्थः। रूपेण सौन्दर्येण हार्यो वशीकरणीयो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम्। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति साधु। पतिं भर्तारमाप्तुमिच्छति। एतेन संकल्पावस्था सूचिता ॥ ५३ ॥

चा०—इयमिति। इयं गौरी अधिश्रियो बहुलक्ष्मीकान् महेन्द्रप्रभृतीन् शक्रादीन् चतुर्दिगीशानवमत्य त्यक्त्वा मदनस्य निग्रहात् भस्मीकरणादरूपहार्यं न सौन्दर्यवश्यं पिनाकपाणिं शम्भुं पतिमाप्तुमिच्छति ॥ ५३ ॥

**असह्यहुंकारनिवर्तितः पुरा [1]पुरारिमप्राप्तमुखः शिलीमुखः।**
**इमां हृदि व्यायतपात[2]मक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥ ५४ ॥**

मल्लि०—असह्येति। पुरा पूर्वमसह्येन सोढुमशक्येन हुङ्कारेण रौद्रेण निवर्तितः। अतएव पुरारिं हरमप्राप्तमुखोऽप्राप्तफलो विशीर्णमूर्तेर्नष्टशरीरस्यापि पुष्पधन्वनः कामस्य शिलीमुखो बाण इमां पार्वतीं हृदि व्यायतः। सुदूरावगाढ इति यावत्। तादृक्पातः प्रहारो यस्मिन्कर्मणि तत्तथाक्षिणोदकर्शत्। दग्धदेहस्यापि मार्गणो लग्नः। 'मृदुः सर्वत्र बाध्यते', इति भावः। अनेन 'विवृण्वती शैलसुतापि भावम्' (३।६८) इत्यत्रोक्तं चक्षुः प्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितयानूद्य कार्श्यावस्था सूचिता।

चा०—असह्येति। पुष्पधन्वनः कामस्य शिलीमुखो बाणोऽसह्यहुंकारनिवर्तितो दुःसहेन हुंकारेण परावर्तितः स्मरारिं शम्भुमप्राप्तमुखोऽप्राप्तं मुखमग्रभागो तस्य स

---

१. स्मरारिम्. २. अक्षणोत्.

इमां व्यायतपातं दीर्घपातं यथा स्यात् तथा हृद्यक्षिणोद्धन्तिस्म। कीदृशस्य पुष्पधन्वनो विशीर्णमूर्त्तेरपि दाहाद्गलितवपुषोऽपि ॥ ५४ ॥

**तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥ ५५ ॥**

मल्लि०—तदेति। तदेति छेदः। तदाप्रभृति। तत आरभ्येत्यर्थः। सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणाप्रभृतियोगे पञ्चमीनियमात्। पितुर्गृहे उन्मदनोत्कटमन्मथा ललाटस्थालंकारो ललाटिका तिलकः। 'कर्णं ललाटात्कनलंकारे' इति कन्प्रत्ययः। तस्याश्चन्दने धूसरा धूसरवर्णा अलकाश्चूर्णकुन्तला यस्याः सा तथोक्ता बाला पार्वती जातु कदाचिदपि तुषारसंघातास्तुषारघनास्त एव शिलास्तासां तलेषूपरिभागेष्वपि निर्वृतिं सुखं न लभते स्म। एतेनारत्यपरसंज्ञा विषयविद्वेषाव्यवस्था द्वादशावस्थापक्षे संज्वरश्च व्यज्यते ॥ ५५ ॥

चा०—तदेति। तदा प्रभृति तत आरभ्य पितुर्गृहेऽपि बाला जातु कदाचित्तुषारसंघातशिलातलेष्वपि निर्वृतिं सुखं न लभतेस्म। कीदृशी। ललाटिकाचन्दनधूसरालका सुवर्णघटितललाटालङ्कारविशेषस्तस्याश्चन्दनं तेन धूसरा अलका यस्याः सा। तथा उन्मदना कामार्ता ॥ ५५ ॥

**उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरियम्।**
**अनेकशः किंनरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥ ५६ ॥**

मल्लि०—उपात्तेति ॥ पिनाकिनः शंभोश्चरिते त्रिपुरविजयादिचेष्टित उपात्तवर्णे प्रारब्धगीतक्रमे। 'गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते' इति हलायुधः। साबष्पे गद्गदे कण्ठे स्खलितैर्विशीर्णैः पदैः सुप्तिङन्तरूपैः करणैः वनान्ते संगीतेन निमित्तेन सखीर्वयस्याः। किन्नरराजकन्यका अनेकशो बहुशोऽरोदयदश्रुमोक्षमकारयत्। हरचरितगानजनितमदनवेदनामेनां वीक्ष्य किंनर्योऽपि रुरुदुरिति भावः। अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनः पुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति। द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते। 'प्रलापो गुणकीर्तनम्' इत्यालंकारिकाः ॥ ५६ ॥

चा०—उपात्तेति। इयं गौरी पिनाकिनः शम्भोश्चरिते त्रिपुरवधादिके कर्मण्युपात्तवर्णे सति। उपात्ताः स्वीकृता वर्णा यत्र तस्मिन् गीयमान इत्यर्थः। सबाष्पकण्ठैः स्खलितैः सबाष्पः कण्ठो येषु तैरेवाऽत एव स्खलितैः पदैर्वचोभिर्वनान्ते सङ्गीतसखीरुपवनं सङ्गीतसहायकर्त्रीः किंनरराजकन्यकाः किंनरीरनेकशो बहुवारमरोदयत् रोदयतिस्म। हरचरितश्रवणजनितमदनव्यथामेनां वीक्ष्य किंनर्योऽपि रुरुदुरिति भावः ॥ ५६ ॥

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा [1]व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥

मल्लि०—त्रिभागेति ॥ किंचेति चार्थः । शिष्यत इति शेषः । कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेषास्ववशिष्टासु । यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात्तृतीयो भागास्त्रिभागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा 'शतांशः' 'सहस्रांशः' इति । त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः । हे नीलकण्ठ, क्व व्रजसि कुत्र गच्छसीत्यलक्ष्या निर्विषया वाग्वचनं यस्याः सा यथोक्ता तथासत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरोन्मादौ सूचितौ ॥ ५७ ॥

चा०—त्रिभागेति । इयं गौरी त्रिभागशेषासु शिष्यन्ते इति कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेषास्ववशिष्टासु । यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वादवशिष्टप्रभातप्रहरासु क्षणं नेत्रे निमील्य सहसा व्यबुध्यत प्रबुद्धा । कीदृशी । भो नीलकण्ठ ! क्व व्रजसीत्यलक्ष्यवागप्रकटवचना । तथा असत्यकण्ठार्पितबाहुबन्धनाऽसत्यकण्ठेऽर्पितं बाहुबन्धनं यया सा । अस्या विरहवशान्निद्रैव नायाति । यद्यायाति कदाचित्तर्हि स्वप्नेपि शंभुमेव पश्यतीति भावः ॥ ५७ ॥

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः । तत्र स्वप्नसंदर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

[2]यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥

मल्लि०—यदेति ॥ यदा यत इत्यर्थः । यदेति हेतावित्युक्त्वा गणव्याख्यानेऽस्योदाहृतत्वात् । त्वं बुधैर्मनीषिभिः सर्वगत सर्वव्यापीत्युच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागिणमित्यर्थः । इमं जनम् । इममित्यात्मनिर्देशः । कथं न वेत्सि न जानासीति मुग्धया मूढया अकिंचित्करश्चित्रगतोपालम्भ इत्यजानानयेत्यर्थः । तया स्वहस्तेनोल्लिखितश्चित्रे लिखितश्चन्द्रशेखरो रहस्येकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेपमुक्तश्च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव ५८

चा०—यत इति । मुग्धयैतया रहसि स्वहस्तलिखितश्चन्द्रशेखरः शंभुरित्युपालभ्यत । शंभवे उपालम्भो दत्त इत्यर्थः । इति किम् । यतः कारणाद्बुधैस्त्वं

1. विबुध्यते. 2. यतः,

सर्वगतो विश्वव्यापक उच्यसे । भावस्थमिमं जनं मल्लक्षणं कथं न वेत्सि । भावो वासना तत्र तिष्ठतीति ॥ ५८ ॥

**यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं [1]विचिन्वती ।**
**तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥**

मल्लि० – यदेति ॥ जगत्पतेस्तस्येश्वरस्याधिगमे प्राप्तावन्यं विधिमुपायं विचिन्वती मृगयमाणा यदा नापश्यत्तदेयं पार्वती गुरोः पितुरनुज्ञयास्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥ ५९ ॥

चा०—यदेति । तस्य जगत्पतेः शंभोरधिगमे प्राप्तौ विचिन्वती पर्यालोचयन्त्यसौ गौरी यदान्यं विधिं नापश्यन्नाद्राक्षीत् तदा पितुरनुज्ञयाऽस्माभिः सह तपसे तपोर्थं तपोवनं प्रपन्ना प्राप्ता ॥ ५९ ॥

**द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपः साक्षिषु [2]दृष्टमेष्वपि ।**
**न च प्ररोहाभिमुखोऽपि[3] दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ६०॥**

मल्लि०—द्रुमेष्विति ॥ सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु । स्वयं रोपितेष्वित्यर्थः । तपसः साक्षिषु साक्षाद्द्रष्टृष्वेषु द्रुमेष्वपि फलं दृष्टम् लब्धम् । जनितमित्यर्थ । अस्याः पार्वत्याः शशिमौलिसंश्रयश्चन्द्रशेखरविषयो मनोरथस्तु प्ररोहाभिमुखोऽङ्कुरोन्मुखोऽपि न दृश्यते । 'प्ररोहस्त्वङ्कुरोऽङ्कुर.' इति वैजयन्ती । स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरस्य नांकुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥ ६० ॥

कियच्चिरमित्यस्योत्तरमाह —

चा०— द्रुमेष्विति । सख्या गौर्या स्वयं कृतजन्मसु कृतमारोपणमेव जन्म येषां तेषु । तपःसाक्षिषु एषु द्रुमेष्वपि फलं बद्धं जातं । अस्याः शशिमौलिसंश्रयः शशिमौलिः शंभुः संश्रयो यस्य स मनोरथः प्ररोहाभिमुखोऽभिलाषांकुरः संमुखोऽपि न दृश्यते ॥ ६० ॥

**न वेद्मि स प्रार्थितदुर्लभः कदा सखीभि[4]रस्रोत्तरमीक्षितामिमाम् ।**
**तपः कृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥**

मल्लि० – नेति ॥ प्रार्थितः सन्दुर्लभः स देवस्तपःकृशां तपसा कृशां क्षीणामत एव सखीभिरस्रोत्तरमश्रुप्रधानं यथा भवति तथेक्षितामिमां नः सखीं तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीडिताम् । 'वृष्टिर्वर्षं तद्विघातोऽवग्रहावग्रहौ समौ' इत्यमरः । अवग्रहः । वर्षप्रतिबन्ध इत्यर्थः । सीतां कृष्टभुवम् । 'सीता लाङ्गलपद्धतिः' इत्यमरः । वृषा वासव इव । 'वासवो वृत्रहा वृषा' इत्यमरः । कदाभ्युपपत्स्यते कदानुग्रहिष्यति न वेद्मि । अत्र

१. वितन्वती, २. बद्धम्, ३. न, ४. अस्राकुलम्,

वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्नं पदं वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ।। ६१ ।।

चा०—न वेद्मीति । प्रार्थितोपि दुर्लभः स शंभुस्तपःकृशां क्षीणामिमां सखीं गौरीं कदाभ्युपपत्स्यते सम्मुखो भविष्यति न वेद्मि । कीदृशीमिमां । सखीभिरस्रोत्तरं व्याकुलं यथा स्यात्तथेक्षितां । यथा वृषेन्द्रस्तदवग्रहक्षतां तेनेन्द्रेण कृतो योऽवग्रहो वृष्टिविघातस्तेन क्षतां शुष्यन्तीं । क्षेत्रभुवं प्रति वृष्ट्याभिमुखो भवति ।। ६१ ।।

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ।। ६२ ।।

मल्लि०—अगूढेति । इङ्गितज्ञया पार्वतीहृदयाभिज्ञया । 'इङ्गितं हृद्गतो भावः' इति सज्जनः । तया गौरीसख्येत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा निवेदितो ज्ञापितो निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी सुन्दरो विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किंतु नैष्ठिकत्वविशेषणेन कामित्वविरोधः । अथवा देवस्यालौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः । अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् । अयि गौरि ! अयीति कोमलामन्त्रणे । इदं त्वत्सखीभाषितमेवम् । सत्यं किमित्यर्थः । परिहासः केलिर्वा । 'द्रवकेलिपरीहासाः' इत्यमरः इत्येवमुमामपृच्छत्पृष्टवान् ।। ६२ ।।

चा०—अगूढेति । इङ्गितज्ञयाऽभिप्रायज्ञया सख्या अगूढः स्पष्टः सद्भावः परमार्थो यत्र कर्मणि तत् । एवं यथा स्यात्तथा निवेदितेऽभिहिते सति अव्यञ्जितहर्षलक्षणोऽव्यञ्जितान्यप्रकटितानि हर्षलक्षणानि स्वोत्कर्षवर्णनजनितहर्षचिह्नानि रोमाञ्चादीनि येन स नैष्ठिकसुन्दरो नैष्ठिको ब्रह्मचारी स चासौ सुन्दरश्च विप्रो भो गौरि ! इदं सख्योक्तमेव सत्यमुत परिहासो नर्मवाक्यमित्युमां गौरीमपृच्छदप्राक्षीत् ।। ६२ ।।

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम्[1] ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ।। ६३ ।।

मल्लि०—अथेति । अथानन्तरमद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ संपुटीकृतांगुलौ । अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदादिति वामनः । तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकार्पयन्त्यामुञ्चती कथंचिन्महता कष्टेन चिरव्यव-

१. मण्डलम्,

स्थापितवाक्चिरेण स्वीकृतवाक्। एतेन लज्जोपरोधो व्यज्यते। मिताक्षरं परिमितवर्णं यथा तथाभाषत बभाषे॥ ६३॥

चा०—अथाग्रहस्त इति। अनन्तरमद्रेस्तनया गौरी मुकुलीकृताङ्गुली मुकुलीकृता संकुचिता अङ्गुलयो यस्य तस्मिन्नग्रहस्ते स्फटिकाक्षमण्डलं स्फटिकाक्षमालां समर्पयन्ती संयोजयन्ती कथंचित्कृच्छ्रेण मिताक्षरं स्तोकाक्षरं यथा स्यात्तथाऽभाषताऽवोचत्। कीदृशी। चिरव्यवस्थापितवाक् चिरेण व्यवस्थापिता वाग् यया सा॥ ६३॥

किमुवाचेत्याह—

यथा श्रुतं वेदविदां वर त्वया जनोयमुच्चैः पदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते॥ ६४॥

मल्लि०—यथेति। हे वेदविदांवर वैदिकश्रेष्ठ, त्वया यथा श्रुतं सम्यक् श्रुतम्। श्रुतार्थमेवाह—अयं जनः। स्वयमित्यर्थः। उच्चैः पदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घन आक्रमण उत्सुकः। किमत्रायुक्तमित्यत्राह—इदं तपस्तदवाप्तेस्तस्योच्चैः पदस्यावाप्तेः प्राप्तेः साधनं किलेत्यलीके। अतितुच्छत्वादसाधकमेवेत्यर्थः। तर्हि त्यज्यतामित्याशंक्य दुराशा मां न मुञ्चतीत्याशयेनाह—मनोरथानां कामानामगतिरविषयो न विद्यते। न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः॥ ६४॥

चा०—यथेति। भो वेदविदां वर! त्वया यथाश्रुतं तथेति शेषः। यतोऽयं जन उच्चैः पदलङ्घनोत्सुकः उच्चस्थानस्याक्रमणेनोत्कण्ठितः। इदं तपस्तदवाप्तिसाधनं तस्येश्वरस्यावाप्तिस्तस्याः कारणं। यतो मनोरथानां कुत्राप्यगतिर्नास्ति। किन्तु सर्वत्र धावन्तीत्यर्थः। तदवाप्तीत्यत्र सलज्जत्वान्न शब्दनिर्देशः॥ ६४॥

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे।
अमङ्गलाभ्यासरतिं[1] विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे॥६५॥

मल्लि०—अथेति। अथ वर्णी ब्रह्मचारी। 'वर्णिनो ब्रह्मचारिणः' इत्यमरः। आह। उवाचेत्यर्थः। 'आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः' इत्याह वामनः। किमित्याह—महेश्वरो महादेवो विदितः। मया ज्ञायत इत्यर्थः। बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः तद्योगात्षष्ठी च। येन त्वं प्राग्भग्नमनोरथा कृतेति भावः। पुनरेव त्वं तमीश्वरमर्थयसे तदर्थिन्येव तत्कामैव प्रवर्तसे। तत्प्रभावमनुभूयापीति भावः। अनुसरणे को दोषस्तत्राह—अमङ्गलाभ्यासेऽमङ्गलाचारे रतिर्यस्य तं यथोक्तमीश्वरं विचिन्त्य विचार्य तवानुवृत्तिमनुसरणं कर्तुं नोत्सहे। नानुमन्तुं शक्नोमीत्यर्थः॥ ६५॥

---

२. रतम्,

चा०—अथाहेति । अथानन्तरं वर्णी ब्रह्मचारी आह । किमाह । महेश्वरो विदितः । महेश्वर इति सोल्लुण्ठनं । तदर्थिनी तादृशस्य भस्मीकृतकामस्य महेश्वरस्यार्थिनी त्वं पुनः प्रवर्तसे इति । अमङ्गलाभ्यासरतिं अमङ्गलाभ्यासे श्मशाननिवासादौ रतिर्यस्य तं तादृशं विचिन्त्य विचार्य तवानुवृत्ति समर्ति कर्तुं नोत्सहे नेच्छामि । त्वद्योग्यो भर्ता न भवतीति भावः ॥ ६५ ॥

**अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥**

मल्लि०—अवस्त्विति । अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेशः परं प्रधानं यस्यास्तस्याः संबुद्धिरवस्तुनिर्बन्धपरे पार्वति, आमुक्तमासञ्जितं विवाहे यत्कौतुकं हस्तसूत्रं तद्यस्य स तेऽयं करः । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । वलयीकृताहिना भूषणीकृतसर्पेण शंभोर्महादेवस्य करेण करणभूतेन । तदेव प्रथमं तत्प्रथमम् । अपरिचितत्वादतिभयंकरमिति भावः । तच्च तदवलम्बनं ग्रहणं चेति कथं नु सहिष्यते । न कथंचिदपि सहिष्यत इत्यर्थः । अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥ ६६ ॥

अमङ्गलाभ्यासरतित्वमाह—

चा०—अवस्त्विति । हे अवस्तुनिर्बन्धपरे ! अवस्तुन्यस्थाने निर्बन्धो हठो यस्यास्तत्संबुद्धौ । आमुक्तविवाहकौतुकः आमुक्तं बद्धं विवाहार्थं कौतुकं सूत्रं यस्य सोऽयं ते करः शंभोर्भुजेन तत्प्रथमावलम्बनं तदाद्यग्रहणं कथं नु सहिष्यते । कीदृशेन । वलयीकृताहिना वलयीकृतः कङ्कणीकृतोऽहिः सर्पो यत्र तेन ॥ ६६ ॥

**त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।**
**वधूदुकूलं कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥**

मल्लि०—त्वमेवेति । हे गौरि, त्वमेव स्वयमात्मना । तावदितिमात्रार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेवोदाहृतं च गणव्याख्याने । परिचिन्तय पर्यालोचय । किमिति । कलहंसलक्षणं कलहंसचिह्नम् । 'चिह्नं लक्ष्म च लक्ष्मणम्' इत्यमरः । वध्वा नवोढाया दुकूलं वधूदुकूलम् । 'वधूः स्नुषा नवोढा स्त्री' इति विश्वः । तथा शोणितबिन्दून्वर्षतीति यथोक्तम् । आर्द्रमित्यर्थः । गजाजिनं च कृत्तिवासश्च । तत्पिनाकिन इत्याशयः । एते कदाचिज्जात्वपि योगं संगतिमर्हतो यद्यर्हतः किम् । एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः । पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थि क्रियते । कृत्तिवाससा पाणिपीडने तु दुकूलवारिण्यास्तव कथं संघटिष्यत इति भावः ॥ ६७ ॥

चा०—त्वमेवेति । भो गौरि ! तावत्प्रथमं त्वमेव स्वयमात्मना परिचिन्तय विचारय । कदाचिदपि यदि एते द्वे योगं सम्बन्धमर्हतः प्राप्नुतः । एते के । कलहंसलक्षणं कलहंसो लक्षणं चिह्नं यस्य तत्तादृशं । वधूदुकूलं पट्टवस्त्रं क्व । शोणितविन्दुवर्षि शोणितविन्दून् वर्षतीति गजाजिनं गजचर्म च क्व ॥ ६७ ॥

**चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम [1]तवानुमन्यते ।**
**अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥**

मल्लि०—चतुष्केति । चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रतावकीर्णयोर्न्यस्तयोः । कुसुमास्तृतदिव्यभवनभूसंचारोचितयोरित्यर्थः । तव पादयोरलक्तकाङ्कानि लाक्षारञ्जितानि पदानि पादाकाराणि पादन्यासचिह्नानि । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोः' इति विश्वः । विकीर्णा विक्षिप्ताः केशाः शवशिरोरुहा यासु तासु विकीर्णकेशासु । 'अतरस्थं तत्र दृष्टं च' इति वचनात् । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीष् । परेतभूमिषु प्रेतभूमिषु । श्मशानेष्वित्यर्थः । परोऽपि शत्रुरपि को नामानुमन्यते । न कोऽपीत्यर्थः । नामेति कुत्सायाम् । पिनाकपाणिग्रहणे तस्य परेतभूसंचारित्वेन साहचर्यात्तवापि तत्र संचारोऽवश्यंभावीति भावः ॥ ६८ ॥

चा०—चतुष्केति । भो पार्वति ! चतुष्कपुष्पप्रकरावकीर्णयोश्चतुःशालाख्यग्रहभेदे यः पुष्पप्रकरस्तत्रावकीर्णयोर्विक्षिप्तयोस्तत्र संचरणोचितयोरित्यर्थः । तव पादयोश्चरणयोरलक्तकाङ्कानि अलक्तो लाक्षारसस्तस्याङ्कं येषु तादृशानि पदानि न्यासान् । विकीर्णकेशासु विकीर्णाः प्रसृताः केशा अस्थीनि च यासु तादृशीषु परेतभूमिषु श्मशानभूमिष्वित्यर्थः । परोपि शत्रुरपि को वानुमंस्यतेऽनुज्ञास्यति ॥ ६८ ॥

**अयुक्तरूपं किमतः परं [2]वद त्रिनेत्रवक्षः सुलभं तवापि यत् ।**
**स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे[3] पदं चिताभस्मरजः करिष्यति ॥६९॥**

मल्लि०—अयुक्तेति । त्रिनेत्रवक्षः । त्र्यम्बकालिङ्गनमित्यर्थः । तव तत्संबन्धितया सुलभमपि सुप्रापं च । भवतीति शेषः । तवेति शेषे षष्ठी । 'न लोकाव्यय–'इत्यादिना कृद्योगगलक्षणषष्ठ्या निषेधात् । अतः परमस्मात्त्रिनेत्रवक्षोलाभादन्यदयुक्तरूपमत्यन्तायुक्तं किं वद । न किंचिदित्यर्थः । 'प्रशंसायां रूप्यप्' इति रूपप्प्रत्ययः । कुतः । यद्यस्मात्कारणाद्धरिचन्दनास्पदे हरिचन्दनस्यास्पदे स्थानभूतेऽस्मिन्स्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णं कर्तृ । पदं करिष्यति पदं निधास्यति । भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥ ६९ ॥

---

१. अनुमंस्यते, २. भवेत्, ३. अङ्किते,

चा०—अयुक्तेति। अतःपरमस्मात्परं किमयुक्तरूपमनुचितं भवेत्। तद्वद। यत् त्रिनेत्रवक्षःसुलभं शंभोर्वचसः सुलभं योग्यं चिताभस्मरजः कर्तृ हरिचन्दनास्पदे कुंकुमाङ्किते तवाप्यस्मिन् स्तनद्वये पदं स्थानमालिङ्गनवशात्करिष्यति ॥ ६९ ॥

**इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥**

मल्लि०—इयमिति। इयं च ते तव पुरत आदावेवान्या विडम्बना। परिहास इत्यर्थः। का सेत्यत्राह—ऊढया परिणीतया। वहेः कर्मणि क्तः। वारणराजहार्यया त्वयाधिष्ठितमारूढं वृद्धमुक्षाणं वृद्धोक्षम्। 'अचतुर-' इत्यादिना निपातः। विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखो भविष्यत्युपहसिष्यति यत्। इयमिति पूर्वेण सबन्धः। स्मेरेति नमिकम्पि-स्म्यजस-' इत्यादिना रप्रत्ययः ॥ ७० ॥

चा०—इयमिति। भो गौरि! पुरतोऽग्रतस्ते तवान्या विडम्बना परिहासः यत्कारणात् ऊढया विवाहितयाऽधिष्ठितमारूढं वृद्धवृषभं विलोक्य महाजनः स्मेरमुखो हसितवक्त्रो भविष्यति। कीदृश्या। वारणराजहार्यया वारणराजेनैरावणेन नेतव्यया। इन्द्रहस्त्यारोहणयोग्ययेत्यर्थः। वृद्धश्चासावुक्षश्चेति। 'अचतुरविचतुर०' इत्यादिना निपातितः ॥ ७० ॥

**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया [1]पिनाकिनः।**
**कला च साकान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥**

मल्लि०—द्वयमिति। पिनाकिन ईश्वरस्य समागमप्रार्थनया प्राप्तिकामनया। क्रियमाणयेति शेषः। संप्रति द्वयं शोचनीयतां शोच्यत्वं गतम्। किं तदाह—सा प्रागेव हरशिरोगता। अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा। तदुक्तं काव्यप्रकाशे—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते' इति। कान्तिमती। नित्ययोगे मतुप्। कलावतश्चन्द्रस्य कला षोडशो भागश्चास्य लोकस्य नेत्रकौमुदी। नेत्रानन्दिनीत्यर्थः। त्वं च। कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः। प्रागेकैव शोच्या। संप्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः। शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥ ७१ ॥

चा०—द्वयमिति। भो गौरि! कपालिनः शम्भोः समागमप्रार्थनया समागमाभिलाषेण सम्प्रति द्वयं शोचनीयतां दीनतां गतं प्राप्तं। किं तद्द्वयमित्याह। कलावतश्चन्द्रमसः कान्तिमती दीप्तिमती शम्भोः शिरसि वर्तमाना कला च। अस्य लोकस्य नेत्रकौमुदी चन्द्रिका त्वं च। कलावत इति विदग्धस्येत्यर्थान्तरम् ॥७१॥

---

१. कपालिनः,

'कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥' इति लोकानामाभाषणम्। तत्र किंचिदपि नास्तीत्याह—

**वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु।**
**वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥**

मल्लि०—वपुरिति। वपुस्तावदस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य तद्विरूपाक्षम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच् प्रत्ययः। वैरूप्यं च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्यवार्तापीत्यर्थः। अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता। कुलमपि न ज्ञायत इत्यर्थः। 'अलक्षिता जनिः' इति पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता। 'जनिरुत्पत्तिरुद्भवः' इत्यमरः। वसु वित्तं दिगम्बरत्वेनैव निवेदितम्। नास्तीति ज्ञापितमित्यर्थः। यदि वित्तं भवति तदा कथं दिगम्बरो भवति। अतो ज्ञेयं निर्धनोऽयमिति। किं बहुना हे बालमृगाक्षि पार्वति, वरेषु वोढृषु। 'वरौ जामातृ वोढारौ' इति विश्वः। यद्रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत्त्रिलोचने त्र्यम्बके व्यस्तम्। एकमपि समस्तं मा भूदिति भावः। अस्ति किम्। नास्त्येवेत्यर्थः ॥ ७२ ॥

चा०—वपुरिति। बालमृगस्याक्षिणी इवाक्षिणी यस्यास्तत्संबुद्धौ वरेषु रूपकूलवित्तादि यदपेक्ष्यते। तद्व्यस्तमेकमपि त्रिलोचने हरेऽस्ति स्वयं विचारय। समस्तं तिष्ठतु। यतोस्य शंभोर्वपुर्विरूपवत्त्वात्। पिंगलत्वाच्च। कीदृशं वपुः। विरूपाक्षं विरूपं भीषणमक्षि तृतीयनेत्रं यस्य तत्। अलक्षमज्ञेयं जन्म यस्य तस्य भावः। तस्य कुलमपि न ज्ञायत इत्यर्थः। दिगम्बरत्वेन नग्नतया वसु धनमपि निवेदितं सूचितमिति भावः ॥ ७२ ॥

**निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा।**
**अपेक्ष्यते[1] साधुजनेन वैदिकी श्मशानशूलस्य न[2] यूपसत्क्रिया ॥ ७३ ॥**

मल्लि०—निवर्तयेति। अस्मादसदीप्सितादनिष्टमनोरथान्मनो निवर्तय निवारय। सा पूर्वोक्ता विधा प्रकारो यस्य तथोक्तः। अमङ्गलशील इत्यर्थः। क्व। महदन्तरमित्यर्थः। पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वं च क्व। अतो न तवायमर्हं इत्यर्थः। तथाहि। साधुजनेन। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः। श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोर्वैदिकी वेदोक्ता। यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारो यूपसत्क्रिया

१. अपेक्षते. २. हि,

नापेक्ष्यते नेष्यते । यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटस इति तात्पर्यार्थः ॥ ७३ ॥

चा०—निवर्तयेति । अस्मादसदीप्सितादसाध्वभिलाषान्मनश्चित्तं निवर्तय । यतस्तद्विधः सा पूर्ववर्णिता श्मशानवासादिरूपा विधा प्रकारो यस्य स हरः क्व । पुण्यं रम्यं लक्षणं यस्याः सा त्वं क्व । अत्यन्तासङ्गतिद्योतकौ क्वशब्दौ । यतः साधुजनो वध्यस्थाने चोरनिग्रहार्थं निखातस्य शूलस्य वैदिकीं वेदोक्तां यूपसत्क्रियां यज्ञयूपस्य सत्क्रिया तां नापेक्षते न कुरुते । यथा यज्ञयूपसंस्कारा शूलं नार्हन्ति । तथा दुर्भगो हरस्त्वत्सम्बन्धेन संस्कारं नार्हतीत्यर्थः ॥ ७३ ॥

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चित[1]भ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥

मल्लि०—इतीति । इत्येवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेनाधरेणाधरोष्ठेन लक्ष्योऽनुमेयः कोपः क्रोधो यस्यास्तथोक्तया तया पार्वत्योपान्तलोहिते प्रान्तरक्ते विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिंस्तत्तथा । सभ्रूभङ्गमित्यर्थः । तिर्यक्साच्याहिते निहिते अनादरात्तिर्यगेक्ष्यतेत्यर्थः ॥ ७४ ॥

चा०—इतीति । इत प्रतिकूलवादिनि प्रतिकूलमप्रियं वदतीति तादृशे द्विजातौ विप्रे सति तया विलोचने नेत्रे तिर्यगाहिते क्षिप्ते । कीदृशे नेत्र उपान्तलोहिते प्रान्तरक्ते । विकुञ्चिता कुटिलीकृता भ्रूलता यत्र तत् । एवं यथा स्यात्तथा । कीदृश्या तया । प्रवेपमानाभ्यामधराभ्यां लक्ष्यः कोपो यस्यास्तया ॥ ७४ ॥

उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ७५ ॥

मल्लि०—उवाचेति । अथैनं ब्रह्मचारिणमुवाच च । किमिति । परमार्थतस्तत्त्वतो हरं न वेत्सि न जानासि नूनम् । कुतः । यतो मामेवमुक्तया रीत्यात्थ ब्रवीषि । 'ब्रुवः पञ्चानामादितः-इति रूपासीद्धिः । अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह मन्दा मूढाः मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । लोकसामान्यमितरजनसाधारणं न भवतीत्यलोकसामान्यमचिन्त्यहेतुकं दुर्बोधकारणकं महात्मनां चरितम् । द्विषन्ति हेत्वपरिज्ञानात् दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥ ७५ ॥

चा०—उवाचेति । न केवलं नेत्रे तस्मिन् तिर्यक्क्षिप्ते एवं वर्णिनमुवाच च । परमार्थतस्त्वं हरं न वेत्सि यतो मामेवमात्थ ब्रूषे । शंभोरज्ञाने हेत्वन्तरमाह । यतो मन्दा मूर्खा महात्मनामुत्तमानां चरितं द्विषन्ति निन्दन्ति । कीदृशं । अलोकसामान्यं

१. भ्रूलतया,

सर्वोत्कृष्टं। पुनः कीदृशमचिन्त्यहेतुकं लोकैरचिन्त्यो ज्ञेयो हेतुर्यस्य तत्तादृशम् ॥ ७५ ॥

संप्रति 'अमङ्गलाभ्यासरतिम्' (५।६५) इत्याद्युक्तं दूषणजातम् 'विपद्' इत्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा।**
**जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥ ७६ ॥**

मल्लि०—विपदिति। विपत्प्रतीकारपरेण। अनर्थपरिहारार्थिनेत्यर्थः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः। भूतिसमुत्सुकेनैश्वर्यकामेन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते। शरणे रक्षणे साधुः शरण्यः। 'तत्र साधुः' इति यत्प्रत्ययः। 'शरणं गृहरक्षित्रोः' इत्यमरः। जगतः शरण्यस्तस्य जगच्छरण्यस्य निराशिषो निरभिलाषस्य सतः शिवस्य। आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयोः' इति शाश्वतः। आशया तृष्णयोपहतादूषितात्मवृत्तिरन्तःकरणवृत्तिर्येषां तैरेभिर्मङ्गलैः किम्। वृथेत्यर्थः पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते। इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मंगलाचारनिर्बन्धः। तदुभयासंसृष्टस्य तु यथाकथंचिदास्ताम्। को दोष इत्यर्थः। एतेन 'अमंगलाभ्यासरतिम्'। (५।६५) इत्युक्तं प्रत्युक्तम् ॥ ७६ ॥

अधुना तदुक्तं दूषणं दूषयितुमाह—

चा०—विपदिति। विपत्प्रतीकारपरेण विपदो रागादयस्तासां प्रतीकारो नाशस्तत्परेण भूमिसमुत्सुकेनैश्वर्याभिलाषिणा पुंसां मङ्गलं वस्तु निषेव्यते सेव्यते। जगच्छरण्यस्य जगतः शरणे साधो रक्षकस्य तस्य। तथा निराशिषः परिपूर्णत्वादाशंसनेभ्यो निर्गतस्य निष्कामस्य निरभिलाषस्य सतो भवतः शंभोरेभिराशोपहतात्मवृत्तिभिराशयोपहता निन्दितात्मवृत्तिः स्वरूपं येषां तैर्मङ्गलैः किं प्रयोजनमित्यर्थः ॥ ७६ ॥

**अकिंचनः सन्प्रभवः स संपदां [1]त्रिलोकनाथः पितृसद्मगोचरः।**
**स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥ ७७ ॥**

मल्लि०—अकिंचनेति। स हरः। न विद्यते किंचन द्रव्यं यस्य सोऽकिंचनो दरिद्रः सन्। संपदां प्रभवत्यस्मादिति प्रभवः कारणम्। पितृसद्मगोचरः श्मशानाश्रयः सन्। त्रयाणां लोकानां नाथः 'तद्धितार्थे—' इत्यादिनोत्तरपदसमासः। स देवो भीमरूपो भयंकराकारः सन्। शिवः सौम्यरूप इत्युदीर्यते उच्यते। अतः पिनाकिनो हरस्य यथाभूतोऽर्थो

१. स लोकनाथः।

यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदो न सन्ति। लोकोत्तरमहिम्नो निर्लेपस्य यथाकथञ्चिदवस्थानं न दोषायेति भावः। एतेन 'अवस्तुनिर्बन्धपरे' (५।६६) इति परिहृतं वेदितव्यम् ॥ ७७॥

चा०—अकिंचनेति। अकिंचनोपि दरिद्रोऽपि सन् स शंभुः सम्पदां प्रभव उत्पत्तिस्थानम्। पितृसद्मगोचरोपि श्मशानवास्यपि लोकनाथस्त्रैलोक्यस्वामी। भीमरूपोपि स शिव इत्युदीर्यते कथ्यते। अतः परस्परदर्शनात्पिनाकिनः याथात्म्यविदः स्वरूपस्य वेत्तारो न सन्ति ॥ ७७ ॥

देवस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा।**
**कपालि वा स्यादथवेन्दुशेखरं[1] न विश्वमूर्तेरवधार्यते वपुः॥ ७८॥**

मल्लि०—विभूषणेति। विश्वं मूर्तिर्यस्येति विश्वमूर्तेरष्टमूर्तेः शिवस्य वपुः शरीरं भूषणैरुद्भासत इति भूषणोद्भासि स्यात्। पिनद्धभोग्यामुक्तभुजंगमं वा स्यात्। पिनद्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। गजाजिनालम्बि स्यात्। अथवा दुकूलधारि स्यात्। कपालमस्यास्तीति कपालि ब्रह्मशिरः कपालशेखरं वा स्यात् इन्दुशेखरं वा स्यात्। नावधार्यते न निर्धार्यते। सर्वं संभवतीत्यर्थः। एतेन 'त्वमेव तावत्' (५।६७) इति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८ ॥

चा०—विभूषणेति। विश्वमूर्तेर्विरूपस्य शंभोर्वपुरीदृशमेवेति। नावधार्यते न निश्चीयते। विभूषणैरुद्भासत इति। तादृशं। अथवा पिनद्धभोगि पिनद्धा बद्धा भोगिनः सर्पा यत्र तत्। वाथवा गजाजिनालम्बि करिचर्माच्छादितं दुकूलधारि क्षौमावृतं वा। कपालि कपालयुक्तं चन्द्रशेखरं चन्द्रमुकुटं वा। विश्वमूर्तित्वाच्छंभुः कदाचिन्मनोज्ञ इत्यर्थः ॥ ७८ ॥

'अयुक्तरूपं किमतः परं वद (५।६९) इति श्लोकोक्तं प्रत्याह—

**तदङ्ग[2]संसर्गमवाप्य कल्पते ध्रुवं चिताभस्म रजोविशुद्धये।**
**तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते[3] मौलिभिरम्बरौकसाम्॥ ७९॥**

मल्लि०—तदिति॥ शिवस्याङ्गम् तस्य संसर्गमवाप्यासाद्य चिताभस्मैव रजोविशुद्धये कल्पते। अलं पर्याप्नोतीत्यर्थः। अलमर्थयोगात् 'नमःस्वस्तिस्वाहा—'इत्यादिना चतुर्थी। ध्रुवं शोधकत्वम्। प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह—तथाहि। प्रसिद्धमेवेत्यर्थः। नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तथा निमित्तेन च्युतं पतितम्। चिता-

---

१. अथ चन्द्रशेखरम्, २. संस्पर्शम्, ३. विलुप्यते,

भस्मरज इति शेषः। अम्बरौकसां देवानां मौलिभिर्विलिप्यते ध्रियते। अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ।७९।

चा०—तदङ्गेति। तदङ्गसंस्पर्शं तस्य शम्भोः शरीरसम्पर्कमवाप्य चिताभस्मरजोरेणुवन्निश्रिते विशुद्धये कल्पते। जायते। कथमित्याह। तथाहि। नृत्ताभिनयक्रियाच्युतं। नृत्ते येऽभिनयाः करचरणादिप्रक्षेपास्ते एव क्रियास्ताभिश्च्युतं भस्म। अम्बरौकसां देवानां मौलिभिः शिरोभिर्विलुप्यते। भूगतं तदेव शिरोभिर्वहन्तीत्यर्थः ॥ ७९ ॥

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु ( ५।७२ ) 'इयं च तेऽन्या पुरतो विडम्बना' ( ५।७० ) इत्यादि च तत्रोत्तरमाह—

**असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा।**
**करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥ ८० ॥**

मल्लि०—असंपद इति। प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः। ऐरावतेनोढ इत्यर्थः। वृषा देवेन्द्रोऽसंपदो दरिद्रस्य वृषेण गच्छतो वृषभारूढस्य तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य प्रणम्येत्यर्थः। विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुलयो ययोस्तौ तथोक्तौ करोति। दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः किं संपदा, वृषारोहणे वा को दोष इत्यर्थः ॥ ८० ॥

चा०—असंपद इति। प्रभिन्नदिग्वारणवाहनः प्रभिन्नो मदस्रावी ऐरावणो वाहनं यस्य सः। वृषा इन्द्रो वृषेण वृद्धोक्षेण गच्छतोऽत एव सम्पदः सम्पद्रहितस्य तस्य शम्भोः पादावुपगम्य मस्तकेन विनिद्रमन्दाररजोरुणाङ्गुली विनिद्राणां विकसितानां मन्दाराणां देवतरूणां रजोभिः परागैररुणा अंगुलयो ययोस्तैः करोति ॥ ८० ॥

यदुक्तम् 'अलक्ष्यजन्मता' ( ५। ७२ ) इति तत्रोत्तरमाह—

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम्।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥**

मल्लि०—विवक्षतेति। च्युतात्मना नष्टस्वभावेनात एव दोषं दूषणं विवक्षता वक्तुमिच्छतापि त्वयेशं प्रत्येकम् 'अलक्ष्यजन्मता' इत्येतदेकम्। वच इत्यर्थः। साधु भाषितं सम्यगुक्तम्। कुतः। यमीश्वरमात्मभुवोऽपि ब्रह्मणोऽपि। 'ब्रह्मात्मभूः सुरज्येष्ठः' इत्यमरः। कारणमामनन्त्युदाहरन्ति। विद्वांस इति शेषः। 'पाघ्राध्मास्थाम्नादाण—' इत्यादिना मनादेशः। स ईश्वरः कथं लक्ष्यप्रभवो लक्ष्यजन्मा भविष्यति। अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कश्च नान्विष्यत इत्यर्थः ॥ ८१ ॥

चा०—विवक्षेति। दोषमपि विवक्षता भाषमाणेन त्वया ईशंप्रति एकं साधु सम्यग् भाषितं कथितं। कीदृशेन त्वया। च्युतो भ्रष्ट आत्मा चित्तं यस्य तादृशेन। यमीशं आत्मभुवोपि ब्रह्मणोपि कारणं जनकमामनन्ति स लक्ष्यः प्रभव उत्पत्तिर्यस्य स कथं भविष्यति॥ ८१॥

**अलं विवादेन यथा [1]श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते॥ ८२॥**

मल्लि०—अलमिति। अथवा विवादेन कलहेनालम्। त्वया यथा येन प्रकारेण स ईश्वरः श्रुतोऽशेषं कात्स्न्येंन तथाविधस्तावत्प्रकार एवास्तु। मम मनस्त्वत्रेश्वरे भावः शृङ्गार एकोऽद्वितीयो रस आस्वाद्यो यस्य तत्तथा स्थितम्। तथाहि। कामवृत्तिः स्वेच्छाव्यवहारी वचनीयमस्थानसङ्गापवादं नेक्षते न विचारयति। न हि स्वेच्छासंचारिणो लोकापवादाद्बिभ्यन्तीति भावः॥ ८२॥

उक्तमुपसंहरति—

चा०—अलमिति। विवादेनं कलहेनालं पूर्यताम्। स शंभुस्त्वया यथा यादृशः श्रुतस्तावद्रूपस्तथाविधस्तादृशोऽस्तु शेषं सर्वं यथा स्यात्तथास्तु। अत्र शंभौ भावैकरसं भावो भक्तिस्तेनैकरसमेकस्वरूपं मम मनः स्थितं। तत्र हेतुमाह। कामवृत्तिः स्वेच्छया व्यवहारो वचनीयं नेष्यते॥ ८२॥

**निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः।**
**न केवलं यो [2]महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्॥ ८३॥**

मल्लि०—निवार्यतामिति। हे आलि सखि! 'आलिः सखी वयस्या च' इत्यमरः। स्फुरितोत्तराधरः स्फुरणभूयिष्ठोऽयं बटुर्माणवकः पुनः किमपि विवक्षुर्वक्तुमिच्छुः। ब्रुवः सन्नन्तादुप्रत्ययः। निवार्यताम्। तर्हि वक्तुमेव कथं न ददासीत्याह—तथाहि। यो महतः पूज्यानपभाषतेऽपवदति न केवलं स पापभाग्भवति। किंतु तस्मादपभाषमाणात्पुरुषाद्यः शृणोति सोऽपि पापभाक्। भवतीति शेषः। अत्र स्मृतिः—'गुरोः प्राप्तः परीवादो न श्रोतव्यः कथंचन। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः' इति॥ ८३॥

चा०—निवार्यतामिति। भो आलि सखि! स्फुरितोत्तराधरः स्फुरच्चलदुत्तरोऽधरो यस्यात एव पुनः किमपि दूषणं विवक्षुर्वक्तुमिच्छुरयं बटुर्निवार्यताम्। अयं वदतु नाम। का नो हानिरित्यत आह। यो महतामुत्तमानां विभाषते निन्दति। स केवलं पापभाक् न भवति। तस्माद्वक्तुर्यः शृणोति सोपि पापभाग् भवति।८३।

१. श्रुतम्, २. महतां विभाषते.

संप्रति गन्तव्यपक्षमाश्रयते—

इतो गमिष्याम्यथवेति वादिनी चचाल बाला [1]स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥ ८४ ॥

मल्लि०—इत इति । अथवेतोऽन्यत्र गमिष्यामीति वादिनी वदन्ती स्तनाभ्यां भिन्नवल्कला रयवशात्कुचस्रस्तचीरा बाला पार्वती चचाल । वृषराजकेतनो वृषभध्वजश्च स्वरूपमास्थाय निजरूपमाश्रित्य कृतस्मितः सन् तां पार्वतीं समाललम्बे जग्राह ॥ ८४ ॥

चा०—इत इति । सा च पार्वती चचाल । कीदृशी । इतः स्थानाद्गमिष्यामीति वादिनी भाषमाणा । तथा । स्तनभिन्नवल्कला स्तनाभ्यां भिन्नं त्रुटितं वल्कलं यस्याः सा । ततः कृतस्मितो विहितहासो वृषराजकेतनो हरः स्वरूपमास्थाय स्वमाकारं प्रतिपद्य तां गोरीं समाललम्बेऽनुगृहीतवानित्यर्थः ॥ ८४ ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय[2] पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

मल्लि०—तमिति । तं देवं वीक्ष्य वेपथुमती कम्पवती सरसाङ्गयष्टिः स्विन्नगात्री । महादेवदर्शनेन देव्याः सात्विकभावोदय उक्तः । निक्षेपणायान्यत्र विन्यासायोद्धृतमुत्क्षिप्तं पदमङ्घ्रिमुद्वहन्ती शैलाधिराजतनया पार्वती मार्गेऽचलस्तस्य व्यतिकरेण समाहृत्या । अवरोधनेनेति यावत् । आकुलिता संभ्रमिता सिन्धुर्नदीव । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः । न ययौ न तस्थौ । लज्जयेति भावः । वसन्ततिलकावृत्तमेतत् ॥ ८५ ॥

चा०—तं वीक्ष्येति । शैलाधिराजतनया हिमवत्सुता तं शंभुं वीक्ष्य प्रत्यक्षेण दृष्ट्वा वेपथुमती सकंपा सरसाङ्गयष्टिः सरसा सस्वेदा अङ्गयष्टिर्यस्याः सा न ययौ न तस्थौ । कीदृशी । निक्षेप एव न्यासार्थमुद्धृतमुत्थापितं पदं चरणमुद्वहन्ती । सा केव । मार्गाचले पर्वते यो व्यतिकरः संपर्कस्तेन व्याकुलिता सिन्धुरिव यथा नदी शैलेन रुद्धत्वान्न याति न तिष्ठति ॥ ८५ ॥

अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ८६ ॥

---

१. रय, २. निक्षेप एव,

मल्लि०—अद्येति। चन्द्रमौलौ शिवे। हे अवनताङ्गि पार्वती, अद्य प्रभृति। अस्माद्दिनादारभ्येत्यर्थः। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। तव तपोभिः। क्रीतः। दासृ दाने। दासत आत्मानं ददातीति दासोऽस्मीति वादिनि वदति सति। सा देव्यह्नाय सपदि। 'स्रग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतम्' इत्यमरः। नियमजं तपोजन्यं क्लमं क्लेशमुत्ससर्ज। फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः। तथाहि। क्लेशः फलेन फलसिद्धया पुनर्नवतां विधत्ते पूर्ववदेवाक्लिष्टतामापादयतीत्यर्थः। सफलः क्लेशो न क्लेश इति भावः॥ ८६॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः॥ ५॥



चा०—अद्येति। भो अवनताङ्गि! अवनतमंसलक्षणमङ्गं यस्यास्तत्संबुद्धौ गौरि! अद्यप्रभृति प्रारभ्य तपोभिः क्रीतस्तव दासोऽस्मि। इति चन्द्रमौलौ हरे वादिनि वदति सति सोमाऽह्नाय तत्क्षणान्नियमजं व्रतजनितं क्लममुपतापमुत्ससर्जत्याक्षीत्। कथमित्याह। हि यतः क्लेशः फलेन पुनर्नवतां विधत्ते। किंतु फलदर्शनात्। क्लेशो न भवतीत्यर्थः। अह्नायेति निपातः॥ ६८॥

इति श्री मालान्वयसाधु श्रीशालिगनन्दनसाधु श्रीअरडकमल्लसमभ्यर्थितनरवेषसरस्वतिवाचनाचार्य श्रीचारित्रवर्धनविरचितायां कुमारतात्पर्यदीपिकायां शिशुहितैषिण्यां पञ्चमः सर्ग॥ ५॥



# षष्ठः सर्गः

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥

**मल्लि०**—अथेति । अथ देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वमात्मा स्वरूपं यस्येति । विश्वस्यात्मेति वा । विश्वात्मने शिवाय मिथो रहसि । 'मिथोऽन्योऽन्यं रहस्यपि' इत्यमरः । सखीं संदिदेशातिससर्ज । क्रियामात्रयोगेऽपि संप्रदानत्वाच्चतुर्थी । किमिति । भूभृतां नाथो हिमवान्मे मम दाता सन् । प्रमाणीक्रियतामिति । दातृत्वेन प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा दीयमानायाः परिग्रहो मम महाननुग्रह इति भावः ॥ १ ॥

चा०—अथेति । अथानन्तरं गौरी विश्वात्मने शिवाय मिथो गुप्तं सखीमिति संदिदेशाज्ञापयामास । इति किं । मे मम दाता भूभृतां नाथो हिमाद्रिः प्रमाणीक्रियतां । पितृदेया कन्येति सन्दिष्टवतीत्यर्थः ॥ १ ॥

टिप्पणी—स्वभावोक्तिरलंकारः ॥ १ ॥

तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्याशे मधौ परभृतोन्मुखी ॥ २ ॥

**मल्लि०**--तयेति । तया सख्या । सखीमुखेनेत्यर्थः । व्याहृतसंदेशोक्तवाचिका प्रिये हरविषये निभृता निश्चला । परमासक्तेत्यर्थः । सा गौरी । मधौ वसन्ते निभृता स्थिरया परभृतया कोकिलयोन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देनाभिभाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्तीत्यर्थः । परभृतेति क्रियाशब्दविवक्षायाम् 'जातेरस्त्री–' इति ङीप्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वादुपमानवाचिपरभृताशब्दस्य समासः सोढव्यः । अथवा भृङ्करणम् । संपदादित्वात्क्विप् । परैर्भृद्यस्यास्तया परभृतेति व्यासेन व्याख्येयम् । पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह । चूतयष्टिश्चूतशाखेवाभ्याशेऽन्तिके बभौ । 'सदेशाभ्याशसविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ।' इत्यमरः ॥ २ ॥

चा०—तयेति । अभ्यासे समीपस्थेपि प्रिये शंभौ तया सख्या व्याहृतः कथितः सन्देशो यस्याः सा । तथाऽत एव निभृता लज्जात्वाद्विनीता सा गौरी यथा पार्श्वस्थेपि मधौ वसन्ते परभृता कोकिला उन्मुखी लक्षणया दूती यस्यां सा चूतयष्टिश्चूतलता इव भवति ॥ २ ॥

टिप्पणी--अत्रोपमालंकारः ॥ २ ॥

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः ॥ ३ ॥

मल्लि०—स इति । स प्रकृतः । शास्तीति शासनः बहुलग्रहणात्कर्तरि ल्युट्' स्मरस्य शासन ईश्वरस्तथेति प्रतिज्ञाय । तथा करिष्यामीत्युक्त्वेत्यर्थः । उमां कथमपि कृच्छ्रेण विसृज्य । तत्र गाढानुरागत्वादिति भावः । ज्योतिर्मयांस्तेजोरूपान्सप्तर्षीनङ्गिरः प्रभृतीन्सस्मार स्मृतवान् ॥ ३ ॥

चा०—स तथेति । स्मरं शासितवान् इति स्मरशासनः । शास हिंसायां । स शंभुस्तथेत्यङ्गीकृत्य कथमपि महता कष्टेनोमां गौरीं विसृज्य त्यक्त्वा ज्योतिर्मयान् ज्योतींषि तारागृहं येषां तान् सप्तर्षीन् सस्मारास्मार्षीत् । अत्र शेषविवक्षाया अभावादधीगर्थेति न षष्ठी ॥ ३ ॥

टिप्पणी—अत्र प्रथमान्ततच्छब्दप्रतिपाद्यस्यैकस्य कर्तुस्तिसृषु स्वीकारत्यागस्मरणक्रियान्वन्वयाद्दीपकालंकारः ॥ ३ ॥

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन्पुरः प्रभोः ॥ ४ ॥

मल्लि०—त इति । ते तप एव धनं येषां ते तपोधनाः सप्तर्षयः प्रभामण्डलैस्तेजः पुञ्जैर्व्योमाकाशं द्योतयन्तः प्रकाशयन्तः । अरुन्धत्या सह वर्तन्त इति सारुन्धतीकाः सन्तः । 'नद्यृतश्च' इति कप् । सपदि प्रभोरीश्वरस्य पुरः पुरोभागे प्रादुरासन्प्रत्यक्षा बभूवुः ॥ ४ ॥

चा०—ते प्रभेति । ते तपोधनाः । प्रभोः शंभोः पुरोग्रे स्मरणमात्र एव प्रादुरासन् प्रकटीबभूवुः । कीदृशो मुनयः । प्रभामण्डलैर्दीप्तिसमूहैर्व्योम नभो द्योतयन्तः प्रकाशयन्तः । तथा सारुन्धतीका अरुन्धतीयुक्ताः ॥ ४ ॥

टिप्पणी—अत्रापि स्वभावोक्तिरलंकारः ॥ ४ ॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन्वर्णयति--

अप्लुतास्तीरमन्दार[1]कुसुमोत्किरवीचिषु ।
[2]व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥

मल्लि०—आप्लुता इति । उत्किरन्ति विक्षिपन्तीत्युत्किराः । 'इगुपध–' इत्यादिना कप्रत्ययः । तीरे ये मन्दाराः कल्पवृक्षास्तेषां कुसुमानामुत्किरा वीचयस्तरंगा येषां तेषु दिङ्नागानां दिग्गजानां मदगन्धो येष्विति तथोक्तेषु व्योमगङ्गाप्रवाहेष्वाकाशगङ्गास्रोतःस्वाप्लुताः स्नाताः ।

१. कुसुमोत्कर, २. आकाशगङ्गास्रोतःसु,

इतः सप्तभिः कुलकम्—

चा०—आप्लुता इति। पुनः कीदृशः। आकाशगङ्गास्रोतःसु मन्दाकिनीप्रवाहेषु आप्लुताः स्नाताः। कीदृशेषु। तीरे यानि मन्दारपुष्पाणि तैरुत्किरा अधिका वीचयो येषु। तथा दिङ्नागानामैरावणादीनां मदगन्धो येषु॥ ५॥

टिप्पणी—स्वभावोक्तिः॥ ५॥

मुक्तायज्ञोपवीतानि बिभ्रतो [1]हैमवल्कला।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः॥ ६॥

मल्लि०—मुक्तेति। मुक्तानां मौक्तिकानां यज्ञोपवीतानि मुक्तामयानीत्यर्थः। बिभ्रतो दधानाः। हेममयानि वल्कलानि येषां ते हैमवल्कलाः। रत्नमयान्यक्षसूत्राणि येषां ते रत्नाक्षसूत्राः। प्रव्रज्यां प्रव्रजनम्। 'व्रजयजोर्भावे क्यप्' इति क्यप्। आश्रिताः कल्पवृक्षा इव स्थिताः। अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते। 'जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः' (६।३४) इति सपत्नीकत्वाभिधानात् सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्' इति वानप्रस्थस्योभयथा स्मरणात्॥ ६॥

चा०—मुक्तेति। पुनः कीदृशः मुक्तायज्ञोपवीतानि मौक्तिकमयानि ब्रह्मसूत्राणि बिभ्राणा दधानाः। हैमवल्कला हेम्नो वल्कलानि येषां ते। रत्नाक्षसूत्रा रत्नमयान्यक्षसूत्राणि जपमाला येषां ते। क इव। प्रव्रज्यां निष्परिग्रहतामाश्रिताः कल्पवृक्षा इवेत्युत्प्रेक्षा। 'व्रजयजोर्भावे क्यप्'॥ ६॥

टिप्पणी—प्रव्रज्यामाश्रिताः कल्पवृक्षा इव स्थिता इत्युत्प्रेक्षालंकारः॥ ६॥

अधः प्रस्थापिताश्वेन समावर्जितकेतुना।
सहस्ररश्मिना [2]साक्षात्सप्रणाममुदीक्षिताः॥ ७॥

मल्लि०—अध इति। अधः प्रस्थापिताश्वेन। सूर्यमण्डलोपरिवर्तित्वात्सप्तर्षिमण्डलस्येति भावः। समावर्जितकेतुना तन्मण्डलाघातशङ्कया नमितध्वजेन सहस्ररश्मिना सूर्येण साक्षात्स्वयमेव सप्रणाममुदीक्षिताः। गमनाभ्यनुज्ञादानपर्यंन्तमित्यर्थः। भगवतः सूर्यस्याप्युपास्या इति भावः॥ ७॥

चा०—अधः प्रस्थापितेति। पुनः कीदृशः। साक्षात्सहस्ररश्मिनाऽर्केण सप्रणामं यथा स्यादेवमुद्वीक्षिता ऊर्ध्वं दृष्टाः। कीदृशेन अधः प्रस्थापिताश्वेन अधःप्रस्थापिता अश्वास्तुरङ्गा येन। यथा विनयवशात्समावर्जितो नामितः केतुर्ध्वजो येन॥ ७॥

टिप्पणी—स्वभावोक्तिरलंकारः॥ ७॥

आसक्तबाहुलतया सार्धमुद्धृतया[3] भुवा।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि॥ ८॥

---

१. हेम २. शश्वत्, ३. उद्धतया,

मल्लि०—आसक्तेति । पुनः किंविधाः ? प्रलयापदि कल्पान्तसंकटे आसक्तबाहुलतया । दंष्ट्रायामिति शेषः । उद्धृतया । दंष्ट्रयेति शेषः । भुवा सार्धं धरण्या सह महावराहदंष्ट्रायां विश्रान्ताः । महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥ ८ ॥

चा०—आसक्तेति । पुनः कीदृशः । प्रलयापदि प्रलयोपद्रवेऽपि महावराहदंष्ट्रायां भुवा सार्धं समं विश्रान्ताः । एतेन तेषामविनश्वरत्वमुक्तं । कीदृश्या भुवा । आसक्तबाहुलतया पातभयादासक्ता श्रिता विष्णोर्बाहुलता यया सा तया । तथोद्धृतया ॥ ८ ॥

टिप्पणी—स्वभावोक्तिरलंकारः ॥ ८ ॥

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ ९ ॥

मल्लि०—सर्गेति । विश्वयोनेर्ब्रह्मणोऽनन्तरं सर्गशेषस्य प्रणयनात् । ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः । पुराविद्भिः पुराणवेदिभिर्व्यासादिभिः पुरातना धातार इति कीर्तिताः । विश्वयोनेरिति सम्बन्धमात्रे षष्ठी । तस्यानन्तरमिति भाष्ये दर्शनात् । अपादानत्वविवक्षायां तु पञ्चमी । अयमदः शब्दो यथाशब्दावृत्तादनन्तरस्येति शाबरभाष्ये दर्शनात् । तथा 'अथातो धर्मजिज्ञासा वेदाध्यायादनन्तरम्' इत्याचार्याः । कविश्च 'पुराणपत्त्रापगमादनन्तरम्' इति । एवमन्यत्रापि द्रष्टव्यम् ॥ ९ ॥

चा०—सर्गेति । पुनः कीदृशः । विश्वयोनेर्ब्रह्मणोऽनन्तरं पश्चात्सर्गशेषप्रणयनात्सृष्टिकरणात्पुराविद्भिर्मार्कण्डेयादिभिः पुरातना आद्या धातार इति कीर्तिताः ।९।

टिप्पणी—स्वभावोक्तिरलंकारः ॥ ९ ॥

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १० ॥

मल्लि०—प्राक्तनानामिति । प्राक्तनानां जन्मान्तरभवानां विशुद्धानां निर्मलानां परिपाकं फलदानोन्मुखत्वमुपेयुषां गतानां तपसां फलान्युपभुञ्जाना अपि तपस्विनस्तपोनिष्ठाः । प्रारब्धभोगिनो निस्पृहाश्चेति भावः । कुलकम् ॥ १० ॥

चा०—प्राक्तनानामिति । पुनः कीदृशः । तपस्विनोपि तपश्चरन्तोपि प्राक्तनानां प्राचीनानां विशुद्धानां निर्मलानां परिपाकमुपेयुषां परिपक्वानां तपसां फलानि भुञ्जानाः अपि आश्चर्ये । अन्येषां तु जन्मान्तरे फलभोक्तृत्वं । एतेषां चिरजीवित्वात्तपश्चरणं फलभोक्तृत्वं च ॥ १० ॥

टिप्पणी—स्वभावोक्तिरलंकारः ॥ १० ॥

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥

मल्लि०—तेषामिति । तेषामृषीणां मध्यगता साध्वी पतिव्रता । अत एव पत्युर्वसिष्ठस्य पादयोरर्पितेक्षणा निविष्टदृष्टिररुन्धती साक्षात्प्रत्यक्षा तपः सिद्धिरिव तेषामेवेति शेषः । तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा । बहु भूयिष्ठं बभासे भाति स्म ॥ ११ ॥

चा०—तेषामिति । तेषां मुनीनां मध्यगता साध्वी पतिव्रता पत्युर्वसिष्ठस्य पादार्पिते ईक्षणे यस्याः साऽरुन्धती बहु भृशं बभासे । तत्रोत्प्रेक्षते । साक्षात्तपःसिद्धिरेव ॥ ११ ॥

टिप्पणी—तेषां मध्यगताऽरुन्धती साक्षात्तपः सिद्धिरिव बभासे इत्युत्प्रेक्षालंकारः ॥ ११ ॥

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२ ॥

मल्लि० - तामिति । ईश्वरो भगवांस्तामरुन्धतीं मुनींश्चागौरवभेदेन समानप्रतिपत्त्यापश्यद्दृष्टवान् । न चायमविवेक इत्याह–हि यस्मात्स्त्री पुमांश्चेत्येषानास्था स्त्रीपुंसभेदो न विवक्षितः । किंतु सतां साधूनां वृत्तं चरित्रमेव महितं पूज्यम् । 'गुणाः पूज्यस्थानं गुणिषु न च लिङ्गं न च वयः इति भावः ॥ १२ ॥

चा०—तामिति । ईश्वरस्तामरुन्धतीं मुनींश्चागौरवभेदेन गौरवाविशेषेण तुल्यमपश्यत् । ननु पुंसु स्त्रियां च कथं समा दृष्टिरित्याह । यतो सतां इयं स्त्री अयं पुमानित्येषाऽनास्था अनादरः । वृत्तं चरित्रमेव महितं पूज्यं । सतामिति 'क्तस्य च वर्तमाने' इति षष्ठी ॥ १२ ॥

टिप्पणी—सामान्येनाऽर्थेनोत्तरार्द्धगतेन पूर्वार्द्धोपात्तस्य विशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ।

तद्दर्शनादभूच्छंभो[1]र्भूयान्दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्[2] ॥ १३ ॥

मल्लि०—तदिति । तद्दर्शनादरुन्धतीदर्शनाच्छंभोर्दारार्थं परिग्रहार्थमादरो भूयान्बहुतरोऽभूत् । ननु दाराः कुत्रोपयुज्यन्त इत्यत्राह—धर्म्याणां धर्मादनपेतानाम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । क्रियमाणानामिज्यादीनां सत्यः पतिव्रताः पत्न्यः सत्पत्न्यः । पत्युर्नो यज्ञसंयोगे' इति ङीप् । नकारश्च । मूलकारणं खलु ॥ १३ ॥

---

१. भूयः, २. साधनम्,

चा०—तद्दर्शनेति । तद्दर्शनात्तस्या अरुन्धत्या विलोकनाद्भूयः पुनः शंभोरपि दारार्थं भार्यार्थमादरोऽभूत् । खलु यतो धर्म्याणां धर्माय हितानां क्रियाणामग्निहोत्रादीनां दाम्पत्यं मूलकारणं मुख्यो हेतुः ॥ १३ ॥

टिप्पणी—पूर्वार्द्धोपात्तवाक्यार्थे उत्तरार्द्धोपात्तवाक्यार्थः कारणमिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३ ॥

**धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।**
**पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥**

**मल्लि०**—धर्मेणेति । धर्मेण दारसंजिघृक्षालक्षणेनापि कर्त्रा । शर्वे ईश्वरे पार्वती प्रति पदं कारिते सति । 'हृक्रोरन्यतरस्याम्' इति शर्वस्याणिकर्तुः कर्मत्वम् । पूर्वापराधभीतस्य कामस्य मन उच्छ्वसितम् । पुनरुज्जीवनावकाशो भवतीति सप्रत्याशमभूदित्यर्थः ॥ १४ ॥

चा०—धर्मेणेति । शर्वे हरे धर्मेणापि पार्वतीं प्रति पदं व्यवसायं कारिते सति परिणेतुमिच्छौ सतीत्यर्थः । कामस्य मन उच्छ्वसितं । कीदृशस्य । पूर्वापराधभीतस्य । पूर्वश्चासावपराधो हरसमाधिभङ्गलक्षणस्तस्माद्भीतस्य । प्राग्धर्मेण प्रार्थितो ब्रह्मा यदाह गौरी परिणेष्य स्मरः स्वयं वपुः प्राप्स्यतीति शापान्तं चक्रे । अतो धर्मेणैव गौरीं प्रत्युद्यमः कारितो नतु रागेणेति । अपिशब्दो विस्मये । 'पदं व्यवस्थितिः स्थानम्' इत्यमरः ॥ १४ ॥

टिप्पणी—स्त्रीजिघृक्षात्मको धर्मो यदा पार्वतीम्प्रति शिवेन व्यवसायं (उद्यमं) कारितवान् तदा कामस्य मनः संप्रत्याशमभूदिति तदर्थः । अत्रोत्तरार्द्धप्रतिपाद्यवाक्यार्थे पूर्वार्द्धप्रतिपाद्यपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ।१४।

**[1]अथ ते मुनयः सर्वे [2]मानयित्वा जगद्गुरुम् ।**
**इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥**

**मल्लि०**—अथेति । अथानूचानाः । साङ्गवेदप्रवक्तारः । 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः' इत्यमरः । 'उपेयिवाननश्वाननूचानश्च' इति निपातः । प्रीत्या कण्टकिताः पुलकितास्त्वचो येषां ते तथोक्ताः । ते सर्वे मुनयो जगद्गुरुं हरं मानयित्वा पूजयित्वेदं वक्ष्यमाणमूचुः ॥ १५ ॥

चा०—अथेति । अथानन्तरं प्रीतिकण्टकितत्वचः प्रेम्णा रोमाञ्चिता अनूचानाः साङ्गवेदाध्यायिनस्ते मुनयो जगद्गुरुं शंभुं पूजयित्वेदं वक्ष्यमाणमूचुः । 'अनूचानः प्रवचने' इति हैमः ॥ १५ ॥

**यद्ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।**
**यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥**

---

१. प्रथमे, २. प्रणिपत्य,

मल्लि०—यदिति। ब्रह्म वेदः। 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः। सम्यङ्नियमपूर्वकमाम्नातमधीतमिति यत्। अग्नौ विधिना हुतमिति यत्। तपश्चान्द्रायणादिकं तप्तमिति च यत्तस्याध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्मण इत्यर्थः। समुदायाभिप्रायकमेकवचनमन्यथावृत्त्यान्वयप्रसंगात्। न च नपुंसकैकवद्भावोऽनपुंसकेनेति नियमात्। फलं कार्यमद्य नोऽस्माकं विपक्कम्। सुनिष्पन्नमित्यर्थः। कर्मणि क्तः। 'पचो वः' इति निष्ठातस्य वत्वम् ॥ १६ ॥

चा०—यद्ब्रह्मेति। यदध्यक्षणेति। युग्मं। ब्रह्म वेदोस्माभिः सम्यगाम्नातमभ्यस्तं सम्यग्विधिनाऽग्नौ हुतं। तच्च तपस्तसमाचरितं तस्य सर्वस्याद्य नोऽस्माकं फलं विपक्वम् ॥ १६ ॥

तदेव फलमाह—

यदध्यक्षेण जगतां वयमारोपितास्त्वया।
मनोरथस्याविषयं[1] मनोविषयमात्मनः ॥ १७ ॥

मल्लि०—यदिति। यद्यस्मात्कारणाज्जगतामध्यक्षेणाधिपेन त्वया वयं मनोरथस्याभिलाषस्याविषयमगोचरमात्मनः स्वस्य मनोविषयं मनोदेशमारोपिताः प्रापिताः। तस्माद्विपक्वं फलमिति पूर्वेण संबन्धः। सकलजगदन्वेष्टव्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः ॥ १७ ॥

चा०—यदध्यक्षेणेति। यत् यतो जगतामध्यक्षेण गुरुणा त्वया मनोरथस्याप्यपथमविषयं आत्मनः स्वस्य मनो विषयं गोचरं वयमारोपिताः यद्वयं स्मृता इत्यर्थः। शंभुर्मां स्मरिष्यतीति कस्यापि मनोरथो नास्तीति ॥ १७ ॥

तदेवोपपादयति—

यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः।
किं पुनर्ब्रह्मयोनेर्यस्तव[2] चेतसि वर्तते ॥ १८ ॥

मल्लि०—यस्येति। यस्य जनस्य चेतसि वर्तेथाः येन स्मर्यस इत्यर्थः। स तावत्स एव कृतिनां कृतकृत्यानां वरः श्रेष्ठः। ब्रह्मणो वेधसो वा योनेः कारणस्य। यद्वा वेदप्रमाणकस्य। तव चेतसि यो वर्तते। त्वया स्मर्यत इत्यर्थः। किं पुनः। स कृतिनां वर इति किमु वक्तव्यमित्यर्थः ॥ १८ ॥

तदेवाहुः—

चा०—युग्मं। यस्येति। भो देव! यस्य चेतसि त्वं वर्तेथाः। स तावत्कृतिनां

---

१. अप्यपथम्, २. विश्वयोनेः,

कृतार्थानां वरः श्रेष्ठः ब्रह्मयोनेर्वेदकारणस्य ( निश्वसितमस्य वेदः ) इति श्रुतिः तव चेतसि यो वर्तते स किं कथ्यते ॥ १८ ॥

**सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।**
**अद्य तूच्चैस्तरं [1]ताभ्यां स्मरणानुग्रहात्तव ॥ १९ ॥**

**मल्लि०**—सत्यमिति । अर्कात्सूर्याच्च सोमाच्चन्द्राच्च परमुच्चैः पदं स्थानमध्यास्महे तिष्ठामः । वयमिति शेषः । सत्यम् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । अद्य तु तव कर्तुः । स्मरणमेवानुग्रहः प्रसादस्तस्माद्धेतोः । ताभ्यामर्केन्दुभ्यामुच्चैस्तरमत्युच्चं पदम् । अध्यास्महे इति सम्बन्धः । उच्चैस्तरमिति द्रव्यप्रकर्षत्वान्नामुप्रत्ययः ॥ १९ ॥

चा०—सत्यमिति । वयमर्काच्च सोमाच्च परमुत्कृष्टं पदं स्थानं । तस्मात्पूर्वपदादुच्चैस्तरमुच्चतरमद्य सत्यमध्यास्महेऽधितिष्ठामः । कस्मात्तव स्मरणानुग्रहात् स्मरणमेवानुग्रहः प्रसादस्तस्मात् ॥ १९ ॥

**त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।**
**प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥**

**मल्लि०**—त्वदिति । वयं त्वया सम्भावितं सत्कृतं त्वत्संभावितमात्मानमात्मस्वरूपं बह्वधिकं यथा तथा मन्यामहे । तथाहि । उत्तमादरः सत्पुरुषकर्तृकः सत्कारः स्वगुणेषु विषये प्रायेण भूम्ना प्रत्ययं विश्वासमाधत्ते जनयति । सर्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुरित्यर्थः ।२०।

चा०—त्वत्सम्भावितमिति । वयं त्वत्सम्भावितमात्मानं बहु उत्कृष्टं मन्यामहे जानीमः । यत उत्तमादरः प्रायो बाहुल्येन स्वगुणेषु प्रत्ययं विश्वासमाधत्ते उत्पादयति ॥ २० ॥

टिप्पणी—उत्तमपुरुषकर्तृकसत्कारो निजगुणेषु विषये बाहुल्येन विश्वासमुत्पादयतीत्युत्तरार्द्धप्रतिपाद्यसामान्येनार्थेन विशेषार्थस्य पूर्वार्द्धोपात्तस्य समर्थनात्सामान्येनविशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥ २० ॥

**या नः प्रीतिर्विरूपाक्ष त्वदनुज्ञानसंभवा ।**
**सा किमावेद्यते[2] तुभ्यमन्तरात्मासि देहिनाम् ॥ २१ ॥**

**मल्लि०**—येति । हे विरूपाक्ष, त्वदनुध्यानसम्भवा त्वत्कर्तृकस्मरणजन्या नोऽस्माकं या प्रीतिः सा प्रीतिस्तुभ्यं किमावेद्यते किमर्थं निवेद्यते । तथाहि । देहिनां प्राणिनामन्तरात्मान्तर्याम्यसि । सर्वसाक्षिणा त्वयास्मत्प्रीतिरनावेदितापि ज्ञायत एव यतस्ततो न बुद्धबोधनं सम्भवतीति भावः ॥ २१ ॥

१. तस्मात्, २. आख्यायते,

चा०—या न इति । हे विरुपाक्ष शंभो ! त्वदनुध्यानसम्भवा त्वत्स्मरणेनोत्पन्ना नोऽस्माकं प्रीतिः सा तुभ्यं किमावेद्यते किमुच्यते । यतस्त्वं देहिनामन्तरात्माऽसि जीवरूपोऽसि । अतः सर्वं वेत्सीति भावः ॥ २१ ॥

**साक्षाद्दृष्टोसि [1]न पुनर्विद्मस्त्वां वयमञ्जसा ।**
**प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥ २२ ॥**

**मल्लि०**—साक्षादिति । हे देव, साक्षात्प्रत्यक्षेण दृष्टोऽसि । अञ्जसा पुनस्तत्त्वतस्तु त्वां वयं न विद्मः । दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः । अतः प्रसीदानुगृहाण । आत्मानं निजस्वरूपं कथय । न चाकथितं तत्सुबोधमित्याह—धियां बुद्धीनां पथि न वर्तसे : अतस्त्वयैव त्वद्रूपं कथनीयमीत्यर्थः ॥ २२ ॥

अथ शंभोः स्वरूपं जिज्ञासवः पुनः प्राहुः—

चा० – साक्षादिति । त्व साक्षात्प्रत्यक्षेण दृष्टोऽसि । पुनस्त्वामञ्जसात्यर्थं वयं न जानामः । प्रसीद प्रसन्नो भव । भो भव ! आत्मानं कथय ब्रूहि । धियां पथि न वर्तसे न गोचरोऽसि ॥ २२ ॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्य मित्याह—

**किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।**
**अथ विश्वस्य[2] संहर्ता भागाः कतम एष ते ॥ २३ ॥**

**मल्लि०**—क्रिमिति । हेदेव, एष दृश्यमानस्ते भागो मूर्तिः किम् । येन भागेन व्यक्तं प्रपञ्चं सृजसि सः । यत्तदोर्नित्यसंबन्धात्सर्वत्र तच्छब्दोऽध्याहार्यः । उत येन भागेन तद्व्यक्तं बिभर्षि पालयसि स वा । अथ यो भागस्तस्य विश्वस्य संहर्ता स वा । किमादयः संदेहे । कतमः । ब्रह्माविष्णुमहेश्वरेष्वयं कतमो भागस्तदुच्यतामित्यर्थः ॥ २३ ॥

चा०—किमिति । येनांशेन ब्रह्मरूपेण व्यक्तं पृथिव्यादिकं सृजसि । उत येनांशेन विष्णुरूपेण तद्व्यक्तं बिभर्षि रक्षसि । अथ येनांशेन विश्वस्य संहर्ता । तेषां मध्ये एष प्रत्यक्षीकृतः ते कतमोंऽशो भागः । यद्यप्यस्य भागस्य रुद्रत्वं तेषां सामान्येन विदितं तथापि विशेषतो जिज्ञासया प्रश्नः ॥ २३ ॥

ननु हर इत्येवं निश्चयात्कथमयं संशयस्तत्राह—

**अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।**
**चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥ २४ ॥**

---

१. नो विद्मः पुनः, २. यस्तस्य,

मल्लि० – अथवेति। अथवा हे देव, सुमहती। गुह्यतमत्वादतिदुर्लभेत्यर्थः। एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु। किंतु चिन्तितेन चिन्तिता वोपस्थिताश्चिन्तितोपस्थितास्ताऽन्नोस्मांस्तावच्छाध्याज्ञापय किं करवाम। प्रार्थनायां लोट्। अलमप्रस्तुतेन प्रस्तुते तावन्नियुङ्क्ष्वेत्यर्थः ॥ २४ ॥

चा० – अथेति। भो देव ! अथवा गुह्यार्थबोधनात्सुमहती प्रार्थना तिष्ठतु। तावत्प्रथमं चिन्तितोपस्थितान् स्मृतानेवागतान्नोऽस्मान् शाधि आज्ञापय किं करवाम। प्रार्थनायां लोट् ॥ २४ ॥

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः।
उपचिन्वन्प्रभां तन्वीं प्रत्याह परमेश्वरः ॥ २५ ॥

मल्लि०—अथेति। अथ परमेश्वरो मौलिगतस्येन्दोस्तन्वीमल्पाम्। कलामात्रत्वादिति भावः। प्रभां क्रान्तिं विशदैः शुभ्रैर्दशनांशुभिरुपचिन्वन्वर्धयन्प्रत्याह। प्रत्युवाचेत्यर्थः ॥ २५ ॥

चा०—अथेति। अथानन्तरं मौलिगतस्येन्दोश्चन्द्रस्य विशदैर्निर्मलैर्दशनांशुभिर्दन्तदीप्तिभिस्तन्वीमल्पां प्रभामुपचिन्वन् वर्धयन्परमेश्वरः शंभुः प्रत्याह ॥ २५ ॥

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ २६ ॥

मल्लि० – विदितमिति। हे मुनयः काश्चिदपि मे प्रवृत्तयो व्यापाराः स्वार्था न भवन्ति यथा तथा वो युष्माकं विदितम्। वाक्यार्थः कर्म बुद्धयर्थत्वाद्वर्तमाने क्तः तद्योगात्षष्ठी। प्रवृत्तिपरार्थ्ये प्रमाणमाह अष्टाभिर्मूर्तिभिरित्थंभूतं इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः। 'भू प्राप्तौ' इति धातोः कर्तरि क्तः। सूचितो ज्ञापितोऽस्मि। मत्स्वमूर्तिचेष्टया स्वपाराार्थ्यमनुमेयमित्यर्थः। २६।

चा०—विदितमिति। भो तपोधनाः ! यथा मे काश्चित्प्रवृत्तयो व्यापाराः स्वार्था न। किं तु परार्थाः। एतद्वो युष्माकं विदितं ज्ञातमेव। व इति 'क्तस्य च वर्तमाने' इति षष्ठी। ननु यतोऽष्टाभिः पृथिव्याद्यष्टाभिर्मूर्तिभिरहमित्थंभूतः परार्थोन्मुखः सूचितः कथितोस्मि। पृथिव्यादीनां वृत्तयः परार्था एव। 'क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्या' इत्यष्टौ मूर्तयः ॥ २६ ॥

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रतियाचितः ॥ २७ ॥

मल्लि०– सोऽहमिति। स परार्थवृत्तिरहं तृष्णातुरैश्चातकैर्वृष्टिंविद्युत्वान्मेघ इवारिविप्रकृतैः शत्रुपीडितैर्देवैः प्रसूतिं पुत्रोत्पादनं प्रतियाचितः। याचतेर्दुहादित्वादप्रधाने कर्मणि क्तः ॥ २७ ॥

चा०—सोऽहमिति । परार्थतत्परः सोऽहमरिविप्रकृतैस्तारकपराजितैर्देवैः प्रसूतिं पुत्रं प्रति याचितः । कैः कामिव । तृष्णातुरैः पिपासुभिश्चातकैर्वृष्टिं प्रति विद्युत्वानिव मेघ इव । अप्रधानकर्मणि तिङाभिहितत्वात्प्रसूतिं वृष्टिमिति द्वितीया ॥ २७ ॥

टिप्पणी—अहं विद्युत्वानिवेत्यत्रोपमानोपमेययोरुपमासूचकेवशब्दस्य याचनरूपसाधारणधर्मस्य चाभिधानात्पूर्णोपमाऽलंकारः ॥ २७ ॥

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥

मल्लि०—अत इति । अतः सुरप्रार्थितत्वाद्धेतोरात्मने पुत्राय । पुत्रमुत्पादयितुमित्यर्थः । 'क्रियार्थोपपदस्य—'त्यादिना चतुर्थी । पार्वतीं यजमानो यष्टा । 'पूङ्यजोः शानन्' इति शानन्प्रत्ययः । हविर्भोक्तुरग्नेरुत्पत्तयेऽरणिमग्निमन्थनादारुविशेषमिव । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । आहर्तुं संग्रहीतुमिच्छामि ॥ २८ ॥

चा०—अत इति । अतो हेतो आजन्मने आत्मनः पुत्रस्य जन्मने उत्पत्तौ पार्वतीमाहर्तुमानेतुमिच्छामि । कः कामिवं । हविर्भोक्तुरग्नेरुत्पत्तये यजमानोऽरणिमिव काष्ठमिव ॥ २८ ॥

टिप्पणी—यजमानो यथा वन्ह्युत्पत्यर्थमरणिमाहर्त्तुमिच्छति तथाऽहमात्मजन्मनेपार्वतीमाहर्त्तुमिच्छामीत्यर्थेऽरणिपार्वत्योरुपमानोपमेययोरिवशब्दस्य सामान्यधर्मस्याहरणरूपस्यचाभिधानत्पूर्णोपमाऽलंकारः ॥ २८ ॥

तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः[1] ।
विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ २९ ॥

मल्लि०—तामिति । अस्मदर्थेऽस्मत्प्रयोजने निमित्ते सति युष्माभिस्तां पार्वतीं हिमालयो हिमवान्याचितव्यः । याचेर्दुहादित्वादप्रधाने कर्मणि तव्यप्रत्ययः । आवश्यकं चैतदित्याह—सद्भिः सत्पुरुषैरनुष्ठिताः संघटिताः संबन्धाः यौनादयो विक्रियायै वैकल्योत्पादनाय न कल्पन्ते न पर्याप्नुवन्ति । न समर्था इत्यर्थः । अलमर्थयोगाच्चतुर्थी ॥ २९ ॥

चा०—तामिति । भवद्भिस्तां पार्वतीमस्मदर्थे मदर्थे हिमालयो याचितव्यः । अन्यमुखेन किमिति न याच्यत इत्याह । सद्भिर्निश्चिताः सम्बन्धाः विक्रियायै विकारार्थं न कल्पन्ते न यान्ति स्थिरा भवन्तीत्यर्थः ॥ २९ ॥

टिप्पणी—सत्पुरुषसंघटितोयौनादिसम्बन्धो न जातुवैकल्यमुत्पादयतीतिसामान्यार्थेनोत्तरार्द्धप्रतिपाद्येन पूर्वार्द्धप्रतिपाद्यविशेषार्थस्य समर्थनादर्थान्तरन्यासः ॥२९॥

---

१ हिमाचलः ।

न चाहं लौल्यात्स्त्रियमिच्छामि किंतु देवोपकाराय। यद्येवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसंबन्धोऽत्र भवान्हिमवानित्याह—

उन्नतेन स्थितिमता धुरमुद्वहता भुवः।
तेन योजितसंबन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥

मल्लि०—उन्नतेनेति। उन्नतेन प्रांशुना प्रसिद्धेन च स्थितिमता प्रतिष्ठावता भुवो धुरं भारमुद्वहता। निर्वाहकेणेत्यर्थः। तेन हिमवता योजितः संघटितः संबन्धो यौनसंबन्धो यस्य तं मामप्यवञ्चितमव्यामोहितं वित्त जानीत। 'विद ज्ञाने' इति धातोर्लोट् ॥ ३० ॥

परः पुमान् कथमनेन सम्बन्धं चिकीर्षुरित्यत आह—

चा०—उन्नतेनेति। तेन हिमाद्रिणा योजितसम्बन्धं घटितसम्बन्धं मामप्यवञ्चितं कृतार्थं वित्त जानीत। कीदृशेनोन्नतेनोच्चेन स्थितिमता स्थिरेण। तथा भुवो धुरं भारमुद्वहता। यथा मया मात्रा हिमाद्रिः कृतार्थस्तथाहमपि तेनेत्यर्थः ॥ ३० ॥

टिप्पणी—तच्छब्दवाच्यस्य हिमवतः, पूर्वार्द्धोपात्तविशेषणत्रयस्य, अस्मच्छब्दवाच्यस्य हरस्य, योजिताऽवञ्चितेतिविशेषणद्वयस्य साभिप्रायत्वात्परिकरालङ्कारः ३०

एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१ ॥

मल्लि०—एवमिति। कन्यार्थं कन्याप्रदानार्थं स हिमवानेवं वाच्य इति वो युष्मभ्यं नोपदिश्यते। कुतः। हि यस्मात्साधवो विद्वांसो भवद्भिः प्रणीतं स्मृतिरूपेण निबद्धमाचारमामनन्त्युपदिशन्ति। न हि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इत्यर्थः ॥ ३१ ॥

चा०—एवमिति। स हिमाद्रिः कन्यार्थमेवं वाच्य इति वो युष्माकं नोपदिश्यते नोच्यते। यतः साधवो तमाचारमाचरन्ति व्यवहरन्ति ॥ ३१ ॥

टिप्पणी—उत्तरार्द्धगतवाक्यार्थो हेतुः पूर्वार्द्धगतवाक्यार्थस्येतिवाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ३१ ॥

आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति।
प्रायेणैवंविधे कार्ये पुरंध्रीणां प्रगल्भता ॥ ३२ ॥

मल्लि०—आर्येति। आर्या पूज्यारुन्धत्यपि तत्र विवाहकृत्ये व्यापारं साहाय्यं कर्तुमर्हति। तथाहि। प्रायेण प्राचुर्येणैवंविधे। कार्ये विवाहादिकार्ये। दुर्घट इत्यर्थः। पुरंध्रीणां कुटुम्बिनीनाम्। 'स्यात्तु कुटुम्बिनी। पुरन्ध्री' इत्यमरः। प्रगल्भता चातुर्यम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥ ३२ ॥

चा०—आर्येति । तत्र हिमवद्गृहे आर्या भगवत्यरुन्धत्यपि व्यापारं साहाय्यं कर्तुमर्हति । यत एवं विधे कन्याप्रार्थनारूपे कार्ये स्त्रीणां प्रगल्भता प्रवीणता ॥ ३२ ॥

टिप्पणी—एवंविधे कार्ये ( विवाहादौ ) प्राचुर्येण स्त्रीणां चातुर्यं भवतीति सामान्यार्थेन पूर्वार्द्धगतविशेषार्थसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥ ३२ ॥

तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन्संगमः पुनरेव नः ॥ ३३ ॥

मल्लि०—तदिति । तत्तस्मात्कारणादोषधिप्रस्थम् नाम हिमवत्पुरं हियवन्नगरं सिद्धये कार्यसिद्ध्यर्थं प्रयात गच्छत । अस्मिन्पुरोवर्तिनो । महाकोशी माम तत्रत्य काचिन्नदी तस्यः प्रपाते भृगावेव । सा नदी यत्र पतति तस्मिन्नित्यर्थः । 'प्रपातस्त्वतटो भृगुः' इत्यमरः । नोऽस्माकं पुनः संगमः । अस्त्विति शेषः । भवत्समागमं प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥ ३३ ॥

चा०—तदिति । तत्तस्माद्धेतोः सिद्धये कार्यनिष्पत्तये ओषधिप्रस्थं ओषधिप्रस्थनाम हिमाद्रिनगरं यूयं प्रयात गच्छत । पुनश्च नोऽस्माकमस्मिन्महाकोशप्रपाते महाकोश्या नद्यास्तटे सङ्गमः ॥ ३३ ॥

टिप्पणी—स्वभावोक्तिरलंकारः ॥ ३३ ॥

तस्मिन्संयमिनामाद्ये जाते परिणयोन्मुखे[1] ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः[2] ॥ ३४ ॥

मल्लि०—तस्मिन्निति । संयमिनां योगिनामाद्ये तस्मिन्नीश्वरे परिणयोन्मुखे विवाहोत्सुके जाते सति प्रजापतेरिमे प्राजापत्याः । ब्रह्मपुत्रा इत्यर्थः । तपस्विनो मुनयः परिग्रहैः पत्नीभिर्व्रीडाम् । गार्हस्थ्यनिमित्तामित्यर्थः । 'पत्नीपरिजनापानमूलशापाः परिग्रहाः' इत्यमरः । जहुस्तत्यजुः । जहातेर्लिटि रूपम् । हि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः ॥ ३४ ॥

चा०—तस्मिन्निति । संयमिनां जितेन्द्रियाणामाद्ये तस्मिन् शंभौ परिणयोत्सुके विवाहोत्सुके जाते प्राजापत्या वसिष्ठादयस्तपस्विनः परिग्रहव्रीडां परिग्रहः पत्नी तज्जातां लज्जां जहुस्तत्यजुः । तेषां परिग्रहस्य शम्भोः सकाशाल्लज्जाऽसीत् ॥ ३४ ॥

टिप्पणी—अत्र ब्रह्मपुत्राणां तपस्विनां परिग्रहव्रीडात्यागे विशेषणविधया हरस्य परिणयोन्मुखत्वं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ॥ ३४ ॥

---

१. उ॰ । २. तपोधनः.

ततः [1]परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि संप्राप्तः प्रथमोद्दिष्टमास्पदम्[2] ॥ ३५ ॥

मल्लि०—तत इति । ततोऽनन्तरं मुनिमण्डलं मुनिसमूहः परममित्युक्त्वा ओमित्युक्त्वा । अमुमन्येत्यर्थः । अव्ययमेतत् । 'ओमेवं परमं मतम्' इत्यमरः । प्रतस्थे । भगवानीश्वरोऽपि प्रथमोद्दिष्टं पूर्वसंकेतितमास्पदं स्थानं महाकोशीप्रतापं संप्राप्तः ॥ ३५ ॥

चा०—तत इति । ततोऽनन्तरं तन्मुनिमण्डलं परमं प्रमाणमित्युक्त्वा प्रतस्थे प्रस्थितम् । भगवानपि शंभुरपि प्रथमोद्दिष्टं पूर्वकथितमाश्रमं प्राप्तः ॥ ३५ ॥

टिप्पणी—अत्र स्वभावोक्तिः ॥ ३५ ॥

ते [3]चाकाशमसिश्याममुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६ ॥

मल्लि०—त इति । मनसा समरंहसो मनस्तुल्यवेगास्ते परमर्षयश्च । पूर्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः । असिवच्छ्यामं नीलमाकाशं खं प्रत्युत्पत्यौषधिप्रस्थं हिमवत्पुरमासेदुः । सद्यः प्रापुरित्यर्थः ॥ ३६ ॥

चा०—त इति । ते परमर्षय आकाशमुत्पत्योत्कालङ्कृत्यौषधिप्रस्थं पुरमासेदुः प्रापुः । कीदृशाः । मनसा समरंहसः । मनसा चेतसा समं तुल्यं रंहो वेगो येषां ते । कीदृशमाकाशं । असिश्यामं खड्गश्यामलम् ॥ ३६ ॥

टिप्पणी—अत्र पद्येऽसिश्याममित्यत्राऽसिवतश्याममिति लुप्तोपमा ॥ ३६ ॥

इतः परं दशभिः श्लोकैरोषधिप्रस्थमेव वर्णयति—

अलकामतिवाह्यैव[4] वसतिं वसुसंपदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोप[5]निवेशितम् ॥ ३७ ॥

मल्लि०—अलकामिति । वसुसंपदां धनसमृद्धीनां वसतिं स्थानमलकां कुबेरनगरीमतिवाह्य । परिच्छिद्येति यावत् । उपनिवेशितमिव स्थितम् । तथा स्वर्गस्याभिष्यन्दोऽतिरेकः । अतिरिक्तजन इति यावत् । तस्य वमनं निःसारणं कृत्वोपनिवेशितमिव स्थितम् । उभयत्रापि कौटिल्यः—'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवादेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्' इति । अलकामरावत्यतिशयितसमृद्धिकमित्यर्थः ॥ ३७ ॥

कुलकेनौषधिप्रस्थस्येतो वर्णनम्—

चा०—अलकामिति । कीदृशं पुरं । वसुसंपदां वसूनां रत्नानां समृद्धीनामलकां कुबेरनगरीमतिवाह्येव निष्पीड्येव वसतिं निवासभूतं । तथा स्वर्गस्याभिष्यन्दः सारस्तस्य वमनमुद्गिरणं कृत्वेव विनिवेशितं रचितं 'वसु रत्नं वसु धनं वसुमाहुर्हुताशनम्' इति शाश्वतः ॥ ३७ ॥

---

१. प्रमाणम्, २. आश्रमम्, ३. अथ, ४. इव, ५. विनिवेशितम्,

टिप्पणी—उपनिवेशितमिवेत्यत्रोत्प्रेक्षणार्थकेवशब्दसद्भावाद्वाच्योत्प्रेक्षाऽलङ्कारः । ३७ ।

गङ्गास्त्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।
बृहन्मणिशिलासालं [1]गुप्तावपि मनोहरम् ॥ ३८ ॥

मल्लि०—गङ्गेति । गङ्गयाः स्त्रोतोभिः प्रवाहैः परिक्षिप्तं परिवेष्टितम् । तैरेव सपरिखमित्यर्थः । वप्रश्चयः । प्राकारचैत्यमिति यावत् । 'स्याच्चयो वप्रमस्त्रियाम् ।' इत्यमरः । तस्यान्तर्मध्ये ज्वलिताः प्रकाशमाना ओषधयो यस्य तत्तथोक्तम् । ज्वलितौषधित्वाद्रात्रिषु संचारिणां दीपनिरपेक्षमित्यर्थः । बृहद्विपुलो मणिशिलानां माणिक्यानां सालः 'प्राकारो वरणः सालः' इत्यमरः । अतएव गुप्तावपि संवरणेऽपि मनोहरम् । अकृत्रिमदुर्गसंवरणमिति भावः ॥ ३८ ॥

चा०—गङ्गेति । पुनः कोदृशं । गङ्गास्त्रोतोभिः प्रवाहैः परिक्षिप्तं वेष्टितमित्युदकगुप्तिः । तथा वप्राणामन्तर्मध्ये ज्वलिता ओषधयो यत्रेति वह्निगुप्तिः । बृहत्यो मणिशिला एव साला प्रकारा यत्रेति प्राकारगुप्तिः । पुनः कोदृशं । स्वर्गादपि मनोहरम् ॥ ३८ ॥

टिप्पणी—अत्र विशेषणानां साभिप्रायत्वात्परिकरालङ्कारः ॥ ३८ ॥

जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥ ३९ ॥

मल्लि०—जितेति । यत्र पुरे नागा गजा जितं सिंहेभ्यो भयं यैस्ते तथोक्ताः । सिंहाधिकबला इत्यर्थः । नाथस्तु 'पदं तुषारस्रुतिधौतरक्तम्' ( १।६ ) इत्येतद्विरोधभयात् 'वीतवीतभयाः' इति पपाठ । तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् । अत्र त्वोषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसंभवेनाविरोधादिति । 'वीतवीतभयाः' इति पाठे वीतं विगतं वीतात्पादाङ्कुशकर्मभ्यां भयं येषां ते तथोक्ताः । स्वभावविनीता इत्यर्थः । 'पादकर्मयुतं प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातम्' इति यादवः । अश्वा बिलयोनयो बिलसंभवाः । अन्यत्र तु न तथेति वैचित्र्यम् । उक्तं च —'अमृताद्वाष्पतो वह्नेर्वेदेभ्योण्डाच्च गर्भतः । साम्नो हयानामुत्पत्तिः सप्तधा परिकोर्तिता ।' इति । यक्षाः प्रसिद्धाः । किंपुरुषाः किनराश्च पौराः पुरजनाः । वनदेवता एव योषितः । न तु मानुष्य इत्यर्थः ॥ ३९ ॥

चा०—जितेति । यत्न नागा गजा जितसिंहभया जितमवगणितं सिंहेभ्यो भयं यैस्तादृशाः । यत्राश्वास्तुरगा बिलयोनयः बिलेभ्यो रन्ध्रेभ्यो योनिरुत्पत्तिर्येषां ते ।

१. स्वर्गादपि,

पौराः पुरनिवासिनो यक्षाः किंपुरुषाः किन्नराश्च वनदेवता एव योषितः स्त्रियः ॥ ३९ ॥

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।
[1]अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥ ४० ॥

मल्लि०—शिखरेति । यत्र पुरे शिखरेष्वासक्ता मेघा एषां वेश्मनां संबन्धितः । अनुगर्जितानी प्रतिगर्जितानि तैः संदिग्धा मुरजस्वनाः करणैस्तालव्यवस्थापकैस्ताडनविशेषैः । तदुक्तम् राजकंदर्पेण—'नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम् । संस्थान ताडनं रोधः करणानि प्रचक्षते ॥' इति व्यज्यन्ते स्फुटीक्रियन्ते ॥ ४० ॥

चा०—शिखरेति । यत्र वेश्मनां मुरजस्वनाः मृदङ्गशब्दाः करणैस्तालैर्व्यज्यन्ते निश्चीयन्ते नतु स्वरैः । कीदृशानां । शिखरेष्वग्रभागेषु लग्ना मेघः येषाम् । अत एव मन्द्रगर्जितसंदिग्धा मन्द्रगर्जितेन मेघप्रतिशब्देन संदिग्धतां मेघशब्दो वा मुरजशब्दो वा संशयं प्राप्ता नहि मेघशब्देषु तालाः सम्भवन्ति ॥ ४० ॥

यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥

मल्लि०—यत्रेति । यत्र नगरे विलोलानि चञ्चलानि विटपेष्वंशुकानि येषां तैः कल्पद्रुमैरेवापौरादरेण पौरादरं विनैव निर्मिता । अयत्नसिद्धेत्यर्थः गृहेषु यानि यन्त्राण्याधारदारूणि तेषु पताकास्तासां श्रीः संभवतीति शेषः । तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति सभाव्यन्त इत्यर्थः ॥

चा०—यत्रेति । यत्र गृहयन्त्रपताकाश्रीः कृतकवैजयन्तीशोभाः कल्पद्रुमैरेवास्ति । कीदृशैश्चञ्चलेषु प्रकाण्डेषु अंशुकानि वस्त्राणि येषु तैः । अतएवापौरादरनिर्मिता विनैव पौरादरेणापुरुषप्रयत्नेन निर्मिता । पताकायां वस्त्रैर्भाव्यम् ॥४१॥

यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु[2] ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥

मल्लि०—यत्रेति । यत्र पुरे नक्तं रात्रौ स्फटिकहर्म्येष्वापानभूमिषु पानगोष्ठीप्रदेशेषु ज्योतिषां नक्षत्राणां प्रतिबिम्बान्युपहारतां पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा प्राप्नुवन्ति ॥ ४२ ॥

चा०—यत्रेति । यत्र स्फटिकहर्म्येषु गृहेषु नक्तं रात्रौ मदिरापानभूमिषु ज्योतिषां ताराणां प्रतिबिम्बानि उपहारतां पुष्पप्रकरत्वं प्राप्नुवन्ति यान्ति । पानभूमिषु पुष्पप्रकरा भवन्ति ॥ ४२ ॥

---

१. मन्द्रगर्जित, २. पङ्क्तिषु,

यत्रौषधिप्रकाशेन नक्तं दर्शितसंचराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥ ४३ ॥

मल्लि०—यत्रेति । यत्र पुरे दुर्दिनेषु मेघाच्छन्नदिवसेषु नक्तमोषधीनां तृणज्योतिषां प्रकाशेन संचरन्त एभिरिति संचराः पन्थानः । 'गोचरसंचर' इत्यादिना घप्रत्ययान्तो निपातः दर्शितसंचाराः प्रकाशितमार्गा अभिसारिकाः कान्तार्थिन्यः । 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यमरः । तमिस्राणां तमसाम् । कृद्योगात्कर्मणि षष्ठी । अनभिज्ञाः । तमांसि नाभिजानन्तीत्यर्थः ॥ ४३ ॥

चा०—यत्रौषधीति । यत्र गिरौ ओषधिप्रकाशेन दीप्त्या दर्शितसंचाराः दर्शितः संचारो मार्गो याभ्यस्ता अभिसारिका दुर्दिनेपि मेघावरणेपि तमिस्राणामन्धकाराणामनभिज्ञा ज्ञात्र्यो न भवन्तीत्यर्थः । 'कान्तार्थिनी तु या याति संकेतं साऽभिसारिका' इत्यमरः । 'तमिस्रं तिमिरं तमः' इति चामरः ॥ ४३ ॥

यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।
रतिखेदसमुत्पन्ना[1] निद्रा संज्ञाविपर्ययः ॥ ४४ ॥

मल्लि०—यौवनान्तमिति । यस्मिन्पुरे वयो यौवनान्तं यौवनावधिकम् । सर्वेऽप्यजरा इत्यर्थः । तथा कुसुमायुधात्कामात् । अन्य इति शेषः । अन्तको मृत्युर्न । अस्तीति शेषः । विरहिणां तादृग्दुःखोत्पादकत्वादन्तकत्वोपचारः । कामं विना मृत्युर्नास्तीत्यर्थः । अतएव तत्कार्यभूतमरणाभाव इत्याशयेनाह—रतीति । रतिखेदसमुत्पन्ना निद्रा सुप्तिरेव संज्ञाविपर्ययश्चेतनापगमः । न तु दीर्घनिद्रारूप इत्यर्थः । अत्रत्याः सर्वेऽजरामराः इति श्लोकतात्पर्यार्थः । अन्तयत्यन्तं करोतीत्यन्तकः । अन्तयतेस्तत्करोतीति ण्यन्ताद्ण्वुल्प्रत्ययः ॥ ४४ ॥

चा०—यौवनान्तमिति । यत्र वयो यौवनान्तं तारुण्यावसानं नतु वार्धकं यत्र कुसुमायुधान्मदनादातङ्क उपद्रवो न व्याध्यादेः । रतिखेदसमुत्थाना सुरतश्रमजनिता निद्रासंज्ञाविपर्ययश्चेतनाया अभावो नतु प्राणवियोगजनितः । एतेन जरामरणत्वमुक्तं तन्निवासिनाम् ॥ ४४ ॥

भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥ ४५ ॥

मल्लि०—भ्रूभेदिभिरिति तत्र पुरे प्रिया युवानो भ्रूभेदिभिर्भ्रूभङ्गवद्भिः सकम्पा ओष्ठा येषु तैर्ललिताङ्गुलितर्जनानि येषु तैः स्त्रीणां कोपैर्मानाख्यैराप्रसादार्थिन आप्रसादं प्रसादपर्यन्तमर्थिनो याचकाः कृताः । न तु शत्रुकोपैरिति भावः ॥ ४५ ॥

---

१. समुत्थाना,

चा०—भ्रूभङ्गिभिरिति । यत्र स्त्रीणां कोपैः प्रिया युवानोऽप्रसादार्थिनः प्रसादस्यानर्थयितारः कृताः । कोपानां मनोज्ञत्वात्तेष्वेवानुरक्ता अभूवन्नित्यर्थः । कीदृशैः कोपैः । भ्रूभङ्गिभिर्भ्रूभङ्गयुक्तैस्तथा सकम्पा ओष्ठा अधरा येषु तैः । ललितानि मनोज्ञान्यङ्गुलितर्जनानि येषु तैः ॥ ४५ ॥

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं [1]गन्धवद्गन्धमादनम् ॥ ४६ ॥

मल्लि०—संतानकेति । किंचेति चार्थः । संतानकतरोश्छायासु सुप्ता विद्याधरा देवताविशेषास्त एवाध्वगा यस्मिंस्तत्तथोक्तम् गन्धवद्गन्धाढ्यम् गन्धमादनं नाम गिरिर्यस्य पुरस्य बहिर्भवं बाह्यमुपवनमारामः । संतानकतरुच्छायेत्यत्र पूर्वपदार्थबाहुल्यसंभवेऽपि 'शलभच्छायम्', 'इक्षुच्छायम्' इतिवत्समर्थच्छायानिष्पत्तेस्तदपेक्षाभावात् 'छाया बाहुल्ये' इति नपुंसकत्वं नास्तीत्यनुसंधेयम् अत्र 'गन्धवद्गन्धमादनम्' इत्यागन्तुकः पाठः। प्राचीनः पाठस्तु 'सुगन्धिर्गन्धमादनः' इति पुंलिङ्गान्तः । अतएव क्षीरस्वामिना 'गन्धमादनमन्ये च' इत्यत्र गन्धेन मादयतीति गन्धमादन इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्तम् 'सुगन्धिर्गन्धमादनः' इति कालिदास इति ॥ ४६ ॥

चा०—संतामेति । यस्य बाह्यं लौकिकमुपवनं गन्धमादनमित्येतदाख्यो गिरिः । गन्धमादनशब्दो नपुंसकलिङ्गः । कीदृक् । सन्तानकानां कल्पद्रुमाणां तरूणां छायासु सुप्ता विद्याधरा एवाध्वगाः पान्थाः यत्र तत् । तद्बाह्यं मुपवनम् ॥ ४६ ॥

टिप्पणी—अत्र विद्याधरेष्वध्वगत्वारोपाद्रूपकालङ्कारः ॥ ४६ ॥

अथ[2] ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसंधिसुकृतं वञ्चनामिव मेनिरे ॥ ४७ ॥

मल्लि०—अथेति । ते दिवि भवा दिव्या मुनयो हिमवत इदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसंधिना स्वर्गोद्देशेन यत्सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत्स्वर्गाभिसंधिसुकृतं वञ्चनां प्रतारणामिव मेनिरे । हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धाः इत्यर्थः । स्वर्गादतिरमणीयमिति भावः ॥ ४७ ॥

चा०—तत इति । ततोऽनन्तरं दिव्यास्ते मुनयः सप्तर्षयो हिमवतः पुरं प्राप्य स्वर्गस्योद्देशो यत्र तत्तादृशं सुकृतं पुण्यं वञ्चनां मेनिरे ज्ञानवन्तः । एतत्पुरमुद्दिश्य कस्मादस्माभिस्तपश्चीर्णं ततोप्यधिकतरत्वात् ॥ ४७ ॥

---

१. सुगन्धि गन्धमादनम्, २. ततस्ते,

टिप्पणी—हैमवतं पुरं स्वर्गादप्यतिरमणीयमिति भावार्थः। अत्रोपमेयं हैमवतं पुरमुपमानात्स्वगार्दविकतया वर्णितमिति व्यतिरेकोऽलङ्कारः। सच वाच्योत्प्रेक्षया संकीर्णः ॥ ४७ ॥

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलः[1] ॥ ४८ ॥

मल्लि०—त इति। लिखितानलनिश्चलः। चित्रगतज्वलननिष्पन्दैरिति वेगप्रकर्षोक्तिः। जटाभारैरुपलक्षितास्ते मुनयः। द्वारि तिष्ठन्तीति द्वाःस्था द्वारपालकाः 'प्रतिहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः' इत्यमरः। उन्मुखैरूर्ध्वंमुखैर्द्वाःस्थैर्वीक्षिताः सन्तः। न तु विनिवारिता इत्यर्थः। गिरेर्हिमवतः सद्मनि वेगादवतेरवतीर्णवन्तः ॥ ४८ ॥

चा०—ते सद्मनीति। ते मुनयो वेगाद्गिरेः सद्मनि गृहेऽवतेरुरवतीर्णाः। कीदृशाः। उन्मुखैरुर्ध्वंमुखैर्द्वाःस्थैः प्रतीहारैर्वीक्षितास्तथा लिखितानलसन्निभाश्चित्राग्निवन्निष्कम्पैर्जटाभारैरुपलक्षिताः ॥ ४८ ॥

टिप्पणी—अत्र सहोक्तिः ॥ ४८ ॥

गगनादवतीर्णा सा यथावृद्धपुरःसरा।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥ ४९ ॥

मल्लि०—गगनादिति। गगनादवतीर्णावरूढा यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरःसरा अग्रेसरा यस्यां सा तथोक्ता। अनुपसर्जनाधिकारान्न ङीप्। सा मुनिपरम्परा मुनिपंक्तिस्तोयान्तस्तोयाभ्यन्तरे भास्करालो प्रतिबिम्बितार्कपंक्तिरिव रेजे। एतेन मुनीनां तेजस्वित्वेऽपि सुखसंदर्शनं सूचयति। भास्कराणां भूयिष्ठत्वसंभावनार्थं तोयान्तरित्युक्तम्। अतएव बहुत्वसिद्धिश्च ॥ ४९ ॥

चा०—गगनादिति। गगनादाकाशादवतीर्णा सा मुनिपरंपरा पङ्क्तिस्तोयान्तर्जलस्य मध्ये प्रतिबिम्बिता भास्करालीव रविश्रेणिरिव रेजे बभौ। कीदृशी। यथावृद्धपुरःसरा ये ये वृद्धा यथावृद्धं पुरोगामि यस्याः सा ॥ ४९ ॥

टिप्पणी—अत्र भास्करालीमुनिपरम्परयोरुपमानोपमेययोरिवशब्दस्य शोभनाश्रयत्वस्य सामान्यधर्मस्य सत्त्वात्पूर्णोपमाऽलङ्कारः ॥ ४९ ॥

तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः।
नमयन्सारगुरुभिः पादन्यासैर्वसुंधराम् ॥ ५० ॥

मल्लि०—तानिति। गिरिर्हिमवानर्घ्यमर्घार्थं जलमादाय सारगुरुभिरन्तःसारदुर्भरैः पादन्यासैर्वसुंधरां नमयन्नवः प्रापयन्। अर्घमर्हन्तीत्यर्घ्यान् पूज्यान्। दण्डादित्वाद्यप्रत्ययः। तान्मुनीन्दूरात्प्रत्युद्ययौ ॥ ५० ॥

---

१. निश्चलाः,

चा०—तानिति । गिरिर्हिमवान् सारेण बलेन गुरुभिर्गुर्वहैः पादन्यासैर्वसुधामुर्वी नमयन् नम्रीकुर्वन् पूजायोग्यान् तान्मुनीन् दूरात्प्रत्युद्ययौ प्रत्युद्गतः । किं कृत्वा । अर्घ्यमादाय गृहीत्वा ॥ ५० ॥

संप्रति हिमवन्तमेव जंगमस्थावररूपद्वयसाधारणैर्विशिनष्टि—

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१ ॥

मल्लि०—धात्विति । धातुवत्ताम्रोऽधरो यस्य स तथोक्तः । अन्यत्र धातुरेव ताम्रोऽधरो यस्य । प्रांशून्नतः । उभयत्रापि समानम् । देवदारुवद् बृहन्तौ भुजौ यस्य स तथोक्तः । देवदारव एव बृहन्तौ भुजौ यस्येत्यन्यत्र । प्रकृत्या स्वभावेनैव शिलावदुरो यस्य स शिलोरस्कः । शिलैवेत्यन्यत्र 'उरः प्रभृतिभ्यः कप्' इति कप् । अतो हिमवानिति सुव्यक्तः । वर्तमाने क्तः । सत्यं स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥ ५१ ॥

चा०—धात्विति । कीदृशोऽद्रिर्धातुर्गैरिकादिस्तद्वच्छोणितोऽधरो यस्य स तथा प्रांशुमानोन्नतः । देवदारुवद्विशालौ भुजौ यस्य सः । शिलावद्वक्षो यस्य सः । प्रकृत्यैव हिमवानिति सुव्यक्तः सुखेन व्यज्यते ज्ञायते स सुव्यक्तः । स्थावरस्वरूपस्य सादृश्यात् । स्थावरस्तु धातव एव ताम्राधरो यस्य स प्रांशुरत्युन्नतः ! देवदारव एव महान्तौ भुजौ यस्य सः । शिला एव वक्षो यस्य सः ॥ ५१ ॥

टिप्पणी—धातुवत् ताम्रोऽधरो यस्येतिविग्रहे लुप्तोपमा । धातुरेव ताम्रोऽधरो यस्येति विग्रहे धातौ ताम्राधरत्वारोपाद्रूपकम् । एवं देवदारुबृहद्भुजः शिलोरस्क इति पदद्वयेऽपि बोध्यम् ॥ ५१ ॥

विधिप्रयुक्तसत्कारैः[१] स्वयं मार्गस्य [२]दर्शकः ।
स [३]तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ॥ ५२ ॥

मल्लि०—विधीति । स हिमवान्विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्चनैः शुद्धकर्मभिरदुष्टचरितैः । शुद्धान्तप्रवेशार्हैरित्यर्थः । तैर्मुनिभिः स्वयं मार्गस्य दर्शयतीति दर्शको दर्शयिता सन् । पश्यतेर्ण्यन्तादन्प्रत्ययः । शुद्धान्तमन्तः । पुरमाक्रमयामास । प्रवेशयामासेत्यर्थः । अत्र क्रमेरगत्यर्थत्वात् 'गतिबुद्धि—' इत्यादिना तैरित्यस्य न कर्मत्वम् ॥ ५२ ॥

चा०—विधीति । अनेन यथागच्छतेति स्वयं मार्गस्य दर्शकः । सोऽद्रिर्विधिना प्रयुक्तः कृतः सत्कारः पूजा येषां तैः । शुद्धकर्मभिर्निर्मलक्रियैस्तैर्मुनिभिः शुद्धान्त-

१. सत्कारान्, २. देशकः, ३. तान्

मन्तःपुरमाक्रमयामास। अत्राक्रमिरवष्टम्भे वर्तते। अन्यथा क्रमेर्गत्यर्थत्वाद्गतिबुद्धीत्यादिना कर्मत्वं स्यात्। इति दुर्घटवृत्तिः॥ ५२॥

तत्र वेत्रासनासीनान्कृतासनपरिग्रहः।
इत्युवाचेश्वरान्वाचं प्राञ्जलिर्भूधरेश्वरः[2]॥ ५३॥

मल्लि०—तत्रेति। वेत्रं लताविशेषः। तत्र शुद्धान्ते वेत्रासनासीनान्वेत्रमयविष्टरोपविष्टानीश्वरान्प्रभून्मुनीन्भूधरेश्वरो हिमवान्कृतासनपरिग्रहः। उपविष्टः सन्नित्यर्थः। प्राञ्जलिः कृताञ्जलिः सन्। इत्येवं वाचमुवाच॥ ५२॥

चा०—तत्रेति। तत्रान्तःपुरे प्राञ्जलिर्बद्धकरपुटः पृथिवीधरो हिमवान् मुनीनिति वक्ष्यमाणां वाचमुवाच। कीदृशान्। वेत्रनिर्मितपीठ उपविष्टान्। कीदृग् हिमवान्। तदाज्ञया तेषामाज्ञया कृत आसनपरिग्रहः स्वीकारो येन सः॥ ५३॥

अपमेघोदयं वर्षमदृष्टकुसुमं फलम्।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे॥ ५४॥

मल्लि०—अपेति। अतर्कितोपपन्नमविचारितमेवोपगतम्। अत्यन्तासंभावितमित्यर्थः। वो युष्माकं दर्शनमपमेघोदयं वर्षमनभ्रा वृष्टिस्तयादृष्टं कुसुमं यस्य तत्तथोक्तं फलं च तन्मे प्रतिभाति। अतिदुर्लभलाभः संवृत्त इत्यर्थः। अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाभिधानाद्विभावना। मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालंकारश्चेत्युभयोः संसृष्टिः॥ ५४॥

चा०—अपमेघेति। अतर्कितोपपन्नं अचिन्तितप्राप्तं वो युष्माकं दर्शनमपमेघोदयं मेघोदयरहितं वृष्टिनिभं। तथा अदृष्टकुसुमं फलं पुष्पदर्शनरहितफलतुल्यं मे प्रतिभाति। असंभवोपमागर्भोयमलंकारः॥ ५४॥

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम्।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात्॥ ५५॥

मल्लि०—मूढमिति। भवदनुग्रहादात्मानं मां मूढं बुद्धिं विनाकृतं बुद्धमिव मूढो भूत्वा यो बुद्धवांस्तमिव। कर्तरि क्तः। आयसमयोविकारं हैमीभूतम्। आयसत्वं विहाय सौवर्णत्वं प्राप्तमिवेत्यर्थः। भूमेर्भूलोकाद्दिवं स्वर्गमारूढमिव मन्ये। ज्ञानरूपस्थानान्यद्य मे परमुत्कृष्यन्त इति भावः॥ ५५॥

चा०—मूढमिति। भवदनुग्रहाद्भवतां प्रसादान्मूढं मूर्खमात्मानं बुधमिव

---

१. नीचासन, २. पृथिवीधरः,

पण्डितमिव मन्ये जाने । आयसं लोहमयं हैमीभूतं सौवर्णं कृतं जाने । भूमेर्दिवं स्वर्गमारूढं जाने तत्तुल्यसन्तोषादिति भावः ॥ ५५ ॥

टिप्पणी—वुद्धमिव हैमीभूतमिव दिवमिवेतीवत्रयोपादानान्मालोपमा । सा च मन्ये शब्दप्रयोगादुत्प्रेक्षया संकीर्णा ॥ ५५ ॥

अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं [1]प्रचक्षते ॥ ५६ ॥

मल्लि०—अद्येति । अद्यप्रभृतीत आरभ्य भूतानां प्राणिनां शुद्धयेऽधिगम्योऽस्मि । शुद्धयर्थिनां तीर्थभूतोऽस्मीत्यर्थः । भवदागमनादिति शेषः । हि यस्मात् । यदर्हद्भिः सद्भिरध्यासितमधिष्ठितम् । जुष्टमिति यावत् । तत्तीर्थं प्रचक्षते । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः ॥ ५६ ॥

चा०—अद्येति । अद्यप्रभृत्यहं शुद्धये पापापनुत्तये प्राणिनामधिगम्यः प्राप्योऽस्मि । यतोऽर्हद्भिः पूज्यैर्यदध्यासितमधिष्ठितं तत्तीर्थं प्रचक्षते वदन्ति । बुध इति शेषः ॥ ५६ ॥

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥

मल्लि०—अवैमीति । हे द्विजोत्तमाः ! आत्मानं मां द्वयेनैव पूतं शुद्धमवम्यैव गच्छामि । केन द्वयेन । मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन वो युष्माकं धौतयोः क्षालितयोः पादयोरम्भसा च । गङ्गाजलवत्पादाम्भसः पावनत्वमित्यौपम्यं गम्यते । तच्च 'प्रस्तुताप्रस्तुतयोः' इति दीपकालंकारः । 'प्रियः प्रियतराख्यानम्' इति लक्षणात्प्रियोऽलंकार इति केचित् ॥ ५७ ॥

चा०—अवैमीति । भो द्विजोत्तमा ब्राह्मणश्रेष्ठाः ! द्वयेनैवात्मानं पूतं पवित्रमभिजाने । किं तद्द्वयमित्याह । मूर्ध्नि गङ्गाप्रपातेन वो युष्माकं धौतपादाम्भसा प्रक्षालितयोः पादयोर्जलेन वा ॥ ५७ ॥

जंगमं [2]प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये [3]द्विरूपमपि मे वपुः ॥ ५८ ॥

मल्लि०—जंगममिति । हे मुनयः ! द्विरूपं जंगमस्थावरात्मकत्वाद्द्विप्रकारमकमपि मे वपुर्विभक्तानुग्रहं विभज्य कृतप्रसादं मन्ये । कुतः । जंगमं वपुर्वो युष्माकं प्रैष्यभावे कैङ्कर्यं । स्थितमिति शेषः । 'प्रादूहोढोढयेषैष्येषु वृद्धिर्वक्तव्या' इति वृद्धिः । 'नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः' इत्यमरः । स्थावरं वपुश्चरणाङ्कितम् । अयमेव हि महाननुग्रहो दासजनस्य यत्कर्मसु नियोजनं मूर्धनि पादन्यासश्चेति तात्पर्यार्थः ॥ ५८ ॥

---

१. प्रचक्ष्यते  २. प्रेक्ष्यभावेन,  ३. विरूपम्; द्वैरूप्यम्,

चा०—जङ्गममिति। द्वे एव रूपे द्वैरूप्यमपि मे वपुर्विभक्तानुग्रहं युष्माभिर्विभक्तो विभागीकृतोऽनुग्रहः प्रसादो यस्येति तादृशं मन्ये। कथमित्याह। प्रैष्यभावेनं प्रैष्य आज्ञाकारी तद्भावेन जंगमं चलं चरणन्यासचिह्नितं स्थावरं च ॥ ५८ ॥

भवत्संभावनोत्थाय परितोषाय मूर्च्छते।
[1]अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥

मल्लि०—भवदिति। व्याप्ता दिगन्ता यैस्तानि व्याप्तादिगन्तानि। महान्त्यपीत्यर्थः। मे ममाङ्गानि भवत्संभावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्याप्नुवन्ति। अलमर्थयोगाच्चतुर्थी। यथा महत्स्वपि मद्गात्रेषु न माति तथा मे हर्षो वर्धत इत्यर्थः ॥

चा०—भवदिति। व्याप्ता दिगन्ता यैस्तान्यपि मेङ्गानि मम शरीराणि भवत्संभावनोत्थाय भवद्भिरागमनेन या संभावना तस्या उत्थ उत्पन्नः तस्मै। मूर्च्छते वर्धमानाय हर्षाय न प्रभवन्ति। हर्षाद्वोढुं न शक्ता भवन्तीत्यर्थः। अत्र प्रभवते अलमर्थत्वात्परितोषायेति चतुर्थी ॥ ५९ ॥

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥

मल्लि०—नेति। भास्वतां तेजस्वितां च युष्माकं दर्शनेन केवलं दरीसंस्थं गुहागतं तमो ध्वन्तिरूपमेव नापास्तम्। किंतु मेऽन्तर्गतमन्तरात्मगतं रजसो रजोगुणात्परमनन्तरं तमोऽज्ञानरूपमप्यपास्तम्। रजस्तु पादन्यासैरेवापास्तमिति भावः। प्रसिद्धैर्भास्वद्भिर्बाह्यं तमोऽपास्यत एभिस्त्वान्तरमपीति व्यतिरेको व्यज्यते ॥ ६० ॥

चा०—न केवलमिति। भास्वता दीप्तिमता वो युष्माकं दर्शनेन मम केवलं दरीसंस्थं गुहास्थितं तमो नापास्त। किं त्वन्तर्गतं रजसः परं मोहाख्यमपि तमोऽपास्तम् ॥ ६० ॥

कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते[2]।
[3]मन्ये मत्पावनायैव प्रस्थानं भवतामिह[4] ॥ ६१ ॥

मल्लि०—कर्तव्यमिति। कर्तव्यं कार्यं वो युष्माकं न पश्यामि। निस्पृहत्वादितिभावः। अथ स्याच्चेद्विद्येत यदि किं नोपपद्यते किं नाम न संभवति। सर्वं सुलभमेवेत्यर्थः। अथवा किमत्र प्रयोजनचिन्तयेत्याह—मत्पावनाय मच्छोधनायैव भवतामिह विषये प्रस्थानम्। इमं देशमुद्दिश्येदं प्रयाणमित्यर्थः। मन्ये तर्कयामि ॥ ६१ ॥

---

१. अभिव्याप्त, २. उपदिश्यते, ३. शङ्के, ४. इदम्,

अधुना भङ्ग्यागमनं पृच्छति—

चा०—कर्तव्यमिति । वो भवतां कर्तव्यं कार्यं न पश्यामि । यदि स्यात्संभवेत् । तर्हि महाप्रभावत्वात्किमुपदिश्यते किं घटते अहं शङ्के । इह भवतां प्रस्थानमागमनं मत्पावनायैव मत्पवित्रीकरणायैव ॥ ६१ ॥

तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६२ ॥

मल्लि०—तथापीति । तथापि भवतां निस्पृहत्वेपि कस्मिंश्चित् कर्मणीति शेषः । आज्ञामिदं कुर्वित्यादेशं तावदिदानीं मे मह्यं दातुमर्हथ । मदनुग्रहबुद्ध्येति भावः । हि यस्मात्किंकरा भृत्याः । प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये । 'भुवश्च' इतीष्णुच्प्रत्ययः । विशेषेण नियोगो विनियोगः । प्रेषणमेव प्रसादोऽनुग्रहो येषां ते तथोक्ताः । अन्यथा स्वस्वामिभावो निष्फल इति भावः ॥ ६२ ॥

चा०—तथापीति । यद्यपि भवतां किमपि न दुर्घटं । तथापि कस्मिंश्चित्कार्ये म आज्ञां दातुमर्हथ योग्या भवत । यतः किंकराः प्रभविष्णुषु स्वामिषु विनियोगप्रसादा विनियोग आदेशः स एवानुग्रहो येषां ते भवन्ति ॥ ६२ ॥

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥ ६३ ॥

मल्लि०—एत इति । किं बहुना एते वयममी दारा इयं कुलस्य जीवितं प्राणभृता परमप्रेमास्पदमित्यर्थः । कन्या । अत्रैषां मध्ये येन जनेन वः कार्यं प्रयोजनं ब्रूत । तमिति शेषः । येन सोऽपि दीयत इति भावः । रत्नहिरण्यादिकं तु न मे गण्यमित्याह–बाह्यवस्तुषु कनकरत्नादिष्वनास्थानादरः । प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । अदेयं न किंचिदस्तीति भावः ॥ ६३ ॥

चा०—एव इति । एते वयं अमी दाराः कुलस्य जीवितमियं कन्या गौरी त्रयाणां मध्ये येन वः कार्यं प्रयोजनं तत्कथयत । रत्नादिकं किमिति गोपितमित्याह । यतो बाह्यवस्तुषु आत्मपुत्रकलत्रव्यतिरिक्तेषु अनास्थाऽनादरः ॥ ६३ ॥

इत्यू[1]चिवांस्तमेवार्थं [2]गुहामुखविसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः[3] ॥ ६४ ॥

मल्लि०—इतीति । इत्यूचिवानुक्तवान् । वचेः क्वसुप्रत्ययः । हिमालयो हिमवान्गुहानां मुखेषु विवरेषु विसर्पतीति तथोक्तेन प्रतिशब्देन तमेव

---

१. उक्तवान्, २. दरी, ३. हिमाचलः,

पूर्वोक्तमेवार्थं द्विर्द्विवारम्। 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः। व्याजहार बभाषे ॥ ६४ ॥

चा०—इतीति। इतीत्थमुक्तवान् हिमालयो दरीमुखविसर्पिणा गुहामुखप्रसरणशीलेन प्रतिशब्देन तमेवार्थं द्विरिव व्याजहार ॥ ६४ ॥

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु।
[1]ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥ ६५ ॥

मल्लि०—अथेति। अथानन्तरमृषय उदाहरणानि कथाप्रसङ्गास्त एव वस्तून्यर्थास्तेष्वग्रं नयतीत्यग्रणीस्तमग्रण्यं प्रगल्भम्। 'सत्सूद्विष–' इत्यादिना क्विप्। 'अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्' इति णत्वम्। अङ्गिरसं नामर्षिं नोदयामासुः प्रतिवक्तुम् प्रेरयामासुः। सोऽङ्गिरा भूधरं हिमवन्तं प्रत्युवाच ॥ ६५ ॥

चा०—अथेति। अथानन्तरं ऋषयः आङ्गिरसं मुनिं ब्रूहीति प्रेरयामासुः। सोऽङ्गिरा भूधरं हिमाद्रिं प्रत्युवाच। कीदृशमाङ्गिरसम्। उदाहरणवस्तुषु उदाह्रियन्त इत्युदाहरणानि कथनीयानि तेषु वस्तुषु अग्रण्यं प्रवीणम् ॥ ६५ ॥

उपपन्नमिदं सर्वमतः परमपि त्वयि।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥ ६६ ॥

मल्लि०—उपपन्नमिति। इदम् 'एते वयममी दाराः' (६।६३) इत्याद्युक्तं सर्वमतः परमतोऽधिकमपि त्वय्युपपन्नं युज्यते। तथाहि। ते मनसः शिखराणां च समुन्नतिः सदृशी। शिखराणीव मनो महोन्नतमित्यर्थः। किं नाम दुष्करमुन्नतचित्तानामिति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्वाद्दीपकालंकारः ॥ ६६ ॥

चा०—उपपन्नमिति। एते वयमित्यादि यत्त्वयोक्तमिदमेतदखिलमतो वापरमप्यधिकमपि त्वय्युपपन्नं सुघटम्। यतः शिखराणां सदृशी तुल्या मनसः समुन्नतिरौन्नत्यम्। यथा ते शृङ्गाणि तथा मनोपीत्यर्थः ॥ ६६ ॥

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि[2] ते।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७ ॥

मल्लि०—स्थान इति। त्वां स्थावरात्मानं स्थावररूपिणं विष्णुमाहुः 'स्थावराणां हिमालयः' इति गीतावचनात्। स्थाने युक्तम्। युक्तार्थेऽव्ययमेतत्। 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः। तथाहि। ते तव कुक्षिश्चराचराणां जंगमस्थावररूपिणां भूतानां पृथिव्यादीनामाधारतां गतः। तवैव विष्णोः कुक्षिरेवंभूत इति भावः ॥ ६७ ॥

---

१. चोदयामासुः; प्रेरयामासुः, २. मनीषिणः,

चा०—स्थान इति । ते व्याघ्रादयः स्थावरात्मानं स्थावररूपं त्वां विष्णुमाहुः स्थाने युक्तम् । तथा हि । ते कुक्षिश्चराचराणां स्थावरजङ्गमानां भूतानां प्राणिनामाधारतां गतः । विष्णोरपि कुक्षिरीदृशः । तथा च गीतायां ( स्थावराणां हिमालयः ) इति । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः ॥ ६७ ॥

गामधास्यत्कथं नागो मृणालमृदुभिः[1] फणैः ।
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥ ६८ ॥

मल्लि०—गामिति । नागः शेषाहिर्मृणालमृदुभिर्बिसकोमलैः फणैर्गां भुवं कथमधास्यद्धारयेत् । त्वमा रसातलमूलात्पातालपर्यन्तम् । विकल्पादसमासः । नावालम्बिष्यथाश्चेत्पादैर्नावलम्बेथा यदि । त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभर्तीत्यर्थः । अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्यः ॥ ६८ ॥

चा०—गामिति । नागः शेषः मृणालसदृशैस्तुल्यैः फणैर्गां भुवं कथमधास्यद्बिभृयात् । यदि त्वं आ रसातलमूलात्पातालपर्यन्तं तां भुवं नाबालम्बिष्यथाः नाग्रहीष्यः । भवत्सहायकेन शेषो भुवमुद्वोढुं समुद्यत इत्यर्थः । अधास्यदित्यत्र क्रियातिपत्तेरभावाल्लङ्प्रयोगश्चिन्त्यः ॥ ६८ ॥

अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः[2] ।
पुनन्ति [3]लोकान्पुण्यत्वात्कीर्तयः सरितश्च ते ॥ ६९ ॥

मल्लि०—अच्छिन्नेति । अच्छिन्ना अवच्छिन्ना अमलाश्च संतानाः प्रबन्धाः प्रवाहाश्च यासां तास्तथोक्ताः समुद्रोर्मिभिरनिवारिताः । पारगमनादन्तःप्रवेशाच्चेति भावः । ते तव कीर्तयः सरितश्च गङ्गादयः पुण्यत्वात्पवित्रत्वाल्लोकान्पुनन्ति पावयन्ति । लोकपावनाः खलु पुण्यश्लोका इति भावः । केवलप्रकृतविषयस्तुल्ययोगितालंकारः ॥ ६९ ॥

चा०—अच्छिन्नेति । ते कीर्तयः सरितो नद्यश्च पुण्यत्वात्पवित्रत्वाल्लोकान् पुनन्ति पवित्रीकुर्वन्ति । कीदृश्यः । अच्छिन्नो निर्मलः सन्तानः प्रवाहः प्रबन्धश्च यासां ताः । तथा समुद्रोर्मिभिरब्धितरङ्गैरनिवारिता अप्रतिहताः ॥ ६९ ॥

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
[4]प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥

मल्लि०—यथैवेति । गङ्गा भागीरथी । प्रभवत्यस्मादिति प्रभवस्तेन कारणेन परमे तिष्ठतीति परमेष्ठिनो विष्णोः । परमे कित्प्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । '—परमेवर्हिर्दिव्यग्निभ्यः स्थः' इति षत्वम् । पादेन चरणेन यथैव श्लाघ्यते प्रशस्यते तथैव द्वितीयेन प्रभवेणोच्छिरसा

१. सदृशैः, २. निवारिताः, ३. लोकम्, ४. प्रभावेन,

त्वया श्लाघ्यते । हरिचरणवत्तीर्थस्यापि तीर्थभूतस्त्वमिति भावः ॥ ७० ॥

चा०—यथैवेति । परमेष्ठिनो विष्णोः पादेन गङ्गा श्लाघ्यते । तथैवोच्छिरसः द्वितीयेन प्रभवेनोत्पत्तिस्थानेन त्वया गङ्गा श्लाघ्यते ॥ ७० ॥

तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत्स तु[1] स्वाभाविकस्तव[2] ॥ ७१ ॥

मल्लि०—तिर्यगिति । तिर्यगूर्ध्वमधस्ताच्च व्यापकः । सर्वव्यापीत्यर्थः । महिमा महत्त्वं हरेर्विष्णोस्त्रिषु विक्रमेषूद्यतस्य सत आसीत् । त्रिविक्रमोद्यतस्यास्ति कदाचिदेव न तु सर्वदेत्यर्थः । तव तु व्यापको महिमा स्वाभाविकः । नित्यसिद्ध इत्यर्थः ॥ ७१ ॥

चा०—तिर्यगिति । हरेर्विष्णोरेको महिमा त्रिविक्रमोद्यतस्य त्रयो विक्रमाः समाहृतास्त्रिविक्रमं तस्मिन् त्रिभुवनाक्रमणे उद्यतस्य । तिर्यगूर्ध्वमधस्ताच्च व्यापकोऽभूत् । स तु तादृशो महिमा तव स्वाभाविको नित्यः ॥ ७१ ॥

यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥

मल्लि०—यज्ञेति । यज्ञभागभुजामिन्द्रादीनां मध्ये पदमास्थुषा निहितवता त्वयोच्चैरुन्नतं हिरण्यस्य विकारो हिरण्मयम् । 'दाण्डिनायनहास्तिनायन—' इत्यादिनिपातनात्साधु । सुमेरोः शृङ्गं शिखरम् । प्राधान्यं च ध्वन्यते । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । वितथीकृतं व्यर्थीकृतम् । तस्य यज्ञभागाभावादिति भावः । अस्य तु तत्सद्भावे प्रमाणम्—'हिमवतो हस्ती' इति श्रुतिः ॥ ७२ ॥

चा०—यज्ञेति । यज्ञभागभुजां देवादीनां मध्ये पदं स्थानं यज्ञांशभोक्तृत्वेन स्थानं तस्थुषा प्राप्तवता त्वयोच्चैर्हिरण्मयं मेरोः शृङ्गं वितथीकृतं व्यर्थीकृतमित्यर्थः । न हि मेरुर्यज्ञांशभाक् ॥ ७२ ॥

काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदं तु ते भक्तिनम्रं [3]सतामाराधनं वपुः ॥ ७३ ॥

मल्लि०—काठिन्यमिति । भवता सर्वं काठिन्यम् । अनम्रत्वमित्यर्थः । स्थावरे स्थिरे काये । शिलामय इत्यर्थः । अर्पितं न्यस्तम् । सतामर्हतामाराधनं पूजासाधनं त इदं वपुस्तु जंगममित्यर्थः । भक्तिनम्रम् । काठीन्यलेशोऽप्यत्र नास्त्यन्यथा नम्रत्वासंभवादित्यर्थः । तथा चासाधारण्यं ध्वन्यते ॥ ७३ ॥

चा०—काठिन्यमिति । स्थावरे शिलारूपे काये भवता सर्वमपि काठिन्यमर्पितं

---

१. च, २. तथा, ३. अर्हदाराधनम्

व्यस्तम् । भक्तिनम्रस्येदं ते वपुर्महोदारतरम् । जङ्गममित्यर्थः ॥ ७३ ॥

[1]तदागमनकार्यं नः शृणु कार्यं [2]तवैव तत् ।
श्रेयसामुपदेशात्तु[3] वय[4]मत्रांशभागिनः[5] ॥ ७४ ॥

मल्लि०—तदिति । तत्तस्मान्नोऽस्माकमागमनस्य कार्यं प्रयोजनं शृणु । तत्कार्यं च तवैव न त्वस्माकमित्यवधारणार्थं एवकारः । वयं तु श्रेयसामुपदेशादत्र कार्येंऽशभागिनः । त्वमेवात्र फलभाग्वयमुपदेष्टार इति भावः ॥

चा०—यदिति । नोऽस्माकं यदागमनकार्यं शृणु । तत्कार्यं तवैव । तर्हि भवन्तः किमित्यागता इत्यत आह । किं तु श्रेयसामुपदेशान्मार्गनिरूपणाद्वयमपि अंशभागिनः । अतोऽस्माकमप्येतत्कार्यमिति भावः ॥ ७४ ॥

अणिमादि[6]गुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥ ७५ ॥

मल्लि०—अणिमेति । यः शंभुरणिमादिगुणोपेतमणिमादिभिरष्टाभिर्गुणैर्वाच्यभूतैरुपेतम् । अष्टैश्वर्यवाचकमित्यर्थः अतएवास्पृष्टं पुरुषान्तरं येन तं तथोक्तम् पुरुषान्तरस्यानभिधायकम् । तस्यैवैवंगुणत्वादित्यर्थ उच्चः परममीश्वर इति शब्दम् । निरुपपदेश्वरशब्दमित्यर्थः । सार्धचन्द्रमर्धचन्द्रयुक्तम् । अर्धचन्द्रं चेत्यर्थः । बिभर्ति ॥ ७५ ॥

चा०—अणिमेति । अणिमादयो गुणाः सिद्धयस्तैरुपेतं युक्तमीश्वरइतिशब्दमुच्चैश्वर्यापकं सार्द्धचन्द्रमपि शशिखण्डमपि यो बिभर्ति वहति । कीदृशं शब्दम् । अस्पृष्टं पुरुषान्तरं येन सः । अतो तां पुत्रीं वृणुत इति चतुर्थेनान्वयः ॥ ७५ ॥

[7]कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
[8]येनेदं ध्रियते[9] विश्वं धुर्यैर्यानमिवाध्वनि ॥ ७६ ॥

मल्लि०—कलितेति । येन शंभुना कलितं धृतिसंग्रहादिस्वस्वगुणसंपादितमन्योन्यसामर्थ्यं परस्परसहकाररूपं यैस्तथोक्तैः । स्वस्वरूपसामर्थ्यमन्योन्याधेयमेवेति भावः । पृथिव्यादिभिरात्मभिः । अष्टाभिर्मूर्तिभिरित्यर्थः । इदं व्यक्तं विश्वं धुरं वहन्तीति धुर्यैरश्वैः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । अध्वनि यानं रथ इव ध्रियते ॥ ७६ ॥

चा०—कल्पितेति । येनेश्वरेणात्मभिः पृथिव्यादिभिः पृथिव्यप्तेजोवाय्वाकाशैरष्टाभिर्मूर्तिभिरिदं व्यक्तं विश्वं ब्रह्माण्डं तन्यते प्रसार्यते संपाद्यत इत्यर्थः । कीदृशैस्तैः । कल्पितमर्पितमन्योन्यं सामर्थ्यं शक्त्याधारं यैः । कस्मिन् कैः किमिव । धुर्यैरश्वैरध्वनि मार्गे यानमिव रथ इव । 'तन्त्रि कुटुम्बधारणे' इत्यस्य रूपम् ॥७६॥

---

१. यथा, यत्, २. तथा, ३. च, ४. अपि, ५. भाजिनः,
६. गुणौत्थानम्, ७. कल्पिताः, ८. यस्य, ९. धार्यते:,

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ।। ७७ ।।

मल्लि०—योगिन इति । योगिनोऽध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्तिनं शरीरान्तश्चरं सर्वभूतान्तर्यामिणम् । परमात्मस्वरूपिणमित्यर्थः । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । यं शंभुं विचिन्वन्ति । मृगयन्ते मनीषिणो विद्वांसो यस्य शंभोः पदं स्थानमविद्यमानमावृत्तेः पुनः संसारापत्तेर्भयं यत्र तत्तथाभूतमाहुः ।। ७७ ।।

चा०—योगिन इति । योगिना ब्रह्मविदो यं क्षेत्रस्य देहस्यान्तर्वर्तिनं विचिन्वन्ति गवेषयन्ति । मनीषिणो विद्वांसो यस्य पदं अनावृत्तिभयं न विद्यते आवृत्तिः संसारपातस्तद्भूतं भयं यत्र तत्तादृशमाहुः ।। ७७ ।।

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शंभुरस्मत्संक्रामितैः[१] पदैः ।। ७८ ।।

मल्लि०—स इति । विश्वस्य जगतः कर्मणां साक्षी द्रष्टा । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । वरानिष्टान्ददतीति वरदः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । स पूर्वोक्तः शंभुरस्मत्संक्रामितैः पदैरस्मासु निवेशितैर्वाक्यैस्ते दुहितरं साक्षादवृणुते । अस्मन्मुखेन स्वयमेव याचत इत्यर्थः ।७८।

चा०—स त इति । स शंभुरस्मत्संक्रामितैः अस्मासु संक्रामितैर्निहितैः पदैर्वचनैस्ते तव दुहितरं साक्षादात्मार्थे वृणुते । कीदृशो विश्वस्य संसारस्य कर्मणां धर्माधर्मरूपाणां साक्षी दृष्टा तथा वरदः ।। ७८ ।।

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या [२]सद्भर्तृप्रतिपादिता ।। ७९ ।।

मल्लि०—तमिति । तं शंभुं भारत्या वाचार्थमभिधेयमिव सुतया दुहित्रा योक्तुं संघटयितुमर्हसि । अत्र वागर्थयोरुपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् 'वागर्थाविव संपृक्तौ' ( रघुवंश १।१ ) इत्यत्रापि । तथाहि सद्भर्त्रे प्रतिपादिता दत्ता कन्या पितुरशोच्या ।। ७९ ।।

चा०—तमर्थमिति । सुतया पुत्र्या तं शंभुं योक्तुमर्हसि । कया कमिव । भारत्यार्थमिव । एतेन वागर्थयोर्यथा नित्यः संबन्धस्तथाप्यनयोरप्यर्धनारीश्वरत्वेन भविष्यतीति सूच्यते । यतः सद्भर्त्रे सद्वराय प्रतिपादिता दत्ता कन्या पितुरशोच्याऽशोचनीया भवति । कर्तरि षष्ठी ।। ७९ ।।

गुणान्तरमप्याह—

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगतः[३] पिता ।। ८० ।।

---

१. संक्रमितैः, २. सद्भर्त्रे, ३. जगताम्,

**मल्लि०**—यावन्तीति । स्थावराणि चराणि च यावन्त्येतानि भूतानि सन्तीति शेषः । सर्वाणि भूतानीत्यर्थः । एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मादीशो जगतः पिता । पितृदारेषु मातृभावो न्याय्य इति भावः ।८०।

हराय पुत्रीदानादयं गुण इत्याह—

**चा०**—यावन्तीति । यावन्ति स्थावराणि चराणि जङ्गमानि एतानि भूतानि । अमी प्राणिन इमां गौरीं मातरं कल्पयन्तु कुर्वन्तु । हि यत ईश्वरो जगतः पिता ॥ ८० ॥

**प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।**
**चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१ ॥**

**मल्लि०**—प्रणम्येति । विबुधा देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरमस्याश्चरणौ चूडामणिमरीचिभी रञ्जयन्तु । ईश्वरपरिग्रहादखिलदेवतावन्द्या भवत्विरयर्थः ॥ ८१ ॥

गुणान्तरमप्याह—

**चा०**—प्रणम्येति । तदनन्तरं विवाहे जाते विबुधा देवाः शितिकण्ठाय शिवं प्रणम्य नत्वा चूडामणिमरीचिभिः शिरोरत्नदीप्तिभिरस्या गौर्याः पादौ रञ्जयन्तु प्रणम्य शितिकण्ठायेति मित्राय कथयतीत्यादिवत्क्रियायोगे चतुर्थी ॥८१॥

**उमा वधूर्भवान्दाता याचितार इमे वयम् ।**
**वरः शंभुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२ ॥**

**मल्लि०**—उमेति । उमा वधूः । इमे वयं याचितारः प्रार्थकाः । शंभुर्वरो वोढा । एष विधिरेषा सामग्री त्वत्कुलस्योद्भूतये उच्छ्रायायालं पर्याप्तं हि । 'नमः स्वस्तिस्वाहास्वधा–' इत्यादिना चतुर्थी ॥ ८२ ॥

**चा०**—उमेति । उमा गौरी वधूर्जनी । भवान् दाता । इमे वयं याचितारः । शंभुर्वरः एषोयं विधिस्त्वत्कुलोन्नतये त्वद्वंशस्याभ्युदयायैवालं पर्याप्तः । हि अवधारणे ॥ ८२ ॥

**अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।**
**सुतासंबन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥**

**मल्लि०**—अस्तोतुरिति । स्वयमन्यस्तोता न भवतीत्यस्तोतुः किंतु स्तूयमानस्य सर्वस्तुत्यस्य वन्द्यस्य जगद्वन्द्यस्य स्वयमन्यं न वन्दत इत्यनन्यवन्दिनो विश्वगुणोर्देवस्य सुतासंबन्धविधिना यौवनसंबन्धाचरणेन गुरुर्भव । यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्तेत्यर्थः ॥ ८३ ॥

**चा०**—अस्तोतुरिति । अस्तोतुरन्यान्न स्तुवत स्तूयमानस्य नमस्करणीयस्यान-

न्यवन्दिनः नान्यान्वन्दितुं नमस्कर्तुं शीलं यस्येति तादृशस्य विश्वगुरोर्जगद्गुरोः सुतासंबन्धविधिना कन्याप्रदानेन गुरुर्भव । श्वशुरो हि पितृतुल्य इत्यर्थः ॥ ८३ ॥

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥

मल्लि०--एवमिति । देवर्षावङ्गिरस्येवंवादिनि सति पार्वती पितुः पार्श्वेऽधोमुखी सती । लज्जयेति शेषः । लीलाकमलपत्राणि गणयामास संचख्यौ । लज्जावशात्कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः । अनेनावहित्थाख्यः संचारीभाव उक्तः । तदुक्तम्—'अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम्' इति ॥ ८४ ॥

चा०—एवमिति । देवर्षावङ्गिरसि एवमित्थं वादिनि वदति सति पितुर्हिमाद्रेः पार्श्वे समीपे लज्जावशादधोमुखी पार्वती लीलाकमलपत्राणि गणयामास । लज्जाविर्भावभूतं कामातिशयं पद्मगणनाव्याजेन गोपायन्त्यपि सूचितवतीत्यर्थः ॥ ८४ ॥

शैलः संपूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः [१]कन्यार्थेषु कुटुम्बिनः ॥ ८५ ॥

मल्लि०—शैल इति । शैलो हिमवान्संपूर्णकामोऽपि । दातुं कृतनिश्चयोऽपीत्यर्थः । मेनामुखमुदैक्षत । उचितोत्तरजिज्ञासयेति भावः । तथा हि । प्रायेण कुटुम्बिनो गृहस्थाः कन्यार्थेषु कन्याप्रयोजनेषु गृहिण्येव नेत्रं कार्यं ज्ञानकारणं येषां ते तथोक्ताः । कलत्रप्रधानवृत्तय इत्यर्थः ॥ ८५ ॥

चा०—शैल इति । संपूर्णकामोपि परिपूर्णाभिलाषोपि शैलो हिमवान् मेनामुखं स्त्रीवक्त्रं अवेक्षतादाक्षीत् । कुटुम्बिनो गृहस्थाः कन्यार्थे प्रयोजने प्रायेण गृहिणीनेत्रा भार्यैव नेत्रे येषां ते तादृशाः । भार्यासंमत्या कुर्वन्तीत्यर्थः ॥ ८५ ॥

टिप्पणी—अत्रोत्तरार्द्धगतसामान्यार्थः पूर्वार्द्धगतविशेषार्थस्य समर्थक इति सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ८५ ॥

मेने मेनापि तत्सर्वं[२] पत्युः कार्यमभीप्सितम्[३] ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ८६ ॥

मल्लि०—मेन इति । मेनापि पत्युर्हिमालयस्य तत्सर्वमभीप्सितं कार्यं मेनेऽङ्गीचकार । तथाहि । पतिरेव व्रतं यासां ता भर्तुरिष्टेऽभीप्सिते न विद्यते व्यभिचारो यासां ता अव्यभिचारिण्यो भवन्ति भर्तुश्चित्ताभिप्रायज्ञा भवन्तीति भावः ॥ ८६ ॥

चा०—आदर्शपुस्तकेष्वस्य श्लोकस्य टीका नोपलभ्यते ॥ ८६ ॥

टिप्पणी—अत्रापि पूर्ववदर्थान्तरन्यासः ॥ ८६ ॥

---

१. कन्यार्थे हि, २. सद्यः, ३. समीहितम्,

**इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।**
**आददे वचसामन्ते मङ्गलालंकृतां सुताम् ॥ ८७ ॥**

**मल्लि०**—इदमिति । स हिमवान्वचसामन्ते मुनिवाक्यावसानेऽत्र मुनिवाक्य इदमुत्तरश्लोके वक्ष्यमाणं दानमेव न्याय्यं न्यायादनपेतमुत्तरमिति बुद्ध्या चित्तेन विमृश्य विचिन्त्य मङ्गलं यथा तथालंकृतां सुतामाददे हस्ताभ्यां जग्राह ॥ ८७ ॥

चा०—इदमत्रेति । इदं कन्यादानमेवोत्तरं न्याय्यम् । इतिबुद्ध्या विचार्य स हिमवान् वचसामन्ते वचनानामवसाने मङ्गलाभरणभूषितां सुतामाददे जग्राह ॥ ८७ ॥

**एहि विश्वात्मने[४] वत्से भिक्षासि[५] परिकल्पिता ।**
**अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८८ ॥**

**मल्लि०**—एहीति । हे वत्से पुत्रि, एह्यागच्छ । त्वं विश्वात्मने शिवाय भिक्षा परिकल्पितासि निश्चितासि । 'रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विनः' इति वचनादिति भावः । अर्थिनो याचितारो मुनयः । मया गृहमेधिनो गृहस्थस्य फलं प्राप्तम् । इह परत्र च तारकत्वात्पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः ॥ ८८ ॥

चा०—एहीति । हे वत्से पुत्रि ! एह्यागच्छ । शर्वार्पणे शंभुदाने त्वं मया भिक्षा परिकल्पिता । मुनयोऽर्थिनः । मया गृहमेधिनां फलं गृहं वेश्म दाराश्च तैर्मेधन्ते गृहमेधिनो गृहस्थास्तेषां फलं तत्प्राप्तम् ॥ ८८ ॥

**एतावदुक्त्वा तनयामृषीनाह महीधरः ।**
**इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥ ८९ ॥**

**मल्लि०**—एतावदिति । महीधरो हिमवांस्तनयामेतावत्पूर्वोक्तमुक्त्वार्षीनाह—किमिति । इयं त्रिलोचनवधूस्त्र्यम्बकपत्नी वः सर्वान्नमतीति । त्रिलोचनवधूरिति सिद्धवदभिधानेनाविप्रतिपन्नं दानमिति सूचयति ॥ ८९ ॥

चा०—एतावदिति । स भूधरस्तनयामेतावदुक्त्वा ऋषीनाहाब्रवीत् । इतीति किं । त्रिलोचनवधूरियं सर्वान्वो युष्मान्नमति ॥ ८९ ॥

**ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।**
**आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ९० ॥**

**मल्लि०**—ईप्सितार्थेति । ते मुनयः । ईप्सितार्थक्रिययेष्टार्थकरणेनोदारं महत् । 'उदारो दातृमहतोः' इत्यमरः । गिरेर्हिमवतो वचो वचन-

---

४. शर्वार्पणे, ५. भिक्षा त्वम्,

मभिनन्द्य साध्विति संस्तुत्याम्बिकामम्बाम् । पच्यत इति पाकः फलम् । पुरःपाकाभिः पुरस्कृतफलाभिराशीर्भिराशीर्वादैरेंधयामासुः संवर्धयामासुः ॥ ९० ॥

चा०—इप्सितार्थेति । ते मुनयो गिरोर्हिमाचलस्य वचोभिनन्द्यानुमोद्य प्रणमन्तीमम्बिकां गौरीमाशीर्भिर्वर्धयामासुरवीवृधत् । कीदृग्वचः । ईप्सितार्थक्रियोदारं । अभिलषितवरतुसंपत्तिमहार्थं । कीदृशीभिराशीर्भिः । पुरःपाकाभिः पुरोऽग्रे पाकः फलं हरभर्तृलक्षणं यासां ताभिः ॥ ९० ॥

तां प्रणामादरस्रतस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥

मल्लि०—तामिति । प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारी वतंसके कनककुण्डले यस्यास्तां लज्जमानां तामम्बिकामरुन्धत्यङ्कमारोपयामास । 'रुहः पोऽन्यतरस्याम्' इति पकारः ॥ ९१ ॥

चा०—तामिति । अरुन्धती वसिष्ठस्त्री लज्जमानां ह्रीयुक्तां गौरीमङ्कमारोपयास जग्राह । किंभूताम् । प्रणामादरेण पादवन्दनप्रयत्नेन स्रस्तः पतितो जाम्बूनदावतंसकः कर्णपूरो यस्यास्ताम् ॥ ९१ ॥

तन्मातरं चाश्रुमुखीं [1]दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥ ९२ ॥

मल्लि०—तदिति । दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां वियोक्ष्यत इति भीताम् । अत एवाश्रुणि मुखे यस्यास्तामश्रुमुखीं तस्या अम्बिकाया मातरं तन्मातरं मेनां च । अन्या पूर्वं यस्यास्ति सोन्यपूर्वः । 'सर्वनाम्नो वृत्तिविषये पुंवद्भावः' इति पूर्वपदस्य पुंवद्भावः । स न भवतीत्यनन्यपूर्वस्तस्यानन्यपूर्वस्य । सापत्न्यदुःखमकुर्वत इत्यर्थः । वरस्य वोढुर्गुणैर्मृत्युंजयत्वादिभिर्विशोकां निर्दुःखामकरोत् ॥ ९२ ॥

चा०—तन्मातरमिति । तथा सुतास्नेहकारणत्वादश्रुमुखीं रुदतीं मातरं मेनां अनन्यपूर्वस्य भर्तुर्गुणैर्विशोकां गतदुःखामकरोत् । सर्वेश्वरः सर्वशक्तिर्वत्सलस्ते जामाता संपन्नस्तत्र प्रहर्षस्थाने कोयं शोकस्यावसर इति । नान्यः पूर्वं यस्यासावनन्यपूर्वस्तस्य । कीदृशीं मातरम् । दुहितुः प्रेम्णा विक्लवां । चकारः पूर्वश्लोककर्त्राकर्षणार्थः ॥ ९२ ॥

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय [2]चेरुश्चीरपरिग्रहाः ॥ ९३ ॥

मल्लि०—वैवाहिकीमिति । चीरपरिग्रहा वल्कलमात्रवसनास्ते

---

१. दुहितुः, २. चेलुः,

तपस्विनस्तत्क्षणं तस्मिन्नेव क्षणे हरबन्धुना हिमवता वैवाहिकीं विवाहयोग्यां तिथिं पृष्टाः केऽप्यनुयुक्ताः सन्तः । त्रयाणामह्नां समाहारस्त्र्यहः । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'राजाहः सखिभ्यष्टच्' इति टच्प्रत्ययः । द्विगुत्वादेकवचनम् । 'रात्राह्नाहाः पुंसि' इति पुलिङ्गता । तस्मात्त्र्यहादूर्ध्वमुपपरख्याय चतुर्थेऽहनि विवाह इत्युक्त्वा चेरुश्चलिताः ॥ ९३ ॥

चा०—वैवाहिकीमिति । वैवाहिकीं विवाहः प्रयोजनं यस्याः सा तां तिथिं पृष्टाः कदा विवाहोस्तीति । किं कृत्वा चेलुस्त्र्यहादूर्ध्वं परमहनीत्याख्यायोक्त्वा । कीदृशाः । चीरं वल्कलं परिग्रहो धनं येषां ते ॥ ९३ ॥

**ते हिमालयमामन्त्र्य पुनः [1]प्राप्य च शूलिनम् ।**
**सिद्धं [2]चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥**

मल्लि०—त इति । ते मुनयो हिमालयमामन्त्र्य साधु यामेत्यापृच्छ्य पुनः शूलिनं हरं संकेतस्थानस्थं प्राप्य सिद्धं निष्पन्नमर्थं प्रयोजनमस्मै निवेद्य च ज्ञापयित्वा च तद्विसृष्टास्तेन शूलिना विसृष्टाः खमाकाशं प्रत्युद्ययुरुत्पेतुः । अत्र संक्षिप्तार्थाभिधानात्संक्षेपो नाम गुण उक्तः । तदुक्तम्—'संक्षिप्तार्थाभिधानं यत्संक्षेपः परिकीर्तितः' इति ॥ ९४ ॥

चा०—ते हिमालयेति । ते मुनयो हिमालयमद्रिपतिमामन्त्र्यापृच्छ्य पुनः शूलिनं शंभुं प्रेक्ष्य दृष्ट्वा च पुनः अस्मै हराय सिद्धं निष्पन्नं गौरीलाभलक्षणमर्थं निवेद्य कथयित्वा तद्विसृष्टास्तेनैव हरेण विसर्जिताः खमुद्ययुर्दिवमगमन् ॥ ९४ ॥

टिप्पणी—तच्छब्दवाच्यमुनिरूपैककर्तृकारकस्यामन्त्र्य प्रायः निवेद्योद्ययुरिति क्रियाचतुष्टयेऽन्वयाद्दीपकाऽलंकारः ॥ ९४ ॥

भगवान्पशुपतिस्त्र्यहमात्रविलम्बमपि सोढुं न शशाक तदौत्सुक्यादित्याह—

**पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।**
**कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५ ॥**

मल्लि०—पशुपतिरिति । उत्कं मनो यस्य स उत्कः । 'उत्क उन्मनाः' इति निपातः । अद्रिसुतासमागमोत्कः पार्वतीपरिणयोत्सुकः पशुपतिरपि तानि । त्रीणीति शेषः । अहानि कृच्छ्रादगमयदयापयत् । कविराह—अमी भावा औत्सुक्यादयः संचारिणोऽवशमिन्द्रियपरतन्त्रमपरं पृथग्जनं कं न विप्रकुर्युर्न विकारं नयेयुः । यद्यस्माद्विभुं समर्थम् । जितेन्द्रियमिति यावत् । तं स्मरहरमपि स्पृशन्ति । विकुर्वन्तीत्यर्थः । अत्र विभुविकारसमर्थनादर्था-

१. प्रेक्ष्य, २. तस्मै,

दितरजनविकारः। कैमुतिकन्यायायादापततीत्यर्थापत्तिरलंकारः । तथा च सूत्रम्—'दण्डापूपिकयार्थान्तरपतनमर्थापत्तिः'' इति। अर्थान्तरन्यास इति। अर्थान्तरन्यास इति केचित्, तदुपेक्षणीयम्। युक्तिस्तु विस्तरभयान्नोच्यते। पुष्पिताग्रावृत्तम्–'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ९५ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदास-कृतौ कुमारसंभवे महाकाव्ये उमाप्रदानो नाम षष्ठः सर्गः।

चा०––पशुपतिरिति। मुनयः स्थानमागताः। पशुपतिरपि शंभुः अद्रिसुतासमागमोत्काः पार्वतीसंगमोत्सुकस्तान्यहानि त्रीणि दिनानि कृच्छ्रात्कष्टेनागमयत्। अर्थान्तरन्यासः। अमी उत्कण्ठादयो भावाः यत्र तं विभुमपि वशितात्मानमपि हरं स्पृशन्त्याक्रमन्ति। तत्र परमन्यमवशमजितेन्द्रियं कं पुरुषं न विप्रकुर्युर्बाधेरन्। अपितु सर्वमेव। पुष्पिताग्राछन्दः ॥ ९५ ॥

इति श्री मालान्वयसाधु श्रीशालिगनन्दनसाधु श्रीअरडकमल्लसमभ्यर्थित नरवेषसरस्वती वाचनाचार्यश्रीचारित्रवर्धनविरचितायां शिशुहितैषिण्यां षष्ठः सर्ग ॥ ६ ॥

–: ० :–

# सप्तमः सर्गः

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

मल्लि०—अथेति । अथ त्र्यहानन्तरं हिमवानोषधीनामधिपस्य चन्द्रस्य वृद्धौ । शुल्क पक्ष इत्यर्थः । शुभकर्मस्वापूर्यमाणपक्षस्य प्राशस्त्यात् । तिथौ च जामित्रं लग्नात्सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेनान्वितायां सत्याम् । यद्यपि जामित्रशुद्धिर्लग्नधर्मस्तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । समेतबन्धुर्युक्तबन्धुः सन् । सुताया दुहितुर्विवाहदीक्षा विवाहसंस्कारः सैव विधि कर्म तमन्वतिष्ठत्कृतवान् ॥ १ ॥

चा०—अथौषधीनामिति । अथानन्तरं हिमवान्नगनाथः सुताया दुहितुर्विवाहदीक्षाविधिं गोदानादिकं व्रतकरणमन्वतिष्ठदपालयत् । कदा ओषधीनां नाथस्य चन्द्रमसो वृद्धौ शुक्लपक्षे । च पुनस्तिथौ जामित्रगुणान्वितायां सत्याम् । जामित्रशब्दोत्रौपचारिकीं प्रशस्यतां लक्षयति । मुख्यतो लग्नात्सप्तमं स्थानं जामित्रं उच्चानुकूलम् । कीदृशः । समेतबन्धुः संघटितस्वजन इवेत्युपमाधर्मः ॥ १ ॥

वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरंध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥ २ ॥

मल्लि०—वैवाहिकैरिति । अनुरागात्प्रीतिवशात् । गृहे गृहे प्रतिगृहम् । वीप्सायां द्विर्भावः । विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः । 'प्रयोजनम्' इति ठक् । कौतुकसंविधानैर्मङ्गलार्थसंपादनैर्व्यग्रो व्याकुलः पुरन्ध्रिवर्गः कुटुम्बिनीसंघो यस्मिंस्तत्तथोक्तं सानुमतोऽद्रेः पुरं बाह्यमोषधिप्रस्थमन्तःपुरमवरोधनं चैककुलेनैकगृहेण वोपमेयमासीत् 'सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्' इति विश्वः । सर्वेषामपि स्वगृह एवेदं शोभनं वर्तत इत्यभिमानोऽभूदित्यर्थः । एतेन हिमाद्रेः प्रजाराग उक्तः । अत्र सर्वं संपन्नमेवेत्यर्थः ॥ २ ॥

चा०—वैवाहिकैरिति । वैवाहिकैः कौतुकसविधानैर्मङ्गलार्थं सुधागैरिकलेपादि यत्क्रियते तत्कौतुकमुच्यते । तैः कौतुकसंविधानैः गृहे गृहे व्यग्राः कार्याकुलाः पुरन्ध्रिवर्गा अंगनागणा यत्र तत् । सानुमतो हिमवतः पुरं नगरं अन्तःपुरं च एककुलोपमेयमासीद्बभूव । एकेन कुलेनोपमा यस्य तत् । समानकुलतुल्यमासीदित्यर्थः ॥ २ ॥

संतानकाकीर्णमहापथं[1] तच्चीनांशुकैः कल्पितकेतुमालम् ।
[2]भासोज्ज्वलत्काञ्चनतोरणानां स्थानान्तरं[3] स्वर्ग इवाबभासे ॥ ३ ॥

मल्लि०—संतानकैरिति । संतानकैर्मन्दारकुसुमैराकीर्णा आस्तृता महापथा राजकीयपथा यस्मिंस्तत्तथोक्तम् । चीनांशुकैः पट्टवस्त्रैः कल्पिता विरचिताः केतुमाला ध्वजपङ्क्तयो यस्य तत्तथोक्तम् । काञ्चनतोरणानां भासा प्रभयोज्ज्वलद्दीप्यमानं तत्पुरं स्थानान्तरं मेरोरन्यत्र स्थितः स्वर्ग इवाबभासे । उत्प्रेक्षालंकारः ॥ ३ ॥

चा०—सन्तानकेति । तत्स्थानान्तरं नगरं स्वर्ग इवाबभासे रेजे । अन्यानि सर्वाण्यपि विशेषणानि । सन्तानकैः कल्पवृक्षोद्भवैः पुष्पैराकीर्णो व्याप्तो महापथो राजमार्गो यत्र तत् । चीनांशुकैश्चीनदेशजातैरंशुकैः पटैः कल्पिताः कृताः । केतुमाला ध्वजाश्रेणिर्यत्र तत् । तथा कांचनतोरणानां भासा दीप्त्या ज्वलद्भासमानम् ॥ ३ ॥

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य[4] दृष्टेव मृतोत्थितेव ।
[5]आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥

मल्लि०—एकैवेति । पुत्राश्च दुहितरश्च पुत्राः । 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' इत्येकशेषः । 'पुत्री पुत्रश्च दुहिता च' इत्यमरः । तेषां पङ्क्तौ संघे सत्यामप्युमैकैव चिरस्य दृष्टेव चिरान्नष्टलब्धेव मृतोत्थितेव मृत्वा पुनरुत्पन्नेवासन्नपाणिग्रहणासन्नविवाहेति । भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः । पित्रोर्मातापित्रोः । 'पिता मात्रा' इत्येकशेषः । विशेषेणोच्छ्वासितं प्राणभूता बभूव । पुमपत्यादपि अधिकप्रेमास्पदमभूदित्यर्थः । ४ ।

चा०—एकैवेति । उपोढपाणिग्रहणे निकटविवाहे अतिशयेनोमा गौरी पित्रोर्मातृजनकयोरेवं विधा पुत्रपङ्क्तौ सत्यामपि वर्तमानायां विशेषोच्छ्वसितं विशेषेण जीवितं बभूव । केव । एकैव । अन्यत्र तादृश्यभावात् । सततं सन्निहितापि चिरेण दृष्टेव । उत्कण्ठोत्पत्तेर्जीवत्यपि मृतोत्थितेव ॥ ४ ॥

टिप्पणी—अत्र चिरस्य दृष्टेव मृतोत्थितेवेत्यत्र चोत्प्रेक्षासूचकेव शब्दद्वयोपादानादुत्प्रेक्षाद्वयं पूर्वार्द्धे । उत्तरार्द्धे उमाया पित्रोर्विशेषोच्छसितत्वे हेतुभूतस्याऽऽसन्नपाणिग्रहणपदार्थस्य विशेषणविधयोक्तत्वात्पदार्थहेतुकं काव्यलिङ्गम् । अनयोः संसृष्टिः ॥ ४ ॥

अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
संबन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥ ५ ॥

---

१. चतुःपथम्, २. भासा ज्वलत्, ३. स्थानान्तरस्वर्गः,
४. चिरेण, ५. उपोढपाणि,

मल्लि०—अङ्कादिति। सा पार्वत्युदीरिताशीः प्रयुक्ताशीर्वादा सत्यङ्कादङ्कमुत्सङ्गं ययौ। मण्डनान्मण्डनान्तरमन्वभुङ्क्त। तदा सर्वे बन्धवः प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः। तच्च स्नेहनिबन्धनमेवेत्याह-संबन्धिभिन्नः स्वपुत्रादिभिर्भिन्नो विभक्तोऽपि गिरेः कुलस्य वंशस्य स्नेहस्तदेकायतनं सैवैकमायतनं स्थानं तज्जगाम। तदिति छेदेऽव्ययमेवार्थः। विधेयप्राधान्यान्नपुंसकत्वमिति। सर्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्यार्थः॥ ५॥

चा०—अङ्कादिति। बान्धवैरुक्ताशीः सा गौरी अङ्कादङ्कमुत्सङ्गादुत्सङ्गं ययावतितस्यौ मण्डनान्मण्डनं भूषणाद्भूषणमन्वभुङ्क्त निर्विवेश। तथा गिरिकुलस्य सम्बन्धवशाद्भिन्नोप्यनेकरूपोऽपि स्नेहः प्रेम तदेकाश्रयत्वमाजगामायासीत्॥ ५॥

मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफाल्गुनीषु।
तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः॥ ६॥

मल्लि०—मैत्र इति। अथ मैत्रे मित्रदैवत्ये मुहूर्ते। उदयमुहूर्तात्तृतीयमुहूर्त इत्यर्थः। 'आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च' इति बृहस्पतिस्मरणात्। उत्तरफल्गुनीषु फल्गुनीनक्षत्रे। 'फल्गुनी प्रोष्ठपदानां च नक्षत्रे' इत्येकस्मिन्नपि बहुवचनम्। शशलाञ्छनेन चन्द्रेण योगं गतासु सतीषु तस्याः पार्वत्याः शरीरे बन्धुस्त्रियः प्रतिकर्म प्रसाधनम्। 'प्रतिकर्म प्रसाधनम्' इत्यमरः। चक्रुः। कीदृश्यः। याः पतिपुत्रवत्यः। जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः॥ ६॥

चा०—मैत्र इति। तस्या पार्वत्याः शरीरे वपुषि पतिपुत्रवत्यः भर्तृसुतसहिता या बन्धुस्त्रियो जातिमहिष्यस्ताः प्रतिकर्म प्रसाधनं चक्रुः। कदा। मैत्रे मैत्रनाम्नि मुहूर्ते सति। तथा शशलाञ्छनेन चन्द्रमसोत्तरफल्गुनीषु योगं सम्बन्धं गतासु। उत्तरफल्गुनीनक्षत्र इत्यर्थः॥ ६॥

प्रतिकर्मप्रकारमेव प्रपञ्चयति—

सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नशोभम्[1]।
निर्नाभि-कौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलंचकार॥ ७॥

मल्लि०—सेति। सा गौरी गौरसिद्धार्थनिवेशवद्भिः श्वेतसर्षपप्रक्षेपवद्भिर्दूर्वाप्रवालैर्दूर्वाङ्कुरैः प्रतिभिन्नशोभं विशेषितशोभं निर्नाभ्यतिक्रान्तनाभिकौशेयं वस्त्रविशेषं यस्मिंस्तत्तथोक्तम्। 'कौशेयं कृमिकोशोत्थम्' इत्यमरः। उपात्तबाणं गृहीतशरम् 'शरः क्षत्रियया ग्राह्यः' इति मनुस्मरणात्। अभ्यङ्गनेपथ्यमभ्यङ्गवेशमलंचकार। अलंकारमलंचकारेत्यर्थः।

---

१. रागम्.

इदानीमभ्यङ्गादारभ्य तदेव शरीरप्रतिकर्माह—

चा०—सेति। सा गौरी अभ्यङ्गनेपथ्यं अभ्यङ्गस्तैलपातनं तत्र नेपथ्यं वेषं अलंचकार। ननु तेनासौ भूषितेत्यकृत्रिमरूपत्वोक्तिः। कीदृशं। दूर्वाप्रवालैः शाद्वलाङ्कुरैः प्रतिभिन्नरागं विशेषितकान्ति। कीदृशैः। गौरसिद्धार्थानां श्वेतसर्षपाणां निवेशो रचना विद्यते येषु तैः। पुनः कीदृशं। निर्नाभिकौशेयमविद्यमानं नाभिकौशेयं जघनाम्बरं यत्र तत्। यद्वा नाभेर्निष्क्रान्तं निर्नाभिकौशेयं यत्र तत्। पुनः कीदृशं। उपात्तबाणं गृहीतसायकं। एवं विधो ह्येष लोकोपचारः॥ ७॥

**बभौ च संपर्कमुपेत्य बाला नवेव दीक्षाविधिसायकेन।**
**करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशांकरेखा[1]॥ ८॥**

मल्लि०—बभाविति। किंचेति चार्थः बाला नवेव दीक्षाविधौ विवाहकृत्ये यः सायकस्तेन संपर्कमुपेत्य बहुलावसाने कृष्णपक्षात्यये। शुल्कपक्षादावित्यर्थः। भानोः करेण किरणेन संधुक्ष्यमाणोपचीयमाना: 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति' इत्यादिवचनात्। शशाङ्करेखेव बभौ॥ ८॥

चा०—बभाविति। अमुना विवाहदीक्षाविधिसायकेन संपर्कं संश्लेषमुपेत्यासाद्य सा बाला बभौ च। केव। बहुलावसाने कृष्णपक्षान्ते भानोः करेण सुषुम्णाख्येन संधुक्षमाणा वर्द्धमाना शशाङ्कलेखेव॥ ८॥

टिप्पणी—नवा बालेव शशाङ्करेखेवेत्यत्र च सादृश्यार्थकेव शब्दद्वयोपादानात्पूर्वार्द्धोत्तरार्द्धयोरुपमाद्वयम्॥ ८॥

**तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम्।**
**वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखं[2] व्यनैषुः॥ ९॥**

मल्लि०—तामिति। लोध्रकल्केन लोध्रचूर्णेन हृतमङ्गतैलं यस्यास्ताम्। कृतोद्वर्तनामित्यर्थः। आश्यानमीषच्छुष्कं तेन काले येन गन्धद्रव्येण कृताङ्गरागाम्। कृतस्नैग्ध्यामित्यर्थः। 'अथ जायकम्। कालेयकं च कालानुसार्यं च' इत्यमरः। अभिषेकयोग्यं वासो वस्त्रं वसानां स्नानशाटीमाच्छादयन्तीं तां पार्वतीं नार्यश्चतुष्कं चतुःस्तम्भगृहं तदभिमुखं व्यनैषुः। स्नानगृहं निन्युरित्यर्थः॥ ९॥

चा०—तामिति। ततः स्नानार्थमविधवा नार्यस्तां गौरीं चतुष्काभिमुखीं व्यनैषुरनयन्। कीदृशीम्। लोध्रकल्केन मार्जनचूर्णेन हृतमपास्तमङ्गतैलं देहस्नेहो यस्यास्तां। तथा आश्यान ईषच्छुष्कः कालीयरस एवाङ्गरागोनुलेपो यस्याः।

---

१. लेखा. २. अभिमुखीमनैषुः,

कुङ्कुमनिभं गन्धद्रव्यं कालीयकमुच्यते। तथाभिषेकयोग्यं वासो वस्त्रं वसानां परिदधतीं, चतुष्कं वासोवेश्म ॥ ९ ॥

टिप्पणी—स्त्रियः पार्वत्या अङ्गतैलं लोध्रचूर्णेनाऽपनीयं गन्धद्रव्येणाऽस्नैग्ध्यं विधाय स्नानयोग्यवस्त्रं च परिधाप्य स्नानगृहं तामानिन्युरित्यर्थः ॥ ९ ॥

विन्यस्तवैदूर्य[1]शिलातलेऽस्मिन्नाब[2]द्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥

मल्लि०—विन्यस्तेति। विन्यस्तं वैदूर्यशिलातलं मरकतशिलातलं मरकतशिलाप्रदेशो यस्मिंस्तस्मिन्नाबद्धानां मुक्ताफलानां भक्तिभी रचनाभिश्चित्रेऽस्मिश्चतुष्क एनां पार्वतीमावर्जितानां मानमितानाम· ष्टापदकुम्भानां कनककलशानां तोयैः सतूर्यं मङ्गलवाद्ययुक्तं यथा तथा स्नपयांबभूवुः। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येत्यष्टापदम्। 'अष्टनः संज्ञायाम्' इति दीर्घः। अष्टापदं स्यात्कनकम्' इति विश्वः ॥ १० ॥

चा०—विन्यस्तेति। तत्र चतुष्के नार्यः सतूर्यं वादित्रान्वितं यथास्यात्तथैनां वधूं स्नपयांबभूवुरस्नपयन्त। कीदृशे। विन्यस्तवैदूर्यशिले विन्यस्ता स्थापिता वैदूर्यमणिशिला यत्र तस्मिन्। अविद्धानामच्छिद्रितानां मुक्ताफलानां भक्त्या रचनया चित्रे रम्ये। कीदृश्यो नार्यः। आवर्जितं क्षिप्तमष्टापदकुम्भतोयं कनकघटवारि याभिस्ताः ॥ १० ॥

सा मङ्गलस्नानविशुद्धगात्री [3]गृहीतपत्युद्गमनीयवस्त्रा ।
[4]निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥

मल्लि०—सेति। मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी पत्युर्वरस्योद्गमनीयवस्त्रं धौतवस्त्रम्। 'धौतमुद्गमनीयं स्यात्' इति हलायुधः। 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः। युगग्रहणं तु प्रायिका· भिप्रायम्। अत एवात्र क्षीरस्वामी—'युगं प्रायशो यल्लक्ष्यं तदेव इति व्याख्याय 'गृहीतपत्युद्गमनीयवस्त्रा' इत्येतदेवोदाहृतवान्। गृहीतं पतिं प्रत्युद्गमनीयवस्त्रं यया सा। धौतवस्त्रमाच्छादितवतीत्यर्थः। सा पार्वती निर्वृत्तो निष्पन्नः पर्जन्यस्य जलेनाभिषेको यस्याः सा तथोक्ता। प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता वसुधेव रेजे शुशुभे ॥ ११ ॥

चा०—सेति। सा गौरी रेजे शुशुभे। कीदृशी। मङ्गलस्नानेन विवाहाभिषेकेण विशुद्धं कान्तिमद्गात्रं यस्याः सा। तथा गृहीतं प्रत्युद्गमनीयं वस्त्रं यस्याः सा 'यद्धौतयोर्वस्त्रयोर्युगम्' इति हैमः। केव। निर्वृत्तः सपन्नः पर्जन्यजलाभिषेको

१. शिले च तस्मिन्, २. आविद्ध, ३. शुद्धोद्गमनीय, ४. निवृत्ति,

मेघवारि यस्याः सा। शरदि प्रफुल्लकाशा विकसितकाशकुसुमा वसुधेव भूमिरिव ॥ ११ ॥

तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन।
पतिव्रताभिः [1]परिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

मल्लि०—तस्मादिति। किंचेति चार्थः। तस्मात्प्रदेशात्स्नानप्रदेशाद्वितानवन्तमुल्लोचयुक्तम्। 'अस्त्री वितानमुल्लोचः' इत्यमरः। मणिस्तम्भचतुष्टयेन युक्तं क्लृप्तं सज्जमानमासनं यस्मिंस्तं कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य दोर्भ्यामालिङ्ग्य निन्ये नीता। प्रसाधनार्थमित्यर्थः ॥ १२ ॥

चा०—तस्मादिति। तस्मात् प्रदेशात्स्नानदेशात्पतिव्रताभिः सतीभिर्नारीभिरसौ गौरी परिगृह्यादाय कौतुकवेदिमध्यं मङ्गलस्थलीत्सङ्गं निन्ये नीता। कीदृशं वितानवन्तं चन्द्रोदयसहितं। तथा मणिस्तंभचतुष्टयेन रत्नस्थूणाचतुष्केण युक्तं। क्लृप्तासनं रचितभद्रपीठम् ॥ १२ ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरो निषण्णाः।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥ १३ ॥

मल्लि०—तामिति। नार्यः प्रसाधिकास्तां तन्वीं पार्वतीं तत्र वेदिमध्ये प्राङ्मुखीं निवेश्योपवेश्य पुरोनिषण्णा अग्रे स्थिताः। प्रसाध्यतेऽनेनेति प्रसाधनेऽलंकारसाधनवर्गे संनिहितेऽपि भूतार्था सत्यरूपा। स्वाभाविकीति यावत्। या शोभा रामणीयकं तया ह्रियमाणान्याकृष्यमाणानि नेत्राणि यासां तास्तथोक्ताः क्षणं व्यलम्बन्त। स्वभावसुन्दर्याः किमस्याः प्रसाधनेनेति तूष्णीं तस्थुरित्यर्थः ॥ १३ ॥

चा०—तामिति। तत्र वेदिमध्ये प्राङ्मुखीं पूर्वाभिमुखीं तां तन्वीं कृशाङ्गीं गौरीं निवेश्योपवेश्य सन्निहितेपि प्रसाधनेऽलंकरणे नार्यः पुरोग्रतो निषण्णाः स्थिताः। क्षणमात्रं व्यलम्बन्तोदासन्तः। यतो भूतार्थशोभया स्वाभाविक्या ह्रियमाणानि विलोक्यमानानि नेत्राणि यासां ताः। अकृत्रिमस्य हि रूपस्य किं मण्डनेन। भूतार्थं पारमार्थिकम् ॥ १३ ॥

टिप्पणी—नारीणां पुरः स्थितानां क्षणं तूष्णीं स्थितौ सत्यरूपशोभाकरणकनेत्राकर्षणपदार्थस्य हेतुभूतस्य विशेषणविधयोक्तत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ १३ ॥

[2]धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम्।
पर्याक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

मल्लि०—धूपेति। काचित्प्रसाधिका धूपोष्मणा करणेनार्द्रभावमार्द्रत्वं त्याजितम्। पचादिषु पाठाद्द्विकर्मकत्वम्। त्यजतेर्ण्यन्तादप्रधाने

१. प्रतिगृह्य, २. धूपेन संमार्जितम्,

कर्मणि क्तः। अन्तःकुसुममन्तर्निक्षिप्तकुसुमं तस्या इमं तदीयं केशान्तं केशपाशं दूर्वावता मध्ये मध्ये ग्रथितदूर्वेण पाण्डुमधूकदाम्ना हरितमधुद्रुमकुसुममाल्येन। 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः। उदारबन्धं यथा तथा पर्याक्षिपद्बबन्ध ॥ १४॥

चा०—धूपेति। ततोऽनन्तरं काचिदङ्गना तदीयं तस्याः सम्बन्धि केशान्तं केशपाशं दूर्वावता दूर्वासहितेन पाण्डुमधूकदाम्ना सितमधूककुसुमशेखरेण पर्याक्षिपदबध्नात्। कीदृशं। धूपोष्मणाऽगुर्वादिधूपेनार्द्रभावमार्द्रत्वं त्याजितं। तथाऽन्तःकुसुमं पुष्पगर्भं। दीर्घत्वादुदारः श्रेष्ठो बन्धो ग्रन्थिर्यस्य तम् ॥ १४॥

[1]विन्यस्तशुक्लागुरु चक्रुरङ्गं[2] गोरोचनापत्रविभक्तमस्याः[3]।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५॥

मल्लि०—विन्यस्तेति। अस्या गौर्या अङ्गं गात्रं विन्यस्तं विरचितं शुक्ला गुरु यस्मिंस्तद्गोरोचनायाः पत्त्रैः पत्त्ररचनाभिर्विभक्तं विशेषितं चक्रुः। सा तथाभूता गौरी चक्रवाकैरङ्कितं सैकतं यस्यास्तस्यास्त्रिस्रोतसो गङ्गायाः। कान्तिं शोभामतीत्यतिक्रम्य तस्थौ। अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं, त्रिस्रोतसो धावल्यं तु प्रसिद्धत्वान्न स्वपदेनोपात्तम् ॥ १५॥

चा०—आसक्तेति। अन्या नार्य अस्याश्चाङ्गं देहमेवंविधं चक्रुः। किं विधं। आसक्तं निहितं शुक्लमगुर्वङ्गरागविशेषो यत्र तत्। शुक्लकृष्णभेदेनागुरुणां द्वे रूपे। तथा स्तनादौ गोरोचनाया पत्रविभङ्गाः पत्रलता यत्र तत्। अतश्च सा गौरी चक्रवाकाङ्कितसैकताया रथाङ्गनामचिह्निततीरायास्त्रिस्रोतसो गङ्गायाः कान्तिं शोभामतीत्याभिभूय तस्थौ स्थिता ॥ १५॥

टिप्पणी—गोरोचनापत्रविभक्ताङ्गा पार्वती चक्रवाकाङ्कितसैकताया गङ्गाया अपि विशिष्टकान्तिमतीत्यर्थेकलिते पार्वत्या उपमेयभूताया उपमानभूतगङ्गापेक्षयाऽऽधिक्यवर्णनव्द्यतिरेकालङ्कारः ॥ १५॥

[4]लग्नद्विरेफं परिभूय पद्मं समेघलेखं शशिनश्च बिम्बम्।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६॥

मल्लि०—लग्नेति। प्रसिद्धैर्भूषितैः। 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः। अलकैरुपलक्षिता तस्या गौर्याः आननश्रीर्लग्नद्विरेफं पद्मं समेघलेखं मेघरेखायुक्तं शशिनो बिम्बं च परिभूय तिरस्कृत्य सादृश्यमुपमा तस्य कथोक्तिस्तस्याः प्रसङ्गं प्रसक्तिं सादृश्यं वाङ्मात्रप्रसक्तमपि चिच्छेदाभिनत्। प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यत्र चाप्रसङ्गादित्यर्थः।

---

१. आसक्त, २. अस्याः, ३. विभङ्गमङ्गम्, ४. लीन,

अत्र पूर्वार्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गमलंकारः। लक्षणं तूक्तम् ॥ १६ ॥

चा०—लीनेति। तदाननश्रीस्तस्या वक्त्रश्रीः प्रसिद्धैः प्रसाधितैरलकैः सादृश्यकथाप्रसङ्गम्। किमस्य सदृशं स्यादित्युपमानवचोवसरमपि विच्छेद व्यनीनशत्। किं कृत्वा। लीनद्विरेफं संश्लिष्टभ्रमरं। पद्मं कमलं समेघलेखमभ्रलवयुतमपि शशिनश्च बिम्बं मण्डलमभिभूय जित्वा। कमलशशिनौ किल मुखस्योपमानभूतौ। अभिभवे तु प्रसाधनमेव हेतुः ॥ १६ ॥

**कर्णार्पितो लोध्रकषायरूक्षे गोरोचनाक्षेप[1]नितान्तगौरे।**
**तस्याः कपोले परभागलाभाद्बबन्ध चक्षूँषि यवप्ररोहः ॥ १७ ॥**

मल्लि०—कर्णेति। तस्या गौर्याः कर्णऽर्पितो निक्षिप्तो यवप्ररोहो यवाङ्कुरो लोध्रस्य वृक्षविशेषस्य कषायेग विलेपनेन रूक्षे विशदे। उद्वर्तिते इत्यर्थः। 'कषायो रसभेदे स्यादङ्गरागे विलेपने'। इति विश्वः। गोरोचनायाः क्षेपेण विन्यासेन नितान्तगौरेऽत्यन्तारुणे। 'गौरः श्वेतेऽरुणे पीते' इति विश्वः। कपोले गण्डस्थले परभागलाभाद्वर्णोत्कर्षप्राप्तेश्चक्षूँषि। द्रष्टृणामिति शेषः। बबन्ध जहार। आचकर्षेत्यर्थः। गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसंनिधानाल्लब्धवर्णोत्कर्षः संश्चक्षुराकर्षकोऽभूदिति भावः ॥ १७ ॥

चा०—कर्णेति। तस्या गौर्याः कर्णार्पितः श्रवणनिहितो यवांकुरो लोकस्य चक्षूंषि लोचनानि बबन्ध विषयान्तरान्न्यवतर्यत्। कुतः। कपोले परभागलाभाद्गुणोत्कर्षात्। 'परभागो गुणोत्कर्षः' इत्यभिधानचिन्तामणिः। कीदृशे कपोले। लोध्रकषायेण रसेन रूक्षे विशदे तथा गोरोचनाया भेदेन नितान्तमत्यर्थं गौरो गौरे हरितस्य शोभावाप्तिः ॥ १७ ॥

**रेखाविभक्तः [2]सुविभक्तगात्र्याः किंचिन्मधूच्छिष्ट[3]विमृष्टरागः।**
**कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥**

मल्लि०—रेखेति। सुविभक्तगात्र्याः सुसंश्लिष्टावयवायाः पार्वत्या रेखया मध्यगतया विभक्तः सुश्लिष्टः किंचिदीषन्मधूच्छिष्टेन सिक्थकेन विमृष्टो विशेषेण निर्मलीकृतो रागो यस्य स तथोक्तः। 'मधूच्छिष्टं तु सिक्थकम्' इति, 'निर्णिक्तं शोधितं मृष्टम्।' इति चामरः। अन्यत्रोक्तम्—'अलौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते'। आसन्नं संनिहितं लावण्यफलं सौन्दर्यप्रयोजनं मुखचुम्बनादिरूपं यस्य स तथोक्तोऽधरोष्ठः स्फुरितैर्भाविशुभशंसिभिः स्पन्दैः कामप्यनिर्वाच्यामभिख्यां शोभामपुष्यत्पुपोष। 'अभिख्या नामशोभयोः' इत्यमरः ॥ १८ ॥

---

१. भेद, २. च विभक्त, ३. विसृष्ट.

चा०—रेखेति यौवनशाद्विभक्तानि व्यक्तानि गात्राणि। यस्याः सा। तस्या गौर्या अधरोष्ठोऽधरः स्फुरितैः कम्पितैः कामप्यवर्णनीयामभिख्यां परमां शोभामपुष्यदवर्द्धयत्। कीदृशः। रेखाविभक्तो मध्यरेखया द्विधाकृतः। तथा मधूच्छिष्टेन विसृष्टरागोऽपास्तलौहित्यः। तांबूलाद्युत्कटो हि रागो मधूच्छिष्टेनोत्सृष्टमधुरः क्रियते। तथा भर्तृचुम्बनादासन्नं निकटं लावण्यफलं यस्य सः। अधोभवोऽधरोष्ठः॥ १८॥

टिप्पणी—अधराष्ठकर्तृकाऽनिर्वचनीयशोभापोषणे रेखाविभागरागैश्वर्यलावण्यफलासत्तिरूपपदार्थत्रयस्य विशेषच्च विधया हेतुत्वेनोपन्यासात्पदार्थ हेतुकं काव्यलिङ्गम्॥ १८॥

**पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम्।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान॥ १९॥**

मल्लि०—पत्युरिति। सख्या कर्त्र्या। चरणौ रञ्जयित्वा लाक्षारसाक्तौ कृत्वा। कृताशीरिति करोतिना समानकर्तृकत्वम्। अनेन चरणेन रञ्जने द्वयोरपि नियमाच्चरणाविरयुक्त्वाप्यौचित्यात्ताडनविधावेकतरपरामर्श इत्याहुः। पत्युरीश्वरस्य शिरश्चन्द्रकलाम्। सुरतविशेष इति शेषः। स्पृश ताडयेति परिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया। 'माल्यं मालास्रजौ' इत्यमरः। निर्वचनं यथा तथा। तूष्णीमित्यर्थः। जघान ताडयामास। निर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः। तदुक्तम्—'प्राप्तकाले तु यद् ब्रूयात्कुर्याद्वा विहृतं हि तत्'। इति॥ १९॥

चा०—पत्युरिति। सा गौरी सखीं निर्वचनं तूष्णीं यथा स्यात्तथा माल्येन शेखरेण जघान ताडयतिस्म। कीदृशी। तया सख्या चरणं रञ्जयित्वा परिहासपूर्वमिति कृताशीर्दत्ताशीर्वादा। कथमित्याह। अनेन चरणेन पत्युः शंभोः। सुरतविशेषवशाच्छिरश्चन्द्रकलामुत्तमाङ्गस्थितशशिलेखां स्पृशेति। अतश्च परित ईषन्माल्यप्रहारः॥ १९॥

**तस्याः सुजातोत्पलपत्त्रकान्ते प्रसाधिकाभिर्नयने [1]निरीक्ष्य।**
**न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम्॥ २०॥**

मल्लि०—तस्या इति। प्रसाधिकाभिरलंकर्त्रीभिः सुजाते सम्यगुत्पन्ने उत्पलपत्त्र इव कान्ते रम्ये तस्या नयने निरीक्ष्य कालाञ्जनमञ्जनविशेषश्चक्षुषोः कान्तिविशेषबुद्ध्या। शोभातिशयो भविष्यतीति बुद्ध्येत्यर्थः। नोपात्तं न गृहीतं किंतु मङ्गलं शुभमिति हेतोरुपात्तम्। निसर्गसुभगस्य किमाहार्यकाडम्बरेणेति भावः॥ २०॥

---

१. समीक्ष्य.

चा०—तस्या इति । प्रसाधिकामण्डनकारिकाभिः सुजातोत्पलपत्रकान्ते सुजातं परिपूर्णं यदुत्पलपत्रं तद्वत्कान्ते मनोहरे तस्या नयने नेत्रे समीक्ष्य विलोक्य कालाञ्जनं कज्जलं मङ्गलमिति तयोरुपपन्नमदायि । चक्षुषोः कान्तिविशेषबुद्ध्या । शोभातिशया नोपात्तम् । प्रकृत्या विकसितनीलोत्पलनिभयोस्तयोर्वारिकमञ्जनं कथं शोभाकारि ॥ २० ॥

टिप्पणी—सुजातोत्पलपत्रे इव कान्ते सुजातोत्पलपत्रकान्तेऽत्र लुप्तोपमा ।२०।

**सा संभवद्भिः कुसुमैर्लतेव, ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।**
**सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकासे ॥ २१ ॥**

मल्लि०—सेति । आमुच्यमानाभरणा निबध्यमानाभरणा सा गौरी संभवद्भिरुत्पद्यमानैः कुसुमैर्लतेव । अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि, लताकुसुमानां नानावर्णत्वात् । उद्यद्भिरुदयं गच्छद्भिर्ज्योतिभिरुडुभिस्त्रियामा रात्रिरिव । अनेन मौक्तिकानि कथितानि । लीयमानैराश्रयद्भिः । निषीदद्भिरित्यर्थः । विहंगैश्चक्रवाकैः सरिदिव । अनेन सुवर्णाभरणानि सूचितानि । विहंगाश्च तत्सूचनाय चक्रवाका अभिमताः । चकासे रेजे । अत्र लताकुसुमादीनां सहजसंबन्धिनामुपमानत्वेनोपादानादाहार्यकमपि तस्याः सहजमिवाशोभतेति भावः ॥ २१ ॥

चा०—सेति । सा गौरी आमुच्यमानाभरणा बध्यमानालंकारा चकाशे शुशुभे । कैः केव । सम्भवद्भिर्जायमानैः कुसुमैर्लतेव । एतेन पद्मरागेन्द्रनीलादिलाभः । पुनः कै केव । उदयद्भिश्चोदयमानैर्ज्योतिर्भिर्नक्षत्रैस्त्रियामेव रात्रिरिव । एतेन मुक्तादिलाभः । तथा विहङ्गैश्चक्रवाकैः लीयमानैः श्लिष्यद्भिः सरिदिव । एतेन कनकादिलाभः ॥ २१ ॥

टिप्पणी—अत्र मालोपमा ॥ २१ ॥

**आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।**
**हरोपयाने त्वरिता बभूव, स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥**

मल्लि०—आत्मानमिति । किञ्चेति चार्थः । गौरी शोभमानमात्मानं निजशरीरमादर्शबिम्बे दर्पणमण्डले । 'दर्पणे मुकुरादर्शौ' इत्यमरः । स्तिमितायताक्ष्यादरान्निश्चलायतलोचना सत्यालोक्य हरोपयाने हरप्राप्तौ त्वरिता व्यग्रा बभूव । स्त्रीणां वेषो नेपथ्यं प्रियस्य भर्तुरालोको दर्शनं फलं प्रयोजनं यस्य स तथोक्तो हि । अन्यथारण्यचन्द्रिका स्यादिति भावः । अनेन कालाक्षमत्वलक्षणमौत्सुक्यमुक्तमित्यनुसंधेयम् ॥ २२ ॥

चा०—आत्मानमिति । ततोनन्तरं सा गौरी स्तिमितायताक्षी निश्चलविशालनयना शोभमानमादर्शबिम्बे मुकुरमण्डले आलोक्य हरोपयानत्वरिता शिवागमन-

शोभायमाना बभूवासीत् । हि यस्मान्नारीणां वेष आकल्पः प्रियालोकफलो वल्लभदर्शनेन सफलः । असति हि प्रियालोकने किं क्रियत इति ॥ २२ ॥

टिप्पणी—अत्र तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ २२ ॥

**[1]अथाङ्गुलिभ्यां हरितालमार्द्रं [2]माङ्गल्यमादाय मनःशिलां च ।**
**कर्णावसक्तामलदन्तपत्त्रं माता तदीयं मुखमुन्नमय्य ॥ २३ ॥**

मल्लि०—अथेति । अथ प्रसाधनानन्तरं माता मेनका माङ्गल्यं मङ्गलार्थमार्द्रं द्रवहरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं चाङ्गुलिभ्यां तर्जनीमध्यमाभ्यामादाय कर्णयोरवसक्ते लग्ने अमले दन्तपत्त्रे यस्य तत्तथोक्तं तस्याः पार्वत्या इदं तदीयं मुखमुन्नमय्य । 'विवाहदीक्षातिलकं चकार' ( ७ । २४ ) इत्युत्तरश्लोकेनान्वयः ॥ २३ ॥

चा०—अथेति । युग्मं । अथानन्तरं माता मेना विवाहदीक्षायास्तिलकमानन्दाश्रुवृष्टित्वात् कथं चित्क्लेशेन चकार व्यधात् । किं कृत्वा । मुखमुन्नमय्योत्क्षिप्याङ्गुलिभ्यां तर्जनीमध्यमाभ्यां मङ्गलार्थं हरितालं मनःशिलां चादाय गृहीत्वा ॥

**उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो यः प्रथमं बभूव ।**
**तमेव मेना दुहितुः कथंचिद्विवाहदीक्षातिलकं चकार ॥ २४ ॥**

मल्लि०—उमेति । उमायाः स्तनोद्भेदमनु । स्तनोदयमारभ्येत्यर्थः । प्रवृद्धो वृद्धिं गतः । प्रागेवोत्पन्न इति भावः । यो मनोरथो वाञ्छा । 'वाञ्छा लिप्सा मनोरथः' इत्यमरः । प्रथमं मनोरथान्तरात्प्राक् । अयमेव प्रथमो मनोरथ इत्यर्थः, बभूव, मेनादुहितुस्तमेव मनोरथभूतमेव । तद्विषये तत्तोपचारः । विवाहदीक्षायां विवाहकृत्ये तिलकं कथंचित्कृच्छ्रेण चकार । आनन्दबाष्पान्धतयेति शेषः । विवाहानन्तरभावित्वादन्येषामयमेव प्रथमो मनोरथ इति भावः । युग्मकम् ॥ २४ ॥

चा०—उमेति । उत्प्रेक्ष्यते । उमास्तनोद्भेदमनु पयोधरनिर्गमनेन सह योऽस्या मेनाया मनोरथः सौभाग्यवरलाभविषयः प्रवृद्धस्तमेव तमिवाकरोत् । स्तनोद्भेदमन्वित्यनुशब्दस्तृतीयार्थे कर्मप्रवचनीयसंज्ञः । कीदृशं मुखं कर्णवसक्ते योजितममलदन्तपत्त्रं यत्र तत् ॥ २४ ॥

टिप्पणी—अत्र एकस्या मेनायाः कर्त्र्या आदानोन्नमनकरणनक्रियास्वन्वयाद्दीपकालङ्कारः । समुच्चयालंकारो वा ॥ २३–२४–२५ ॥

**बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसंनिवेशम् ।**
**धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥**

---

१. अङ्गुलीभ्याम्, २. मङ्गल्यम्

मल्लि०—बबन्धेति । अस्याः पार्वत्या अस्रैरानन्दबाष्पैराकुलदृष्टिरत एव स्थानान्तरे कल्पितः संनिवेशो निक्षेपो यस्य तत् । स्वस्थानादन्यत्र स्थापितमित्यर्थः । अतएव धात्र्या उपमातुरङ्गुलीभिः प्रतिसार्यमाणं स्वस्थानं प्राप्यमाणमूर्णामयं मेषादिलोमनिर्मितम् । 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः । कौतुकहस्तसूत्रं मङ्गलहस्तसूत्रम् । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' । इति शाश्वतः । बबन्ध च मेनेति शेषः । पूर्वोक्ततिलकक्रियासमुच्चयार्थश्चकारः ॥ २५ ॥

चा०—बबन्धेति । न केवलमसौ मेना गौर्यास्तिलकमकरोदूर्णामयमौर्णं कौतुकहस्तसूत्रं कङ्कणं बबन्ध च । कीदृशी मेना । अस्राकुलदृष्टिर्बाष्पाकुललोचना । कीदृशं । स्थानान्तरे अन्यस्थाने कल्पितसंनिवेशं कृतरचनं । अतश्च धात्र्यङ्गुलीभिर्धात्र्याः करेण प्रतिसार्यमाणं स्थानं नीयमानम् ॥ २५ ॥

**क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।**
**नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ २६ ॥**

मल्लि०—क्षीरोदेति । नवं नूतनं क्षौमं दुकूलं निवस्त आच्छादयतीति नवक्षौमनिवासिनी । वस्तेराच्छादनार्थाण्णिनिः । तथा नवं दर्पणमादधाना बिभ्रती सा गौरी सफेनपुञ्जा सडिण्डीरपङ्क्तिः । क्षीरमुदकं यस्य स क्षीरोदः क्षीरसमुद्रः । 'उदकस्योदः संज्ञायाम्' इत्युदादेशः । तस्य वेला तीरभूमिरिव । 'वेला काले च जलधेस्तीरनीरविकारयोः' । इति विश्वः । पर्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा शरद्रात्रिरिव भूयो भूयिष्ठं बभौ चकासे ॥ २६ ॥

चा०—क्षीरोदेति । सा गौरी नवं नवं यथा स्यात्तथा क्षौमनिवासिनी पट्टांशुकनिवासिनी दर्पणं परिदधाना बिभ्राणा भूयो नितरां बभौ । केव । सफेनपुञ्जा डिण्डीरसमूहयुता क्षीरोदवेलेव दुग्धोदधिवेलेव । पुनः केव । पर्याप्तचन्द्रा परिपूर्णशशाङ्का शरत्त्रियामेव शारदी निशेव ॥ २६ ॥

टिप्पणी—अत्र क्षीरोदवेलेव पर्याप्तचन्द्रेवेत्यत्र चेवशब्दद्वयोपादानादुपमाद्वयम् ॥ २६ ॥

**तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।**
**अकारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥**

मल्लि०—तामिति । कारयितव्येषु दक्षा कारयित्री । कर्मोपदेशकुशलेत्यर्थः । माता मेना प्रतितिष्ठत्यस्यामिति प्रतिष्ठा । 'आतश्चोपसर्गे' इति कः स्त्रियां टाप् । कुलस्य प्रतिष्ठां कुलालम्बनभूताम् । स्थितिकारिणीमित्यर्थः । तां गौरीम् । अर्चिताभ्यः पूजिताभ्यः कुलदेवताभ्यो गृह

देवताभ्यः प्रणमय्य प्रणामं कारयित्वा। 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। सतीनां पतिव्रतानां पादग्रहणं पादाभिवन्दनं क्रमेणाकारयत्कारयामास। 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मत्वम्। अन्यत्र च 'गतिबुद्धी'-त्यादिना नमेरकर्मकत्वात्॥ २७॥

चा०—तामिति। माता मेना तां गौरीमर्चिताभ्यः पुष्पादिपूजिताभ्यः कुलदेवताभ्यो गृहदेवताभ्यः प्रणमय्यानन्तरं क्रमेणानुज्येष्ठं सतीनां पतिव्रतानां पादग्रहणं वन्दनमकारयत्कारितवती। यतः कारयितव्येऽवश्यकार्ये दक्षा चतुरा। कीदृशीं कुलप्रतिष्ठां। वंशयशस्करीम्॥ २७॥

**अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा[1] स्म नम्रा।**
**तया तु तस्यार्धशरीरभाजा[2] पश्चात्कृताः [3]स्निग्धजनाशिषोऽपि २८**

मल्लि०—अखण्डितमिति। नम्रा प्रणतोमा ताभिः सतीभिः पत्युः शिवस्याखण्डितमक्षतं प्रेम लभस्व प्राप्नुहीत्युच्यते स्म अभिहिता। 'लट् स्मे' इति भूतार्थे लट्। तस्य हरस्य। अर्धं शरीरस्यार्धशरीरम्। 'अर्धं नपुंसकम्' इति समासः। तद्भजतीत्यर्धशरीरभाजा तथा गौर्या तु स्निग्धजनाशिषो बन्धुजनाशीर्वादा अपि पश्चात्कृता अधरीकृताः। ततोऽप्यधिकफललाभादिति भावः॥ २८॥

चा०—अखण्डितमिति। ताभिर्वन्दिताभिः सतीभिर्नम्रा सोमा इत्युच्यते स्म। इति किं। पत्युरखण्डितं प्रेम प्रीत्यतिशयं लभस्व प्राप्नुहि। तु पुनस्तया तस्य पत्युरर्द्धशरीरलाभात् शरीरस्यार्द्धमर्द्धशरीरं तस्य लाभस्तस्माद्बन्धुजनाशिषोपि बान्धवलोकाशीर्वादाः पश्चात्कृतास्तिरस्कृताः। येन हि शरीरार्द्धोप्यदायि तस्य किं प्रेम्णा॥ २८॥

**इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा।**
**सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः[4]॥ २९॥**

मल्लि०—इच्छेति। कृती कुशलः। सभायां साधुः सभ्यः। 'सभाया यः' इति यप्रत्ययः। अद्रिर्हिमवानिच्छाविभूत्योरुत्साहैश्वर्ययोरनुरूपं सदृशं यथा तथा तस्याः पार्वत्याः कृत्यं कर्तव्यमशेषयित्वा शेषं कृत्वा। समाप्येत्यर्थः। अशेषशब्दात् 'तत्करोति' इति ण्यन्तात्क्त्वाप्रत्ययः। सुहृदास्थितायां बन्धुजनाक्रान्तायां सभायां संसदि वृषाङ्कस्य हरस्यागमनं प्रतीक्षत इति तथोक्तः सन् 'कर्मण्यण्' इत्यण्। तस्थौ स्थितः॥२९॥

चा०—इच्छेति। ततोनन्तरं कृती कुशलोऽद्रिर्नगनाथः सभायां विवाहसंसदि वृषाङ्कागमनं हरस्याभिगमनं प्रतीक्ष्य तस्थौ स्थितः। किं कृत्वा। इच्छाविभूत्योरभिलाषविभवयोरनुरूपं सदृशं तस्या दुहितुः कृतिमशेषयित्वा समाप्य। कीदृश्यां

---

१. असौ. २. लाभात्. ३. बन्धुजन ४. आगमनं प्रतीक्ष्य.

सभायां । सुहृदास्थितायां मित्रबन्धुसहितायाम् । कीदृशोऽद्रिः । सभ्यः सभायोग्यः ॥

तावद्भवस्यापि[1] कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्ता[2]त्पुरशासनस्य ॥ ३० ॥

मल्लि०—तावदिति । तावत्, यावद् गौरीप्रसाधनं क्रियते तत्काल एवेत्यर्थः कुबेरशैले कैलासे । तदेव पूर्वं तत्पूर्वं तच्च तत्पाणिग्रहणं तस्यानुरूपं प्रसाधनमलंकारसामग्री आदृताभिः सादराभिः । कर्तरि क्तः । मातृभिर्ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः । पुरं शास्तीति पुरशासनस्तस्य । कर्तरि ल्युट् । भवस्यापि पुरस्तादग्रे न्यस्तं निक्षिप्तम् ॥ ३० ॥

चा०—तावदिति । यावद्गौरी प्रसाध्यते तावत्पुरारेर्हरस्यापि पुरस्तादग्रे कुबेरशैलं कैलासे आदृताभिः संपन्नाभिर्मातृभिर्देवताभिस्तत्पूर्वपाणिग्रहणानुरूपं प्रथमविवाहयोग्यं प्रसाधनं मण्डनं न्यस्तं निहितम् ॥ ३० ॥

तद् गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
[3]स एव वेषः परिणेतुरिष्टं भवान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

मल्लि०-तदिति । ईश्वरेण शिवेन सा मङ्गलमण्डनश्रीः शुभप्रसाधनसंपत्तद्गौरवात्तासु मातृष्वादरात्केवलं पस्पृशे स्पृष्टैव, न तु दध्रे इत्यवधारणार्थः केवलशब्दः । 'केवलं चावधारणे' इति शाश्वतः । किंतु तस्य विभोर्देवस्य स एव वेषः स्वाभाविको भस्मकपालादिवेष एव परिणेतुर्लोकोद्वोढुरिष्टमपेक्षितं भावान्तरं रूपान्तरं प्रपेदे । अङ्गरागादिरूपतां प्रापेत्यर्थः ॥ ३१ ॥

चा०—तद्गौरवादिति । देवेनेश्वरेण तद्गौरवान्मातृमण्डलादरात्सा मङ्गलमण्डनश्रीर्विवाहालंकारमण्डनलक्ष्मीः पस्पृशेऽभिनन्दिता । यतस्तस्य परिणेतुरीश्वरस्य स्व एवात्मीय एव आकल्पो भावान्तरमन्यद्रूपं प्रपेदे प्राप ॥ ३१ ॥

भावान्तरापत्तिमेवाह—

बभूव भस्मैव [4]सिताङ्गरागः, कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु[5] च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

मल्लि०—बभूवेति । भस्मैव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव । कपालमेवामलं शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव । गजाजिनस्यैवोपान्तभागेष्वञ्चलप्रदेशेषु रोचनैवाङ्को हंसादिचिह्नं यस्य स तथोक्तो दुकूलभावः पटांशुकत्वं च बभूव । भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥ ३२ ॥

---

१. वरस्य. २. स्मर. ३. स्व एव. ४. कृताङ्गरागः. ५. भावेषु.

तथाहि—

चा०—बभूवेति । भस्मैव सिताङ्गरागश्चन्दनानुलेपनं बभूव । कपालमेवामलशेखरश्रीरवतंसलक्ष्मीर्बभूव । गजाजिनस्यैव करिकृत्तेरेव दुकूलभावः पट्टांशुकत्वं बभूव । कीदृशः । उपान्तभागेषु रोचनैवाङ्कश्चिह्नं यस्य सः । गोरोचनालिखितहंसयुगलरम्य इत्यर्थः ।। ३२ ।।

[1]शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टा[2]मलपिङ्गतारम् ।
सांनिध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ।। ३३ ।।

मल्लि०—शङ्खेति । शङ्खान्तरे ललाटास्थिमध्ये द्योतत इति तथोक्तम् । 'शङ्खो निधौ ललाटास्थ्नि' इत्यमरः । अन्तर्निविष्टा मध्यगतामला पिङ्गा तारा कनीनिका यस्य तत्तथोक्तम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । यद्विलोचनं तद्विलोचनमेव हरितालमय्या वर्णद्रव्यविशेषविकारस्य तिलकक्रियायास्तिलकरचनायाः संनिधिरेव सांनिध्यं तदेव पक्षः साध्यम् । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति यादवः । तस्मिन् सांनिध्यपक्षे जातम्, प्रविष्टमित्यर्थः । अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ।। ३३ ।।

चा०—शेखान्तरेति । शङ्खौ ललाटास्थिनी तयोरन्तरे मध्ये द्योतते भासते यत्तृतीयं चक्षुस्तदेव हरितालमय्यास्तिलकक्रियायाः सान्निध्यपक्षे सङ्गावमार्गे जातं सम्पन्नम् । ललाटाक्षहरितालतिलकमभूदित्यर्थः । कीदृग् नेत्रं । अन्तर्निविष्टा स्थिताग्निवत्पिङ्गा कपिशा तारा कनीनिका यस्य तत् ।। ३३ ।।

यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे, तथैव तस्थुः फणरत्नशोभाः ।। ३४ ।।

मल्लि०—यथेति । यथाप्रदेशं प्रदेशान्कोष्ठादीननतिक्रम्याभरणान्तरत्वं कङ्कणाद्याभरणविशेषत्वं करिष्यतां संपादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव विकृतिं रूपान्तरं प्रपेदे । फणरत्नशोभास्तथैव तस्थुः । तासां तथैवोपादेयत्वादिति भावः ।। ३४ ।।

चा०—यथेति । भुजगेश्वराणां वासुकिप्रभृतीनां सर्पेन्द्राणां यथाप्रदेशानुरूपेणाभरणान्तरत्वं केयूरकटकादिरूपमलंकारविशेषं करिष्यतां विधास्यतां शरीरमात्रं विकृतिमाभरणमयं विकारं प्रपेदे प्राप । फणरत्नशोभाः शिरोमणिदीप्तयः पुनस्तथैव तस्थुर्न रूपान्तरमापुः । रत्नानां स्वत एवालंकरणत्वात् ।। ३४ ।।

दिवापि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ? ।। ३५ ।।

---

1. नेत्रान्तर. 2. अनल.

मल्लि०—दिवापीति । दिवा दिनेऽपि निष्ठ्यूता उद्गीर्णा मरीचिभासः किरणकान्तयो यस्य तेन बाल्यादल्पतनुत्वादनाविष्कृतलाञ्छनेन । अदृश्यमानकलङ्केनेत्यर्थः । चन्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः संगतमुकुटस्य हरस्य चूडामणेर्ग्रहणं स्वीकारः किं किमर्थम् । चन्द्रचूडामणेर्देवस्य किमन्यैश्चूडामणिभिरिति भावः ॥ ३५ ॥

चा०—दिवापीति । हरस्य चूडामणौ रत्नविशेषे किं ग्रहणं क आदरः । यतो नित्यमेव चन्द्रेण प्रतिभिन्नमौलेर्विशेषितजटस्य । कीदृशेन । दिवाप्यह्न्यपि निष्ठ्यूतमरीचिभासा प्रसृतकिरणकान्तिना । तथा बाल्यात्कलामात्रतोऽनाविष्कृतलाञ्छनेनाप्रकटितमलेन ॥ ३५ ॥

[1]इत्यद्भुतैकप्रभवः प्रभावात्प्रसिद्ध[2]नेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥

मल्लि०—इतीति । इतीत्थं प्रभावात्सामर्थ्यात्प्रसिद्धस्य नेपथ्यविधेर्वेषसंविधानस्य विधाता निर्माता । अत एवाद्भुतानामाश्चर्याणामेकप्रभवो मुख्यनिधिः स देव आसन्नगणेन पार्श्वस्थवर्गेण । प्रमथगणेनेत्यर्थः । उपनीत आनीते खड्गे निषक्तप्रतिमं संक्रान्तप्रतिबिम्बमात्मानं ददर्श । वीरपुरुषाणामेष आचारः ॥ ३६ ॥

चा०—इतीति । अथ शंभुरासन्नगणोपनीते निकटस्थप्रमथढौकिते खड्गे आत्मानं ददर्शाद्राक्षीत् । कीदृशमात्मानम् । निषिक्तप्रतिमं लग्नप्रतिबिम्बम् । कीदृशः शंभुः । प्रभावान्महिम्न इतीत्थं प्रसिद्धनेपथ्यविधिः संपन्नवेषरचनः । यतोऽद्भुतैकप्रभव आश्चर्यैकविधिः विधाता स्रष्टा ॥ ३६ ॥

स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

मल्लि०—स इति । स देवो नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् । शार्दूलचर्मणा व्याघ्रचर्मणान्तरितमाच्छादितमुरु विशालं पृष्ठं यस्य तं तथोक्तम् 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । तस्मिन्देवे भक्त्या संक्षिप्तं संकोचितं बृहत्प्रमाणं यस्य तं गोपतिं वृषभं कैलासमिवारुह्य प्रतस्थे चचाल ॥ ३७ ॥

चा०—स इति । ततोऽनन्तरं स हरो गोपतिं वृषभमारुह्य प्रतस्थे जगाम । कीदृशः । नन्दिभुजावलम्बी नन्दिगणभुजं बाहुमवलम्बितुं शीलं यस्य सः । कीदृशं गोपतिं । शार्दूलचर्मणा व्याघ्राजिनेन पिहितमाच्छादितमुरु महत्पृष्ठं यस्य स तम् । कमिव । तद्भक्तिसंक्षिप्तबृहत्प्रमाणं हरभक्त्या संक्षिप्तं संहृतं बृहत्प्रमाणं येन स तादृशं कैलासमद्रिमिव शौक्ल्यादुच्चत्वच्चोत्प्रेक्षयम् ॥ ३७ ॥

---

१. अत्यद्भुत. २. नेपथ्यविधिः.

तं मातरो देवमनुव्रजन्त्यः स्ववाहन[1]क्षोभचलावतंसाः।
मुखैः प्रभामण्डलरेणुगौरैः [2]पद्माकरं चक्रुरिवान्तरीक्षम्[3] ॥ ३८ ॥

मल्लि०—तमिति। तं देवमनुव्रजन्त्योऽनुगच्छन्त्यः स्ववाहनानां क्षोभेण प्रकम्पेन चलावतंसाश्चलकुण्डला मातरः सप्तमातृकाः प्रभामण्डलान्येव रेणवः परागास्तैर्गौरैररुणैः। 'गौरोऽरुणे सिते पीते' इति यादवः। मुखैरन्तरीक्षमाकाशं पद्माकरमिव चक्रुः ॥ ३८ ॥

चा०—तमिति। तं देवमनुव्रजन्त्यो यान्त्यो मातरो मुखैरन्तरिक्षं गगनं पद्माकरमिव कमलखण्डमिव चक्रुः। मुखानां नलिनसादृश्यात्। कीदृशैः। प्रभामण्डलमेव रेणुः परागस्तेन गौरैः पाण्डुवर्णैः। कीदृश्यः। स्वंस्वं महिषोलूकादिकं यद्वाहनं तत्क्षोभेण चला अवतंसाः शेखरा यासां ताः ॥ ३८ ॥

टिप्पणी—अत्रोत्प्रेक्षा ॥ ३८ ॥

तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे।
बलाकिनी नीलपयोदराजी[4] दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥

मल्लि०—तासामिति। कनकप्रभाणां सुवर्णवर्णानां तासां मातृणां पश्चात्कपालाभरणा। सितकपालालंकारेत्यर्थः। काली महाकाली देवी च। कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम्। बलाकिनी बलाकावती। व्रीह्यादित्वादिनिः। दूरं यथा तथा पुरोऽग्रे क्षिप्ताः प्रसारिताः शतह्रदा विद्युतो यस्याः सा तथोक्ता नीलपयोदराजी कालमेघपङ्क्तिरिव चकासे ॥

चा०—तासामिति। तासां मातृणां कनकप्रभाणां सुवर्णवर्णानां पश्चात्काली कपालाभरणा सितनृकपालालंकारा चकासे। केव। बलाकिनी बलाकायुक्ता पुरोऽग्रे क्षिप्तशतह्रदा निष्ट्यूततडिन्नीलपयोदराजिरिव मेघमालेव। काल्याः कृष्णत्वात्।

टिप्पणी—अत्रोपमा ॥ ३९ ॥

ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः।
विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

मल्लि०—तत इति। ततोऽनन्तरं शूलभृतः शिवस्य पुरो गच्छन्तीति पुरोगैरग्रेसरैः। 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति गमेर्डप्रत्ययः। गणैः प्रमथैरुदीरित उत्पादितो मङ्गलतूर्यघोषो मङ्गलवाद्यध्वनिर्विमानशृंगाण्यवगाहमानः सन् सुरेभ्यो विमानस्थेभ्यः सेवाऽवसरं शशंस। सुराः प्रस्थानध्वनिमाकर्ण्यायमेव नः सेवाऽवसर इत्याजग्मुरित्यर्थः ॥ ४० ॥

चा०—तत इति। ततः शूलभृतो हरस्य पुरोगैरग्रयायिभिर्गणैरुदीरितः कृतः मङ्गलतूर्यघोषो वादित्रध्वनिः सुरेभ्यः सेवावसरं शशंसाकथयत्। यतो विमानशृङ्गाणि अवगाहमानः सुरयानशिखराणि व्याप्नुवत्। अतश्च तदाकर्णनाज्ज्ञातं देवै-

१. आक्षोभ. २. पद्माकरीचक्रुः. ३. अन्तरिक्षम्. ४. राजिः.

विवाहार्थमुच्चलितो हरो येनायं तूर्यघोषस्तद्व्रजामस्तस्य पुरतइतिसेवाकालकथनम् ।

सुराणां सेवाप्रकारमेवाह—

उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ [1]पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥

मल्लि०—उपादद इति । तस्य हरस्य सहस्ररश्मिः सूर्यस्त्वष्ट्रा विश्वकर्मणा निर्मितं नवमातपत्रमुपाददे । धृतवानित्यर्थः । उत्प्रेक्षते—तद्दुकूलात्तस्यातपत्रस्य प्रान्तलम्बिनो दुकूलादविदूरमौलिः । तद्दुकूलस्यासन्नमौलिरित्यर्थः । स हर उत्तमाङ्गे शिरसि । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । पतन्ती गङ्गा यस्य स पतद्गङ्ग इव बभौ । तद्दुकूलादित्यत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति दूरार्थयोगे विकल्पेन पञ्चमी । नाथेनोक्तम् 'अन्यारात्—' इत्यत्राराच्छब्दस्यार्थग्रहणार्थत्वात् पञ्चमीति तदनाकरम् । किंचास्य शास्त्रोक्तविकल्पापवादत्वात् 'दूरं ग्रामस्य' इत्यादि षष्ठीप्रयोगो दूरापास्तः स्यादित्युपेक्षणीयमेव ॥ ४१ ॥

तामेव सेवामाह—

चा०—उपेति । सहस्ररश्मिरादित्यस्तस्येशयस्य त्वष्ट्रा विश्वकर्मणा निर्मितं रचितं नवमातपत्रमाददे जग्राह । स हरस्तद्दुकूलाच्छत्रपट्टांशुकादविदूरमौलिनिकटमूर्द्धा बभौ । सितत्वादुत्प्रेक्ष्यते । गाङ्गं गङ्गासंबन्धिप्रवाहं वहन्निव धारयन्निव ॥ ४१ ॥

टिप्पणी—अत्रोत्प्रेक्षालङ्कारः ॥ ४१ ॥

मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि [2]सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

मल्लि०—मूर्ते इति । गङ्गा च यमुना च गङ्गायमुने मूर्ते विग्रहधारिण्यौ सचामरे चामरसहिते सत्यौ । अत एव समुद्रगा नदी तस्या रूपं स्वरूपं तस्य विपर्ययेऽप्यभावेऽपि सह हंसपातेन हंसचारेण वर्तेत इति सहंसपाते इव 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । लक्ष्यमाणे दृश्यमाने सत्यौ तदानीं विवाहसमये देवमसेविषातामभजताम् । सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थतुरित्यर्थः ॥ ४२ ॥

चा०—मूर्त इति । तं देवं मूर्ते आकारसहिते गङ्गायमुने नद्यौ तदानीं सचामरे बालव्यजनयुते असेविषातां वीजयामासतुः । सचामरत्वादुत्प्रेक्षते । समुद्रगारूपविपर्ययेऽपि जलमयसंस्थानत्यागेऽपि सहंसपाते हंसपातान्विते इव लक्ष्यमाणे । नदीस्थैर्गजहंसैर्भाव्यम् ॥ ४२ ॥

---

१. वहन्गाङ्गमिव प्रवाहम्. २. सहस्रपाते.

टिप्पणी—अत्रोत्प्रेक्षालंकारः ॥ ४२ ॥

**तमभ्यगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।**
**जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव[1] वह्निम् ॥ ४३ ॥**

मल्लि०—तमिति । प्रथम आद्यो विधाता चतुर्मुखस्तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषो विष्णुश्च साक्षात्तं देवमभ्यगच्छत्संमुखमाययौ । किं कुर्वन्तौ । जयेति वाचा जयशब्देनास्येश्वरस्य महिमानं महत्वं हविषा वह्निमिव संवर्धयन्तौ वृद्धिं गमयन्तौ ॥ ४३ ॥

चा०—तमिति । प्रथमो विधाता ब्रह्मा श्रीवत्सलक्ष्मा पुरुषश्च विष्णुस्तमीशमभ्यगच्छत् । कीदृशौ । जयजयेति वाचाऽस्य महिमानं माहात्म्यं संवर्धयन्तौ । केन कमिव । हविषा हवनीयद्रव्येण वह्निमिव । श्रीवत्सो हरेरुरसि लक्षणविशेषः ॥ ४३ ॥

न चानुचितमेतदुक्तमित्याह—

**एकैव मूर्तिर्बिभिदे त्रिधा सा[2] सामान्यमेषां प्रथमावरत्वम् ।**
**विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ[3] ॥ ४४ ॥**

मल्लि०—एकैवेति । सैकैव मूर्तिस्त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन बिभिदे । औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः । अत एवैषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्येष्ठकनिष्ठभावः । सामान्यं साधारणम् । इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः । एतदेव विवृणोति—कदाचिद्धरो विष्णोराद्यः । कदाचिद्धरिस्तस्याद्यः । कदाचिद्वेधास्तयोर्हरिहरयोराद्यः । कदाचित्तौ हरिहरावपि धातुः स्रष्टुराद्यौ । एवमेतेषां पौर्वापर्यमनियतमिति दर्शितम् । ४४ ॥

ननु ब्रह्मविष्णू सर्वोत्कृष्टौ । कथमस्य जयादिशब्दमुदीरयतामित्याह—

चा०—एकैवेति । सा हरहरिहिरण्यगर्भलक्षणा एकैव मूर्तिस्तनुस्त्रिधा त्रिभिः प्रकारैर्बिभिदे भेदं गता । अतश्चैषां त्रयाणां प्रथमावरत्वं प्रधानाप्रधानत्वं स्तोतृस्तुत्यत्वं सामान्यं साधारणम् । तथाहि । कदाचिद्विष्णोर्हर ईड्यः स्तुत्यः । कदाचित्तस्य हरस्य हरिः । कदाचित्तयोर्हरिहरयोर्वेधा ब्रह्मा । कदाचित्तावपि हरिहरौ धातुर्ब्रह्मण ईड्यौ ॥ ४४ ॥

**तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः ।**
**दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥**

मल्लि०—तमिति । पुरुहूतमुख्या इन्द्रादयो लोकपालाः श्रीलक्षणानामैश्वर्यचिह्नानां छत्रचामरवाहनानामुत्सर्गेण त्यागेन विनीतवेषा अनुनीत-

---

१. एव. २. असौ. ३. ईड्यो

वेषाः सन्तः। तथा दृष्टिप्रदाने दर्शननिमित्ते। दर्शनप्रदानार्थमित्यर्थः। कृता नन्दिनः प्रतिहारस्य संज्ञा संकेतो यैस्तादृशाः। मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना इत्यर्थः। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना'। इत्यमरः। तद्दर्शितास्तेन नन्दिना दर्शिता अयमिन्द्रः प्रणमत्ययं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः प्राञ्जलयः कृताञ्जलयः सन्तः तं भवं प्रणेमुः प्रणताः॥ ४५॥

चा०—तमिति। पुरुहूतमुख्या इन्द्रप्रभृतयो लोकपाला दिगीशास्तमीशं प्रणेमुर्ववन्दिरे। कीदृशाः। श्रीलक्षणोत्सर्गविनीतवेषाः श्रीलक्षणान्यातपत्रचामरादीनि तेषामुत्सर्गेण परित्यागेन विनीतो वेषो येषां ते। तथा दृष्टिप्रदाने निमित्तसप्तमीयं। कृता नन्दिप्रतीहारस्य संज्ञा संकेतो यैरवसरं कुरु दर्शयास्मानिति। अतस्तेनैव नन्दिना दर्शिताः सन्तः प्राञ्जलयः कृताञ्जलिबन्धा॥ ४५॥

**कम्पेन मूर्ध्नः शतपत्रयोनिं, वाचा हरिं, वृत्रहणं स्मितेन।**
**आलोकमात्रेण सुरानशेषान्संभावयामास यथाप्रधानम्॥ ४६॥**

**मल्लि०**—कम्पेनेति। स देवः शतपत्रयोनिं चतुर्मुखं मूर्ध्नः कम्पेन, तथा हरिं वाचा संभाषणेन, वृत्रं हतवन्तं वृत्रहणमिन्द्रम्। 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप्। स्मितेन मन्दहासेनाशेषान्सुरानालोकमात्रेण दृष्टिमात्रेणेत्थं यथाप्रधानं यथार्हं संभावयामास॥ ४६॥

चा०—कम्पेनेति। अथेशो मूर्ध्नः कम्पेन शिरश्चालनेन शतपत्रयोनिं ब्रह्माणं सम्भावयामासार्चयत्। वाचा हरिं च स्मितेन वृत्रहणमिन्द्रं च। यथाप्रधानं ज्येष्ठानुक्रमेणान्यानपि। अशेषान् समस्तान्सुरानालोकमात्रेण दृष्टिदानेन च॥ ४६॥

**तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह।**
**'विवाहयज्ञे वितते़ऽत्र यूयमध्वर्यवः पूर्ववृता मये'ति॥ ४७॥**

**मल्लि०**—तस्मा इति। तस्मै शिवाय सप्तर्षिभिः। 'दिक्संख्ये संज्ञायाम्' इति समासः। पुरस्तादग्रे जयेत्याशीः ससृजे प्रयुक्ता स तान्सप्तर्षीन्स्मितपूर्वमाह—किमिति। वितते विस्तृतेऽत्र प्रवर्तिते विवाह एव यज्ञस्तस्मिन्यूयं मया पूर्वमेव वृताः प्रार्थिता अध्वर्यव ऋत्विज इति। विशेषवाचिना सामान्यमुक्तम्॥ ४७॥

चा०—तस्मा इति। सप्तर्षिभिर्वसिष्ठादिभिस्तस्मै हराय पुरस्तादग्रतो जयाशीर्जयजयेतिस्तुतिः ससृजे उच्चारिता। ततः स हरः। स्मितपूर्वं सहासं यथास्यात्तथा तानाहोवाच। वितते विस्तीर्णेऽस्मिन् विवाहयज्ञे पूर्वमेवं यूयं मयाध्वर्यवो यजुर्विदो वृताः प्रार्थिताः। ततः शीघ्रं प्रचलतेति भावः॥ ४७॥

**विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः।**
**अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराधिपखण्डधारी॥ ४८॥**

मल्लि०—विश्वावस्विति। विश्वावसुर्नाम कश्चिद् गन्धर्वो देवगायकस्तत्प्राग्रहरैस्तत्प्रमुखैः प्रवीणैः प्रकृष्टवीणैर्निपुणैर्वा। 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः। त्रयाणां पुराणां समाहारस्त्रिपुरम्। 'तद्धितार्थोत्तरपदे—'त्यादिना समाहारसमासः। 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गतानिषेधः। त्रिपुरस्य संबन्ध्यवदानं पूर्ववृत्तं कर्म विजयरूपं त्रिपुरावदानं तत्संगीयमानं स्तूयमानं यस्य स तथोक्तः। 'अवदानं कर्म वृत्तम्' इत्यमरः। ध्वान्तं तमः। मोह इति यावत्। तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीत्यध्वान्तविकारलङ्घ्यः। विवाहादिकं तु तस्य लीलेत्यर्थः। ताराधिपखण्डधारी चन्द्रशेखरः शंभुरध्वानं मार्गं ततारात्यगच्छत्॥ ४८॥

चा०—विश्वावस्विति। ततोऽनन्तरं स हरोऽध्वानं मार्गं ततार। कीदृशः। विश्वावसुर्गन्धर्वराजः प्राग्रहरः प्रधानं येषां तैः। प्रवीणैर्गीयमानं त्रिपुरदाहलक्षणमवदानमाश्चर्यं कर्म यस्य सः। तथाध्वान्तमान्तरं तमस्तस्य विकारा हर्षादयस्तैरलंघ्योऽनाक्रमणीयः। ताराधिपखण्डधारि शशिकलाभृत्। त्रिपुरशब्देन तद्दाहो लक्ष्यते॥ ४८॥

**खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः।**
**तटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे॥ ४९॥**

मल्लि०— ख इति। ख आकाशे खेलं सुन्दरं गच्छतीति खेलगामी। सशब्दाः शब्दायमानाश्चामीकरकिंकिण्यः काञ्चनक्षुद्रघण्टिका यस्य स तथोक्तः। 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः। 'नद्यृतश्च' इति कप्। वाह्यतेऽनेनेति वाहो वृषभः। करणे घञ्। प्रोतघने स्यूतमेघे अत एव तटाभिघाताद्रोधोभेदाल्लग्नपङ्के श्लिष्टकर्दमे इव स्थिते विषाणे शृङ्गे मुहुर्धुन्वंस्तं हरमुवाह वहति स्म॥ ४९॥

चा०—ख इति। समस्तमीशं ख आकाशे उवाह वहति स्म। कीदृशः। खेलगामी विलासयायी तथा सशब्दाःसस्वनाश्चामीकरस्य सुवर्णस्य किङ्किणीका क्षुद्रघण्टिका यस्य सः। प्रोतघने विषाणे शृङ्गे विधुन्वन्कंपयन्। उत्प्रेक्षते तटाभिघातादिव वप्रक्रीडाघातादिव लग्नपंकोकर्दमश्लेषाद्विषाणस्य॥ ४९॥

टिप्पणी—प्रोतघने लग्नपङ्के इव स्थिते विषाणेऽत्र विषाणे लग्नपङ्कत्वोत्प्रेक्षणादुत्प्रेक्षाऽलंकारः॥ ४९॥

**स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्तात्।**
**पुरो विलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव [1]कृष्यमाणः॥ ५०॥**

---

१. कृष्यमाणम्.

मल्लि०—स इति । स वाहोऽप्राप्तः पराभियोगः शत्रुसमाक्रान्तिर्यस्य तत्तथोक्तं नगेन्द्रेण हिमवता गुप्तं रक्षितं नगरमोषधिप्रस्थं पुरोऽग्रे विलग्नैः संक्रान्तैर्हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव मुहूर्तात्प्रापत् । अन्यथा कथं दूरस्याशुप्राप्तिः स्यादिति भावः । पुरः प्रसृता हरदृष्टयः पिङ्गलवर्णत्वात्सौवर्णानि वृषाकर्षणदामानीवालक्ष्यन्तेत्यर्थः ॥ ५० ॥

चा०—सप्रापेति । स ईश्वरो मुहूर्तात् क्षणमात्रेण नगेन्द्रगुप्तं हिमवदाधिष्ठितं नगरमोषधिप्रस्थं प्रापत् । कीदृशं । अप्राप्तपराभियोगं अप्राप्तोऽनासादितः परस्य शत्रोरभियोगो वेष्टनम् येन तत् । उत्प्रेक्ष्यते । कीदृशमिव । पुरोविलग्नैर्हरदृष्टिपातैर्हरतृतीयनयनपातैरिव हेतुभूतैः सुवर्णसूत्रैराकृष्यमाणम् । अन्यथा कथं दूरस्याशुप्राप्तिः स्यादिति भावः ॥ ५० ॥

**तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।**
**[1]स्वबाणचिह्नादवतीर्य [2]मार्गादासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥**

मल्लि०—तस्येति । तस्य पुरस्योपकण्ठेऽन्तिके घनो मेघ इव नीलः कण्ठो यस्य स घननीलकण्ठो देवः कुतूहलाद्दर्शनोत्सुक्यादुन्मुखैः पौरैर्दृष्टः सन् । स्वबाणाचिह्नात्त्रिपुरविजयसमये स्वबाणाङ्कान्मार्गात् कुतश्चिदाकाशदेशादवतीर्यावरुह्यासन्नभूपृष्ठं निकटभूतलमियाय प्राप ॥ ५१ ॥

चा०—तस्येति । तस्याद्रेरुपकण्ठे समीपे देवो हरः स्वबाणचिह्नान्मार्गादाकाशादवरुह्यासन्नभूपृष्ठमियायागात् । कीदृक् । घनवन्नीलः कृष्णः कण्ठो गलो यस्य सः । तथा कुतूहलात्कौतुकादुन्मुखपौरदृष्टः संमुखैः पौरैरीक्षितः ॥ ५१ ॥

**तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।**
**प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥**

मल्लि०—तमिति । आगमनेन शिवागमनेन प्रतीतो हृष्टो गिरिचक्रवर्ती पर्वताधिराजो हिमवानृद्धिमता वस्त्रालङ्कारादिसमृद्धेन बन्धुजनेनाधिरूढैः । अनेन बन्धूनां समसाम्यं सूचितम् । गजानां वृन्दैः प्रफुल्ला विकसितकुसुमा वृक्षा येषु तैः स्वैः स्वकीयैः कटकैर्नितम्बैरिव तं हरं प्रत्युज्जगामाभिययौ । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः ॥ ५२ ॥

चा०—तमिति । गिरिचक्रवर्ती हिमवान् ऋद्धिमद्बन्धुजनाधिरूढैः स्फीतस्वजनसमारूढैर्गजानां वृन्दैस्तमीशं प्रत्युज्जगामाग्रतो ययौ । कीदृशः । आगमनप्रतीतो हरागमनेन मुदितः । गजानां वृन्दैः । कैरिव । प्रफुल्लवृक्षैः स्वैर्निजैः कटकैरिव नितम्बैरिव ॥ ५२ ॥

टिप्पणी—अत्र प्रफुल्लवृक्षेषु स्वकटक( नितम्ब )त्वोत्प्रेक्षणादुत्प्रेक्षा ॥ ५२ ॥

---

१. स्वबाहवाहात्. २. वाहात्

**वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।**
**समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥**

**मल्लि०**—वर्गाविति । दूरविसर्पी दूरगामी घोषो ययोस्तौ देवाश्च महीधराश्च तेषां देवमहीधराणामुभौ वर्गावुद्घटितापिधानेऽपनीतकवाटे पुरस्य द्वारे भिन्ने दीर्णं एकसेतुः याभ्यां तौ भिन्नैकसेतू पयसामोघौ प्रवाहाविव समीयतुः संगतौ ॥ ५३ ॥

**चा०**—वर्गाविति । देवमहीधराणां सुराचलानां तावुभौ वर्गौ पुरस्य नगरस्य द्वारे समीयतुर्जग्मतुः । कीदृशे द्वारे । उद्घाटितापिधाने दूरीकृतकपाटे । काविव । भिन्नैकसेतू लुठितः साधारणः सेतुर्ययोस्तौ । दूरविसर्पिघोषौ दूरं विसर्पी प्रसरणशीलो घोषो ययोस्तौ । पयसां पानीयानामोघाविव पूराविव । यथा पयः पूरो संगच्छते । सेतुर्द्वारस्योपमानं । दूरविसर्पिघोषावित्युभयविशेषणं । अपिधीयतेऽनेनेत्यपिधानं कपाटम् ॥ ५३ ॥

टिप्पणी—अत्र भिन्नसेतू पयसामोघाविव देवमहीधराणामुभौ वर्गावित्युपमानोपमेयभावादुपमा ॥ ५३ ॥

**ह्रीमानभूद् भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।**
**पूर्वं महिम्ना स हि तस्य [1]दूरमावर्जितं नात्मशिरो विवेद ॥ ५४ ॥**

**मल्लि०**--ह्रीमानिति । भूमिधरो हिमवान् । त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्ष्यञ्प्रत्ययः । तस्य वन्द्येन नमस्कार्येण कृतप्रणामः सन् । 'ऋत्विक्पितृव्यश्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्यात्प्रत्युत्थायाभिवादनम् ॥' इति स्मरणात् । ह्रीमानभूत् । महादेवं प्रति स्वयमल्पत्वात्संकोचं प्रापेत्यर्थः । ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामातुराचारमात्रस्वीकारे कः संकोच इति शङ्कां निरस्यति —पूर्वमिति । हि यस्मात्स हिमवान्पूर्वं प्रागेव तस्येश्वरस्य महिम्ना सामर्थ्येन दूरमत्यन्तमावर्जितं नमितमात्मशिरो न विवेद । सत्यं स्वयं प्रणतत्वानुसंधानेन संकोचः तदनुसंधानं त्वौत्सुक्यान्नास्तीति भावः ॥ ५४ ॥

**चा०**—ह्रीमानिति । त्रैलोक्यवन्द्येन भुवनत्रयनमस्कृत्येन हरेण कृतप्रणामो भूमिधरोऽद्रिराजो ह्रीमाल्लज्जितोऽभूत् । सर्वेश्वरो नाम नमति हि । यतः स च दूरमत्यर्थं तस्य महिम्ना माहात्म्येनावर्जितं नमितमपि आत्मशिरो निजोत्तमाङ्गं पूर्वं न विवेद नाज्ञासीत् ॥ ५४ ॥

**स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।**
**प्रावेशयन्मन्दिरमृद्धमेनं [2]मागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥**

---

१. दूरात्. २ माङ्गल्य.

मल्लि०—स इति । प्रीतियोगात्संतोषसंबन्धाद्विकसन्मुखश्रीर्विकसन्ती मुखश्रीर्यस्य स तथोक्तः स हिमवान् । जायां मिमीते जानातीति जामातुर्वरस्य । पृषोदरादित्वात्साधु । 'जामाता दुहितुः पतिः' इत्यमरः । अग्रेसरतां पुरोगामित्वमुपेत्यैनं देवमागुल्फं पादग्रन्थिपर्यन्तं कीर्णानि पर्यस्तान्यापणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिंस्तदागुल्फकीर्णापणमार्गपुष्पम् । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । ऋद्धं समृद्धं मन्दिरं नगरम् । 'मन्दिरं नगरेऽगारे, मन्दिरो मकरालये' । इति विश्वः । प्रावेशयत् ॥ ५५ ॥

चा०—सप्रीतीति । स हिमवान् जामातुरग्रेसरतां पुरोयायित्वमुपेत्य प्राप्यैनं शंभुं मन्दिरं प्रावेशयत् । कीदृशः । प्रीतियोगाद्विकसन्ती मुखश्रीर्यस्य सः । कीदृङ् मन्दिरं । ऋद्धं स्फीतं । तथा आगुल्फं कीर्णान्यापणमार्गे पुष्पाणि यत्र तत् ॥५५॥

तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥ ५६ ॥

मल्लि०—तस्मिन्निति । तस्मिन्मुहूर्ते हरपुरप्रवेशसमय ईशानस्य संदर्शने लालसानां लोलुपानाम् । 'लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः' इति यादवः । पुरसुन्दरीणां प्रासादमालास्वित्थं वक्ष्यमाणप्रकारेण त्यक्तान्यकार्याणि विमृष्टकार्यान्तराणि विचेष्टितानि व्यापाराः । 'नपुंसके भावे क्तः' इति क्तः । बभूवुरासन् ॥ ५६ ॥

चा०—तस्मिन्निति । तस्मिन्मुहूर्ते गृहप्रवेशसमय ईशानसन्दर्शनलालसानां हरविलोकनसाभिलाषाणां पुरसुन्दरीणां नगरयोषितां मुक्तान्यकार्याण्युत्सृष्टव्यापारान्तराणि विचेष्टितानि चरितानि प्रासादमालासु हर्म्यावलिपृष्ठेष्वित्थं बभूवुः ।

तान्येवाह पञ्चभिः श्लोकैः—

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि [1]च केशपाशः ॥ ५७ ॥

मल्लि०—आलोकमार्गमिति । आलोकमार्गं दर्शनपथम् । गवाक्षमित्यर्थः । सहसा व्रजन्त्या गच्छन्त्या कयाचिदुद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनोऽतएव वान्तमाल्य उद्गीर्णमाल्यश्च यः स उद्वेष्टनवान्तमाल्यः करेण रुद्धो गृहीतः । अपि च केशपाशः केशकलापः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । तावदालोकनमार्गप्राप्तिपर्यन्तं बद्धुम् । बन्धनायेत्यर्थः । न संभावितो न स्मृत एव ॥

केषामित्याह—

चा०—आलोकेति । सहसाऽतर्कितमालोकमार्गं गवाक्षपथं व्रजन्त्या यान्त्या

---

१. न केशहस्तः, हि केशपाशः.

कयाचिन्नागरिकया केशपाशः केशकलापो बद्धुं ग्रथयितुं तावन्नसंभावित एव करेणापि न रुद्धो नावष्टब्धः । कीदृशः । उद्वेष्टनेन वान्तमुद्गीर्णं माल्यं पुष्पाणि यस्मात्सः । मालानां समूहो माल्यं । 'पाशादिभ्यो यः' 'वालाभ्यस्तत्परा पाशो रचनाउच्चयः । हस्तः पक्षः कलापश्च केशभूयस्त्ववाचका' इत्यभिधानचिन्तामणिः ।

**प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।**
**[1]उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥ ५८ ॥**

**मल्लि०**—प्रसाधिकेति । काचित्स्त्री प्रसाधिकयालंकर्त्र्यालम्बितं रञ्जनार्थं धृतं द्रवरागमेवार्द्रालक्तकमेव । अग्रश्चासौ पादश्चाग्रपादः । इति समानाधिकरणसमासः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः । तमाक्षिप्याकृष्योत्सृष्टलीलागतिस्त्यक्तमन्दगमना सत्यागवाक्षाद् गवाक्षपर्यन्तम् । पदद्वयमेतत् । पदवीमलक्तकाङ्कां लाक्षारसचिह्नां चकार ॥ ५८ ॥

चा०—प्रसाधिकेति । अन्या काचिदङ्गना प्रसाधिकालंबितं मण्डनकारिधृतं द्रवरागमशुष्कालक्तं अग्रपादं चरणाग्रमाक्षिप्योच्छेद्य गवाक्षादावातायनमलक्तकाङ्कां यावकरसचिह्नां पदवीं मार्गं ततानाकरोत् । कीदृशी । उत्सृष्टलीलागतिस्त्यक्तविलासगमना । अग्रश्चासौ पादश्चाग्रपादः । गुणगुणिनोरभेदाद्विशेषणसमासः ।५८।

**विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।**
**तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥**

**मल्लि०**—विलोचनमिति । अपरा स्त्री दक्षिणं विलोचनमञ्जनेन संभाव्यालंकृत्य तद्वञ्चितं तेनाञ्जनेन वञ्चितं वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती । तथैव तेनैव रूपेण शलाकामञ्जनकूर्चिकां वहन्ती बिभ्रती वातायनसंनिकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं संभ्रमाद् व्युत्क्रमद्योतनार्थम् 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥ ५९ ॥

चा०—विलोचनमिति । अपरान्या योषिद्दक्षिणं विलोचनमञ्जनेन कज्जलेन संभाव्य संयोज्य कारणशलाकां तूलिकां वहन्ती तथैवोत्सृष्टलीलागतिर्वातायनसंनिकर्षं गवाक्षनिकटं ययौ जगाम । कीदृशी । तेनाञ्जनेन वञ्चितं वामनेत्रं यया सा । वातोऽयते प्रसरत्यनेनेति वातायनो गवाक्षः ॥ ५९ ॥

**जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।**
**नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥**

**मल्लि०**—जालान्तरेति । अन्या स्त्री जालान्तरप्रेषितदृष्टिर्गवाक्षमभ्यप्रसारितदृष्टिः सती प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम् ।

---

1. उन्मृष्ट.

'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि'। इति विश्वः। न बबन्ध नाबध्नात् किंतु नाभिं प्रविष्टाभरणानां कङ्कणानां प्रभा यस्य तेन। प्रभैव नाभेरावरणमभूदिति भावः। हस्तेन वासोऽवलम्ब्य धृत्वा तस्थौ। ६०॥

चा०—जालान्तरेति। अन्या वनिता प्रस्थानभिन्नां वरावलोकनवशात्त्रुटितां नीवीमुच्चयं न बबन्ध केवलं हस्तेन वासोऽवलम्ब्य तस्थौ। कीदृशी। जालान्तरे गवाक्षविवरे प्रेषिता निक्षिप्ता दृष्टिर्नेत्रं यया सा। कीदृशेन हस्तेन। नाभौ प्रविष्टानां गतानामाभरणानां प्रभा कान्तिर्यस्य तेन॥६०॥

[1]अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती।
कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा॥ ६१॥

मल्लि०—अर्धाचितेति। सत्वरं सवेगमुत्थितायाः कस्याश्चिदर्धाचिता मणिभिर्गुम्फितार्धाचिता दुर्निमिते संभ्रमाद् दुःखेन निक्षिप्ते। 'डुमिञ् प्रक्षेपणे' इति धातोः कर्मणि क्तः। पदे पदे प्रतिपदम्। वीप्सायां द्विर्भावः। गलन्ती गलद्रत्ना सती रसना मेखला तदानीं तस्मिन्नवसरेऽङ्गुष्ठमूलेऽर्पितं लगितं सूत्रमेव शेषो यस्याः सासीत्॥ ६१॥

चा०—अर्धाचितेति। तदानीमपरस्याः कस्याश्चिद्योषितो रसना मेखला अङ्गुष्ठमूलार्पितः सूत्रस्य शेषो यस्याः सा। कीदृश्या योषितः। सत्वरं तूर्णमुत्थितायाः। कीदृशी रसना। अर्धाचिताअर्द्धमाचितोद्ग्रिन्ना। पुनः कदृशी। दुर्निमिते दुष्टं निर्मितं निधानं निक्षेपो वा यस्य तस्मिन्पदे पदे प्रतिपदं गलन्ती भ्रष्टा॥ ६१॥

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम्।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन्[2]॥ ६२॥

मल्लि०—तासामिति। तदानीं सान्द्रकुतूहलानां तासां स्त्रीणामासवगन्धो गर्भे येषां तैः। विलोलानि नेत्राण्येव भ्रमरा येषु तैर्मुखैर्व्याप्तान्तराश्छन्नावकाशा गवाक्षाः सहस्रपत्राभरणा इवासन्। कमलालंकृता इव स्थिता इत्यर्थः॥ ६२॥

चा०—तासामिति। सान्द्रकुतूहलानां निबिडकौतुकानां तासामङ्गनानां मुखैर्व्याप्तान्तराः परिपूर्णमध्या गवाक्षाः सहस्रपत्राभरणा इव कमलालंकृता इवासन् बभूवुः। मुखानां पद्मनिभत्वात्। तदेव साम्यमाह। आसवगन्धो मद्यपानसौरभ्यं गर्भे गर्भो वा येषां तैः। विलोलानि नेत्राण्येव भ्रमरा येषां तैः। 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः॥ ६२॥

---

१. अर्धाञ्चिता.

२. ६१-६२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

स्तनंधयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती।
सम्प्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम्॥

टिप्पणी—अत्र गवाक्षेषु सहस्रपत्राभरणत्वोत्प्रेक्षणादुत्प्रेक्षा ॥ ६२ ॥

**तावत्पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।**
**प्रासादशृङ्गाणि दिवापि कुर्वञ्ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥**

मल्लि०—तावदिति । तावत्तस्मिन्नवसर इन्दुमौलिरीश्वरो दिवापि प्रासादशृङ्गाणि ज्योत्स्नाया अभिषेकेन स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु' । इति वैजयन्ती । कुर्वन्पताकाभिराकुलं व्याकीर्णमुत्तोरणमुच्छ्रततोरणं राजपथं प्रपेदे ।६३।

चा०—तावदिति । तावदिन्दुमौलिरीश उत्तोरणं तोरणसहितं पताकाकुलं ध्वजाकुलितं राजपथं राजमार्गं प्रपेदे प्राप्तः । किं कुर्वन् । दिवापि दिनेपि प्रासादशृङ्गाणि धवलगृहाग्राणि ज्योत्स्नायाश्चन्द्रातपस्याभिषेकेण स्नपनेन द्विगुणा छविर्येषां तानि संपादयन् ॥ ६३ ॥

**तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।**
**तथाहि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥**

मल्लि०—तमिति । एक एव दृश्यो दर्शनीयस्तमेकदृश्यं तमीश्वरं नयनैः पिबन्त्यः । अतितृष्णया पश्यन्त्य इत्यर्थः । 'ताः शंकरं दृष्टिभिरापिबन्त्यः' इति वा पाठः । नार्यो विषयान्तराणि ततोऽन्यान्विषयान् । शब्दादीनित्यर्थः । न जग्मुः । न विदुरित्यर्थः । तथाहि । आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः सर्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः।

चा०—तमिति । एकदृश्यं दर्शनीयतमं तमीशं नयनैः पिबन्त्यः सादरमवलोकयन्त्यो नार्यो विषयान्तराणि शब्दादीनि न जग्मुर्नाचेतयन् । तद्गतमनस्कत्वान्न शृण्वन्ति न स्पर्शमनुभवन्ति न जिघ्रन्ति । अतश्चोत्प्रेक्ष्यते । हि निश्चितं तदा तस्मिन्काले आसां नारीणां शेषेन्द्रियवृत्तिः शेषाणां श्रवणादिनामिन्द्रियाणां वृत्तिराकर्णनादिको व्यापारः सर्वात्मना सामस्त्येन चक्षुरिव प्रविष्टा नेत्रयोरेव कृता । जग्मुरिति गमेर्लिट् । एकश्चासौ दृश्यश्च एकदृश्यः सर्वरम्यः ॥ ६४ ॥

टिप्पणी—आसामिन्द्रियवृत्तिः सर्वात्मना चक्षुः प्रविष्टेवेत्यर्थे इन्द्रियवृत्तेश्चक्षुः प्रविष्टत्वोत्प्रेक्षणादुत्प्रेक्षा ॥ ६४ ॥

**अथ पौराङ्गनावचनान्याह—**

**स्थाने तपो दुश्चरमेतदर्थमपर्णया [1]पेलवयापि तप्तम् ।**
**या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ६५**

---

१. कोमलया.

मल्लि०—स्थान इति। पेलवया कोमलयाप्यपर्णया पार्वत्या तस्मै शिवायैतदर्थम्। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च' इति विशेष्य-निघ्नत्वम्। दुश्चरं तपस्तप्तं स्थाने युक्तम्। कुतः? या नार्यस्येश्वरस्य दास्यं दासीत्वमपि लभेत, सा कृतार्था स्यात्। या अङ्क एव शय्या तामङ्कशय्यां लभेत सा किमुत। कृतार्थेति किमु वक्तव्यमित्यर्थः? ॥ ६५ ॥

चा०—स्थान इति। अमुमारभ्य पञ्चभिः कुलकम्। अपर्णया पार्वत्या पेलव-यापि सुकुमारया दुष्करं यत्तपस्तप्तं तत्स्थाने युक्तं। यतो या नारी अस्य शंभो-र्दास्यमपि प्रेष्यत्वमपि लभते प्राप्नुयात्। सापि कृतार्था कृतकृत्या स्यात्। अङ्कशय्यां उत्सङ्गावस्थानं या लभेत सा किमुत ॥ ६५ ॥

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां [1]विफलोऽभविष्यत् ॥ ६६ ॥

मल्लि०—परस्परेणेति। स्पृहणीयशोभं सर्वैराशास्यमानसौन्दर्यमिदं द्वन्द्वं मिथुनम्। 'द्वन्द्वं रहस्ये—'ति निपातः। परस्परेण नायोजयिष्य-द्यदि प्रजानां पत्युर्विधातुरस्मिन्द्वये द्वन्द्वे रूपविधाने सौन्दर्यनिर्माणे यत्नः प्रयासो विफलोऽभविष्यद्भवेत्। एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः। 'लिङ्निमित्ते लृङ्क्रियातिपत्तौ' इति लृङ् ॥ ६६ ॥

चा०—परस्परेणेति। चेद्यदि इदं द्वन्द्वं परस्परेणान्योन्यस्पृहणीयशोभं अभि-लषणीयकान्ति नायोजयिष्यन्न संघट्टयेत्। तदस्मिन्मिथुने प्रजानां पत्युर्ब्रह्मणो रूप-विधानयत्नः शोभातिशयनिर्मितप्रयासो वितथो निष्फलोऽभविष्यत्। क्रियातिपत्तेर-भावाल्लृङ्प्रयोगो दुःसाध्यः ॥ ६६

न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य।
व्रीडादमुं देवमुदीक्ष्य[2] मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥

मल्लि०—नेति। आरूढरुषा प्ररूढकोपेनानेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनं किन्तु कामोऽमुं देवमुदीक्ष्य दृष्ट्वा व्रीडा-त्सौन्दर्येण जितोऽस्मीति लज्जया स्वयमेव संन्यस्तदेहस्त्यक्तदेह इति मन्ये इत्युत्प्रेक्षा। न स्वयं न्यस्ताकृतेः कोपः संभवतीति भावः ॥ ६७ ॥

चा०—न नूनमिति। आरूढरुषा क्रुद्धेन हरेण कुसुमायुधस्यानङ्गस्य नूनं निश्चितं शरीरं न भस्मीकृतं। अपि तु अमुं देवमुदीक्ष्यालोक्य व्रीडाल्लज्जातः स्वयमेव कामः संन्यस्तदेहस्त्यक्तकायो जातः। इत्यहं मन्ये। व्रीडाशब्दः स्त्रीपुंसयोः ॥ ६७ ॥

---

१. वितथः. २. अवेक्ष्य.

काचित्कांचिदाह—

अनेन संबन्धमुपेत्य[1] दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि! [2]क्षितिधारणोच्चमुच्चैस्तरं[3] वक्ष्यति शैलराजः ॥ ६८ ॥

मल्लि०—अनेनेति । हे आलि सखि ! 'आलिः सखी वयस्या च' इत्यमरः । शैलराजो हिमवान् । दिष्ट्येत्यानन्देऽव्ययम् । मनोरथैः प्रार्थितमवरुद्धम् । अभिलाषविषयीकृतमित्यर्थः । 'प्रार्थना याच्ञावरोधयोः' इत्यभिधानात् । अनेनेश्वरेण संबन्धमुपेत्यावाप्य क्षितिधारणेनोच्चमुन्नतं मूर्धानमुच्चैस्तरमुन्नततरम् । उच्चैरित्यव्ययात्तरप्प्रत्ययः । मूर्ध्नो द्रव्यत्वान्नामुप्रत्ययान्तो निपातः । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यादिनाऽद्रव्यप्रकर्षे तस्य विधानादिति । वक्ष्यति धारयिष्यति । वहतेर्लृट् ॥ ६८ ॥

चा०—अनेनेति । अत्र काचन सखी सखीमाह । हे सखि ! मनोरथप्रार्थितं मनोरथाभिलषितमनेनेश्वरेण सह संबन्धं जामातृलक्षणं दिष्ट्यावाप्य शैलराजो हिमवान् क्षितिपालनोच्चं पृथ्वीरक्षणेनोन्नतमपि मूर्धानमुच्चैस्तरामुन्नतं वक्ष्यति धारयिष्यति ॥ ६८ ॥

इत्योषधिप्रस्थविलासिनीनां शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं[4] हिमालयस्यालयमाससाद ॥ ६९ ॥

मल्लि०—इतीति । त्रिनेत्रस्त्र्यम्बकः । त्रिनेत्रत्रिनयनशब्दयोः 'क्षुभ्नादिषु च' इति णत्वाभावः । इतीत्थमोषधिप्रस्थविलासिनीनां संबन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथा आलापाञ्छृण्वन्केयूरैरङ्गदैश्चूर्णीकृता लाजानां मुष्टयो यस्मिंस्तं तथोक्तम् । तत्रावकीर्णा आचारलाजा अन्तराल एवाङ्गदैश्चूर्णंपेषं पिष्यन्त इति पुरन्ध्रिजनसंबन्धातिशयोक्तिः । हिमालयस्य हिमवत आलयं भवनमाससाद ॥ ६९ ॥

चा०—इतीति । त्रिनेत्रो हर इति ओषधिप्रस्थविलासिनीनां हिमाचलनगरनायिकानां श्रोत्रसुखाः कर्णसख्यकारिणीः कथाः शृण्वन् हिमालयस्य श्वशुरस्यालयं समाससाद प्राप । कीदृशः । केयूरैर्बाह्याभरणैरन्योन्यसंघट्टवशाच्चूर्णीकृताः पिष्टा लाजमुष्टयो यस्य सः । प्रवेशकाले कौतुकलाजमोक्षो नारीभिः क्रियते ॥ ६९ ॥

[5]तत्रावतीर्याच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्षणः ।
क्रान्तानि पूर्वं कमलासनेन [6]कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

मल्लि०—तत्रेति । तत्र हिमवदालयेऽच्युतेन विष्णुना दत्तहस्तो वितीर्णहस्तावलम्बः सन् । शरद्घनाच्छरन्मेघात् । शरद्विशेषणान्मेघस्य

१. अवाप्य. २. क्षितिपालनोच्चम्. ३. उच्चैस्तराम्. ४. वृष्टिः, मुष्टिः.
५. ततः. ६. कक्षान्तराणि.

शुभ्रत्वं गम्यते। दीधितिमान्सूर्य इवोक्षणो वृषादवतीर्य कमलासनेन पूर्वमग्रे क्रान्तानि प्रविष्टान्यद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश। 'कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहे प्रकोष्ठके'। इति यादवः॥ ७०॥

चा०—तत इति। पञ्चभिः कुलकं। ततोऽनन्तरं शिव उक्षणो वृषभादवतीर्य कमलासनेन ब्रह्मणा पूर्वं क्रान्तानि अद्रिपतेः कक्षान्तराणि विवेश। कीदृशः। अच्युतदत्तहस्तः कृष्णसमर्पितकरः। कस्मात्क इव। शरद्धनाच्छारदमेघाद्दीधितिमानिव सूर्य इव यथा शारदमेघात्सूर्योऽवतरति॥ ७०॥

टिप्पणी—अत्रोपमा॥ ७०॥

तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च।
गणाश्च गिर्यालयमभ्यगच्छ[1]न्प्रशस्तमारम्भमिवोत्तमार्थाः॥ ७१॥

मल्लि०—तमिति। तमीश्वरमन्वगनुपदम्। अव्ययमेतत्। 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्'। इत्यमरः। इन्द्रप्रमुखा देवाश्च सप्तर्षयः पूर्वे येषां ते सप्तर्षिपूर्वाः। 'न बहुव्रीहौ' इति सर्वनामसंज्ञाप्रतिषेधः। परमर्षयः सनकादिमहर्षयश्च। 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः। गणाः प्रमथाश्चोत्तमार्था महाप्रयोजनाः आचाराः प्रशस्तं प्रकृष्टम्। अमोघमित्यर्थः। आरभ्यत इत्यारम्भ उपायस्तमिव गिर्यालयं हिमवन्मन्दिरमभ्यगच्छन्। प्राविशन्नित्यर्थः॥ ७१॥

चा०—तमन्विति। इन्द्रप्रमुखा देवाः सप्तर्षिपूर्वाः परमर्षयश्च देवमुनयो गणाश्च नन्दिप्रभृतयस्ते गिर्यालयं हिमालयगृहमन्वगच्छन् प्राविशन्। के कमिव। उत्तमार्थाः श्रेष्ठवस्तूनि प्रशस्तमारम्भमिव। अन्वगिति पश्चादर्थः॥ ७२॥

टिप्पणी—...अत्रोत्तमार्थदेवर्षिगणानामारम्भगिर्यालययोश्चोपमानोपमेयभावाद्वुपमाः॥ ७१

तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम्।
नवे दुकूले च नगोपनीतं[2] प्रत्यग्रहीत्सर्वममन्त्रवर्जम्[3]॥ ७२॥

मल्लि०—तत्रेति। तत्र हिमवदालय ईश्वरो विष्टरभागासनगतः। उपविष्ट इत्यर्थः। यथावद्यथार्हम्। विधिवदित्यर्थः। सरत्नं रत्नसहितमर्घ्यमर्घार्थं जलम्। मधु क्षौद्रमस्मिन्नस्तीति मधुमत्। गवि भवं गव्यं दधि च। मधुपर्कमित्यर्थः। 'दधिमधुनी सर्पिर्वा मध्वलाभे' इत्याश्वलायनगृह्यसूत्रात्। नवे दुकूले चेति सर्वं नगोपनीतं हिमवदानीतमर्घ्यादिकं मन्त्रान्वर्जयित्वा मन्त्रवर्जम्। ततो नञ्समासः। अमन्त्रवर्जम्। मन्त्रान्न वर्जयि-

१. अन्वगच्छन्. २. नगोपनीते. ३. बन्ध्यम्.

स्वेत्यर्थः । 'द्वितीयायां च' इति णमुल्प्रत्यय इत्याह न्यासकारः 'अनुदात्तं पदमेकवर्जम्' इत्यत्र । प्रत्यग्रहीत्स्वीकृतवान् ॥ ७२ ॥

चा०—तत्रेति । तत्र हिमवद्गृहे विष्टरभागासनस्थ ईश्वरः सरत्नमर्घ्यमर्घोदकं मधुमन्माक्षिकान्वितं गव्यं च नगोपनीते हिमालयदत्ते नवे नूतने दुकूले च पट्टवस्त्रे प्रत्यग्रहीाददे । कीदृशं । सर्वममन्त्रवन्ध्यं मन्त्रेण वन्ध्यं ततो नञ्समासः । यथावद्विधिवत् ॥ ७२ ॥

दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः[1] ।
[2]वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥

मल्लि०—दुकूलेति । अथ दुकूलं वसान इत्यर्थः । स हरो विनीतैरनुद्धतैरवरोधेषु ये दक्षास्तैरवरोधदक्षैर्वधूसमीपं निन्ये नीतः । कथमिव । स्फुटा फेनानां राजिर्यस्य स उदकमस्यास्तीत्युदन्वान्समुद्रः । 'उदन्वानुदधौ च' इति निपातनात्साधुः । नवैरचिरोदितैश्चन्द्रपादैश्चन्द्रकिरणैर्वेलासमीपमिव ॥ ७३ ॥

चा०—दुकूलेति । दुकूलवासाः सितपट्टवस्त्रो हरः सविनीतैः सविनयैरवरोधरक्षैः सौविदल्लैर्वधूसमीपं निन्ये नीतः । तया चन्द्रपादैर्हिमकरकिरणैः स्फुटफेनराजिः प्रकटपङ्क्तिरुदन्वान् समुद्रो वेलासकाशं नीयते तदुदये तस्योल्लासात् । हरस्याब्धेरुपमा गौर्या वेलायाः अन्तःपुररक्षकाणां चन्द्रकिरणाः, पट्टवस्त्रस्य फेन पुञ्जयः निन्य इति कर्मणि ॥ ७३ ॥

टिप्पणी—यथा—चन्द्रकिरणैरुदन्वान् वेलासमीपमानीतो भवति तथा स हरोऽवरोधदक्षैर्वधूसमीपमानिन्य इत्यर्थः । अत्र चन्द्रपादाऽवरोधदक्षयोरुदन्वद्धरयोर्वेलासमीपवधूसमीपयोश्चोपमानोपमेयभावात्पूर्णोपमा ॥ ७३ ॥

तया [3]प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ७४ ॥

मल्लि०—तयेति । आननं चन्द्र इव इत्युपमितसमासः । प्रवृद्धाननचन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया तया कुमार्या शरदा लोक इव संसृज्यमानः । संगच्छमानः शिवश्चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य स तथोक्तः । चेतः सलिलमिव तत्प्रसन्नं यस्य स तथोक्तः । प्रसन्नचेतःसलिलोऽभूत् । शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥ ७४ ॥

चा०—तयेति । विवृद्धाननचन्द्रकान्त्या स्फीतमुखहिमकररुचा तया कुमार्या संसृज्यमानः शिवः प्रफुल्लचक्षुः कुमुदः प्रफुल्लानि चक्षूंष्येव कुमुदानि यस्य सः । तथा प्रसन्नचेतः सलिलः प्रसन्नं निर्मलीकृतं चेत एव सलिलं यस्य सः । एवंविधो-

---

१. पक्षैः. २. सकाशम् ३. विवृद्ध.

भूत् । यथा शरदा शरत्कालेन संमृज्यमानो लोकः प्रसन्नकुमुदो निर्मलसलिलश्च भवति शशी च कान्तिमानुत्पद्यते ॥ ७४ ॥

टिप्पणी—आनने चन्द्रत्वस्य चक्षुषि कुमुदत्वस्य चेतसि सलिलत्वस्य चारोपाद्रूपकत्रयम् । तुर्यपादे उपमा । अत्र यद्यपि आननादिषु चन्द्रादिसादृश्यमेवोपमितसमासेन प्रतीयते तथापि रूपकमेवात्र न्याय्यम् ॥ ७४ ॥

तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां [1]तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥

मल्लि०—तयोरिति । तयोर्वधूवरयोः समापत्तिषु यदृच्छया संगतिषु कातराणि चकितानि । 'अधीरे कातरः' इत्यमरः । द्रष्टुमसमर्थानीति भावः । किंचिदीषद् व्यवस्थापितानि स्थिरीकृतानि पश्चात्संहृतानि निर्वर्तितानि चेति व्यवस्थापितसंहृतानि । 'पूर्वकाले—'त्यादिना तत्पुरुषः । अन्योन्यस्मिल्लोलानि सतृष्णानि । 'लोलश्चलसतृष्णयोः' । इत्यमरः । विलोचनानि दृष्टयस्तत्क्षणं तस्मिन्क्षणे ह्रीयन्त्रणां ह्रिया निमित्तेन संकोचमन्वभूवन् ॥ ७५ ॥

चा०—तयोरिति । तत्क्षणं संयोगविषये तयोर्वरवध्वोर्विलोचनानि ह्रीयन्त्रणां लज्जामुकुलितमन्वभूवन्नानशिरे । कीदृशानि । समापत्तिषु अन्योन्यसंप्राप्तिषु कातराण्यधीराणि । तथा किञ्चिद्व्यवस्थापितानि द्रष्टुं प्रेरितान्यन्तराले लज्जातः प्रतिसंहृतानि निर्वर्तितानि अन्योन्यलोलानि परस्पराभिलाषाणि ॥ ७५ ॥

तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
[2]उमातनौ गूढतनोः स्मरस्य [3]तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६ ॥

मल्लि०—तस्या इति । अष्टमूर्तिः शिवः । तस्मादीश्वराच्छङ्कत इति तच्छङ्किनः । तद्भीतस्येत्यर्थः । अतएवोमातनावुमाशरीरे गूढतनोर्गुप्तशरीरस्य स्मरस्य पूर्वं प्ररोहमिव प्रथमाङ्कुरमिव स्थितं शैलगुरूपनीतं शैलगुरुणा हिमवतोपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसोपनीतं ताम्राङ्गुलि रक्ताङ्गुलि तस्याः पार्वत्याः करं जग्राह ॥ ७६ ॥

चा०—तस्या इति । शैलगुरूपनीतं हिमवतोपनीतं तस्या गौर्यास्ताम्राङ्गुलि लोहितकरशाखं पाणिमष्टमूर्तिरीशो जग्राह । आरक्तत्वादुत्प्रेक्ष्यते । उमात्मना गूढतनोर्गौरीरूपेण प्रच्छन्नवपुषः स्मरस्य तच्छङ्किनस्तस्मादीशाच्छङ्कितुं शीलमस्य स तच्छङ्की तस्य पूर्वं प्रथमं प्ररोहमिवाङ्कुरमिव । कामेन हि तत उत्पत्तव्यम् । उत्पित्सोः पूर्वमङ्कुरो भवति ॥ ७६ ॥

टिप्पणी—पार्वतीकरे स्मरस्य पूर्वप्ररोहत्वोत्प्रेक्षणादुत्प्रेक्षा ॥ ७६ ॥

---

१. आनशिरे मुहूर्तम्, आनशिरे मनोज्ञाम्. २. उमात्मना ३. तच्छङ्कितः.

रोमोद्गमः प्रादुरभूदुमायाः [1]स्विन्नाङ्गुलिः पुंगवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ ७७ ॥

मल्लि०—रोमोद्गम इति । उमाया रोमोद्गमो रोमाञ्चः प्रादुरभूत् । पुमान्गौः पुंगवो वृषभः । 'गोरतद्धितलुकि' इति टच् । स केतुश्चिह्नं यस्य स पुंगवकेतुः शिवः स्विन्नाङ्गुलिरासीत् । अत्रोत्प्रेक्षते—पाणिसमागमेन पाण्योः संस्पर्शेन कर्त्रा । तयोर्वधूवरयोर्मनोभवस्य वृत्तिरवस्थितिः समं विभक्तेव । समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्य दर्शनात्पाणिसंस्पर्शकृतत्वमुत्प्रेक्षते । ननु कन्या तु प्रथमसंगमे स्विन्नकरचरणा भवति पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेन्नैष दोषः । एभिरनयोर्भावं परीक्षेतेति वाक्यशेष एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेनानियमावधारणात् । अतएव रघुवंशेऽन्यथाभिधानात्स्वोक्तिविरोध इत्यपास्तम् । तदेतद्रघुवंशसंजीविन्यां (७।२२) सुव्यक्तमवोचम् । सात्त्विकास्तु 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ।' इति ॥ ७७ ॥

चा०—रोम इति । कुमार्याः पार्वत्याः करस्पर्शवशाद्रोमोद्गमो रोमाञ्चः प्रादुरभूदुदपादि । पुङ्गवकेतुरीशः स्विन्नाङ्गुलिर्घर्मितकरशाख आसीत् । अत्रोत्प्रेक्ष्यते । पाणिसमागमेन करसंयोगेन मनोभवस्यानङ्गस्य वृत्तिस्तयोर्द्वयोः समं तुल्यं विभक्तेव विभागीकृतेव स्वेदरोमाञ्चादयः कामवृत्तयः । तद्वशात्तदुत्पत्तेः ॥ ७७ ॥

टिप्पणी—अत्र वधूवरयोर्विषये मनोभववृत्तेः समविभक्तत्वोत्प्रेक्षणादुत्प्रेक्षा ७७

प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ? ॥ ७८ ॥

मल्लि०—प्रयुक्तेति । यद्यस्मात्कारणात्प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तमन्यल्लौकिकम् । वधूश्च वरश्च वधूवरम् । समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकालेऽनयोरुमाशिवयोः सांनिध्ययोगात्संनिधिभावादग्र्यामुत्तमां कान्तिं शोभां पुष्यति पुष्णाति तस्योभयस्योमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते । यत्प्रसादादन्यस्य शोभालाभस्तस्य किमु वक्तव्येत्यर्थः । 'विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम्' इत्यागमः ॥ ७८ ॥

चा०—प्रयुक्तेति । अन्यदपि वधूवरं स्त्रीकुमारं प्रयुक्तपाणिग्रहणं प्रारब्धविवाहं यदनयोः पार्वतीश्वरयोः सान्निध्यान्नैकट्यादग्र्यामुत्कृष्टां कान्ति पुष्यति प्राप्नोति ।

---

१. चित्राङ्गुलिः.

तदानीं तस्योभयस्य श्रीः शोभा किं कथ्यताम् । कविभिः किमुच्यताम् । यदनुप्रवेशादन्यस्या विवाहे शोभा भवति । तत्र तयोः स्वयं कान्तिः स्वयमेव सर्वाश्रिता वधूवरमिति । सर्वो द्वन्द्वो विभाषैकवदित्येकवद्भावः ॥ ७८ ॥

प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे ।
मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

मल्लि०—प्रदक्षिणेति । तन्मिथुनमुदर्चिष उन्नतज्वालस्य कृशानोः कर्मणः प्रदक्षिणप्रक्रमणात्प्रदक्षिणीकरणाच्चकासे । किमिव । मेरोरुपान्तेषु परिसरेषु वर्तमानमावर्तमानम् । मेरुं प्रदक्षिणीकुर्वदित्यर्थः । अन्योन्येन संसक्तं संगतम् मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा चाहस्त्रियामं रात्रिदिवमिव । समाहारे द्वन्द्वैकवद्भावः ॥ ७९ ॥

चा०—प्रदक्षिणेति । तन्मिथुनं वरं उदर्चिष उद्गतज्वालस्य कृशानोर्वह्नेः प्रदक्षिणप्रक्रमणात्प्रदक्षिणं च प्रक्रमणं च तस्माच्चकासे शुशुभे । यथा मेरोः सुवर्णाचलस्योपान्तेषु निकटप्रदेशेषु वर्तमानं । अन्योन्यसंपृक्तं परस्परलग्नमहस्त्रियामं दिनरात्रं शोभते ७९ ॥

तौ दंपती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥ ८० ॥

मल्लि०—ताविति । स पुरस्तादेव हितं विधत्त इति पुरोधाः पुरोहितोऽन्योन्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दंपती कर्मभूतौ । जायाशब्दस्य दंभावो निपातितः । वह्निं त्रिस्त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच् । परिणीय परितो नीत्वा । प्रदक्षिणीकार्येत्यर्थः । नयतेर्द्विकर्मकाल्ल्यप् । समिद्धार्चिषि दीप्तज्वाले तस्मिन्वह्नौ वधूं लाजविसर्गं कारयामास । 'हृक्रोरन्यतरस्याम्' इति विकल्पादणिकर्तुः कर्मत्वम् ॥ ८० ॥

चा०—तौ दम्पतीति । स पुरोधा ब्रह्मा दम्पती वधूवरौ समिद्धार्चिषि समिद्धानि वृद्धीगतानि अर्चींषि ज्वाला यस्य तस्मिन्वह्नौ लाजमोक्षं लाजक्षेपं कारयामासाचीकरत् । किं कृत्वा । वह्निं त्रिस्त्रीन्वारान् परिणीय प्रदक्षिणीकृत्य । किं भूतौ । करादिसंस्पर्शनेन सुखानुभवान्निमीलितानि संकुचितानि अक्षिणी ययोः ॥ ८० ॥

सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

मल्लि०—सेति । सा वधूर्गुरोः पुरोधस उपदेशादिष्टः । घ्राणतर्पण इत्यर्थः । गन्धो यस्य तं लाजधूमाञ्जलिं वदनं निनाय । कपोलसंसर्पिणी-

शिखा यस्य स तथोक्तः स धूमस्तस्य गौर्या मुहूर्तकर्णोत्पलतां प्रपेदे। धूमस्य विसृमरत्वान्मुहूर्तग्रहणम् ॥ ८१ ॥

चा०—सेति। सा वधूर्गुरूपदेशाद्ब्रह्माज्ञया इष्टगन्धं सुसौरभ्यं लाजधूमाञ्जलिं वदनं निनायानैषीत्। सलाजधूमाञ्जलिस्तस्या मुहूर्तकर्णोत्पलतां क्षणं श्रोत्रनील-कमलतां प्रपेदे प्राप्तः। कीदृशः। कपोले ससर्पिणी प्रसरन्ती शिखा यस्य सः ।८१।

तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः।
वधूमुखं क्लान्तयवावतंसमाचारधूपग्रहणाद्बभूव ॥ ८२ ॥

मल्लि०—तदिति। तद्वधूमुखमाचारमधूपग्रहणादाचारप्राप्तधूमत्वा-दीषदार्द्रे स्विन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम्। अक्ष्णो-रुच्छ्वास्युद्गच्छनलाञ्जनस्य रागोऽञ्जनं यस्य तत्तथोक्तम्। क्लान्तो यवावतंसो यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं बभूव। 'लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्' इति प्रयोगवृत्तिकारः ॥ ८२ ॥

चा०—तदिति। तदा तद्वधूमुखं आचारधूमग्रहणात् घ्राणादेवंविधमभूत्। कीदृग् ईषन्मनागार्द्रं अरुणे गण्डलेखे यत्र तत्। अक्ष्णोश्चक्षुषोरुच्छ्वासी विकासी कज्जलरागो यत्र। तथा क्लान्ता ग्लाना यवावतंसा यवाङ्कुरा यत्र। धूमग्रहण-स्याचारत्व लोकानुष्ठानम् ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति [1]कर्मसाक्षी।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥ ८३ ॥

मल्लि०—वधूमिति। अथ वधूं द्विजः पुरोधाः प्राह। किमिति। हे वत्से, एष वह्निस्तव विवाहं प्रति। विवाहकर्मणीत्यर्थः। कर्मसाक्षी कर्मद्रष्टा। भर्त्रा शिवेन सह मुक्तविचारया निर्विचारया त्वया धर्मचर्या धर्माचरणं कार्या कर्तव्येति। अयं च प्राजापत्यविवाहो द्रष्टव्यः। यथा-हाश्वलायनः—'सह धर्मं चरेदिति प्राजापत्यः' इति ॥ ८३ ॥

चा०—वधूमिति। ततोऽनन्तरं द्विजो ब्रह्मा वधूं गौरीं प्राहावोचत्। हे वत्से पुत्रि! शिवेन भर्त्रा पत्या सह मुक्तविचारया त्वया निस्संन्देहं धर्मचर्या धर्माचरणं कार्या धर्मचर्या हि सतीव्रतं। तवात्र विवाहं प्रति विवाहे एष वह्निः पूर्वसाक्षी प्रथम-लग्नकः। तेन चलितुमस्मद्वचनाद्युज्यत इति ॥ ८३ ॥

आलोचनान्तं [2]श्रवणे वितत्य पीतं गुरोस्तद्वचनं भवान्या।
निदाघकालोल्बणतापयेव[3] माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥

मल्लि०—आलोचनान्तमिति। भवस्य पत्न्या भवान्या। 'इन्द्र-वरुणभवशर्वरुद्र—' इत्यादिना ङीष्। आनुगागमश्च। आलोचनान्तं

---

१. पूर्वसाक्षी. २. श्रवणौ. ३. तप्तयेव.

नेत्रान्तपर्यन्तम् । 'आङ मर्यादाभिविध्योः' इत्यव्ययीभावः । श्रवणे श्रोत्रे वितन्य विस्तार्य तत्पूर्वोक्तं गुरोर्याज्ञिकस्य वचनं 'सह धर्मं चर' इति वाक्यं निदाघकाले ग्रीष्मकाल उल्बणतापयोत्कटसंतापया पृथिव्या प्रथममाद्यं माहेन्द्रं पार्जन्यमम्भ इव पीतम् । अत्यादरेण शुश्रावेत्यर्थः ।८४।

चा०—आलोचनान्तमिति । भवान्या पार्वत्या आलोचनान्तं नेत्रपर्यन्तं श्रवणौ कर्णौ विस्तार्य गुरोर्ब्रह्मणस्तद्वचनं पीतमङ्गीकृतं । यथा निदाघकालोल्बणतापया ग्रीष्मसमयोत्कटतमया पृथिव्या प्रथमं माहेन्द्रं मेघजमम्भः पानीयं पीयते ।। ८४ ।।

**ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।**
**सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी[1] कथमप्युवाच ।। ८५ ।।**

मल्लि०—ध्रुवेणेति । प्रियं दर्शनं यस्य कर्मभूतस्य । तेन प्रियदर्शनेन ध्रुवेण शाश्वतेन भर्त्रा ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय । 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु' इत्यमरः । प्रयुज्यमाना दृश्यतामिति प्रेर्यमाणा ह्रीसन्नकण्ठी ह्रिया हीनस्वरा सा वधूः कथमप्याननमु न्नमय्य दृष्ट इत्युवाच ।। ८५ ।।

चा०—ध्रुवेणेति । ततो ध्रुवेण शाश्वतेन प्रियदर्शनेनाभीष्टावलोकनेन भर्त्रा हरेण ध्रुवदर्शनाय प्रयुज्जमाणा प्रेर्यमाना सा गौरी आननमुन्नमय्योत्क्षिप्य ह्रीसन्नकण्ठी लज्जाविस्पष्टगला दृष्टोसाविति कथमपि कृच्छ्रादुवाच ।। ८५ ।।

**इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।**
**प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ।। ८६ ।।**

मल्लि०—इत्थमिति । इत्थमनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । विधिज्ञेन विवाहप्रयोगज्ञेन । शास्त्रज्ञेनेत्यर्थः । पुरोहितेन हैमवतेन प्रयुक्तपाणिग्रहणोपचारौ कृतविवाहकर्माणौ प्रजानां पितरौ तावुमामहेश्वरौ पद्मासनस्थाय पद्मासनोपविष्टाय पितॄणां पित्रे 'पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च' इति विश्वः । 'पितृव्यमातुलमातामहपितामहाः' इति निपातनात्साधुः । प्रणेमतुर्नमश्चक्रतुः । पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ।। ८६ ।।

चा०—इत्थमिति । तौ भवानीश्वरौ पद्मासनस्थाय नलिनविष्टरस्थिताय पितामहाय ब्रह्मणे प्रणेमतुः । कीदृशौ । इत्थं पूर्वोक्तेन प्रकारेण विधिज्ञेन करग्रहणसमाचारविदा पुरोहितेन प्रयुक्तः पाणिग्रहणस्योपचारो ययोस्तौ । तथा प्रजानां पितरौ मातापितरौ माता च पिता च पितरौ "पिता मात्रा" इत्येकशेषः । पितामहायेति क्रियाग्रहणत्वात्संप्रदानत्वम् ।। ८६ ।।

---

१. कण्ठम्.

**वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि वीरप्रसवा भवेति ।**
**वाचस्पतिः [1]सन्नपि सोऽष्टमूर्तौ[2] त्वाशास्य चिन्तास्तिमिता बभूव ८७**

**मल्लि०**—वधूरिति । वधूः कन्या विधात्रा ब्रह्मणा । हे कल्याणि शोभने, वीरः प्रसवोऽपत्यं यस्याः सा वीरप्रसवा वीरप्रसूर्भवेति प्रतिनन्द्यते स्म । आशिषमुक्तवेत्यर्थः । स विधाता वाचस्पतिर्वागीश्वरोऽपि सन् । कस्कादिषु पाठात्साधुः । अष्टमूर्तौ शिवे त्वाशास्यमाकाङ्क्ष्यं तत्र चिन्ता विचारस्तस्यां स्तिमितो मन्दो बभूव । तस्य, निरीहस्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

**चा०**—वधूरिति । प्रणमितेन विधात्रा वेधसा वधूर्गौरी प्रतिनद्यते स्म हे कल्याणि भद्रे, वीरप्रसवा वीरपुत्रजननी भवेति वाचस्पतिः वागीशोऽपि सन्नपि सर्वेशा अष्टमूर्तौ शंभू आशास्यचिन्तास्तिमितोऽभिलषणीयचिन्तननिश्चलो बभूव । समस्त वस्तुपरिपूर्णत्वादाशासनीयस्याभावादिति भावः ॥ ८७ ॥

**क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकासनस्थौ ।**
**जायापती [3]लौकिकमेषणीयमार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥**

**मल्लि०**—क्लृप्तेति । तौ जायापती वधूवरौ पश्चान्नमस्कारानन्तरं क्लृप्ता रचिता उपचारा पुष्परचनादयो यस्यां तां चतुरस्रवेदीमेत्य प्राप्य कनकासनस्थौ सन्तौ लौकिकं लोके विदितम् । आचारप्राप्तमित्यर्थः । अतएवैषणीयमाशास्यम् । 'तथाहि लौकिकाचारं मनसापि न लङ्घयेत्' इति शास्त्रादवश्यकर्तव्यमित्यर्थः । इषेरिच्छार्थादनीयप्रत्ययः । आर्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

**चा०**—क्लृप्तेति । तौ जायापति वधूवरौ क्लृप्तोपचारां पूजासहितां चतुरस्रवेदीमेत्यागत्य आर्द्राक्षतारोपणं विधानमन्वभूताम् । कीदृशं । लौकिकमेषितव्यं लोकचारानुष्ठेयं । कीदृशौ । कनकासनस्थौ सुवर्णविष्टरस्थितौ एषितव्यमवश्य करणीयं । जाया च पतिश्च जायापती ॥ ८८ ॥

**[4]पत्रान्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम्[5] ।**
**तयोरुपर्यायतनालमण्डमायत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥**

**मल्लि०**—पत्रान्तेति । लक्ष्मीः श्रीदेवी पत्रान्तेषु दलप्रान्तेषु लग्नैर्जलबिन्दुजालैराकृष्टाहृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तमायतं दीर्घं नालमेव दण्डो यस्य तत्कमलमेवातपत्रं तत्तयोरुपर्याधत्त दधौ ॥ ८९ ॥

**चा०**—पत्रान्तेति । लक्ष्मीः कमला तयोरुपरि कमलातपत्रं कमलमेव छत्रमा-

---

१. उन्नत. २. मूर्तौत्वाशास्य. ३. एषितव्यम्. ४. वृन्दैः. ५. भक्तिशोभाम्.

यत्त दध्रे । कीदृशं । पत्रान्तलग्नैर्लम्बमानैर्जलबिन्दुवृन्दैः पानीयकणास्थानैराकृष्टा आनीता मुक्ताफलजालशोभा यस्य तत् । तयायतं विस्तीर्ण नालमेव दण्डो यस्य तत् । छत्रे हि दण्डमाक्तिकादिनि भवन्ति ॥ ८९ ॥

द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥

मल्लि०—द्विधेति । अथ सरस्वती वाग्देवी द्विधा संस्कृतप्राकृतरूपेण द्वैविध्येन प्रयुक्तेनोच्चारितेन वाङ्मयेन शब्दजालेन तन्मिथुनं नुनाव तुष्टाव । 'णु स्तुतौ' इति धातोर्लिट् । केन कमित्याह—संस्कारेति । संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन । संस्कृतेनेत्यर्थः । वरेण्यं वरणीयम् । श्लाघ्यमित्यर्थः । वृणोतेरौणादिक एण्यप्रत्ययः । वरं वोढारं शिवम् । सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन वाङ्मयेन प्राकृतभाषयेत्यर्थः । वधूं नुनावेत्येन संम्बन्धः ॥ ९० ॥

चा०—द्विधेति । सरस्वती तन्मिथुनं द्विधा द्विर्भेदेन वाङ्मयेन वचनप्रबन्धेन नुनाव । णु स्तुतौ । "परोक्षे लिट्" । अत्रैव विभागमाह । वरेण्यं श्रेष्ठं वरं संस्कारपूतेन संस्कृतेन सुखग्राह्यनिबन्धनेन सुखेनाक्लेशेन ग्राह्यं वोध्यं निबन्धनं रचना यस्य तेन । प्राकृतेनत्यर्थः । तद्धि सुबोधं युवतीस्तुतावुचितं । वाचो विकारो वाङ्मयं गद्यपद्यमिति ॥ ९० ॥

तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥

मल्लि०—ताविति । तौ दंपती संधिषु मुखादिनिर्वहणान्तेषु पञ्चसंधिषु । तदुक्तं दशरूपके—'मुखं प्रतिमुखं गर्भः सावमर्षोपसंहृतिः' इति । व्यञ्जितवृत्तिभेदं स्फुटीकृतकौशिक्यादिवृत्तिविशेषम् । रसानुगुण्येनेति शेषः । तदुक्तं भूपालेन—कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती । रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः । शृङ्गारादिषु भावज्ञै रसेष्विष्टा तु भारती ।' तथा । कौशिक्यारभटी चैव सात्वतीभारती तथा । चतस्रो वृत्तयो ज्ञेयास्तासु नाटयं प्रतिष्ठितम् ।' इति । रसान्तरेषु शृङ्गारादिरसभेदेषु । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । 'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः' इति । प्रतिबद्धरागं प्रतिनियमेन प्रवर्तितो वसन्तललितादिरागो यस्मिंस्तम् । यस्मिन् रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाह काहलः—'रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रणीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः । भयानके च बीभत्से शान्ते गेयो नपुंसके ।'

इति। ललिताङ्गहारं मधुराङ्गविक्षेपम्। 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः। आदौ भवमाद्यम्। रूपकान्तरप्रकृतिभूतमित्यर्थः। तदुक्तम्—'आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधः' इति। अप्सरसामुर्वश्यादीनाम्। प्रयुज्यत इतिप्रयोगो रूपकम्। नाटकमित्यर्थः। आद्यमिति विशेषणात्। तं मुहूर्तमपश्यतां दृष्टवन्तौ। 'पाघ्राध्मास्था'—इत्यादिना दृशेः पश्यादेशः॥ ९१॥

चा०—ताविति। तौ गौरीश्वरौ मुहूर्तं क्षणमप्सरसां देवाङ्गनां प्रयोगमाद्यं अभिनयं नृत्यमपश्यतामैक्षताम्। कीदृग्। सन्धिषु मुखगर्भविमर्शनिर्वहणाख्येषु व्यञ्जितः प्रकटीकृतो वृत्तीनां भारतीसात्वतीकौशिक्यारभटीनां भेदो विशेषो यत्र। तथा रसान्तरेषु शृङ्गारकरुणरौद्रवीरभयानकेषु ललितः सुकुमारोऽङ्गहारोऽङ्गविक्षेपो यत्र। कोमलोद्धतभेदेन द्विविधं नृत्तम्॥ ९१॥

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य।
शापावसाने [1]प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम्॥ ९२॥

मल्लि०—देवा इति। देवा इन्द्रादयस्तदन्ते तस्य प्रयोगदर्शनस्यान्तेऽवसान ऊढभार्यं परिणीतदारं हरं किरीटेषु बद्धा अञ्जलयो येषां ते तथोक्ताः सन्तः। निपत्य प्रणम्य शापावसाने प्रतिपन्नमूर्तेर्लब्धशरीरस्य। 'परिणेष्यति पार्वती यदा' (४।४२) इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः। पञ्चशरस्य कामस्य कर्तुः। सेवां ययाचिरे। पुनः समासादितशरीरस्य तस्य सेवां स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः। 'दुह्याच्पच्'—इत्यादिना द्विकर्मकत्वम्॥ ९२॥

चा०—देवा इति। तदन्ते नृत्यावसाने देवा भूमौ निपत्योढभार्यं कृतविवाहं हरं पञ्चशरस्यानङ्गस्य सेवां ययाचिरे प्रार्थयन्त। कीदृशाः। किरीटेऽवतंसे बद्धा लग्ना अञ्जलयो येषां ते। कीदृशस्यानङ्गस्य। शापावसाने अन्ते प्रतिलब्धमूर्तेः प्राप्तशरीरस्य। एवं ह्युक्तं। 'परिणेष्यति पार्वतीं यदा' इति॥ ९२॥

तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम्।
[2]कालप्रयुक्ता खलु [3]कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति॥ ९३॥

मल्लि०—तस्येति। विमन्युर्विगतक्रोधो भगवानीश्वर आत्मन्यपि तस्य कामस्य सायकानां व्यापारमनुमेने। तथाहि कार्यविद्भिः कार्यज्ञैः। अथवा कालविद्भिः अवसरज्ञैः। काले योग्यावसरे प्रयुक्तानुष्ठिता भर्तृषु स्वामिषु विषये विज्ञापना सिद्धिमेति खलु। सफला भवतीत्यर्थः। अयमेवास्य स्मरसेवास्वीकारो यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति।

१. प्रतिबद्ध. २. कालेप्रयुक्ता. ३. कालविद्भिः.

चा०—तस्येति। भवानीश्वरो विमन्युर्गतकोपः सन्नस्यानङ्गस्य सायकानां व्यापारमात्मन्यपि स्वशरीरेपि मेनेऽङ्गीचक्रे। यतः कालेऽवसरे कालविद्भिरवसरज्ञैः प्रयुक्ता विहिता विज्ञापना विज्ञप्तिः भर्तृषु स्वामिषु सिद्धिमेति। विहितकरग्रहणत्वात्सोऽवसरः॥ ९३॥

टिप्पणी—अत्रोत्तरार्द्धगतसामान्यार्थेन पूर्वार्द्धगतविशेषार्थस्य समर्थनादर्थान्तरन्यासः॥ ९३॥

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः[1] करेण।
कनककलशयुक्तं[2] भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात्॥ ९४॥

मल्लि०—अथेति। अथेन्दुमौलिरीश्वरस्तान्विबुधगणान्विसृज्य क्षितिधरपतिकन्यां पार्वतीं करेणाददानः कनककलशयुक्तं मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं भक्तयः पुष्पादिरचनास्तासां शोभया सनाथम्। सहितमित्यर्थः। क्षितिविरचितशय्यं क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिस्तत्तथोक्तं कौतुकागारमगाच्छय्यागृहं जगाम। अत्राश्वलायनः—'अत ऊर्ध्वमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्' इति। अत ऊर्ध्वं विवाहादूर्ध्वम्। आ त्रिरात्रादिति शेषः। 'त्रिरात्रं द्वादशरात्रं वा' इति वचनात्। तथा कामशास्त्रेऽपि 'अथ परिणयरात्रौ प्रक्रमेणैव किंचित्तिसृषु च रजनीषु स्तब्धभावा दुनोति। त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न चास्या हृदयमननुरुध्य स्वेच्छया कर्म कुर्यात्' इति।९४।

चा०—अथेति। अथानन्तरं तान् जलजासनादीन् विबुधगणान्देवसमूहान् विसृज्य प्रथ्येन्दुमौलिरीशः कौतुकागारं मङ्गलान्तपुरमागात्। कीदृशः। क्षितिधरपतिकन्यां गौरीं करेणाददानः गृह्णन्। कीदृशम्। कनककलशाः सुवर्णकुम्भा रक्षारत्नौषधिकृताः भक्तयो विच्छित्तयः पुष्पशङ्खचूर्णादिरचना आभिर्या शोभा रुचयस्ताभिः सनाथं युक्तम्। पुनः कीदृशम्। क्षितौ भुवि नतु पल्यङ्कादौ विरचिता शय्या यत्र तत्॥ ९४॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः।
अपि शयनसखीभ्यो दत्तवाचं कथंचि-
[3]त्प्रमथमुखविकारैर्हासयामास गूढम्॥ ९५॥

मल्लि०—नवेति। तत्र कौतुकागार ईश ईश्वरो नवपरिणयेन नवो-

1. आदधानः. 2. रक्षा 3. प्रथम.

द्वाहेन या लज्जा सा भूषणं यस्यास्तामत एव तेनेश्वरेण कृताक्षेपं कृताकर्षणम्। उन्नमितमिति यावत्। वदनमपहरन्तीं साचीकुर्वन्तीम्। अयं लज्जाभावः। अनुभावान्तरमाह—शयनसखीभ्योऽपि शयने सहशायिनीभ्योऽपीत्यर्थः। कथंचित्कृच्छ्रेण दत्तवाचं दत्तोत्तरां गौरीं प्रमथा भृङ्गिरिटिप्रभृतयो हास्यरसाधिदेवताः पशुपतेः पारिषदाः। यथाह भरतः—'शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः' इति। 'प्रमथाः स्युः पारिषदाः' इत्यमरः। तेषां मुखविकारैर्मुखविकृतचेष्टितैर्गूढप्रकाशं हासयामास। हास्याद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्यर्थः। यथाह गोनर्दः—'हासेन मधुना नम्रवचसा लज्जितां प्रियाम्। विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः।' इति।९५।

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्य उमापरिणयोनाम
सप्तमः सर्गः।

•

चा०—नवेति। तत्र कौतुकागारे ईशो गौरीं प्रथममुखविकारैः प्रथमं ये मुखविकारास्तैर्गूढमप्रकटं ह्लासयामास हासयतिस्म। कीदृशीं। नवपरिणयलज्जाभूषणां नवो नूतनो यः परिणयः करग्रहणं तेन या लज्जा सैव भूषणं यस्या सा तां। तथा तत्कृतोत्क्षेपं तेनेशेन कृत उत्क्षेप उन्नमनं यस्य तद्वदनमपहरन्तीमन्यतो विदधतीं। पुनः कीदृशीम्। शयनसखीभ्योपि सहशायिन्यो या सख्यस्ताभ्योपि कथंचिन्महता कष्टेन दत्तवाचं प्रत्युत्तरीकृतगिरं। मालिनीवृत्तं। तल्लक्षणं यथा—ननमयययुतेयं मालिनी भोगिलोकैः॥ ९५॥

इति श्रीमालान्वयसाधु श्रीशालिगनन्दनसाधु श्रीअरडकमल्लसमभ्यर्थित
नरवेषसरस्वती वाचनाचार्यश्रीचारित्रवर्धनविरचितायां
कुमारतात्पर्यदीपिकायां शिशुहितैषिण्यां
सप्तमः सर्गः॥ ७॥

चारित्रवर्धनटीका समाप्ता।

•

## अष्टमः सर्गः

अथ शृङ्गारमुभयो......................।
कुमारसंभवफले सर्गेऽस्मिन्नाह संप्रति ॥

सोऽपि संक्षिप्तसंपन्नसंयुक्तश्च समृद्धिमान् ।
इति भेदाश्चतुर्धोक्ताश्चतुर्णां च वियोगिनाम् ॥

तत्रावस्थाप्रभेदेन शृङ्गारे नायिका त्रिधा ।
मुग्धा मध्या प्रगल्भा च ह्रीसाध्वसाविलाम् ॥

मुग्धावस्थां समाश्रित्य देव्या आद्यसमागमे ।
आदावेकादश श्लोकाः ख्यातपूर्वानुरागिणोः ॥

प्रथमं नाम शृङ्गारं शिवयोः कथितं कविः (?) ।
चुम्बनेष्वधरेत्यत्र लक्षणं त्वस्य वक्ष्यते ॥

नवपरिणीतगिरिजारहःकेलिमपि विवर्णयिषुस्तत्रभवान्कालिदासोऽष्टमं सर्गमारभते—

पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।
भावसाध्वसपरिग्रहादभूत्कामदोहद[1]मनोहरं वपुः ॥ १ ॥

मल्लि०—पाणीति । पाणिपीडनविधेरनन्तरं पाणिग्रहणानन्तरम् । विधेरिति पञ्चमी षष्ठी च । उभयथाप्यनुशासनसंभवादित्युक्तं प्राक् । शैलराजदुहितुः पार्वत्याः कर्त्र्याः तं हरं प्रति भावसाध्वसपरिग्रहन्मनोहरं चित्ताकर्षकं कामदोहदम् । कामसंवर्धकमित्यर्थः । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्' इति शब्दार्णवे । तच्च तत्सुखं कामदोहदसुखमभूत् । हरस्येति शेषः । नायिकानायकयोरन्योन्यानुभवदर्शनात्सुखमाविर्भवति । तच्च मदनोद्दीपकमिति रसविदां स्थितिः। तथा च हरस्य गौर्या नवोढाया स्वगोचरभावप्रयुक्तसाध्वसदर्शनात्सुखमाविर्भवति । तच्च मदनाकारं प्रादुर्बभूवेत्यर्थः । तत्र रसभावस्थायिनः कार्यमनुभावः । तदुक्तम्—'रसा गच्छन्ति संस्थानं यत्कार्यमुपलक्ष्यते । सोऽनुभावः.......संस्थासूचकः ।' इति ॥ १ ॥

---

१. सुखं मनोहरम्.

शिरसा शकलं शशाङ्कमूर्तेर्भसितं बिभ्रतमङ्गकेन भूरि।
गरलं च गलेन चिन्तयामो हरमर्धाङ्गहराद्रिराजकन्यम् ॥

टीका सप्तसु मल्लिनाथकृतिना संजीविनीसंज्ञिका
या सर्गेषु कुमारसम्भवमहाकाव्यस्य चक्रे पुरा।
सैवैतर्ह्यवशिष्टदिक्प्रमिततत्सर्गेषु विद्वन्मुदे
सीतारामकवीश्वरेण हि यथाप्रज्ञं सामापूर्यत ॥

नवपरिणीतगिरिजारहःकेलिमपि विवर्णयिषुस्तत्रभवान्कालिदासोऽष्टमं सर्गमारभते—

सी०—पाणिपीडनविधेरिति। पाणिपीडनं नाम षोडशविधेषु संस्कारेषु कश्चित्संस्कारविशेषः। पीडयति यस्मिन्निति पीडनम्। 'करणाधिकरणयोश्च' इति ल्युट्। पाणेः करतलस्य पीडनं ग्रहणम्। विवाह इत्यर्थः। पाणेरिति कृद्योगलक्षणा कर्मणि षष्ठी। तस्य विधेर्विधानात्। 'विधिर्विधाने दैवे च' इत्यमरः। अनन्तरं पश्चात्। भावासाध्वसयोः कामेच्छातिभययोः परिग्रहात्। परिग्रहं ग्रहणं कृत्वेत्यर्थः। ल्यब्लोपे पञ्चमी। मुग्धात्वादुभे अप्यवलम्ब्येति भावः। 'भावः स्वभावेऽभिप्राये चेच्छासत्तात्मजन्मसु' इति विश्वः। स्थिताया इति शेषः। इयं च मुग्धाभेदो नवोढा। तदुक्तं भानुमिश्रैः—'लज्जाभयपराधीनरतिर्नवोढा' इति। शैलराजस्य हिमालयस्य दुहितुः कन्यायाः पार्वत्याः नपुरङ्गम्। हरं शिवं प्रति। लक्षयित्वेत्यर्थः 'लक्षणेत्थं—' इति प्रतेः कर्मप्रवचनीयसंज्ञा। तद्योगे 'कर्मप्रवचनीययुक्ते' इति द्वितीया। कामे यद्दोहदमभिलाषः। इच्छेति यावत्। 'अथ दोहदम्। इच्छा काङ्क्षा' इत्यमरः। कामविषयकोऽभिलाष इत्यर्थः। तेन निमित्तेन मनोहरं रुचिकरमभूत्। अतिमनोहराण्यपि कामिनीवपूंषि स्वकामेच्छयैव रोचकानि भवन्तीति भावः। सर्गेऽस्मिन्रथोद्धतावृत्तम्—'रान्नराविह रथोद्धता लगौ' इति लक्षणात्। रसश्च प्रायः संभोगश्रृङ्गार एव ॥ १ ॥

उक्तं भावसाध्वसम्। तस्य सुखमयत्वं च वर्णयति—

**व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका।**
**सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः ॥ २ ॥**

मल्लि०—व्याहृतेति। सा पार्वती व्याहृता यत्किंचिदभिहिता सती प्रतिवचः प्रत्युत्तरं न संदधे। न ददावित्यर्थः। अवलम्बितांशुका गृहीतवस्त्रा सती गन्तुमपसर्तुमैच्छदिच्छति स्म। इषधातोर्लङ्। 'इषुगमियमां छः' इति छकारः। पराङ्मुखी सती शयनं सेवते स्म। अनभिमुखमशयिष्टेत्यर्थः। तथापि इत्थं साध्वसात्प्रतिकूलचेष्टितापीत्यर्थः। पिनाकिनः शिवस्य रतये सुखाय। बभूवेतिशेषः प्रातिकूल्यमपि तस्यानन्दकरमभूदि-

स्यर्थः । एतेन नवोढाया देव्या मौग्ध्याद्विजितं तन्ममत्वमवसेयम् ॥ २ ॥

इदानीं लक्षणरीत्या नवोढात्वमेव दशभिः प्रपञ्चयति—

सी०—व्याहृतेत्यादि । सा पार्वती व्याहृता प्रियेण पृष्टा सती प्रतिवचः प्रत्युत्तरं न संदध न दत्तवतीत्यर्थः । तथावलम्बितं करेण धृतमंशुकं वस्त्रं यस्यास्तथोक्ता सती गन्तुमैच्छत् । तथा पराङ्मुखी परिवर्तितवदना सती शयनं पर्यङ्कंसेवते स्म सिषेवे । तथापि तस्यां प्रतिकूलवर्तिन्यामपि सत्यां पिनाकिनो हरस्य रतये प्रमोदाय बभूव । प्रियायाः प्रतिकूलव्यापारैरपि प्रियः प्रसन्न एवाभूदित्यर्थः । तस्य मुग्धास्वभावबोधकुशलत्वादिति भावः ॥ २ ॥

**कैतवेन [1]शयिते कुतूहलात्पार्वती प्रतिमुखं निपातितम् ।**
**चक्षुरुन्मिषति सस्मितं प्रिये [2]विद्युदाहतमिव न्यमीलयत् ॥ ३ ॥**

मल्लि०—कैतवेनेति । प्रिये भर्तरि कुतूहलात् । एषा किं करिष्यतीति बुभुत्सयेत्यर्थः । कैतवेन कपटेन शयिते सुप्ते सति पार्वती कर्त्री प्रतिमुखं यथा निपातितम् । प्रियस्वापपरीक्षार्थं तदभिमुखं प्रवर्तितमित्यर्थः । चक्षुः स्वदृष्टि सस्मितमुन्मिषति । पुनः प्रिये सहासं पश्यतीत्यर्थः । विद्युदाहतं विद्युता प्रतिहतमिव न्यमीलयत् । साध्वसादिति भावः । एतेन किंचित्साध्वसस्यापचयो व्यज्यते ॥ ३ ॥

सी०—कैतवेनेति । पार्वती कर्त्री । प्रिये हरे कुतूहलात्कैतवेन मिथ्यैव शयिते सुप्ते सति । किमियं कुर्यादित्यभिप्रायेणेति भावः । मुखं प्रयोमुखं प्रति लक्ष्यीकृत्य निपातितं निक्षिप्तम् । किमयं स्वपिति जागर्ति वेत्यभिप्रायादिति भावः । चक्षुः स्वनेत्रं कर्म । अथ च प्रिय इत्याकाङ्क्षावशात्पुनरपि सम्बध्यते । सस्मितं समन्दहासं यथा स्यात्तथोन्मिषत्युज्जाग्रति सति विद्युताहतमिव प्रतिहतमिवेत्युत्प्रेक्षा । न्यमीलयत् । मुद्रयति स्मेत्यर्थः ॥ ३ ॥

**नाभिदेशनिहितः [3]सकम्पया शंकरस्य रुरुधे तया करः ।**
**[4]तद्दुकूलमथ चाभवत्स्वयं दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥**

मल्लि०—नाभीति । नाभिदेशनिहितः । नीवीमोचनायेति शेषः । शंकरस्य करः सकम्पया वेपथुमत्या । प्रियकरस्पर्शादुत्पन्नसात्त्विकभावयेत्यर्थः । तया पार्वत्या रुरुधे निवारितः । अथ च । तथापीत्यर्थः । तद्दुकूलं स्वयं स्वत एव दूरमत्यन्तमुच्छ्वसितं स्रस्तं नीवीबन्धनं नीवीग्रन्थिर्यस्य तत्तथाभूतमभवत् । रतिपारवश्यादिति भावः ॥ ४ ॥

---

१. शयने. २. विद्युतेव निहतम्. ३. सशङ्कया.
४. तन्नितम्बमभवत्तदा, तन्नितम्बमथ चाभवत्.

सी०—नाभिदेश इति। नाभिदेशे निहितः स्थापितः। नीविमोचनार्थमिति भावः। शंकरस्य करस्तया पार्वत्या सकम्पया सत्या रुरुधे प्रतिरुद्धः। कर्मणि लिट्। अथ च तद्दुकूलं तस्या दुकूलं वस्त्रं कर्तृ। स्वयमात्मना। न तु प्रेरक-नियोगात् दूरमतिशयितमुच्छ्वसितमुद्घाटितं नीव्या बन्धनं यस्य तथोक्तमभवत्। सात्त्विकभावादिति भावः॥ ४॥

एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये॥ ५॥

मल्लि०—एवमिति। हे आलि सखि पार्वति! रहसि शंकर एवम्। स्वोपदिष्टप्रकारेणेत्यर्थः। निगृहीतसाध्वसं निरस्तभयं यथा तथा सेव्यतामिति। सखीभिरुपदिष्टमुक्तं वचनं सा पार्वती प्रिये शंकरे प्रमुखवर्तिनि सत्याकुला साध्वसविह्वला सती नास्मरत्। न स्मृतवतीत्यर्थः। स हि भयपरिप्लुते चेतसि दृष्टतरोऽप्युपदेशः संसारमाधत्त इति भावः॥ ५॥

सी०—एवमिति। सा पार्वती कर्त्री। हे आलि हे सखि पार्वति, त्वया रहसि निगृहीतं त्यक्तं साध्वसं भयं यस्मिन्कर्मणि यथा तथा शङ्करः सेव्यतामित्येवंभूतं सखीभिः कर्त्रीभिः। 'नलोक—'इति षष्ठीनिषेधः, उपदिष्टमुपदेशम् भावे निष्ठा। प्रिये प्रमुखवर्तिनी सत्याकुला संभ्रान्ता सती नास्मरत्॥ ५॥

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम्।
वीक्षितेन [1]परिवीक्ष्य पार्वती मूर्धकम्पमयमुत्तरं ददौ॥ ६॥

मल्लि०—अपीति। कथाप्रवृत्तये संलापप्रवर्तनायावस्तुन्यप्रस्तुतार्थेऽपि प्रश्नतत्परम्। यत्किंचित्पृच्छन्तमित्यर्थः। अनङ्गशासनमीश्वरं पार्वती वीक्षितेन। न तु वाचेत्यर्थः। परिगृह्याङ्गीकृत्य मूर्धकम्पमयं शिरःकम्प-स्वरूपम्। स्वार्थे मयट्। उत्तरं ददौ। न तु वाङ्मयं साध्वसादिति भावः। विहृतनामा लज्जानुभाव उक्तः। तदुक्तम् रतिरहस्ये—(ईर्ष्यामानाति-लज्जाभ्यां न दत्तं योग्यमुत्तरम्। क्रियया व्यज्यते यत्र विहृतं तदुदी-रितम्।) इति॥ ६॥

सी०—अपिति। पार्वत्यनङ्गशासनं प्रियं कथायां सम्भाषणे प्रवृत्तये। लज्जा-वशान्मां प्रति मौनमाश्रिताया अस्याः सम्भाषणे कथमपि प्रवृत्त्यर्थमित्यर्थः। अव-स्तुन्यप्यलभ्यपदार्थेऽपि प्रश्नतत्परं परिवीक्ष्य ज्ञात्वा। हृच्चक्षुपावेक्षणमिहापेक्षितम्। वीक्षितेन प्रियसंमुखमवलोकनेन मूर्ध्नः कम्पस्तन्मयं तद्रूपम्। न हि किञ्चिन्मयापे-क्षितमित्यभिलाषव्यञ्जकमिति भावः। उत्तरं ददौ॥ ६॥

---

1. परिगृह्य.

पुनस्तमेवाह—

शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका।

तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत्॥ ७॥

मल्लि०—शूलिन इति। सा पार्वती रहसि हृतांशुका प्रियेणाकृष्टवस्त्रा सती करतलद्वयेन। स्वकीयेनेत्यर्थः। शूलिनो हरस्य नयने नेत्रद्वयं संनिरुध्य संच्छाद्य तस्य शूलिनो ललाटलोचने तृतीयेऽक्षिण पश्यति सति मोघयत्नाखिलप्रयासात एव विधुराभूत्। तृतीयकराभावादिति भावः। एते न किंचिद्धार्ष्ट्यादयो व्यज्यन्ते॥ ७॥

सी०—शूलिन इति। रहसि हृतांशुका। रतार्थमिति भावः। अतएव करतलयोर्द्वयेन शूलिनः प्रियस्य नयने। द्वे इति शेषः। संनिरुध्यावृत्य स्थिता सा पार्वती। तस्य ललाटलोचने तृतीये नेत्रे पश्यति सति। मोघो निष्फलो यत्नो यस्या अत एव विधुरा दुःखिता। ततो विशेषणसमासः। अभूत्॥ ७॥

चुम्बनेष्वधरदानवर्जितं [1]सन्नहस्तसदयोपगूहनम्।

क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम्॥ ८॥

मल्लि०—चुम्बनेष्विति। चुम्बनेष्वधरदानवर्जितमोष्ठार्पणरहितमदयोपगूहने निर्दयालिङ्गने सन्नौ स्तब्धौ हस्तौ करौ यस्मिंस्तत्तथोक्तम्। तथा दुर्लभप्रतिकृतम्। प्रगल्भत्वाभावान्नखदन्तताडनाद्यकृतप्रयत्नमित्यर्थः। अत एव क्लिष्टमन्मथं लज्जयोपरुद्धमदनमपि वध्वा नवोढाया रतं वधूरतं प्रभोरीश्वरस्य प्रियम्। अभूदिति शेषः। 'वधूः स्नुषानवोढास्त्रीभार्यासृक्ष्टाङ्गनासु च' इति विश्वः। अयं लज्जासाध्वसाभ्यां संकुचितोपचारत्वात्संक्लिष्टसंभोगः। तदुक्तं भूपालेन—(युवानौ यत्र संक्षिप्तसाध्वसव्रीडयादिभिः। उपचारान्निषेवन्ते स संक्लिष्ट इतीरितः।) इति॥ ८॥

सी०—चुम्बनेष्विति। चुम्बनेष्वधरदानेनाधरोष्ठखण्डनेन। 'दो अवखण्डे'। भावे ल्युट्। वर्जितं रहितमपि यथासन्नहस्तं मन्दप्रचारितकरम्। स्तनयोरिति शेषः। गम्यमानार्थत्वादप्रयोगः। 'पाणिः' इति पाठे भिन्नं पदम्। तदा खिन्नपाण्यपीति योजनीयम्। सदयमगाढं यदुपगूहनमालिङ्गनं तद्यस्मिंस्तादृशमपि। अत एव क्लिष्टः परितोषाभावात्खिन्नो मन्मथः कामो यस्मिंस्तथोक्तमपि। तथा दुर्लभं प्रतिकृतं प्रतिकारो यस्य। रसाभासभियेति भावः। प्रतिकृतमिति भावे निष्ठा। तथोक्तमपि वधूरतं प्रियासुरतं प्रभोः प्रियस्य प्रियं प्रतिजनकम्। 'इगुपध' इति कः अभूदिति शेषः॥ ८॥

यन्मुखग्रहणमक्षताधरं [2]दानमव्रणपदं [3]नखस्य यत्।

यद्रतं च सदयं [4]प्रियस्य तत्पार्वती विषहते स्म नेतरत्॥ ९॥

---

१. सन्नहस्तमदयोपगूहने. २. दत्तम्. ३. नखं च. ४. हरस्य.

मल्लि०—यदिति। पार्वती प्रियस्य संबन्ध्यक्षतोऽखण्डितोऽधरो यस्मिंस्तत्तथोक्तं यन्मुखग्रहणं मुखचुम्बनम्। अव्रणपदं लक्ष्मरहितम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। दत्तं यच्च नखं नखकर्म। यत्सदयं रतं तत्सर्वं विषहते सहते स्म। नेतरद्विपरीतम्। प्रचण्डमिति यावत्। तच्चुम्बनं नखं सुरतं वा न सहते स्म। नवोढात्वादिति हृदयम्। तदुक्तं रतिरहस्ये—( नात्यन्तमानुलोम्येन न चातिप्रतिलोमतः। सिद्धिं गच्छन्ति वा तस्मान्मध्येन साधयेदिति। नवोढाम् ) इति ॥ ९॥

सी०—यदिति। पार्वती प्रियस्य प्रियकर्तृकम्। कर्तृकर्मणोः—' इति कर्तरि षष्ठी। अक्षताधरमदष्टाधरोष्ठं यन्मुखस्य ग्रहणं चुम्बनार्थं करेणादानम् तथाव्रणपदमदत्तचिह्नं यन्नखस्य दानम्। इह कर्मणः शेषत्वविवक्षायां षष्ठी। अन्यथा 'नलोक' इति निषेधः। प्रसज्जेत। तथा सदयं स्पर्शमात्रविरामं यच्च रतम्। मध्यान्तयोस्तृतीयान्तेन सम्बन्धः। 'नलोक—' इति कृद्योगलक्षणायाः षष्ठ्या बाधात्। तद्विषहते स्म सोढवती। 'लट् स्मे' इति भूतार्थे लट्। 'परिनिविभ्यः' इति षत्वम्। इतरत्कठोरमुखग्रहणादि न विषहते स्मेत्यर्थः॥ ९॥

रात्रिवृत्तमनुयोक्तुमुद्यतं सा [1]प्रभातसमये सखीजनम्।
नाकरोदपकुतूहलं ह्रिया शंसितुं [2]तु हृदयेन तत्वरे॥ १०॥

मल्लि०—रात्रीति। सा पार्वती विभातसमये प्रभातकाले रात्रिवृत्तम्। सुरतवृत्तान्तमित्यर्थः। अनुयोक्तुं प्रष्टुम्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। उद्यतं प्रवृत्तं सखीजनं ह्रिया लज्जयापकुतूहलं निराकाङ्क्षं नाकरोत्। न किंचिदाचष्ट इत्यर्थः। हृदयेन हृदा च शंसितुं तत्वरे त्वरिताभूत्। औत्सुक्यादिति भावः। त्वरा संभ्रमादीनामनुभावत्वादिति॥ १०॥

सी०—रात्रिवृत्तमिति। प्रभातसमये रात्रिवृत्तं नैशं वृत्तान्तम्। 'वाच्यवद्वर्तने वृत्तं चरित्रच्छन्दसोरपि' इति विश्वः। अनुयोक्तुं प्रष्टुम्। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। उद्यतं सखीजनं सा पार्वती ह्रिया हेतुभूतयापकुतूहलं शमितजिज्ञासाकौतुकं नाकरोत्। नोत्तरयांचक्र इत्यर्थः। अथ च हृदयेन मनसा तु कर्तृणा शंसितुमुत्तरं कर्तुं तत्वरे त्वरितम्। भावे लिट्॥ १०॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
प्रेक्ष्य [3]बिम्बमुपबिम्बमात्मनः कानि कानि [4]न चकार लज्जया॥११॥

मल्लि०- दर्पण इति। किंचेति चार्थः। दर्पणे मुकुरे परिभोगो नखक्षतादिसंभोगचिह्नं पश्यतीति परिभोगदर्शिनी सा पार्वती पृष्ठतः

१. विभात. २. च. ३. अनुबिम्बम्. ४. अपि.

पश्चाद्भागे निषेदुषः स्थितवतः। सदेः क्वसुः। प्रणयिनः प्रियस्य हरस्य बिम्बं प्रतिबिम्बम्। दर्पणे संक्रान्तमित्यर्थः। आत्मनः स्वस्य बिम्बमनु। प्रतिबिम्बस्य पृष्ठत इत्यर्थः। 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वाद्‌द्वितीया। प्रेक्ष्य लज्जया। स्वचापलप्राकट्यकृतयेत्यर्थः। कानि कानि यानि यानि भेदवाच्यानि। अङ्गसंवरणादिचेष्टितानीत्यर्थः। उक्तं च—(लज्जानुभावेन साचीकृता वर्णवैवर्ण्याधोमुखादिकृत्) इति। न चकार ॥ ११ ॥

सी०—दर्पण इति। किं चेति चार्थः। दर्पणे परिभोगदर्शिनी संभोगचिह्नावलोकिनी सा पार्वती। पृष्ठतो निषेदुषः स्थितवतः प्रणयिनो हरस्य बिम्बं मुखमण्डलम्। 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः। आत्मन उपबिम्बं बिम्बसमीपे। 'अव्ययं विभक्ति—' इति समीपार्थेऽव्ययीभावः। पतितं प्रेक्ष्य लज्जाया कानि कानि चेष्टाविशेषचमत्कृतानि न चकार। अपि तु चकारैवेत्यर्थः ॥ ११ ॥

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी [1]समाश्वसत्।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥ १२ ॥

मल्लि०—नीलकण्ठेति। नीलकण्ठेन परिभुक्तं यौवनं यस्याः सा तथोक्ताम्। प्रियेण भुक्तयौवनामित्यर्थः। तां पार्वतीं विलोक्य जननी मेना समाश्वसत्। संतुतोषेत्यर्थः। श्वसिधातोर्लङ्। 'अड्गार्ग्यगालवयोः' इति विकल्पादडागमः। तथाहि। वधूजनो भर्तृवल्लभतया पतिवात्सल्येन मातुर्मानसीं मनोभवां शुचं शोकमस्यति निरस्यति हि। 'विपर्ययाद्विपर्ययश्च' इत्यर्थादवसेयं सामान्यैकविशेषणसमर्थनरूपोऽर्थान्तरन्यासः ॥ १२ ॥

सी०—नीलकण्ठेति। जननी मेना। तां पार्वतीं नीलकण्ठेन शिवेन परिमुक्तं यौवनं यस्यास्तथोक्तां विलोक्य समाश्वसदाश्वासं प्राप। हृष्टवतीति यावत्। तथा हि। वधूजनो मातुर्मानसीं मनसिजां शुचं शोकं भर्तृवल्लभतया भर्तृभीतिपात्रतयाऽस्यति क्षिपति। 'असु क्षेपणे'। लट्। आत्मजासु पतिप्रसाद एव मातॄणां मुदो हेतुरिति भावः ॥ १२ ॥

संप्रति देव्या मुग्धावस्थातो मध्यमावस्थाप्राप्तिमाह—

वासराणि कतिचित्कथंचन स्थाणुना [2]रतमकारि चानया।
ज्ञातमन्मथरसा शनैःशनैः सा मुमोच [3]रतिदुःखशीलताम् ॥ १३ ॥

मल्लि०—वासराणीति। स्थाणुना शंभुना कर्त्रा प्रिया पार्वती कर्मभूता कतिचिद्वासराणि। कैश्चिदहोभिरित्यर्थः। अत्यन्तसंयोगे द्वितीया। कथंचन कृच्छ्रेण पदं पदप्रक्षेपमकार्यत कारिता। सुरतकर्मणीति शेषः।

---

१. समाश्वसीत्. २. पक्ष्मकार्यं न प्रिया. ३. रतं.

करोतेर्ण्यन्तात्कर्मणि लुङ्। 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मत्वे 'ण्यन्ते कर्तुश्च कर्मणा' इत्यभिहितत्वं च। सा कृतपदा पार्वती ज्ञातमन्मथरसानुभूतसुरतसुखास्वादा सती। 'आस्वादे विरसमाहुः' इति शब्दानुशासने। शनैः शनैः क्रमेण रतौ रते दुःखशीलतां प्रतिकूलस्वभावतां मुमोच 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। मध्यमावस्थां प्राप्तेत्यर्थः ॥१३॥

सी०—वासराणीति। कतिचिद्वासराणि दिवसान् 'वा तु क्लीबे दिवसवासरौ' इत्यमरः। 'कालाध्वनोः—' इति द्वितीया। स्थाणुना शिवेन। 'स्थाणू रुद्र उमापतिः' इत्यमरः। अनया पार्वत्या सह कथंचन रतं सुरतमकारि कृतम्। तदनुकूल रसोत्पत्त्यभावादिति भावः। अथ च सा शनैः शनैर्ज्ञातो मन्मथरसो यया तथा सती रतौ या दुःखशीलता दुरवगाह्यस्वभावता तां मुमोच। स्वयमप्यनुरज्यति स्मेत्यर्थः ॥ १३ ॥

तुल्यलज्जास्मरत्वमेवाह—

सस्वजे प्रियमुरो [1]निपीडिनं प्रार्थितं मुखमनेन नाहरत्।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥

मल्लि०—सस्वज इति। सा पार्वत्युरोनिपीडितोरसि गाढमाश्लिष्टा सती प्रियं सस्वजे। न तु निष्पन्दमास्तेत्यर्थः। अनेन स्मरातिशयः सूचितः। अनेन प्रियेण प्रार्थितं चुम्बनार्थं याचितम्। 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः। मुखं नाहरत्। मेखलायां प्रणयः परिचयः। 'प्रणयः स्यात्परिचये याच्ञायां सुहृदेऽपि च' इति यादवः। तत्र लोलतां चञ्चलतां गतमस्य हस्तं शिथिलं रुरोध न्यवारयत्। न तु निर्भरमिति भावः। अत्र सहनप्रतीकाराभ्यां तुल्यलज्जास्मरत्वं व्यज्यते ॥ १४ ॥

तदेवाह—

सी०—सस्वज इति। सा पार्वती। उरसो निपीडनं यस्मिन्कर्मणि यथा स्यात्तथा प्रियं सस्वज आलिङ्गितवती। तथानेन प्रियेण प्रार्थितम्। चुम्बनार्थमित्यर्थः। मुखं नहरन्नावक्रयत्। परंतु मेखलया काञ्च्या सह यः प्रणयः स्नेहस्तत्र या लोलना। जिघृक्षया मन्दप्रसरणमित्यर्थः। तां गतं प्राप्तमस्य हस्तं पाणिं शिथिलं मन्दं यथा तथा रुरोध। न तु प्रगिवेति भावः ॥ १४ ॥

अथ देव्याः प्रगल्भावस्थां दर्शयितुं तयोः समानरागित्वं तावदाह—

भावसूचितमदृष्टविप्रियं [2]दार्ढ्यभावक्षणावियोगकातरम्।
कैश्चिदेव [3]दिवसैस्तथा तयोः प्रेम [4]गूढमितरेतराश्रयम् ॥ १५ ॥

मल्लि०—भावेति। तयोः शिवयोः कैश्चित्कतिभिश्चिदेव दिवसैः।

१. निपीडितम् निपीडिता. २. चाटु तत्क्षण; चाटुमत्क्षण, ३. तदा. ४. रूढम्.

भावसूचितं भावैश्चेष्टाभिः कटाक्षनिक्षेपादिभिः संजातमदृष्टं विप्रियमप्रियाचरणं यत्र तत्तथोक्तम् चाटूनि प्रियोक्तयो यस्मिन्सन्ति तच्चाटुमत् । भूतार्थे मतुप् । क्षणवियोगात्क्षणमात्रविरहादपि कातरं भीरितरेतराश्रयमन्योन्यविषयं प्रेम । प्रेमपदाभिलष्यांकुरावस्था भवतीत्यर्थः । रूढमभूत् । क्रमेणानुरागपदाभिलष्यां प्राप्तमित्यर्थः । तदेतत्सर्वं स्फुटीकृतं भूपालेन—( अङ्कुरपल्लवकलिकाप्रसूनफलभागियम् ) इत्यादिना । एका रतरेव स्थायीभूता रसो भवति तस्याश्चाङ्कुरावस्थाभेदोपपत्तौ सा प्रेमादिपदैरभिलष्यत इत्यर्थः 'सप्रेमभेदरहितम् यूनोर्यद्भावबन्धनम् । भावो रतौ राग एव स्वसंवेद्यदशाप्राप्तयावदाश्रयवृत्तिश्चेदनुरागः' इति मानादिलक्षणं विस्तरभयान्न लिख्यत इत्याकार एव द्रष्टव्यम् ॥ १५ ॥

प्रेम्णः परस्पराश्रयत्वमेव प्रपञ्चयति—

सी०—भावेति । भावेन स्वगतत्वाभिव्यञ्जकचेष्टाविशेषेण सूचितं ज्ञापितम् । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु इति मेदिनी । तथा न दृष्टं विप्रियमौदासीन्यं यत्र । तथा दाढर्यं दृढत्वं भजति तथोक्तम् । तथा क्षणवियोगेऽपि कातरम् । तदसहिष्णिवत्यर्थः । गूढं सखीजनानभिज्ञेयं तयोः शिवपार्वत्योः प्रेम स्नेहः 'प्रेम स्नेहोऽथ दोहदम्' इ यमरः । कैश्चिदेव दिवसैरितरेतराश्रयं परस्परनिष्ठम् । अभूदिति शेषः ॥ १५ ॥

तं यथात्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।
सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैक[1]वृत्तिभाक् ॥ १६ ॥

मल्लि०—तामिति । वधुरात्मसदृशं स्वानुरूपं वरं वोढारं प्रति यथान्वरज्यतानुरक्ताभूत् । रञ्जेर्दैवादिकात्कर्तरि लकारः । स्वरितत्वादात्मनेपदम् । तथैव वरोऽपि नवोढाप्यात्मनः सदृक्तामात्मसदृशम् । 'त्यदादिषु दृशोऽनालोचने कञ्च' इति चकारात्क्विप्प्रत्ययः । तां वधूं प्रत्यन्वरज्यत वध्वामनुरक्तोऽभूदित्यर्थः । 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इत्यनेन सकर्मकत्वम् । दृष्टान्तमाह--जाह्नवी गङ्गा सागरन्नापगच्छतीत्यनपगानपेता हि सोऽपि सागरस्तस्या जाह्नव्या मुखरसेनाग्रसलिलेन वक्त्रास्वादेनैका मुख्या निर्वृतिरानन्दो यस्य स तथोक्तः । अत्र दृष्टान्तालंकारः । लक्षणं तूक्तम् इत्थं समानानुरागकथनाद्रसाभासत्वं निरस्तम् तदुक्तम्--( योषितो बहुसक्तिश्चेद्रसाभासः स उच्यते ) । कविनाप्युक्तं मालविकायाम्--( अनातुरोत्क्तं प्रति विप्रसिद्धता समीपगेनापि रतिर्न मां प्रति । परस्परप्राप्तिनिराशयोर्वा शरीरनाशोऽपि समानरागयोः । ) इति ॥ १६ ॥

---

१. निवृत्तिः.

सी०—तमिति । वधूः पार्वती । आत्मसदृशं तं वरं शिवमनु लक्षयित्वा यथा येन प्रकारेणारज्यत 'रञ्ज रागे' दैवादिकाल्लङ् । वरः शिवस्तां वधूमनु तथैवारज्यत । हि यथा जाह्नवी सागरात्समुद्रादनपगानिवर्तमाना । अस्तीति शेषः । सोऽपि समुद्रोऽपि तस्या जाह्नव्या मुखसम्बन्धिनी रस एकां केवलां वृत्ति भजतीति तथोक्तः । अस्तीति शेषः । उपमालंकारः ॥ १६ ॥

अथ देव्याः प्रगल्भावस्थामाश्रित्य संभोगमाह—

शिष्यतां निधुवनोपदेशिनः शंकरस्य रहसि प्रपन्नया ।
शिक्षितं युवतिनैपुणं तया [1]यत्तदेव गुरुदक्षिणीकृतम् ॥ १७ ॥

मल्लि०-शिष्यतामिति । रहस्येकान्ते निधुवनमुपदिशतीति निधुवनोपदेशिनः सुरतविद्यागुरोः । 'व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्' इत्यमरः । शंकरस्य शिष्यतां प्रपन्नया प्राप्तया तया पार्वत्या यद्युवतिनैपुणं युवतिजनोचितं नैपुणम् । सुरतकौशलमित्यर्थः । शिक्षितमभ्यस्तम् । आचरितमित्यर्थः । तदेव गुरुदक्षिणीकृतम् । यथोपदेशकरणाद्दक्षिणासमभूदित्यर्थः । अनेन कृतप्रतिकृतं सूच्यते ॥ १७ ।

सी०—शिष्यतामिति । निधुवनोपदेशिनः सुरतोपदेष्टुः शंकरस्य शिष्यतामुपदेश्यतां प्रपन्नया प्राप्तया तया पार्वत्या रहसि यद्युवतिषु त्रिजगद्विलासिनीषु मध्ये कौशलं शिक्षितमधीतम् । तदेव नैपुणशिक्षणमेव गुरुदक्षिणीकृतं गुरोरदक्षिणा दक्षिणा संपद्यते तथाकृतम् । अभूततद्भावे च्विः । 'अस्य च्वौ' इतीकारः । शिवोपयोगित्वेन तत्कृतसुरतारम्भानुगुणरतकौशलमेव दक्षिणात्वेन परिणतमिति इव वाक्यार्थवृत्तिनिदर्शनालंकारः—'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना' इत्युक्तत्वात् ॥ १७ ॥

दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा ।
शीतलेन निरवापयत्क्षणं मौलिचन्द्रशकलेन शूलिनः ॥ १८ ॥

मल्लि०—दष्टमिति । अम्बिका पार्वती दष्टश्चासौ मुक्तश्च तं दष्टमुक्तम् । 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इत्यनेन समासः । अधरोष्ठं वेदनया विधुतौ कम्पितौ हस्तपल्लवौ पाणिपल्लवौ यस्याः सा तथोक्ता सती शीतलेन शूलिनो मौलिचन्द्रशकलेन क्षणं निरवापयत् । शीतलोपचारेण निर्व्यथमकरोदिति विश्रम्भोक्तिः । निवातेर्धातोर्ण्यन्तात् 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' इत्यनेन पुगागमः । अत्राधरपीडनात्सुखेऽपि दुःखवदुपचारात्कुट्टिमनामानुभाव उक्तः । तदुक्तम्—( केशाधरादिसंग्रहणे मोदमानापि मानसे । दुःखितेव बहिः कुप्येत्तत्कुट्टिमम् ) ॥ १८ ॥

---

१. तत्.

सी०—दष्टमुक्तमिति । अम्बिका पार्वती पूर्वं दष्टं पश्चान्मुक्तमधरोष्ठं वेदनया पीडया विधुतौ कम्पितौ हस्तौ पाणि एव पल्लवौ यया तथोक्ता सती शीतलेन शूलिनः शिवस्य मौली यच्चन्द्रस्य शकलं कलारूपं तेन कृत्वा क्षणं निरवापयत् । सुखयति स्मेत्यर्थः ।। १८ ।।

चुम्बनादलकचूर्णदूषितं शंकरोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ।। १९ ।।

मल्लि०— चुम्बनादिति । अथ शंकरोऽपि चुम्बनाच्चुम्बनार्थितोऽलकचूर्णेन दूषितमुपहतं ललाटजं नयनमुच्छ्वसत्कमलगन्धये विकचारविन्दगन्धधारिणे । 'उपमानाच्च' इतीकारः । पार्वत्या वदनगन्धवाहिने । फूत्कारमारुतायेत्यर्थः । एतेन देव्याः प्रियवशंवदत्वमुक्तम् । अत्र हरचक्षुष्यलकचूर्णकथनाद्देव्या उपरिभावः सूचितः ।। १९ ।।

प्रियानुरागव्यञ्जकचेष्टामाह--

सी०—चुम्बनादिति । चुम्बनाद्धेतोरलकचूर्णेन केशप्रसाधनचूर्णविशेषेण दूषितमवरुद्धं ललाटजं ललाटे जातम् । 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । अलुको वैभाषिकत्वान्नालुक् । नयनं नेत्रम् । उच्छ्वसत्कमलगन्धये विकसत्कमलसुगन्धये । पद्मिनीत्वादिति भावः । 'उपमानाच्च' इतीकारः । 'गन्धो गन्धक आमोदे' इति विश्वः । पार्वत्या वदनमेव गन्धवाही पवनस्तस्मै । 'गन्धवाहानिलाशुगाः' इति कोशनिर्दिष्टगन्धवाहशब्दस्य गन्धं वहतीति योगालम्बनेन गन्धवाहिशब्देनापि वायुत्वप्रतीतिः । रूढ्यालम्बने त्वण्प्रत्ययान्तस्यैव पवनत्वप्रतीतौ शक्तिमत्वादवाचकपददोषप्रसङ्ग इति बोध्यम् । ददौ । तत्राधो रजो निवर्तयितुं स्थापितवानित्यर्थः ।१९।

एवमिन्द्रियसुखस्य [1]वर्त्मनः सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया [2]मासमात्रमवसद्वृषध्वजः ।। २० ।।

मल्लि० --एवमिति । वृषध्वजो हर एवमुक्तरीत्येन्द्रियाणां सुखस्यानुकूलस्य वर्त्मनो मार्गस्य स्त्रीप्रसङ्गस्येत्यर्थः । सेवनात्परिभोगादनुगृहीतमन्मथः पुरुज्जीवितमदनः सन् । उमया सह शैलराजभवने हिमवद्गेहे मासमात्रमवसत् । अत्यन्तसंयोगे द्वितीया । मासमात्रमिति वधूवशीकरणकालक्लृप्तिः प्रदर्शिता ।। २० ।।

सी०—एवमिति । एवमिन्द्रियाणां सुखयतीति सुखः । सुखशब्दात्करोत्यर्थकणिजन्तात्पचाद्यच् णिजलोपश्च । तस्य वर्त्मनः सेवनादाचरणाद्धेतोरनुगृहीतः प्रसादितमन्मथो येन । स्ववपुर्योजनादिति भावः 'परिणेष्यति पार्वतीं यदा वपुषा स्वेन नियोजयिष्यति' ( ४।४२ ) इति चतुर्थसर्गोक्तमनुसंधेयम् । तथोक्तो वृषध्वजो हरः

---

१. चात्मनः. २. मासमेकम्.

शैलराजभवने हिमालयगृह उमया पार्वत्या सह मासमात्रं त्रिशद्दिनात्मकः कालो मासस्तमेवावसत् । 'कालाध्वनोः—' इति द्वितीया । 'मात्रं कात्स्न्र्येऽवधारणे' इत्यमरः ॥ २० ॥

सोऽ[1]नुमान्य हिमवन्तमात्मभूरात्मजाविरहदुःखखेदितम्[2] ।
तत्र तत्र विजहार [3]संपतन्नप्रमेयगतिना ककुद्मता ॥ २१ ॥

मल्लि०—स इति । स आत्मभूः शिव आत्मजाया दुहितुर्विरहदुःखेन पीडितं हिमवन्तमनुमान्यानुमतं कृत्वा प्रमेयगतिनापरिच्छेद्यगतिना ककुद्मता वृषेण संचरन्संचरमाणस्तत्र तत्र नानादेशेषु विजहार ॥ २१ ॥

सी०—स इति । स आत्मभूः शिवः । आत्मजायाः पार्वत्या विरहदुःखेन खेदितं हिमवन्तमनुमान्य तत आज्ञां गृहीत्वा । अप्रमेयवस्त्वेव स्थानेषु वर्तत इत्यपरिच्छेद्या गतिर्गमनव्यापारो यस्य तथाभूतेन ककुद्मता नन्दिना तत्र तत्र पर्वते संपतन् संचरमाणो विजहार विहारं कृतवान् । इह 'संचरन्' इति पाठोऽसाधुः । 'समस्तृतीयायुक्तात्' इति नित्यमात्मनेपदनियमाच्छतुर्दौर्लभ्यात् । अमन्तमार्गपदं शेषयित्वा सकर्मकत्वादप्रसङ्ग इति केचित्समर्थयन्ते ॥ २१ ॥

मेरुमेत्य [4]मरुदाशुगोक्षकः पार्वतीस्तनपुरस्कृतः कृती ।
हेमपल्लवविभङ्गसंत[5]रानन्वभूत्सु[6]रतमर्दनक्षमात् ॥ २२ ॥

मल्लि०—मेरुमिति । मरुदाशुवाहनः । पवनजवनवाहनः पार्वतीस्तनाभ्यां पुरस्कृतः । पार्वतीपुरोगतयाश्लिष्ट इत्यर्थः । अन्वभूदित्यनेनान्वयः । कृती कुशलो हरो मेरुमेत्य हेमपल्लवानां विभङ्गाः खण्डास्त एव संस्तरस्तल्पं यस्यां तां तथोक्तां क्षपां रात्रिं सुरततत्परःसुरतासक्तः सन् । अन्वभूत् ॥ २२ ॥

सी०—मेरुमिति । मरुदिवाशु गच्छतीति मरुदाशुग उक्षा वृषभो यस्य सः । 'शेषाद्विभाषा' इति कप् । कृती कुशलो हरः । मेरुं सुमेरुम् । 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । एत्यागत्य पार्वत्याः स्तनाभ्यां पुरस्कृतान्पूजितानाश्रयत्वेन स्वीकारात् । अल्पीयसां महत्स्वीकार एव पूजात्वेन परिणमतीति भावः । महतामल्पीयः—स्वीकारे को हेतुरित्याशङ्क्य विशेषयति सुरतेषु यानि मर्दनानि तेषु क्षमान्सहिष्णून् । हेम्नः पल्लवानां विभङ्गाः खण्डास्तेषां संस्तरानास्तरणान्यन्वभूत् । तत्र सुप्त्वा विजहारेत्यर्थः । अल्पीयसामपि सहिष्णुत्वं हेम्नो विकारत्वात् । अल्पीयस्त्वं तु पदो लवः पल्लव इति श्लिष्टार्थमहिम्ना समर्थ्यते ॥ २२ ॥

---

१. अनुमन्त्र्य. २. पीडितम्. ३. संचरन्. ४. आशुवाहनः. ५. संस्तराम्. ६. सुरततत्परः क्षयाम्.

पद्मनाभचरणाङ्किताश्मसु[1] प्राप्तवत्स्वमृतविप्रुषो नवाः ।
[2]मन्दरस्य कटकेषु चावसत्पार्वतीवदनपद्मषट्पदः ॥ २३ ॥

मल्लि०—पद्मनाभेति । पार्वतीवदनपद्मे षट्पदः । प्रियामुखरसास्वादलोल इत्यर्थः स हरः । पद्मं नाभिर्यस्य स पद्मनाभो विष्णुः । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राजिति योगविभागात्समासान्तः । तस्य वलयैरङ्किता अश्मानो येषां तेषु । अमृतमथनसमय इति भावः । तथा नवाः प्रत्यग्रा अमृतविप्रुषः सुधाबिन्दून्प्राप्तवत्सु मन्दरस्य मन्थाचलस्य कटकेषु नितम्बेषु चावसत् । एतेन मन्दरस्यानेकाद्भुताधारत्वान्मनोविनोदकत्वमुक्तम् । २३ ॥

सी०—पद्मनाभेति । हरः । पद्मनाभो हरिः 'पद्मनाभो मधुरिपुः' इत्यमरः । तस्य चरणाभ्यामङ्किताश्चिह्निता अश्मानो येषाम् । एतेन हरेरपि विहारयोग्यत्वं ध्वन्यते । तथा नवा अमृतविप्रुषोऽमृतबिन्दून् । पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्' इत्यमरः । प्राप्तवत्सु । समुद्रमन्थनसाधनत्वादस्येति भावः । मन्दरस्य च कटकेषु नितम्बेषु । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । पार्वत्या वदनरूपे पद्मे षट्पदो भ्रमरः सन् । अवसद्वासमकरोत् ।। २३ ॥

[3]रावणध्वनितभीतया तया कण्ठसक्त[4]दृढबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभा ॥ २४ ॥

मल्लि०—रावणेति । जगद्गुरुः । विश्रवसोऽपत्यं रावणो दशकण्ठः । 'तस्यापत्यम्' इत्यण्प्रत्ययः । वृत्तिविषये विश्रवस् शब्दस्य रवणादेशः । रावणस्य ध्वनितात्कैलासोत्पाटनसमयक्ष्वेडिताद्भीतया तया पार्वत्या कण्ठसक्ताभ्यां मृदुबाहुभ्यां बन्धनं यस्य स तथाभूतः । एकनेत्रत्वादेकपिङ्गलः कुबेरस्तस्य गिरौ कैलासे विशदा निर्मलाः शशिप्रभाश्चन्द्रिका बुभुजे । 'निर्वेशो भृतभोगयोः' इत्यमरः ॥ २४ ॥

सी०—रावणेति । जगतां गुरुर्नियन्ता उत्पत्त्यादित्रिविधकर्मणां गुणभेदेन कारकत्वादिति भावः । शिवः एकपिङ्गलस्य कुबेरस्य । 'यक्षः कपिङ्गलविलश्रीदपुण्यजनेश्वरः' इत्यमरः । गिरौ कैलासे रावणस्य प्रसिद्धराक्षसस्य ध्वनितात्सिंहनादाद्भीतया तया पार्वत्या कण्ठे सक्तं सज्जितं दृढं बाहुबन्धनं यस्य स तथोक्तः सन् विशदाः स्वच्छाः शारदिकाः इति भावः । शशिनः प्रभाः कौमुदीर्निर्विवेशोपभुक्तवान् ॥ २४ ॥

तस्य जातु मलयस्थलीरतेर्धूतचन्दनलतः[5] प्रियाक्लमम् ।
आचचाम [6]सलवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥ २५ ॥

---

१. वलय. २. मान्दरेषु. ३. वारणस्वनित. ४. मृदु. ५. वनः.
६. सतुषरशीतलः.

मल्लि०-तस्येति । जातु कदाचिद्धूतचन्दनलतः कम्पितपटीरशाखः । 'समे शाखावले' इत्यमरः । सह लवङ्गस्य केसरैः सलवङ्गकेसरः । 'लवङ्गं देवकुसुमम्' इत्यमरः । विशेषणाभ्यां शैत्यसौरभ्ये दर्शिते । दक्षिणानिलो मलयमारुतः । चाटुकारश्चाटुप्रयोगः । प्रियवाद इति यावत् । भावे घञ् । स इव मलयस्थलीषु मलयाचलप्रदेशेषु रतिः सुरतं यस्य तथोक्तस्य तत्र रममाणस्येत्यर्थः । तस्य शिवस्य प्रियाक्लमं प्रियायाः सुरतश्रममाचचाम जहार । यथा लोके महानपि श्रम एकेन प्रियवादेनापैति तद्वद्दक्षिण-मारुतेनाप्यस्य सकलोऽपि सुरतक्लमो हृत इत्यर्थः ॥ २५ ॥

सी०—तस्येति । जातु कदाचित् । तस्य तत्कर्तृके । मलयस्थलीषु रतं सुरतं तत्र सति । धूताः कम्पिताश्चन्दनानां चन्दनवृक्षाणां लताः शाखा येन तथोक्तः । लवङ्गानां केसरैः किञ्जल्कैः सह वर्तते तथोक्तः । दक्षिणानिलो मलयपवनः । चाटुकारः इव मधुरभाषीव । प्रियायाः क्लमं खेदमाचचामः । हृतवानित्यर्थ ।२५।

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
[1]सा व्यगाहत तरङ्गिणीमुमा मीनपंक्तिपुनरुक्त[2]मेखला ॥ २६ ॥

मल्लि०—हेमेति । उमा गौरी हेमतामरसेन कनककमलेन ताडितः प्रियो यया तेनोत्थितस्य प्रियस्य कराम्बुना कराक्षिप्ताम्भसा विनिमीलिते-क्षणा मुकुलिताक्षी । मीनपङ्क्त्या पुनरुक्ता द्विगुणिता मेखला यस्याः सा तथाभूता सती खे तरंगिणीं व्यगाहत । तत्र तत्र जलक्रीडामकरो-दित्यर्थः ॥ २६ ॥

सी०—हेमेति । सोमा पार्वती हेम्नस्तामरसेन रक्तोत्पलेन तटोत्पन्ने ताडितः प्रियो यया सा । परिहासविधित्सयेति भावः । तथा तस्य प्रियस्य कराम्बुना हस्ता-क्षिप्तजलेन विनिमीलिते ईक्षणे नेत्रे यया । तथा मीनपङ्क्त्या पुनरुक्ता मेखला रशना यस्यास्तथोक्ता सती । तरङ्गिणीं नदीं व्यगाहत विजगाहे जलक्रीडां चकारेत्यर्थः । 'तरङ्गिणी शैवलिनी' इत्यमरः ॥ २६ ॥

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं [3]सुरवधूभिरीक्षितः ॥ २७ ॥

मल्लि०—तामिति । आयुग्मानि लोचनानि यस्य सोऽयुग्मलोचनस्त्र्य-म्बकः । युग्मशब्दो विशेष्यनिघ्नोऽप्यास्ते 'तस्मिन्युग्मासु संविशेत्' 'युग्मान्देवे यथाशक्ति पित्र्ये युग्मस्तथैव च' इत्यादिप्रयोगदर्शनात् । नन्दने नन्दनोद्याने पुलोमतनया शची । 'पुलोम्नस्तु शची सुता' इति हरिवंशे । तस्या अलकानामुचितैः पारिजातकुसुमैस्तां प्रसाधयन्नलंकुर्वंश्चिरं सुर-

१. खे. २. मेखलाम्. ३. सुरवधूभिरैक्ष्यत, सुरवधूनिरीक्षितः, सुरवधूभिरीक्षतः.

वधूभिः सस्पृहमीक्षितः। केन वा पुण्येनायं लभ्यत इति साभिलाषदृष्ट इत्यर्थः। अत्र देवस्यानुकूलनायकत्वं देव्याः स्वाधीनपतिकात्वं चाव-सेयम् ॥ २७ ॥

सी०—तमिति। अयुग्मानि विषमाणि। त्रीणीति यावत्। लोचनानि यस्य स तथोक्तः शिवो नन्दन इन्द्रोद्याने पुलोमतनया शची। 'पुलोमजा शचीन्द्राणी' इत्यमरः। तस्या अलकेषु केशेषूचितैः पारिजातकुसुमैः कल्पवृक्षपुष्पैस्तां पार्वतीं प्रसाधयन्भूषयन्। तथा सुरवधूभिर्देवाङ्गनाभिः सस्पृहमीक्षितः सन् चिरमवसदिति शेषः ॥ २७ ॥

इत्युभौ तमनुभूय शंकरः पार्थिवं च [1]दयितासखः सुखम्।
लोहितायति कदाचिदातपे गन्धमादनवनं[2] व्यगाहत ॥ २८ ॥

मल्लि०—इतीति। इतीत्थं शंकरो वनितासखः सन् भूमौ भवं भौमम् न भौममभौमं दिव्यं पृथिव्यां भवं पार्थिवं च सुखमनुभूय कदाचिदातपे लोहितायति लोहितवर्णे भवति। अस्तंगते सवितरीत्यर्थः। लोहितादिडा-ज्भ्यः क्यष् इति क्यष्प्रत्ययः। गन्धमादनगिरिं व्यगाहत। पर्वतमुद्दिश्य इत्यर्थः। उद्देशक्रियां प्रति गिरेः कर्मत्वम्। यथाह भाष्यकारः—.......... ...... ॥ २८ ॥

सी०—इतीति। शंकरः इत्येवमभौमं स्वर्गीयं तथा पार्थिवं भौमं च सुखम्। दयितासखः सन्ननुभूय। कदाचित्समय आतपे सूर्ये लोहितायति रक्तवर्णे जायमाने सति। 'लोहितायतिदिडाज्भ्यः क्यष्'। इति क्यष्। गन्धमादनस्य गिरेर्वनं व्यगाहत तत्र क्रीडितुं जगामेत्यर्थः ॥ २८ ॥

तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम्।
दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥ २९ ॥

मल्लि०—तत्रेति। तत्र गन्धमादने काञ्चनविकारः काञ्चनं सौवर्णं तच्च तच्छिलातलं तदाश्रयो यस्य स भगवान्नेत्रगम्यं सायंतनम् अर्थाद्दर्शन-योग्यम्। भास्करं सूर्यम्। 'दिवाविभानिशाप्रभाभास्करान्तानन्तादि०' इत्यादिना टप्रत्ययः। अवलोक्य दक्षिणेतरभुजः सव्यबाहुर्व्यपाश्रयो यस्या स्ताम्। निजवामभुजमवष्टभ्योपविष्टामित्यर्थः। सह धर्मं चरतीति सहधर्म-चारिणीं पत्नीं व्याजहार जगाद ॥ २९ ॥

सी०—तत्रेति। तत्र गन्धमादनवने स हरो भास्करं सूर्यं नेत्रगम्यं नेत्रप्राप्यम्। नेत्रावलोक्यमिति यावत्। अवलोक्य विचार्य। काञ्चनं सौवर्णं शिलातलमाश्रयो यस्य तथोक्तः सन्। दक्षिणेतरो भुजो वामभुजस्तत्र व्यपाश्रयः सम्बन्धो यस्यास्ताम्।

---

१. वनिता. २. गिरिम्.

तत्र स्थितामित्यर्थः। सहधर्मंचारिणीं पत्नीं पार्वतीं व्याजहारोक्तवान्। 'व्याहार उक्तिर्लपितम्' इत्यमरः ॥ २९ ॥

पद्मकान्ति[1]मरुणत्रिभागयोः [2]संक्रमय्य तव नेत्रयोरिव ।
संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥

मल्लि०—पद्मकान्तिमिति। असावह्नां पतिरहर्पतिः सूर्यः। अहरादीनां पत्यादिषूपसङ्ख्यानम् इति रेफदिशः। पद्मकान्तिं पद्मशोभाम्। तृतीयो भागस्त्रिभागः। वृत्तिविषये पूरणार्थत्वं सङ्ख्याया इत्युक्तम्। अरुणस्त्रिभागोः ययोस्तयोः। अरुणोपान्तयोरिति भाग्यलक्षणोक्तिः। तव नेत्रयोः सक्रमय्येव। तदानीं पद्मानामविकासान्नेत्रयोस्तु विकासाच्चेयमुत्प्रेक्षा। प्रलयकाले प्रजेश्वरः प्रजापतिर्जगादिवाहर्दिवसं संहरति। अस्तं गच्छतीत्यर्थः ॥ ३० ॥

सी०—पद्मेति। हे प्रिये, असौ पुरोवर्त्यहर्पतिः सूर्यः। अरुणे त्रिभागौ तृतीयांशौ ययोस्तयोस्तव नेत्रयोरिव पद्मकान्ति कमलशोभां संक्रमय्य तुलयित्वा। कमलप्रतिनिधित्वेन रात्रौ तव नेत्रकमल एव स्थास्यत इति विचार्येति भावः। संक्षये प्रलये प्रजेश्वरो ब्रह्मा जगदिव। अहो दिनं संहरति। स्वस्यास्तंगतत्वादिति भावः। अत्र गम्योत्प्रेक्षा ॥ ३० ॥

सीकरव्यतिकरं मरीचिभि[3]र्दूरयत्यवनते विवस्वति ।
इन्द्रचापपरिवेषशून्यतां निर्झरास्तव[4] पितुर्व्रजन्त्यमी[5] ॥ ३१ ॥

मल्लि०—सीकरेति। विवस्तेजोऽस्यास्तीति विवस्वांस्तस्मिन्विवस्वति सूर्ये मरीचिभिः। सहार्थविवक्षायां तृतीयात एव विनापि सहशब्देन तृतीया। सीकरव्यतिकरं पयः किरणसंपर्कं दूरयति दुरीकुर्वति सति। हे अवनते पार्वति! अमी तव पितुर्भवत्यितुर्हिमवतो निर्झराः प्रवाहाः। 'प्रवाहो निर्झरो झरः' इत्यमरः। इन्द्रचापं नानावर्णप्रभासमूहस्तस्य परिवेषेन परिवेष्टनेन शून्यतां व्रजन्ति। अर्ककिरणसंपर्ककृतत्वादैन्द्रचापस्य तन्निवृत्त्या निवृत्तिरित्यर्थः ॥ ३१ ॥

सी०—सीकरेति। हे प्रिये, अवनते नम्रीभूत अस्तंगत इति यावत्। विवस्वति सूर्ये मरीचिभिः स्वकिरणैः सह सीकराणां जलकणानाम्। 'सीकरोऽम्बुकणाः स्मृताः' इत्यमरः। व्यतिकरं सम्बन्धं दूरयति दूरं कुर्वति सति। अमी पुरोवर्तिनस्तव पितुर्हिमालयस्य निर्झराः प्रवाहा इन्द्रचापमयः परिवेषः परिधिः। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः। तेन शून्यास्तेषां भावस्तत्ता तां व्रजन्ति।

---

१. अरुणान्तभागयोः. २. संगमय्य. ३. धूनयति. ४. प्रसवितुः. ५. ते.

गच्छन्तीत्यर्थः । निर्झरकणपतितसायंतनकिरणैरुद्भासमानेन्द्रचापपरिधितसूर्यस्या- स्तंगतत्वाद्विलीनेति भावः ॥ ३१ ॥

दष्टतामरसकेसर[1]स्रजोः क्रन्दतोर्वि[2]परिवृत्तकण्ठयोः ।
[3]निघ्नयोः सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ ३२ ॥

मल्लि०--दष्टेति । दष्टमर्धजग्धं तामरसकेसरं पद्मकिञ्जल्कम् । मुखद्वयेनैकमिति भावः । तत्यजत इति तथोक्तयोः क्रन्दतोः कूजतो- विपरिवृत्तकण्ठयोः । परस्परालोकनार्थं वक्रीकृतग्रीवयोरित्यर्थः । निघ्नयो- र्दैवाधीनयोः । 'अधीनो निघ्न आयत्ते' इत्यमरः । चक्रवाकी च चक्रवाकश्च तयोः 'पुमान्स्त्रिया' इत्येकशेषः । सरस्यल्पमन्तरं व्यवधानमनल्पता- माधिक्यं गतम् । सरसिवियुज्यमानयोर्महद्व्यवधानमभूदित्यर्थः ॥ ३२ ॥

सी०—दष्टेति । हे प्रिये, तामरससम्बन्धिनां केसराणां स्रग्याभ्यां तयोः । तथा विपरिवृत्तौ परस्परपाङ्मुखीभूतौ कण्ठौ ययोः । तथा निघ्नयोः परस्परा- धीनयोः । 'अधीनो निघ्नआयत्तः' इत्यमरः । अतएव क्रन्दतो रुदतोः । तथा सरसि स्थितयोश्चक्रवाकयोरल्पमन्तरं वियोगोऽनल्पतामतिशयिततां गतम् । प्राप्तमि- त्यर्थः ॥ ३२ ॥

स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।
[4]आविभातचरणाय गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥

मल्लि०—स्थानमिति । दन्तिनो गजाः अह्नि भवमाह्निकम् 'कालाट्ठञ्' स्थानमपास्य विहाय सल्लकी गजप्रिया काचिल्लता । 'सल्लकी स्याद्- गजप्रिया' इसि हलायुधः । तस्या विटपभङ्गैः पल्लवखण्डैर्वासितं सुरभितं वारिरुहेषु बद्धाः संगताः षट्पदा यस्मिस्तद्वारि जलमाविभातं प्रभात- मारभ्य यच्चरणं तस्मै । तत्पर्याप्तमित्यर्थः । गृह्णत उपाददते । गजा हि भुक्तिपर्याप्तजलं सकृदेव सायं पिबन्तीति प्रसिद्धम् ॥ ३३ ॥

सी०—स्थानमिति । हे प्रिये, दन्तिनो गजाः सल्लकीविटपा वृक्षविशेषास्तेषां भङ्गैः खण्डैर्वासितं सुगन्धितमाह्निकं दैनं स्थानमास्य त्यक्त्वा । विभातमारभ्येत्या- विभातं यच्चरणमाचरणम् । साध्यं कृत्यमिति यावत् । तस्मै तत्कर्तुम् । वारिरुहेषु कमलेषु बद्धाः षट्पदा भ्रमरा यत्र तादृशं वारि जलं गृह्णते । करेणाददत इत्यर्थः । गम्योत्प्रेक्षा ॥ ३३ ॥

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे[5] विवस्वता ।
[6]लब्धया प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥

---

१. त्यजोः. २. विरहहीनकण्ठयोः. ३. भिन्नयोः. ४. आविभाति शरणाय गच्छतः, साध्यकर्मविषयेऽनुगृह्णते. ५. कथमिदम्. ६. दीर्घया.

मल्लि०—पश्येति। हे मितकथे, हे मितभाषिणि! एतेन स्वस्य तत्संलापने लौल्यं सूचयति। पश्चिमदिगन्तलम्बिना विवस्वता कर्त्रा दीर्घया दिगन्तलम्बित्वादायतया प्रतिमया निजप्रतिबिम्बेन। 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया। प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्।' इत्यमरः। सरोम्भसां तपनीयविकारस्तापनीयं हिरण्मयम्। 'तपनीयं शातकुम्भम्' इत्यमरः। सेतुबन्धननिमित्तम्। इवेत्युत्प्रेक्षा। अस्तमयसमये सरः पारावारिणामरुणमायतमर्कप्रतिबिम्बं हिरण्मयसेतुरिव दृश्यत इत्यर्थः। पश्येति वाक्यार्थः कर्म ॥ ३४ ॥

सी०—पश्येति। हे मितकथे, मिताः परिमिताः कथा यस्यास्तत्सम्बोधनं हे मितभाषिणि प्रिये, पश्चिमं दिगन्तं लम्बते तथोक्तेन विवस्वता सूर्येण लब्धया प्रतिमया प्रतिबिम्बेन कृत्वा सरःसंबन्धिनामम्भसां तापनीयं सौवर्णं सेतोर्बन्धनमिव निर्मितम्। कृतमित्यर्थः। इति त्वं पश्य। तरङ्गिसरोजलेषु पतितमत एवाविरलतया सहस्रधा विभक्तं स्वप्रतिबिम्बमेव सूर्यनिर्मितं सेतुरिवेत्युत्प्रेक्षा। 'तपनीयं शातकुम्भम्' इत्यमरः। ततः 'तस्य विकारः' इत्यण् ॥ ३४ ॥

उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः।
दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥

मल्लि०—उत्तरन्तीति। दंष्ट्रिणो दंष्ट्रावन्तः। व्रीह्यादित्वादिनिः। अतएव दष्टा भङ्गुराः कुटिला बिसाङ्कुरा मृणालाङ्कुरा यैस्ते त इव स्थिता वनवराहाणां यूथपाः। 'यूथनाथस्तु यूथपः' इत्यमरः। गाढपङ्कमतिपङ्किलं पल्वलमल्पसरः। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। विनिकीर्य विक्षिप्यातिवाहितातपा उत्तरन्ति पल्वलान्निर्गच्छन्ति ॥ ३५ ॥

सी०—उत्तरन्तीति। हे प्रिये, गाढः पङ्को यत्र तादृशं पल्लवलमल्पसरः। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। विनिकीर्य। स्वाधिवासेन विक्षिप्तं कृत्वेत्यर्थः। अतिवाहितोऽतिक्रान्त आतपो घर्मो यैः। तथा दंष्ट्रिणः प्रशस्तदंष्ट्रियुक्ताः। वनवराहाणामारण्यककराणां यूथं पान्ति रक्षन्ति ते वनवराहयूथपाः। महान्तो वराहाइत्यर्थः। दष्टा भङ्गुरा भङ्गशीला बिसाङ्कुरा मृणालतन्तवो यैस्ते तथोक्ता इव। उत्तरन्ति निःसरन्ति। अर्थात्सरस इत्यर्थः। अत्र बहिर्दृश्येषु दंष्ट्राङ्कुरेषु बिसाङ्कुरत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ ३५ ॥

एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः[1]।
हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥

मल्लि०—एष इति। हे पीवरोरु, एष वृक्षशिखरे वृक्षाग्रे कृतस्थिति-

१. मण्डलम्.

जातरूपरसगौरमण्डल आतपरूषणात्काञ्चनद्रवदरुणवर्हमण्डलः। 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः। बर्हमस्यास्तीति बर्हिणो मयूरः। 'फलबर्हाभ्यामिनज्वक्तव्यः' हीयमानं क्षीयमाणमहरत्ययातपं दिनान्तातपं पिबतीव। कथमन्यथा क्षीयमाणत्वमिति भावः॥ ३६॥

सीं०—एष इति। हे पिवरोरु वृक्षशिखरे कृतमास्पदं स्थितिर्येन। तत्र स्थित इत्यर्थः। एष पुरोवर्ती बर्हिणो मयूरः। 'मयूरो बर्हिणो बर्ही' इत्यमरः। कर्ता जातरूपस्य सुवर्णस्य। 'चामीकरं जातरूपम्' इत्यमरः। यो रसो जलं तद्वद्गौरं पीतं मण्डलं बर्हसमूहो यस्य तादृशम्। अह्नो दिवसस्यात्ययः सन्ध्या आतपं पिबतीवेत्युत्प्रेक्षा। यतो हीयमानम्। अन्यथा कथमस्य हानिः स्यादिति भावः॥ ३६॥

पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्क[1]मिव जातमेकतः।
खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः॥ ३७॥

मल्लि०—पूर्वभागेति। पूर्वभागे प्राचीमूले तिमिरप्रवृत्तिभिर्ध्वान्तप्रसरैरेकतो व्यक्तपङ्कं स्फुटपङ्कमिव जातं तथा विवस्वता हृतमातप एव जलं यस्य तत्तथोक्तं खमाकाशं किंचिदीषच्छेषोऽस्यास्तीति शेषवच्छुष्कं सर इव भाति॥ ३७॥

सी०—पूर्वेति। विवस्वता हृतं शोषितमातपो जलमिव यस्य तादृशं खं व्योम। पूर्वभागे यास्तिमिरप्रवृत्तयस्तमः प्रसारस्ताभिः कृत्वा। एकत एकत्र भागे व्यक्तः पङ्को यत्र तदिव जातंसत्। किंचिच्छेषवदीषज्जलशेषि सर इव भाति। अस्तंगच्छदर्कात्पातपे किंचिज्जलशेषोत्प्रेक्षणपूर्वक उपमालङ्कारः॥ ३७॥

आविशद्भि[2]रुटजाङ्गणं मृगैर्मूलसेकसरसैश्च वृक्षकैः।
आश्रमः प्रविशदग्न्यधेनवो[3] बिभ्रति श्रियमुदीरिताग्नयः॥ ३८॥

मल्लि०—आविशद्भिरिति। उटजाङ्गणं पर्णशालाङ्गणमाविशद्भिः। प्रविशद्भिरित्यर्थः। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः। उपान्वध्याङ्वस इति कर्मत्वम्। मृगैः। तथामूलानां सेकेन सेवनेन सरसैः सद्रवैर्वृक्षकैश्चोपलक्षिताः। अल्पार्थे कप्रत्ययः। प्रविशन्त्यो वनादागच्छन्त्योऽग्निहोत्रार्था धेनवः उदीरिताग्नयश्चाश्रमाः श्रियं बिभ्रति॥ ३८॥

सी०—आविशद्भिरिति। उटजस्य पर्णशालाया अङ्गणम्। 'पर्णशालोटजो स्त्रियाम्' इत्यमरः। आविशद्भिः प्रविशद्भिर्मृगैः। तथा मूलेषु यः सेकः सेचनं सरसा आर्द्रास्तथोक्तैर्वृक्षकैरल्पवृक्षैश्चोपलक्षिताः। तथा प्रविशन्त्योऽग्र्याः श्रेष्ठा धेनवो येषु। तथोदीरिता उद्दीपिताः। सायंहोमार्थमिति भावः। अग्नयो गार्हपत्यादयो येषु तथोक्ता आश्रमा ऋषीणां वासस्थानानि। श्रियं बिभ्रति। शोभन्त इत्यर्थः॥ ३८॥

---

१. लग्नपङ्कम्. २. उटजाङ्गणे. ३. अग्निधेनवः.

बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।
षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातु[1]मन्तरम् ।। ३९ ।।

मल्लि०—बद्धकोशमिति । बद्धकोशमपि । मुकुलितमपीत्यर्थः । कुशेशयं कर्तृ । 'शतपत्रं कुशेशयम्' इत्यमरः । वसतिं ग्रहीष्यते । स्थितिं करिष्यत इत्यर्थः । लृटः सद्वा इति शतृप्रत्ययः षट्पदाय प्रीतिपूर्वमन्तरमवकाशं दातुमिव क्षणं सावशेषविवरं तिष्ठति ।। ३९ ।।

सी०—बद्धेति । बद्धकोशं मुकुलितमपि कुशेशयं कमलं कर्तृ । वसतिं ग्रहीष्यते षट्पदाय भ्रमराय प्रीतिपूर्वमन्तरमवकाशम् । 'अन्तरमवकाशावधि' इत्यमरः । दातुमिवेत्युत्प्रेक्षा । क्षणं सावशेषं विवरं छिद्रं यस्य तथा तिष्ठति ।। ३९ ।।

[2]दूरमग्रपरिमेयरश्मिना [3]वारुणी दिगरुणेन भानुना ।
भातिकेसरवतेव मण्डिता बन्धुजीवतिलकेन[4] कन्यका ।। ४० ।।

मल्लि०—दूरलग्नेति । वारुणी दिक्प्रतीची दूरं लग्ना अत एव परिमेया अल्पावशिष्टा रश्मयः यस्य तथोक्तेनारुणेन लोहितवर्णेन केसरवता किञ्जल्कवता बन्धुजीवं बन्धुजीवककुसुमम् । 'बन्धूको बन्धुजीवकः' इत्यमरः । तदेव तिलकं तेन मण्डिता कन्यकेव भाति ।। ४० ।।

सी०—दूरमिति । हे प्रिये, वारुणी दिक्पश्चिमदिक् । दूरमग्रे परिमेया अल्पत्वात्परिमातुं शक्या रश्मयः किरणा यस्य तादृशेनारुणेन भानुना । केसरवता किञ्जल्कवता बन्धुजीवं बन्धुजीवाख्यवृक्षपुष्पं तदेव तिलकं तेन दण्डिता कन्यकेव । भाति ।। ४० ।।

सामभिः सहचराः सहस्रशः [5]स्यन्दनाश्वहृदयंगमस्वनैः[6] ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ।। ४१ ।।

मल्लि०—सामभिरिति । किरणोष्मपायिनः किरणोष्माणं पिबन्तीति तथोक्ताः । तथाहारा इत्यर्थः । चरन्तीति चराः । पचाद्यच् । सहभूताश्चराः सहचरा बालखिल्यप्रभृतयो महर्षयोऽग्नौ परिकीर्णं तेजोस्य तत्तथोक्तम् । [ अग्निर्वादित्यः सायं प्रसवति ] इति श्रुतेः । भानुम् । हृदयं गच्छन्तीति हृदयंगमा मनोरमाः । गमेः सुपीति वक्तव्यात्खच् । स्यन्दनाश्वानां हृदयंगमाः स्वना येषां तैः सामभिः सामवेदैः सहस्रशः संस्तुवन्ति । [ सामवेदेनास्तमये गीयते ] इति श्रुतेः ।। ४१ ।।

सी०—सामभिरिति । किरणोष्मपायिनः किरणानामूष्माणमेव पिबन्तीति तथोक्ताः । सहस्रशः सहचरा वालखिल्यादय ऋषयः । अग्नौ परिकीर्णं निक्षिप्तं

---

१. उत्तरम्. २. दूरलग्न. ३. वारुणा. ४. कुसुमेन.
५. वदनैश्च स्यन्दनस्य. ६. स्वरैः.

तेजो तेन तं भानुं सूर्यम् । स्यन्दनस्य रथस्य सम्बन्धिनो येऽश्वास्तेषां हृदयंगमा मनोहराः स्वना येषां तैः सामभिः सामवेदैः संस्तुवन्ति । स्तुतिं कुर्वन्तीत्यर्थः ॥ ४१ ॥

सोऽयमानत[1]शिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः संनिधाय दिवसं महोदधौ ॥ ४२ ॥

मल्लि०—स इति । सोऽयं भानुर्दिवसं महोदधौ संनिधाय निधायेत्यर्थः दिवसस्यादर्शनादियमुत्प्रेक्षा । आनतशिरोधरैर्गगनावतरणान्नम्रकन्धरैरतएव कर्णचामरविघट्टितेक्षणैर्युगभुग्नकेसरैः कुटिलितस्कन्धरोमभिर्हयैरस्तमेति । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः ॥ ४२ ॥

सी०—सोऽयमिति । सोऽयं सूर्यो दिवसं महोदधौ संनिधाय संस्थाप्य । आनता नम्रीभूता शिरोधरा ग्रीवा येषां तैः अतएव कर्णयोश्चामरैर्विघट्टिते मुकुलिते इक्षणे येषां तैः । युगेन स्कन्धधार्यकाष्ठेन भुग्ना मृदिताः केसराः स्कन्धरोमाणि येषां तथोक्तैर्हयैरश्वैः कृत्वा । अस्तमस्ताचलमेति गच्छति । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः ॥ ४२ ॥

खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।
तत्प्रकाशयति याव[2]दुद्गतं मलिनाय खलु तावतश्च्युतम्[3] ॥ ४३॥

मल्लि०--खमिति । रवौ संस्थितेऽस्तमिते सति खं व्योम प्रसुप्तमिव निःप्रकाशत्वान्निद्रितमिव । स्थितमित्यर्थः । युज्यते चैतदित्याह । महतस्तेजस ईदृशी वक्ष्यमाणप्रकारा गतिः । स्वभाव इत्यर्थः । तां गतिमेवाह—तदिति । तन्महत्तेज उत्थितं सद्यावत् । स्थानमिति शेषः । प्रकाशयति । तावताधश्च्युतं सत् । तत्स्थानादिति शेषः । मीलनाय संकोचाय खलु भवति । यत्र स्थाने तेजस्तिष्ठति तत्प्रकाशिक इति स्थितिः । यतो गच्छति न तत्प्रकाशते । अतः सूर्यापाये खं प्रसुप्तमिवेति युक्तोत्प्रेक्षेति भावः । अस्यार्थस्य तेजोमात्रसाधारण्येऽपि महति स्फुटमिति महद्ग्रहणं कृतम् ॥ ४३ ॥

सी०—खमिति । हे प्रिये, खं व्योम रवौ संस्थितेऽस्तंगते सति प्रसुप्तमिव भवति । युक्तमेवेत्याह—महतस्तेजस ईदृशी वक्ष्यमाणा गतिरस्ति । सा केत्याह—तत्तेजः कर्तृ । उद्गतमुदितं सत् । यावत् । स्थानमित्यर्थः । प्रकाशयति । च्युतं भ्रष्टमस्तमितं तदिति यावत् । तावतः स्थानस्य मीलनाय संकोचनाय भवति खलु । यत्र तेजस्तिष्ठति तत्प्रकाशते । यतो गच्छति तत्र प्रकाशत इति भावः । उत्प्रेक्षालङ्कारः ॥ ४३ ॥

---

१. शिरोरुहैः. २. उत्थितम्. ३. तावता.

संध्ययाप्यनुगतं रवे[1]र्वपु[2]र्वन्द्यमस्तशिखरे समर्पितम् ।
येन [3]पूर्वमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ ४४ ॥

मल्लि०--संध्ययेति । संध्ययाप्यस्तशिखरेऽस्ताद्रिशृङ्गे समर्पितं निहितं वन्द्यं रवेर्वपुरनुगतमन्वगामि । असंयुतं रविमन्वगादितिभावः । युक्तं चैतदित्याह—प्राक्पूर्वमुदये तथा तेन प्रकारेण पुरस्कृताग्रतः कृता । पूजिता चेति गम्यते । प्रातः सूर्योदयात्प्रागेव संध्यागम इति हि प्रसिद्धम् । इयं संध्या तं रविमापद्यस्तसमये कथं नानुयास्यति । अनुयास्यत्येवेत्यर्थः संपदसंपदोस्तुल्यरूपमेव साधूनामिति भावः ॥ ४४ ॥

सी०—सन्ध्येति । सन्ध्ययापि कर्त्र्या अस्तशिखरे समर्पितं निहितं वन्द्यं पूज्यं रवेर्वपुर्मण्डलं कर्म । अनुगतमन्वगामि । योग्यमेवैतदित्याह—पूर्वमुदये प्रातः समये येन पुरस्कृताग्रे कृता संमानिता च । उदये प्रागेव संध्यागम इति प्रसिद्धम् । आपदि विपत्समये अस्तमय इति यावत् । तं सूर्यं कथं नानुयास्यति । अपि तु यास्यत्येवेत्यर्थः । सतीधर्म एष एवेति भावः ॥ ४४ ॥

रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति [4]संध्ययानया [5]वर्तिकाभिरिव साधु[6]मण्डिताः ॥४५॥

मल्लि०—रक्तेति । हे कुटिलकेशि ! 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीप् । अमूः पुरागताः रक्ताः पीताः कपिशाश्च रक्तपीतकपिशाः । नानावर्णा इत्यर्थः । चार्थे द्वन्द्वः । न तु वर्णो वर्णेन इति तत्पुरुषः सामानाधिकरण्याभावात् । पयोमुचां कोटयोऽग्रयः । 'स्यात्कोटिरश्वा चापाग्रे संख्याभेदप्रकर्षयोः' इति विश्वः । त्वं द्रक्ष्यसीति हेतोरनया । सांध्यवेलया । संध्ययेत्यर्थः । 'संधिवेलया' इति क्वचित्पाठः । वर्तिकाभिश्चित्रशलाकाभिः साधुर्वर्तिता उत्पादिताश्च भान्ति ॥ ४५ ॥

सी०—रक्तेति । हे कुटिलकेशि प्रिये, अमूः पुरोगताः । रक्ताश्च पीताश्च कपिशाश्च तथोक्ताः नानावर्णा इत्यर्थः । पयोमुचां कोटयोऽग्रयः । 'स्यात्कोटिरश्री चापाग्रे संख्याभेदप्रकर्षयोः' इति विश्वः । भान्ति । तास्त्वं द्रक्ष्यसीति हेतोरनया संध्यया कर्त्र्या । वर्तिकाभिश्चित्रशलाकाभिः साधु यथा तथा मण्डिता इव भूषिता किम्बित्युत्प्रेक्षा ॥ ४५ ॥

सिंहकेसरसटासु [7]भूभृतां पल्लवप्रसविषु द्रुमेषु च ।
पश्य [8]धातुशिखरेषु भानुना संविभक्तमिव सांध्यमातपम् ॥ ४६ ॥

---

१. पदम्. २. धर्मम्. ३. प्राक्तथेयम्. ४. साध्यवेलया.
५. वर्णिकाभिः. ६. वर्तिताः. ७. भूभृता. ८. धातुशिखरेषु चात्मनः, चास्तशिखरे विवस्वता, धातुशिखरेषु चात्मना.

मल्लि०—सिंहेति । सिंहानां केसराणि स्कन्धरोमाणि तान्येव सटा जटास्तासु । 'सटा जटा केसरयोः' इति विश्वः । अथवा सटाशब्देन समूहो लक्ष्यतेऽन्यथा पौनरुक्त्यात् । पल्लवप्रसविषु पल्लवर्मत्सु द्रुमेषु च तथा धातुशिखरेषु च भूभृतास्ताद्रिणात्मना स्वयमेव सविभक्तमिव स्थितं संध्यायां भवं सांध्यमातपं यस्य तथा पश्य । आरुण्यमरुणद्रव्येषु भूयिष्ठ-मुपलभ्यंत इति भावः ॥ ४६ ॥

सी०—सिंहेति । हे प्रिये, भूभृतां पर्वतानां सम्बन्धिनां सिंहानां केसराः किञ्जल्का इव याः सटाः स्कन्धकेशास्तासु । पल्लवानां प्रसवो येषु तेषु द्रुमेषु च तथा धातुयुक्तेषु शिखरेषु च भानुना संविभक्तं सम्यग्विभज्य दत्तमिव सांध्यमातपं पश्य । केशरादीनामात्मसदृशत्वात्सुहृद्भूततया सूर्योऽस्तगमनसमय आसन्नमृत्युः पुरुष आत्मधनमिव घनीभूतं तात्कालिकमातपं तेभ्यो दत्त्वाऽस्तं गच्छतीति भावः ।४६

[1]अद्रिराजतनये तपस्विनः पावनाम्बुविहिता[2]ञ्जलिक्रियाः ।
ब्रह्म गूढम[3]भिसंध्यमादृताः [4]शुद्धये विधिविदो गृणन्त्यमी ॥ ४७ ॥

मल्लि०—पार्ष्णीति । पार्ष्णयो गुल्फाधोभागास्तैर्मुक्तवसुधास्त्यक्त-भूतलाः । पादाग्रस्थिता इत्यर्थः । 'गोशृङ्गमात्रमुद्धृत्य मुक्तपार्ष्णिः क्षिपेज्जलम्' इति स्मरणात् । पावनैरम्बुभी रचिताऽञ्जलिक्रियाः । विहितार्घ्यप्रक्षेपा इत्यर्थः । विधिविदः । शास्त्रज्ञा इत्यर्थः । अमी तपस्विन आदृता आदरवन्तः । श्रद्दधाना इत्यर्थः । कर्तरि क्तः । अभिसंध्यं संध्या-मभि । 'लक्षणेनाभिप्रतीं आभिमुख्ये' इत्यव्ययीभावः । शुद्ध्यर्थं ब्रह्म गायत्रीं गूढमुपांशु गृणन्ति । 'प्रत्यगा तारकोदयात्' इति स्मरणात् ॥ ४७ ॥

सी०—अद्रीति । हे अद्रिराजतनये विधिविदस्तपस्विनोऽमी ब्राह्मणाः । अभि-संध्यं संध्यामभिव्याप्य । पावनं पवित्रं यदम्बु तेन विहिताञ्जलिक्रियाऽर्घ्यदानं यैस्तथोक्ताः । भूत्वेति शेषः । शुद्धय आत्मशुद्धिं कर्तुमादृता आदरयुक्ताश्च सन्तः । गूढं रहस्यभूतं ब्रह्म गायत्रीं गृणन्ति । जपन्तीत्यर्थः ॥ ४७ ॥

तन्मुहूर्तमनुमन्तुमर्हसि प्रस्तुताय नियमाय मामपि ।
त्वां विनोदनिपुणः सखीजनो वल्गुवादिनि विनोदयिष्यति ॥ ४८ ॥

मल्लि०—तदिति । तत्तस्मात्कारणान्मामपि प्रस्तुताय नियमाय प्रकृतसंध्याविधये मुहूर्तमनुमन्तुमर्हसि । हे वल्गुवादिनि मञ्जुभाषिणि ! विनोदनिपुणः कालाक्षेपचतुरः सखीजनस्त्वां विनोदयिष्यति । विनोदशब्दा-त्तत्करोतीति णिच् ॥ ४८ ॥

सी०—तदिति । हे वल्गुवादिनि मिष्टभाषिणि, तत्तस्मात्कारणात्प्रस्तुताय

1. पार्ष्णिमुक्तवसुधास्तमस्विनः. 2. रचिता. 3. अभिसांध्यम्. 4. सिद्धये.

सांध्याय नियमाय विधये नियमं कर्तुं मामपि मुहूर्तं क्षणमात्रमनुमन्तुं त्वं गच्छेत्य-नुमननं कर्तुमर्हसि। तथा त्वां विनोदे विनोदकरणे निपुणः कुशलः सखीजनो विनोदयिष्यति ॥ ४८ ॥

**निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा।**
**शैलराजतनया समीपगामाललाप विजया[1]महेतुकम् ॥ ४९ ॥**

**मल्लि०**—निर्विभुज्येति। ततो भर्तुर्वाचि वचनेऽवधीरणापराऽवज्ञापरा शैलराजतनया पार्वती। छाद्यतेऽनेनेति छदः 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः। दशनच्छदं निर्विभुज्य कुटिलीकृत्य समीपगां विजयां विजयाख्यां सखीमहेतुकं निर्निमित्तमाललाप। न तु रोषाद्भर्तुरुत्तरं ददावित्यर्थः ॥ ४९ ॥

**सी०**—निर्विभुज्येति। ततोऽनन्तरं शैलराजतनया पार्वती दशनच्छदमोष्ठं निर्विभुज्य वक्रीकृत्य भर्तुर्वाच्यवधीरणापरा तिरस्कृतिसक्ता। श्रुतमप्यश्रृण्वतीत्यर्थः। समीपगां विजयानाम्नीं सखीम्। अहेतुकं निष्कारणमाललाप। आलापं कृतवतीत्यर्थः ॥ ४९ ॥

**ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वं[2]मनुतस्थिवान्विधिम्।**
**पार्वतीमवचनामसूयया [3]प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥**

**मल्लि०**—ईश्वर इति। ईश्वरोऽपि दिवसात्ययोचितं सायंकालोचितं विधिं संध्यावन्दनकृत्यं मन्त्रपूर्वमनुतस्थिवाननुष्ठितवान्। तिष्ठतेः क्वसुप्रत्ययः। असूयया संध्यावन्दनजनितासूययावचनामभाषमाणां पार्वतीं पुनः प्रत्युपेत्य सस्मितमाह ॥ ५० ॥

**सी०**—ईश्वर इति। दिवसात्यये सायंकाल उचितं विधिं मन्त्रपूर्वं यथा तथानुतस्थिवान्कृतवानीश्वरोऽप्यसूयया मां त्यक्त्वा गत इत्यभिप्रायगर्भितयेर्ष्ययावचनामभाषमाणाम्। 'वच परिभाषणे' कर्तरि ल्युः। पार्वतीं प्रत्युपेत्य समीपमागत्य पुनः सस्मितं यथा तथाहोक्तवान् ॥ ५० ॥

**मुञ्च कोपमनिमित्तकोपने संध्यया [4]प्रणमितोऽस्मि [5]नान्यथा।**
**किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥**

**मल्लि०**—मुञ्चेति। हे अनिमित्तकोपनेऽकारणकोपिनि! नन्द्यादित्वात् कर्तरि ल्युः। कोपं मानं मुञ्च। सन्ध्यया प्रणमितोऽस्मि प्रणामं कारितोऽस्मि। अन्यथा प्रकारान्तरं न। धर्माभिसंधायिनं मां कामाभिसंधायिनं मा मन्यस्वेत्यर्थः। आत्मनस्तव सह धर्मं चरतीति सहधर्मचारिणं मां चक्रवाकेन समवृत्तिं तुल्यव्यवहारं न वेत्सि किम्। अनन्यसङ्गिनं वेत्स्येवेत्यर्थः ॥ ५१ ॥

---

१. सहेतुकम्. २. अनुतिष्ठवान्, ३. सोऽभ्युपेत्य. ४. प्रयमितः. ५. अन्यथा.

सी०—मुञ्चेति । हे अनिमित्तकोपनेऽकारणकोपवे, कोपं क्रोधं मुञ्च । यतोऽस्म्यहं संध्यया वन्द्या । प्रणमितो नान्यया । अहं संध्यावशं गतो नान्यवशं गतः । अतः कोपं मा कुर्वित्यर्थः । अथ च । आत्मनः सहधर्मचारिणं माम् । संध्यां कर्तुं गच्छन्तमिति शेषः । चक्रवाकेन समा वृत्तिर्यस्य तं किं न वेत्सि । इदानीमुभयोः प्रियाविरहखिन्नत्वादिति भावः ।। ५१ ।।

प्रणामकारणमाह—

**निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु पूर्वं[1]मुज्झिता ।**
**सेयमस्तमुदयं च [2]सेवते तेन मानिनि ममात्र गौरवम् ।। ५२ ।।**

मल्लि०—निर्मितेष्विति । हे सुतनु सुगात्रि ! पूर्वं स्वयं भवतीति स्वयंभूश्चतुराननः । 'भूवः संज्ञान्तरयोः' इति क्विप् । मयूरव्यंसकादित्वात्समासः । तेन पितृष्वग्निष्वात्तादिषु निर्मितेषु सत्सु या तनुरुज्झिता सेयं तनुरस्तमस्तमयकाल उदयमुपयकाले । अव्ययमेतत् । सेव्यते पूज्यते च । संध्यारूपेणेति शेषः । हे मानिनि ! अविमृश्यकारिणीति भावः । तेन ब्रह्मतनुत्वेन हेतुना ममात्र संध्यायां गौरवमादरः । तदेतदुक्तं भविष्यपुराणे—( पितामहः पितॄन्सृष्ट्वा मूर्ति तामुत्ससर्ज ह । प्रातः सायं समागत्य संध्यारूपेण पूज्यते । एतां संध्यां यतात्मानो ये तु दीर्घामुपासते । दीर्घायुषो भविष्यन्ति नीरुजः पाण्डुनन्दन । ) इति ।। ५२ ।।

सी०—निर्मितेष्विति । हे सुतनु, स्वयंभुवा ब्रह्मणा निर्मितेषु कल्पितेषु पितृषु तनुः सूक्ष्मा या संध्या पूर्वमुज्जिता सेयं संध्यास्तमुदयं च सेवते । तेन कारणेन । हे मानिनि, ममात्र गौरवमादरः । अस्तीत्यर्थः ।। ५२ ।।

इत्थं देव्याः कोपमपनीय धातुसंध्यादिवर्णनं करोति—

**तामिमां तिमिर[3]वृद्धिपीडितां [4]शैलराजतनयेऽधुना स्थिताम् ।**
**एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ।। ५३ ।।**

मल्लि०—तामिति । संप्रति तिमिरवृत्तिपीडितां तमोवृत्त्युपरुद्धामतएव भूमौ लग्नमिव स्थितां तामिमां संध्यामेकत एकत्र तटतमालमालिनीं तीरतमालतरुपङ्क्तिमतीम् । व्रीह्यादित्वादिनिः । धातुरसनिम्नगां धातुद्रवनदीमिव पश्य ।। ५३ ।।

सी०—तामिति । हे शैलराजतनये प्रिये, तामिमां संध्यामधुनैकतः पूर्वत्र तिमिरवृद्धिपीडितामतएव तटे तमालानां माला यस्यास्तथोक्तां धातूनां गैरिकादीनां रसस्य निम्नगां नदीमिव स्थितां पश्य । उपमालंकारः । मालिनीत्यत्र 'व्रीह्यादिभ्यश्च' इतीनिः ।। ५३ ।।

---

१. उत्थिता, २. सेव्यते, ३. वृत्ति, ४. भूमिलग्नमिव संप्रति स्थिताम्, भूमिलग्नमिव संप्रतिष्ठिताम्.

**सांध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।**
**संपरायवसुधासशोणितं मण्डलाग्रमिव तिर्यगुज्झितम्[1] ॥ ५४ ॥**

मल्लि०—सांध्यमिति । अपरा दिक्प्रतीची । अस्तमिति मकारान्तमव्ययम् तस्येतशब्देन समासः । अस्तमितशेषमस्तंगतावशिष्ट मत एव रक्ता रेखाकृतिर्यस्य तं संध्यायां भवं सांध्यमातपं संपरायवसुधा युद्धभूमिः । 'समरे संपरायः स्यात्' इति विश्वः । तिर्यगुत्थितं तिर्यक्फलितं सशोणितं मण्डलाग्रं कृपाणमिव बिभर्ति । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः ॥ ५४ ॥

सी०—सांध्यमिति । अपरा प्रतीची दिक् । अस्तमितं शेषं च सांध्यम् । तथा रक्तलेखा पङ्क्तिर्यस्य । तथा सांपराया सांग्रामिकी या वसुधा तत्र सशोणितं सरक्तमत एव तिर्यगुज्झितं त्यक्तं मण्डलस्याग्रमिव स्थितमातपं बिभर्ति ॥ ५४ ॥

**यामिनीदिवससंधिसंभवे तेजसि व्यवहिते सुमेरुणा ।**
**एतदन्धतमसं निरङ्कुशं[2] दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥**

मल्लि०—यामिनीति । यामिनीदिवसयोः संधिः । संध्या तत्र संभवे तेजसि संध्यारागे सुमेरुणा व्यवहिते सति हे दीर्घनयने ! एतदन्धतमसम् । 'अवसमन्धेभ्यस्तमसः' इति समासान्तः । दिक्षु निरर्गलं विजृम्भते ॥५५॥

सी०—यामिनीति । हे दीर्घनयने प्रिये, यामिनीदिवसयोः संधौ संध्यायां संभवति तथोक्ते सांध्ये तेजसि सुमेरुणा व्यवहितेऽन्तर्हिते सति निरङ्कुशं निरर्गलमेतत्पुरोवर्त्यन्धतमसं गाढं तमो दिक्षु विजृम्भते प्रसरति । संध्यापि विलीनेत्यर्थः ॥ ५५ ॥

**नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।**
**लोक एष तिमिरौघवेष्टितो[3] गर्भवास इव वर्तते निशि ॥ ५६ ॥**

मल्लि०—नेति । ऊर्ध्वमुपरीक्षणगतिर्दृष्टिप्रसारो नास्ति । 'अधोऽपि च न । अभितः पार्श्वयोश्च न । पुरतोऽग्रे च न । पृष्ठतः पश्चादपि न । ईक्षणगतिरिति सर्वत्र संबध्यते । तथाप्येष लोको निशि तिमिरमेवोल्वं जरायुः । 'गर्भाशयो जरायुः स्यात्' इत्यमरः । तेन वेष्टितः आवृत्तः सन् । गर्भ एव वासो वसतिस्तत्र गर्भवासे वर्तते । इवेत्युत्प्रेक्षा ॥ ५६ ॥

सी०—नोर्ध्वमिति । निशि तिमिरौघेण वेष्टित एष लोको गर्भवास इव वर्तते । गर्भस्थित इव प्रतिभासमानत्वादिति भावः । यत ईक्षणानां लोकनेत्राणां गतिः प्रसर ऊर्ध्वं न । तथाधोऽपि न । तथाभितो वामदक्षिणोऽपि न । तथा पुरतो न । पृष्ठतश्च न । गर्भस्थितवज्जनैः कुत्रापि नावलोक्यत इत्यर्थः । ततो निशावृत्तौ गर्भवृत्तित्वोत्प्रेक्षा ॥ ५६ ॥

---

१. उत्थितम्, २. निरर्गलम्, ३. तिमिरोल्ब,

शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां [1]हृतान्तरम् ॥ ५७ ॥

मल्लि०—शुद्धमिति । शुद्धं स्वच्छमाविलं मलिनमवस्थितं स्थावरं चलं जंगमं वक्रं कुटिलमृजोर्भाव आर्जवं तदेव गुणस्तेनान्वितं च यद्वस्तुजातम् । तदिति यत्तदोर्नित्यसंबन्धाल्लभ्यते । तत्सर्वमेव तमसा समीकृतं । दुर्लक्ष्यविशेषं कृतम् । तथाहि । हतमन्तरं विशेषो येन तद्धतान्तरमसतामसाधूनां महत्त्वं वृद्धि धिक् । धिक्शब्दयोगाद्द्वितीया । समत्वेन परगतिविशेषतिरस्करणमसतां स्वभाव इति सुप्रसिद्धम् । तमसोऽपि तथा महत्त्वं धिगित्यर्थः ॥ ५७ ॥

सी०—शुद्धमिति । शुद्धं निर्मलमाविलं मलिनमवस्थितं स्थिरं चलं चरिष्णु वक्रं कुटिलमार्जवगुणेनार्जवगुणेनान्वितं सरलं च यत् । तत्सर्वमेव तमसा समीकृतम् । तमोव्याप्त्या पृथग्भासमानत्वादिति भावः । तथाहि । असतां कादाचित्कमपि महत्त्वं धिक् । यतो हृतान्तर समीकृतसदसद्गुणम् । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

नून[2]मुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पूर्वदिङ्मुखं[3] कैतकैरिव रजोभिराहतम्[4] ॥ ५८ ॥

मल्लि०—नूनमिति । यज्वानो विधिनेष्टवन्तः । 'यज्वा तु विधिनेष्टवान्' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । तेषां पतिः प्रियः । दर्शपूर्णमासादियागप्रवृत्तिहेतुत्वादिति भाव. । शार्वरस्य शर्वर्यां भवस्य तमसो निषिद्धये निरासाय नूनमुन्नमत्युदेति । कुतः । हे पुण्डरीकमुखि ! पूर्वस्य दिशो मुखं पुरोभागः पूर्वदिङ्मुखं केतक्या इमानि कैतकानि तै रजोभिः परागैरावृतमिव । दृश्यत इति शेषः । अतो नूनमुदेति चन्द्र इति संबन्धः ॥ ५८ ॥

सी०—नूनमिति । हे पुण्डरीकमुखि कमलमुखि प्रिये, नूनं यज्वनां द्विजानां पतिश्चन्द्रः शर्वरस्य शर्वरीसम्बन्धिनस्तमसो निषिद्धये निवृत्तय उन्नमत्युदेति । यतएव कैतकैः केतकसम्बन्धिनी रजोभिरिवाहतं व्याप्तं पूर्वदिशो मुखम् । पश्येति शेषः ।५८।

मन्दरान्तरितमूर्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठतः ॥ ५९ ॥

मल्लि०—मन्दरेति । सतारका निशा मन्दरान्तरितमूर्तिना मन्दराद्रिव्यवहितमण्डलेन शशभृता चन्द्रेण पृष्ठतः पश्चाद्भागे वचनानि श्रोष्यता

---

१. हतान्तरम्. २. उन्नयति. ३. पश्य दिङ्मुखम्, दीङ्क्षखं यथा.
४. आवृतम्,

श्चोतुं स्थितेनेत्यर्थः । मया प्रियसखीसमागता प्रियसखीभिरावृता त्वमिव लक्ष्यते ॥ ५९ ॥

सी०—मन्दरेति । सतारका सनक्षत्रा निशा रात्रिर्मन्दरेण गिरिणान्तरिता मूर्तिर्यस्य तेन शशभूता चन्द्रेण प्रियसखीभिः समागता मिलिता त्वं पृष्ठतः स्थित्वा वचनादि श्रोष्यता मयेव लक्ष्यते । उपमालंकारः ॥ ५९ ॥

रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनु चन्द्रिकास्मितम् ।
एतदुद्गिरति [1]चन्द्रमण्डलं दिग्रहस्यमिव [2]रात्रिनोदितम् ॥ ६० ॥

मल्लि०—रुद्धेति । दिक्पूर्वदिक् । नायिका ध्वन्यते । आ दिनक्षयादा सायं रुद्धं निर्गमनं निःसरणं यस्य तत्तथोक्तम् । अन्यत्र बहिरप्रकाशित-मित्यर्थः । तनुचन्द्रिकास्मितमिव तनुचन्द्रिकास्मितं पूर्वदृष्टं यस्मात्तत्-थोक्तम् । एतच्चन्द्रमण्डलं नर्म रहस्यं गोप्यार्थमिव रात्रिचोदिता । रात्र्या सख्येव प्रेरिता सतीत्यर्थः उद्गिरति प्रकाशयति । यथा काचिदासायं मनस्विनी गूहितमभिलाषं प्रदोषे सख्या मह्यं ब्रूहीति निर्बन्धात्पृष्टा सती प्रकटयति तद्वदित्यर्थः ॥ ६० ॥

सी०—रुद्धमिति । आ दिनक्षयाद्दिनक्षयं मर्यादीकृत्य रुद्धनिर्गमनं रुद्धोदयम् । अथ च । पूर्वस्या दृष्टा तनुर्यस्य । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पूर्वाशब्दस्य पुंवद्भावः । एतच्चन्द्रमण्डलं कर्तृ । रात्र्या नोदितं कथयितुं प्रेरितं सत् । चन्द्रिकैव स्मितं यस्मिन्कर्मणि यथा तथा दिशः पूर्वस्या रहस्यमुद्गिरतीव वमतीव । यथा सेर्ष्या काचित्केनचिद्द्वारा सपत्नीरहस्यं कथयति तथा रात्रिरूपा स्त्री दिग्रूपायाः स्त्रियो रहस्यं तदवयवप्रदर्शनं प्रकटयति त्वं पश्येत्यभिप्रायः । उत्प्रेक्षा-लंकारः ॥ ६० ॥

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
[3]विप्रकृष्टविवरं हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥

मल्लि०—पश्येति । पक्वफलिनीफलत्विषोदयरागाद्बिम्बाभ्यां प्रति-बिम्बाभ्यां लाञ्छिते चिह्निते वियत्सरोम्भश्च येन तथोक्तेन हिमांशुना विप्रकृष्टं विवरमन्तरालं यस्य तत्तथोक्तम् । अतिदूरस्थमित्यर्थः । चक्र-वाकमिथुनं विडम्ब्यतेऽनुक्रियते पश्य । रात्रौ वियति सरोजले चेन्दो-र्बिम्बप्रतिबिम्बौ विरहाद्दूरवर्तिनौ चक्रवाकाविव दृश्येते इत्यर्थः ॥ ६१ ॥

सी०—पश्येति । पक्वा या फलिनी तस्याः फलं तस्य त्विडिव त्विड् यस्य । तथा बिम्बेन लाञ्छितं योजितं वियत्सरोऽम्भश्च येन । उभयत्रापि दृश्यमानेत्यर्थः ।

---

१. चन्द्रमण्डलम्. २. रात्रिचोदितं. ३. विप्रकृष्टविधुरम्, विप्रकृष्टविरहम्; विप्रकृत्तविवरम्.

हिमांशुना चन्द्रेण कर्त्रा। चक्रवाकयोर्मिथुनं तीरस्थं बिडम्बयत प्रतार्यते। यतो विप्रकृष्टं न जातं विवरमन्तरमुभयोस्तारतम्यं यस्य। त्वं पश्य। सरः प्रतिबिम्बत-चन्द्रमण्डलं फलिनीफलभ्रान्त्या जिघृक्षुतापूर्वकमुद्दिश्य गच्छन्मिथुनं वस्तुतस्तु तत्र फलिनी ललामाभावान्न्यस्तशस्त्रेण भूयत इति भावः। 'फलिन्यग्निशिखाया च फलिन्याम्' इति मेदिनी ॥ ६१ ॥

[1]शक्यमोषधिपतेर्न[2]वोदया कर्णपूररचनाकृते [3]तव।
अप्रगल्भयवसूचि[4]कोमलाश्छेत्तुमग्रनखसंपुटैः [5]कराः ॥ ६२ ॥

मल्लि०—शक्यमिति। नवोदयाः सद्य उत्पादिता अप्रगल्भयव-सूचिकोमला अकठोरयवाङ्कुरसुकुमारा ओषधिपतेरिन्दोः करास्तव कर्णपूररचनाकृते कर्णावतंसनिर्माणक्रियायां। संपदादित्वाद्भावे क्विप्। अग्रनखसंपुटैर्नखाग्रसंभेदैश्छेत्तुं शक्यम्। शक्या इत्यर्थः। 'शकिसहोश्च'। इति कर्मणि यत्प्रत्ययः। शक्यमिति विपरीतलिङ्गवचनस्यापि सामान्यो-पक्रमात्कर्मभिधायकत्वम्। पश्चात्कर्मविशेषाकाङ्क्षायां करा इति निर्देशो न विरुध्यते। यथाह वामनः—'शक्यमिति रूपं लिङ्गवचनस्यापि सामान्योपक्रमत्वादिति। अत्र प्रमाणम्–शक्यं स्वमांसेनापि क्षुत्प्रतिहन्तु-मिति भाष्यकारप्रयोगः, इति ॥ ६२ ॥

सी०—शक्येति। हे प्रिये, नव उदयो येषाम्। तथाप्रगल्भा नूतना ये यवास्तेषां सूचयोऽङ्कुरास्तद्वत्कोमलाः। ओषधीनां पत्युश्चन्द्रस्य कराः किरणाः कर्णपूरस्य रचनाकृते रचनायै तवाग्राणि ये नखसंपुटास्तैः। तेषामतितैक्ष्ण्यादिति भावः। छेत्तुं द्विधाकर्तुं शक्यम्। शक्तैर्भूयत इत्यर्थः। शक्नोतेः 'ऋहलोः' इति भावे ण्यत्। यवाङ्कुरवत्कोमलाश्चन्द्रकरानुत्तार्य त्वया कर्णपूरं कर्तुमुत्साहः क्रियतामिति भावः ॥ ६२ ॥

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥

मल्लि०—अङ्गुलीभिरिति। शशी चन्द्रमाः। नायकस्तु प्रतीयते। अङ्गुलीभिः केशसंचयमिव मरीचिभिस्तिमिरं संनिगृह्य गृहीत्वा। सरोजे लोचने इवेत्युपमितिसमासोऽङ्गुलीभिरिवेत्युपमायास्तत्साधकत्वात्। कुड्मलीकृते सरोजलोचने यस्य तत्तथोक्तं रजन्या मुखं प्रारम्भः वदनं चेति गम्यते। चुम्बतीव। अत्रार्थापत्त्यातिशयोक्तिरलंकार उत्प्रेक्षासङ्कर-श्चेति ॥ ६३ ॥

सी०—अङ्गुलीभिरिति। शशी चन्द्रः। कुडमलीकृते मीलिते सरोजे एव

---

१. शक्यः २. नवोदयः ३. नवा. ४. कोमलः. ५. करः.

लोचने यस्य तथोक्तं रजन्या मुखं वदनम् अङ्गुलीभिरिव मरीचिभिः किरणैः केशसंचयमिव तिमिरं तमः संनिगृह्य हठाद्गृहीत्वा चुम्बतीव। अन्योऽपि। कश्चिच्चुम्बन्केशसंचयं संनिगृह्णाति। चुम्बनसमये केशसंनिग्रहे यः कोऽपि रसोद्रेकः स तद्वद्यकेवद्य इत्यर्थः। समासोक्तिरलंकारः॥ ६३॥

पश्य पार्वति नवेन्दुरश्मिभि[1]र्भिन्नसान्द्रतिमिरं नभस्तलम्।
लक्ष्यते द्विरदभोगदूषितं [2]सम्प्रसादमिव मानसं सरः॥ ६४॥

मल्लि०—पश्येति। हे पार्वति! नवेन्दुरश्मिभिः सामिभिन्नतिमिरमर्धनिरस्तध्वान्तं नभस्तलं द्विरदभोगदूषितं गजक्रीडाकलुषितं संप्रसीदत्प्रसादं गच्छन्मानसं मानसाख्यं सर इव लक्ष्यते पश्य॥ ६४॥

सी०—पश्येति। हे पार्वती, नवस्येन्दो रश्मिभिर्भिन्नं सान्द्रं सघनं तिमिरं यस्य तन्नभस्तलं द्विरेदभोगेन दूषितं मलिनं प्राक्पुनश्च कालान्तरेण सप्रसादं निर्मलमानसं सर इव लक्ष्यते। त्वं पश्य। जलस्य नीलत्वादिति भावः॥ ६४॥

रक्तभावमपहाय चन्द्रमा जात [3]एष परिशुद्धमण्डलः।
विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया॥ ६५॥

मल्लि०—रक्तभावमिति। एष चन्द्रमा रक्तभावं रक्तत्वमुदयरागमपहाय परिशुद्धमण्डलः शुद्धबिम्बो निष्कण्टको जातः। तथाहि। निर्मलप्रकृतिषु स्वच्छभावेषु शुद्धसचिवसंपन्नेषु च कालदोषेण जाताकालदोषजा विक्रिया विकारः स्थिरोदया स्थायिनी न भवति खलु। चन्द्रोऽपि स्वभावनिर्मल इति। यथा कश्चिद्राजा कुतश्चिन्निमित्ताद्विरक्तमण्डलः पश्चात्प्रतिकृतशुद्धया स्वस्थमण्डलो भवति तद्वदिति भावः। तत्र प्रथमार्थे समासोक्तिरलङ्कारस्तस्यार्थान्तरन्यासेनाङ्गाङ्गिभावेन सङ्करः॥ ६५॥

सी०—रक्तभावमिति। हे प्रिये, एष चन्द्रमा रक्तभावं रक्तिमानमपहाय मुक्त्वा परिशुद्धं विशदं मण्डलं यस्य तथोक्तो जातः। तथाहि। निर्मलप्रकृतिषु वस्तुषु कालदोषेण जाता विक्रिया विकारः स्थिर उदय उत्पत्तिर्यस्यास्तादृशी न भवति खलु सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः॥ ६५॥

उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः।
नूनमात्मसदृशी प्रकल्पिता वेधसा हि [4]गुणदोषयोर्गतिः॥ ६६॥

मल्लि०—उन्नतेष्वित्ति। शशिनः प्रभा चन्द्रिकोन्नतेष्वद्रिशृङ्गादिषु स्थिता। निशातमस्तु निम्नसंश्रयपरं गर्तादिनीचस्थानप्रवणम्। तथाहि। वेधसा गुणदोषयोरात्मसदृशी स्वभावानुरूपा गतिः प्रवृत्तिः प्रकल्पितैव ननु। तेजस्विन उन्नमन्ति मलिनास्तु नीचन्तीति भावः॥ ६६॥

---

१. भग्नसान्द्र, सामिभिन्न, संविभिन्न. २. संप्रसदित्. ३. एव. ४. इह एवः.

सी०—उन्नतेष्विति । हे प्रिये, शशिनः प्रभा चन्द्रिकोन्नतेषु स्थलेषु स्थिता वर्तते । तथा निशातमः कर्तृ । निम्नेषु नीचेषु संश्रयो यस्य तथोक्तं वर्तते । तथाहि गुणदोषयोर्गतिर्वेधसा विधिना । आत्मना नीचेनोच्चेन च सदृशी प्रकल्पिता रचितः हि नूनम् । नीचश्च एव भवति । उच्चात्मा उच्चस्थ एवेत्यर्थः ॥ ६६ ॥

चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥

मल्लि०—चन्द्रपादेति । गिरिर्हिमाद्रिश्चन्द्रपादैरिन्दुकिरणैर्जनितप्रसरैश्चद्रकान्तमणीनां जलबिन्दुभिः करणैर्मेखलातरुषु निद्रितान्संजातनिद्रान् । तारकादित्वादितच् । अमूञ्शिखण्डिनो मयूरानसमयेऽकाले बोधयति । इन्दुकिरणसंपर्कादुपरिचन्द्रमणिस्पन्देष्वघोवृक्षेशयाः शिखण्डिनो वृष्टिभयाज्जाग्रतीत्यर्थः । शिखण्डिग्रहणमितरशकुन्तानां कुलालनिलयत्वादिति भावः ॥ ६७ ॥

सी०—चन्द्रेति । गिरिर्मेखलासु नितम्बेषु ये तरवस्तेषु निद्रितान्सुप्तानमूञ्शिखण्डिनो मयूरान् चन्द्रस्य पादैर्जनिता प्रवृत्तिर्निगमनं येषां तैश्चन्द्रकान्तस्य ये जलबिन्दवस्तैः कृत्वासमये बोधयति जागरयति । 'मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः' इति मेदिनी ॥ ६७ ॥

कल्पवृक्षशिखरेषु संप्रति प्रस्फुरद्भिरिव[1] पश्य सुन्दरि ! ।
हारयष्टि[2]रशनामिवांशुभिः कर्तुमागतकुतूहलः शशी ॥ ६८ ॥

मल्लि०—कल्पवृक्षेति । हे अविकल्पेनाविवादेन सुन्दरि अविकल्पसुन्दरि ! शशी संप्रति कल्पवृक्षाणां शिखरेष्वग्रेषु प्रस्फुरद्भिरंशुभिः । करस्थानीयैरिति भावः । हारयष्टिरशनां कल्पतरुलम्बिहारपरिगणनां कर्तुमुद्यतकुतूहल इवोत्पन्नकौतुकः किम् । इत्युत्प्रेक्षा ॥ ६८ ॥

सी०—कल्पेति । हे सुन्दरि; संप्रति शशी चन्द्रः प्रस्फुरद्भिरंशुभिः कृत्वा हारयष्टिरचना कर्तुमिवागतं कुतूहलं यस्य तथोक्तः सन् । कल्पवृक्षयुक्तेषु शिखरेषु । वर्तत इति शेषः । इव किम् । त्वं पश्य । यथा कश्चिन्नीलपट्टसूत्रेण मुक्ताहारं विरलतया योजयति तथायं चन्द्रोऽपि वृक्षपत्रान्तरालगतस्वीयकिरणमुक्ताफलैर्वृक्षपत्रच्छायरूपिणा नीलेन पट्टसूत्रेण च हारयष्टिं कर्तुमिवेहागत इति भावः ॥ ६८ ॥

उन्नतावनत[3]भाववत्तया चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिता भाति भूतिरिव मत्तहस्तिनः[4] ॥ ६९ ॥

मल्लि०—उन्नतेति । गिरेरुन्नतावनतभाववत्तया निम्नोन्नतप्रदेशव-

१. अविकल्पसुन्दरि, इव शंभुसुन्दरि. २. गणनाम्. ३. उद्यत, भागवत्तया. ४. दन्तिनः.

त्वेन हेतुना सतिमिरा तिमिरमिश्रा। समोन्नतेषु तमसोऽनवकाशादिति भावः। इयं चन्द्रिका बहुविधाभिर्भक्तिभी रचनाभिरर्पिता विन्यस्ता मत्तदन्तिनो भूतिर्भसितमिवाभाति। 'भूतिर्मातङ्गश्रृङ्गारे' इति विश्वः। तत्र भक्तिसहितानि गजाङ्गान्येव तिमिरभागोपमामित्यनुसंधेयम् ॥ ६९ ॥

सी०--उन्नतेति। हे प्रिये, गिरेरुच्चतावनतभाववतया सतिमिरेयं चन्द्रिका बहुविधाभिर्भक्तिभी रचनाभिरर्पिता मत्तहस्तिनो भूतिः संपदिव भाति। उपमालंकारः ॥ ६९ ॥

एतदु[1]च्छ्वसितपीतमैन्दवं वोढु[2]मक्षयमिव प्रभारसम्।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमानिबन्धनात् ॥ ७० ॥

मल्लि०—एतदिति। एतत्कुमुदं कैरवं कर्तृ उच्छ्वसितेन पीतमुच्छ्वसितपीतम्। अतितृष्णयोच्छ्वस्योच्छ्वस्य पीतमित्यर्थः। इन्दोरिदमैन्दवं प्रभा चन्द्रिका सैव रसो द्रवस्तं सोढुमक्षममिवाञ्जसा मुक्तषट्पदविरावं प्रवर्तितभृङ्गनादं यथा तथा निबन्धनाद्वा वृन्ताद्भिद्यते विकसति। कर्मकर्तरि लट्। यथा लोके कस्यचिदतिपानान्निःसहात्मन उच्चैः क्रोशत उदरं भिद्यते तथैतदिति भावः ॥ ७० ॥

सी०—एतदिति। उच्छ्वसितं यथा तथा पीतमैन्दवं चान्द्रं प्रभारसं वोढुमक्षममिवैतत्कुमुदम्। मुक्तः षट्पदानां भ्रमराणां विरावः शब्दो येन तथोक्तं सत्। अञ्जसा झटिति। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः। आ निबन्धनान्निरवशेषबन्धनाद्भिद्यते। सकर्मकाणामपि कर्माविवक्षयाकर्मकत्वात्कर्मकर्तरि लट्। अन्योऽपि बहुलमाम्रादिरसं पिबन्भिन्नोदरो भवति तद्वत् ॥ ७० ॥

पश्य कल्पतरुलम्बि शुद्धया ज्योत्स्नया जनितरूपसंशयम्।
मारुते चलति [3]चण्डिके! बलाद् व्यज्यते विपरिवृत्तमंशुकम् ॥ ७१ ॥

मल्लि०--पश्येति। शुद्धया ज्योत्स्नया जनिता रूपसंशया अंशुकं ज्योत्स्नावेति स्वरूपसंदेहो यस्य तत्तथोक्तं कल्पतरुलम्ब्यंशुकं। हे चण्डि अत्यन्तकोपने! गौरादित्वान्ङीष्। केवलं मारुते चलति सति विपरिवृत्तं चलं सद् व्यज्यते पश्य। ज्योत्स्नासच्छायत्वान्न रूपतो विविच्यते परंतु क्रिययेत्यर्थः ॥ ७१ ॥

सी०—पश्येति। हे चण्डिके, कल्पतरौ लम्बि लम्बायमानत्वेन वर्तमानं शुद्धया ज्योत्स्नया चन्द्रकान्त्या जनितो रूपस्य संशयः संदेहो यत्र। उभयोरपि शुक्लत्वादिति भावः। एतादृशमंशुकं वस्त्रं मारुते चलति सति विपरिवृत्तं सद्बलाद्व्यज्यते। व्यक्तत्वेन ज्ञायत इत्यर्थः। त्वं पश्य ॥ ७१ ॥

---

१. उच्चसितपीतम्. २. वोढुम. ३. चण्डिकेचलम्; चण्डि केवलम्

शक्यमङ्गुलिभि[1]रुत्थितैरधः शाखिनां पतितपुष्पपेशलैः[2]।
पत्त्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान्[3] ॥ ७२ ॥

मल्लि०—शक्यमिति। अङ्गुलिभिद्धृतैरुत्थितैः शाखिनामधः पतितपुष्पवत्पेशलैः कोमलैः। तथा भ्रमकरैरित्यर्थः। एभिः पत्त्रैर्जर्जरा शकलिता शशिप्रभा चन्द्रिका तस्या लवैः खण्डैः। तरुतलेषु पत्त्रान्तराललक्ष्यज्योत्स्नामण्डलैरित्यर्थः। तवालकानुत्कचयितुं बद्धुम्। 'कच दीप्तिबन्धनयोः' इति धातोस्तुमुन्प्रत्ययः। शक्यम् शक्या इत्यर्थः। शक्यमिति लिङ्गवचनस्य सामान्योपक्रमादित्याद्यनुपदमेवोक्तम् ॥ ७२ ॥

सी०—शक्यमिति। हे प्रिये, अधः पतितपुष्पवत्पेशलैः सुन्दरैः। तथाङ्गुलिभिरुत्थितैरेभिः पुरोवर्तिभिः शाखिनां संबन्धिभिः पत्रैर्जर्जरिता ये शशिनः प्रभायाः लवा अंशास्तैस्तवालकानुत्कचयितुमुद्ग्रथितुं शक्यम्। शक्येन भूयतामित्यर्थः। काचित्तव सखी पुष्पप्रतिनिधित्वेन वृक्षाधःपतितजर्जरीभूतचन्द्रकान्तिशकलैः केशानुद्ग्रथयत्विति भावः ॥ ७२ ॥

एष [4]चारुमुखि! [5]योग्यतारया युज्यते तरलबिम्बया शशी।
साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वरः ॥ ७३ ॥

मल्लि०—एष इति। हे चारुमुखि! हे उज्ज्वलानने! 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्। एष शशी, तरलबिम्बया स्फुरन्मण्डलया योगतारया। प्रत्यहं यया युज्यते सा योगतारा। नित्यनक्षत्रेणेत्यर्थः। साध्वसान्नवसंगमभयादुपगतप्रकम्पया वेपथुमत्या, नवदीक्षया नवोढाहृया कन्यया वरो वोढेव युज्यते संगच्छते। युजेर्दैवादिकत्वात्कर्तरि लट् ॥ ७३ ॥

सी०—एष इति। हे चारुमुखि, एष शशी। वरः परिणेता नवदीक्षया नवपरिणीतयात एव साध्वसाद्भयादुपगतः प्रकम्पो यस्यास्तया कन्ययेव। तरलबिम्बया चपलमण्डलया योग्यतारया सदृशतारकया युज्यते युनक्ति। त्वं पश्य ॥ ७३ ॥

पाकभिन्न[6]शरकाण्डगौरयोरुल्लसत्[7]प्रकृतिजप्रसादयोः।
रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षि! चन्द्रिका ॥ ७४ ॥

मल्लि०—पाकेति। हे चन्द्रबिम्बनिहिताक्षि! हे चन्द्रविनिहितेक्षणे! पाकभिन्नः पाकविकसितो यः शरकाण्डस्तद्वद्गौरयोः सितयोः। 'अवदातः

१. उद्धतैः. २. कोमलैः ३. अलकम्; अलकः. ४. चन्द्रमुखि,
५. पश्य तारया, योगतारया, ६. पाण्डु, ७. प्रतिकृतिप्रसन्नयोः,
प्रतिकृतिः प्रदीप्तयोः,

सितो गौरः' इत्यमरः। उल्लसन्त्या प्रतिकृत्या चन्द्रिकाप्रतिबिम्बेन प्रदीप्तयोः प्रोज्ज्वलयोस्तव गण्डलेखयोश्चन्द्रिका रोहतीव। गण्डस्थलप्रतिबिम्बसंक्रमणमूर्छिता चन्द्रिका तयोरेव प्ररूढेति प्रतीयत इत्यर्थः। ७४।

सी०—पाकेति। हे प्रिये, चन्द्रबिम्बेन निहिता स्थापिता तवाक्षिण नेत्रे या चन्द्रिका सा। पाके भिन्नो यः शरकाण्डस्तृणविशेषस्तद्वद्गौरयोः। तयोल्लसन्प्रकृतिजः स्वभावजः प्रसादः प्रसन्नता ययोस्तयोस्तव गण्डलेखयोरुपरि रोहतीव। आरोहणं करोतीवेत्युत्प्रेक्षा॥ ७४॥

अत्रान्तरे कांचिदवलोक्याह—

लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रती स्वयम्।
त्वामियं स्थितिमतीमु[1]पागता गन्धमादनवनाधिदेवता॥ ७५॥

मल्लि०—लोहितेति। लोहितेऽरुणेऽर्कमणिभाजने सूर्यकान्तपात्रेऽर्पितं कल्पवृक्षमधु कल्पतरुप्रसूतं मद्यं, स्वयं बिभ्रती गन्धमादनवनाधिदेवता स्थितिमतीमवस्थानवतीम्। इह स्ववने तिष्ठन्तीमित्यर्थः। त्वामियं प्रत्यक्षोपस्थिता प्राप्ता। स्वगृहागतां त्वां सम्भावयितुमागतेत्यर्थः॥ ७५॥

सी०—लोहितेति। लोहिता रक्ता येऽर्कमणयस्तेषां भाजनं पात्रं तत्रार्पितं स्थापितं कल्पवृक्षाणां मधु मकरन्दस्तद्बिभ्रतीयं गन्धमादनवनस्याधिदेवता स्थितिमतीं स्थिरां त्वामुद्दिश्य स्वयमुपागता। त्वं पश्य। तुभ्यं मदिरा दातुमागच्छतीत्यर्थः॥

आर्द्रकेसरसुगन्धि ते मुखं म[2]त्तरक्तनयनं स्वभावतः।
अत्र लब्धवसतिर्गुणान्तरं कि[3] विलासिनि [4]मदः करिष्यति॥ ७६॥

मल्लि०-आर्द्रेति। हे पार्वति! इदं ते स्वभावत आर्द्रकेसरसुगन्धि सरसकेसरसुगन्धि। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' इत्यनेनेकारः। मुखम्। रक्तमेव नयनम्। हे विलासिनि विलसनशीले! अत्र त्वन्मुखे लब्धवसतिर्लब्धानुप्रवेशो मधुर्मद्यं कं गुणान्तरं गुणविशेषं करिष्यति। न कंचिदित्यर्थः। केसरसौगन्ध्यादिगुणानां त्वन्मुखे स्वभावसिद्धत्वान्मधुनः फलं न पश्यामीत्यर्थः। 'अर्धर्चाः पुंसि च' इति पुंलिङ्गत्वम्। यदाहुः—मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः। अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः॥' ७६

सी०—आर्द्रेति। हे विलासिनी, अत्र लब्धा वसतिर्निवासो येन तथोक्तो मदः किं कीदृशं गुणान्तरमन्यं गुणं करिष्यति। अपि तु नेत्यर्थः। यतस्ते तव मुखं स्वभावतः स्वभावेनैवार्द्रकेसरवत्सुगन्धि। तथा मत्ते रक्ते नयने यस्य तथोक्तं चास्ति। ये ये मदगुणास्ते ते मदात्प्रागेव वर्तन्ते। अतः किमनेन मदेन कर्तव्यमिति भावः॥

1. उपस्थिताः; समागता. 2. प्राक्तरक्त, मत्तमेव. 3. कम्. 4. मधु.

मान्यभक्तिरथवा सखीजनः सेव्यतामिदमनङ्गदीपनम्[1]।
इत्युदारमभिधाय शंकरस्तामपाययत पानमम्बिकाम् ॥ ७७ ॥

मल्लि०—मान्यभक्तिरिति। अथवा सखीजनो मान्या भक्तिर्यस्य स तथोक्तः। सखीजनः स्वीकार्य इत्यर्थः। ततोऽनङ्गदीपनमिदं वक्ष्यमाणं पानं सेव्यतामित्युदारं चतुरमभिधाय शंकरस्तामम्बिकां पीयत इति पानं मद्यमपाययत पाययामास। पिवतेर्ण्यन्ताल्लुङि तङ्। पिबतः प्रत्यवसानार्थादणि कर्तुः कर्मत्वम्। पिबतेर्निगरणार्थत्वेऽपि 'न पादम्याः०" इति परस्मैपदप्रतिषेधः। ननु मान्यभक्तिरित्यत्र कथं पुंवद्भावः। "अप्रियादिषु" इति निषेधाद्भक्तिशब्दस्य प्रियादिपाठान्नैष दोषो नपुंसकपूर्वपदत्वात्। यथाह वृत्तिकारः—'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम्' इति। भोजराजस्तु—'भज्यत इति कर्मसाधनस्यैव प्रियादिपाठतया दृढभक्तिरिति न तु भजनं भक्तिरिति भावसाधनस्य। अतोऽत्र स्त्रीपूर्वपदत्वेऽपि न दोषः' इत्याह ॥ ७७ ॥

सी०—मान्यभक्तिरिति। हे प्रिये, अथवा मान्या भक्तिभावो यस्य तादृशः सखीजनोऽनङ्गस्य दीपनमिदं मधु सेव्यतामित्युदारमभिधाय शंकरस्तामम्बिकां पार्वतीं पानं मदिरामपाययत ॥ ७७ ॥

पार्वती [2]तदुपयोगसंभवां विक्रियामपि सतां मनोहराम्।
अप्रतर्क्यविधियोग[3]निर्मिता[4]माम्रतेव सहकारतां ययौ ॥ ७८ ॥

मल्लि०—पार्वतीति। [ अस्य श्लोकस्य व्याख्या नोपलब्धा ] ॥ ७८ ॥

सी०—पार्वतीति। पार्वती कर्त्री। तदुपयोगसंभवां मद्यपानजन्यां विक्रियामपि सतां मनोहराम्। आम्रताम्रत्वमप्रतर्क्यो दुर्ज्ञेयो यो विधियोगोऽनुष्ठानयोगस्तेन निर्मितां सहकारतामतिसौरभत्वमिव ययौ। प्रापेत्यर्थः। 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः। आम्रमेवानुष्ठानविशेषेण यथा सहकारं भवति तद्वद्विक्रियापि मनोहराभूदिति भावः ॥ ७८ ॥

[5]तत्क्षणं [6]विपरिवर्तितह्रियोर्नेष्यतोः[7] शयनमिद्धरागयोः।
सा बभूव [8]वशवर्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥ ७९ ॥

मल्लि०—तदिति। सुवदना पार्वती, तत्क्षणं तथैव विपरिवर्तितह्रियोर्निवर्तितलज्जयोः, शयनं तल्पं, नेष्यतोः प्रापयिष्यतोरित्थं प्रवृद्धो

---

१. दीपकम्. २. उपभोग. ३. निर्मिता. ४. नम्रता.
५. तत्क्षणे ६. विपरिवृत्तलज्जयोः. ७. वाञ्छतोः. ८. वशवर्तिका.

रागोऽनुराग आरुण्यं च ययोरिद्धरागयोः शूलिनः प्रियतमस्य मदस्य चेति द्वयोर्वशे वर्तते इति वशवर्तिन्यधीना बभूव ॥ ७९ ॥

सी०—तत्क्षणमिति। तत्क्षणं मदिरापानानन्तरसमय एव सा सुवदना पार्वती विपरिवर्तिता नष्टा ह्रीर्ययोरत एवेद्धः प्रवृद्धो रागो ययोरत एव शयनं नेष्यतोः। सुरतार्थमिति भावः। शूलिनः शिवस्य मदस्य चेत्यनयोर्द्वयोर्वशवर्तिनी वशंगता बभूव ॥ ७९ ॥

मदपारवश्यं तावदाह—

घूर्णमाननयनं [1]स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम्।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥

मल्लि०—घूर्णमानेति। ईश्वरो घूर्णमाननयनं भ्राम्यन्नेत्रं स्खलत्कथं स्खलद्वचनं स्वेदबिन्दुमत्स्वेदयुक्तमकारणस्मितमाकस्मिकहासयुक्तमुमामुखं तावत्। आतृष्णापगममित्यर्थः। आननेन मुखेन न पपौ। न चुचुम्बेत्यर्थः। किंतु चिरं चक्षुषा पपौ। तृष्णयाद्राक्षीदित्यर्थः। तस्या मदपारवश्यं दृष्ट्वा मुदं तावदन्वभूदित्यर्थः ॥ ८० ॥

सी०—घूर्णेति। घूर्णमाने नयने यत्र। तथा स्खलन्ती कथा वाग्यत्र। तथा स्वेदस्य बिन्दवो यत्र। मदरूपिणा कारणेन स्मितं मन्दहासश्च यत्र। तदुमायाः पार्वत्या मुखमीश्वरः शिवस्तावत्प्रथमं चिरं चक्षुषा पपौ सादरं ददर्श। आननेन तु, न पपावित्यर्थः ॥ ८० ॥

संप्रति प्रियवशंवदत्वमाह—

तां विलम्बितपनीयमेखलामुद्वहञ्जघनभारदुर्वहाम्।
ध्यान[2]संभृतविभूतिरीश्वरः प्राविशन्मणिशिलागृहं [3]रहः ॥ ८१ ॥

मल्लि०—तामिति। हरो विलम्बितपनीयमेखलां विस्रंसिहेमरसनां जघनभारेण दुर्वहां तां पार्वतीमुद्वहन्ध्यानसंभृतया संकल्पमात्रसिद्धया विभूत्या भोगसाधनेन संभृतं संपूर्णं मणिशिलागृहं प्राविशत्। रिरंसुरिति भावः ॥ ८१ ॥

सी०—तामिति। ध्यानेन संभृता संपादिता विभूतिरुपभोगसाधसंपत्तिर्येन स ईश्वरो विलम्बिनी तपनीयस्य सुवर्णस्य मेखला काञ्ची यस्यास्ताम्। तथा जनभारेण दुर्वहा दुःखेन वोढुं शक्याम्। वहतेः। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु' इति खलु। ता पार्वतीमुद्वहन्सन्। रह एकान्ते मणिशिलाना गृहं प्राविशत् ॥ ८१ ॥

---

१. स्खलद्वच; स्खलत्कचम्. २. संमृतिविभूतिरीश्वरः, संमृतिविभूतिशोभितम्; संमृतिविभूतिगोचरम्. ३. हरेः.

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ॥

मल्लि०—तत्रेति । तत्र मणिभवने हंसवद्धवल उत्तरच्छदः प्रच्छदपटो यस्य तत्तथोक्तं जाह्नवीपुलिनमिव चारुदर्शनं शयनं शय्यां रोहिणीपतिश्चन्द्रः, शरदि भवं शारदमभ्रं मेघमिव । शरद्ग्रहणं धावल्यार्थम् । प्रियसखः सन् । प्रियया सहेत्यर्थः । अध्यशेत शयितवान् । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् । रोहिणीग्रहणसामर्थ्यादिन्दोरप्यभ्रारोहणे रोहिणीसाहित्यमनुसंधेयम् ॥ ८२ ॥

सी०—तत्रेति । तत्र मणिशिलागृहं स हरो हंस इव धवल उत्तरच्छदः शयनोपरितनं वस्त्रं यस्य । तथा जाह्नवीपुलिनवच्चारु दर्शनं यस्य तच्छयनं पल्यङ्कम् । रोहिणीपतिश्चन्द्रः शारदं शरत्कालिकमभ्रं मेघमिव । प्रियासखः सन् । पार्वतीसहित इत्यर्थः । अध्यशेताशिश्रियत् । 'अधिशीङ्–' इति कर्मत्वम् ॥ ८२ ॥

[1]क्लिष्टकेशमवलुप्तचन्दनं [2]व्यत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभून्न[3] तृप्तये ॥ ८३ ॥

मल्लि०—क्लिष्टेति । अदयैर्निर्दयैः कचग्रहैः केशकर्षणैः क्लिष्टचन्द्रं पीडितहरचन्द्रमुत्पथमुन्मर्यादमर्पिता नखा यस्मिंस्तत्समत्सरमन्योन्यविजिगीषापूर्वकं छिदुराः स्वयमेव छिद्यमाना मेखलागुणा यस्मिंस्तत्तथोक्तम् । 'विदिभिदिच्छिदेः कुरच्" इति कुरच्प्रत्ययः । 'कर्मकर्तरि' इति काशिका । पार्वतीरतं तस्येश्वरस्य तृप्तये नाभूदिति भावः ॥ ८३ ॥

सी०—क्लिष्टेति । क्लिष्टा विश्लथाः केशा यत्र । अवलुप्तं चन्दनं यत्र । व्यत्ययेनास्थानप्रयोज्यत्वेनार्पिता नखा यत्र । तथा समत्सरं सप्रणयकलहम् । तथा छिदुरो भङ्गशीलो मेखलागुणः काञ्चीसूत्रं यत्र । एतादृशं तत्पार्वतीरतं तस्य शिवस्य तृप्तये नाभूत् । कामोत्सवस्योद्वेलत्वादिति भावः ॥ ८३ ॥

केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।
तेन [4]तत्प्रतिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

मल्लि०—केवलमिति । प्रियतमादयालुना केवलम् । प्रियतमायां दययैव तस्येश्वरस्य सौकुमार्यादनवरतं सुरतासहिष्णुत्वात् । न तु स्वयं तृप्त्येत्यर्थः । तत्परिगृहीतवक्षसा तया पार्वत्याश्लिष्टवक्षसा तेनेश्वरेण ज्योतिषां नक्षत्राणां पङ्क्तिष्ववनतासु सतीषु । पश्चिमायामित्यर्थः । नेत्रमीलनकुतूहलं कृतम् । निद्रा स्वीकृतेत्यर्थः ॥ ८४ ॥

---

१. क्लिष्टचन्द्रमदयैः कचग्रहैः. २. व्युत्पथार्पित; उपथार्पित. ३. अतृप्तये.
४. परिगृहीत,

सी०—केवलमिति। ज्योतिषां नक्षत्राणां पङ्क्तिष्वनतासु सतीषु। राजन्यां प्रभातकल्पायां सत्यामित्यर्थः। केवलं प्रियतमायां दयालुना। न तु क्षीणशक्तिनेत्यर्थः। तेन शिवेन तया पार्वत्या प्रतिगृहीतमालिङ्गितं वक्षो यस्य तथोक्तेन सता नेत्रमीलनस्य। निद्राया इत्यभिप्रेतोऽर्थः। कुतूहलं कृतम्। सुप्तमित्यर्थः॥ ८४॥

स व्यबुध्यत [1]बुधस्तवोचितः शातकुम्भकमलाकरैः समम्।
मूर्च्छनापरिगृहीतकैशिकैः[2] किन्नरैरुषसि[3] गीतमङ्गलः॥ ८५॥

मल्लि०—स इति। बुधस्तवोचितो विद्वत्स्तोत्रार्हः स हर उषसि प्रभाते। स्वराणामारोहक्रमो मूर्च्छना। 'क्रमयुक्ताः स्वरास्तत्र मूर्च्छना परिकीर्तिता' इति भरतः। तया मूर्च्छनया परिगृहीतकैशिकैः स्वीकृतरागविशेषैः किंनरैर्गीतमङ्गलः सन्। शातकुम्भकमलाकरैः समं कनकपद्माकरैः सह। 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्' इत्यमरः। व्यबुध्यत विबुद्धवान्। बुध्यतेर्दैवादिकात्कर्तरि लङ्। अत्र बुध्यतेर्जागरविकासयोर्बोधयोः श्लेषनिमित्तकाभेदाध्यवसायमूला सहोक्तिरलंकारः॥ ८५॥

सी०—स इति। बुधानां बुधकर्तृके स्तव उचितः स शिव उषसि प्रभाते मूर्च्छनयोच्चारणस्वरारोहावरोहेण। तदनुसारेणेत्यर्थः। परिगृहीताः कैशिका वीणातन्तवो यैस्तैः किनरैः किंपुरुषैर्गीतं मङ्गलं यस्य तथोक्तः सन्। शातकुम्भस्य सुवर्णस्य यानि कमलानि तेषामाकराः समूहास्तैः समं सह व्यबुध्यत। जजागारेत्यर्थः। 'खनि स्त्रियामाकरः स्यात्' इति कोशप्रामाण्यादाकरशब्दस्य खनिवाचकत्वे सत्यपि परिणतार्थपक्षपातेन समूहवाचकत्वमपि सोढव्यम्। दृश्यमानार्थे वाक्यस्य वक्तुमशक्यत्वात्॥ ८५॥

तौ क्षणं [4]शिथिलितोपगूहनौ दंपती [5]चलितमानसोर्मयः।
पद्मभेदपिशुनाः[6] सिषेविरे गन्धमादनवनान्तमारुताः॥ ८६॥

मल्लि०— ताविति। शिथिलितोपगूहनौ शिथिलितालिङ्गनौ। जाया च पतिश्च दंपती। जायाशब्दस्य दंभावो निपातितः तौ शिवौ रचितमानसोर्मयः। मानसे सरसि रचिततरङ्गा इत्यर्थः। पद्मभेदनिपुणाः। पद्मभेदपिशुना इति यावत्। विकाससूचका इत्यर्थः। गन्धमादनवनान्तमारुताः क्षणं सिषेविरे॥ ८६॥

सी०—ताविति। क्षणं शिथिलितं विरामगोचरीकृतमुपगूहनमाश्लेषो याभ्यां तौ दंपती स्त्रीपुंसौ गौरीहरौ कर्मभूतौ। चलिताश्चालिता मानसस्य सरस ऊर्मयस्त-

१. तया निशाक्षये, २. वशिकैः, ३. समुपगीत, ४. प्रशिथिला, ५. रचित, ६. निपुणाः,

रंगा यैः। एतेन शैत्योक्तिः। तथा पद्मानां भेदस्य प्रफुल्लतायाः पिशुनाः सूचकाः। अनेन सौगन्ध्योक्तिः। गन्धमादनवनान्तस्य मारुताः पवनाः सिषेविरे। सेवितवन्त इत्यर्थः ॥ ८६ ॥

ऊरुमूलनखमार्ग[1]राजिभिस्तत्क्षणं हृतविलोचनो हरः।
वाससः प्रशिथिलस्य [2]संयमं कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥

मल्लि०—ऊर्विति। तत्क्षणं मारुतवीजनसमय ऊरुमूले नखमार्गराजिभिर्नखपदपङ्क्तिभिः। मरुता प्रसारितवस्त्रतया प्रकाशिताभिरित्यर्थः। हृतविलोचन आकृष्टदृष्टिर्हरः प्रशिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥

सी०—ऊर्विति। ऊरुमूले या नखमार्गाणां नखक्षतानां राजयः पङ्क्तयस्ताभिः कर्त्रीभिः हृते स्वविलोकनवशीकृते विलोचने यस्य तथोक्तो हरस्तत्क्षणं प्रभातसमये प्रकर्षेण शिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमां पार्वतीमवारयद्बन्धनं मा कुर्विति निवारयांचक्रे। नखक्षतविलोकनवशंवदत्वादिति भावः ॥ ८७ ॥

स प्रजागरकषायलोचनं गाढदन्त[3]परिताडिताधरम्।
[4]आकुलालकमरंस्त रागवान्प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥

मल्लि०—स इति। रागवान्रागी स हरः प्रजागरेण कषायलोचनं रक्तनेत्रं गाढैर्दन्तक्षतैस्ताडिताधरमाकुलालकं भिन्नतिलकं प्रियामुखं प्रेक्ष्यारंस्तान्वरज्यत। तादृङ्मुखदर्शनमेव तस्योद्दीपकमित्यर्थः ॥८८॥

सी०—स इति। रागवान्स हरः प्रजागरेण रात्रिजागरेण कषाये म्लाने लोचने यत्र। तथा गाढं यथा तथा दन्तैः परिताडितोऽधरो यत्र। तथाकुला विरला अलकाः केशा यत्र। तथा भिन्नं तिलकं यत्र। एतादृशं प्रियाया मुखं प्रेक्ष्यारंस्त प्रससाद। आत्मनः कर्तृत्वादिति भावः ॥ ८८ ॥

[5]तेन भिन्नविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम्।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम् ॥८९॥

मल्लि०—तेनेति। तेन हरेण भङ्गिभिर्भङ्गैर्विषमो निम्नोन्नत उत्तरच्छदः प्रच्छदपटो यस्मिंस्तत्। मध्ये पिण्डिता पुञ्जीकृता विसूत्रमेखला छिन्नरसना यस्मिंस्तत्तथोक्तं चरणयो रागेण लाक्षारागेण लाञ्छितं चिह्नितं शयनं निशात्यये प्रभाते निर्मलेऽपि। सूर्योदये सत्यपीत्यर्थः। नोज्झितं न त्यक्तम्। अत्र देव्या सकलसुरतोपचारसंपन्नत्वं पुरुषायितं सूच्यते ॥ ८९ ॥

सी०—तेनेति। निशात्यये प्रभाते निर्मलेऽपि प्रकटेऽपि सति तेन हरेण भिन्नोऽत एव विषम उत्तरच्छद उपरितनं वस्त्रं यत्र। तथा मध्ये पिण्डिता एकत्री-

१. पङ्क्तिभिः, २. सचयम्, ३ पदताडित, ४. अपास्तचित्रकम्, ५. भङ्गि,

भूता विसूत्रा सूत्ररहिता मेखला काञ्ची यत्र। तथा चरणरागेण यावकेन लाञ्छितं रक्तीकृतं च शयनं नोज्झितं न त्यक्तम्। सुखार्णवमग्नत्वादिति भावः ॥ ८९ ॥

स [1]प्रियामुखरसं दिवानिशं हर्षवृद्धिजननं सिषेविषुः।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदनात्[2] ॥ ९० ॥

मल्लि०—स इति। स हरो हर्षवृद्धिजननं सुखातिशयकारणं प्रियामुखरसं मदिरामृतं दिवा च निशि च दिवानिशम्। द्वन्द्वैकवद्भावः। सिसेविषुः सेवितुमिच्छुः सन्। विजयानाम्नी काचिद्देव्या सखी तया निवेदितः। एतदर्थमागतेति ज्ञापितोऽपीत्यर्थः। दर्शनप्रणयिनामदृश्यतामाजगाम। दर्शनं ददावित्यर्थं ॥ ९० ॥

सी०—स इति। हर्षवृद्धेर्जननमुत्पादकं प्रियामुखरसं दिवानिशं सिषेविषुः सेवितुमिच्छति तथोक्तः स शिवो विजयया पार्वतीसख्या यन्निवेदनं स्वागतज्ञापनं तस्मात्। तद्द्वारेत्यर्थः। दर्शने प्रणयिनामभिलाषवतामप्यदृश्यतामदर्शनदातृत्वमाजगाम प्राप। सर्वं त्यक्त्वा तल्लय एव जात इति भावः ॥ ९० ॥

समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां [3]साग्रमेका निशेव।
न [4]तु सुरतमुखेभ्य[5]श्छिन्नसुष्णो बभूव
ज्वलन इव [6]समुद्रान्तर्गतस्तज्जलौघैः ॥ ९१ ॥

मल्लि०—समेति। निशीथोऽत्र निशामात्रलक्षकः। समदिवसनिशीथं तुल्याहर्निशं यथा तथा तत्र तस्यां पार्वत्यां सङ्गिन आसक्तस्य। रात्रिंदिवं रममाणस्येत्यर्थः। शम्भोः शिवस्य सार्धमर्धेन सहितमृतूना शतं पञ्चाशदुत्तरं मानुषमानेन पञ्चविंशतिवर्षाण्यगमत्। स शम्भुः समुद्रान्तर्गतः समुद्रस्यान्तर्वृत्तिर्ज्वलनो वडवाग्निरिव तज्जलौघैस्तस्य प्रवाहैरिव सुरतसुखेभ्यश्छिन्नतृष्णो निवृत्ताभिलाषो न बभूव। किन्तु चिरमवर्धतेत्यर्थः ९१॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये उमासुरतवर्णनं
नामाष्टमः सर्गः ॥ ८ ॥

इति मल्लिनाथटीका समाप्ता।

---

१. प्रियामुखरसम्, २. निवेदितः ३. सार्धम्, ४. च, सः, ५. सुखेषु, ६. तज्जलेभ्यः, तज्जलेषु,

सी०—समदिवसेति। तत्र गन्धमादनगिरौ समाः प्रत्येकं समसंख्याका ये दिवसा दिनानि तेषां निशीथमर्धरात्रम्। तमभिव्याप्येत्यर्थः। सङ्गिनः सङ्गवतः। न तु विषमदिन इत्यर्थः। शंभोः शिवसम्बन्धि साग्रं किञ्चित्साधिकसंख्यमृतूनां शतमेकां निशेव तत्तुल्यत्वेनागमद्व्यतीतम्। तथापि सुरतसुखेभ्यस्तु छिन्नतृष्णस्तृप्तो न बभूव। ततो न विररामेत्यर्थः। इव यथा। समुद्रांतर्गतो ज्वलनो वाडवानलस्तज्जलौघैस्तृप्तो न भवति प्रत्यहं ज्वालयत्येव तद्वत्। मालिनीवृत्तम्—'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात्॥ ९१॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया सञ्जीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमा-
सुरतवर्णनं नामाष्टमः सर्गः॥

# नवमः सर्गः

तथाविधेऽनङ्गरसप्रसङ्गे मुखारविन्दे मधुपः प्रियायाः ।
संभोगवेश्म प्रविशन्तमन्तर्ददर्श [1]पारावतमेकमीशः ॥ १ ॥

सी०—तथाविध इति । प्रियायाः पार्वत्याः संबन्धिनि मुखारविन्दे वदनकमले मधुपो भ्रमरभूत ईशः शिवस्तथाविधे पूर्वोक्तप्रकारेऽनङ्गरसप्रसङ्गे कामरसावसरे संभोगस्य वेश्म गृहमन्तःप्रविशन्तमेकं पारावतं कपोतं ददर्श दृष्टवान् । सर्गेऽस्मिन्वृत्तमुपजातिः ॥ १ ॥

शि०—तथेति । प्रियायाः पार्वत्याः सम्बन्धिनि मुखारविन्दे वदनकमले मधुपो भ्रमरभूत ईशो हरः तथाविधे उक्तप्रकारे अनङ्गरसप्रसङ्गे मदनरससमये संभोगवेश्म क्रीडासदनम् अन्तः प्रविशन्तं मध्ये आगच्छन्तमेकमद्वितीयं पारावतं ददर्श । समपश्यत् । मुखमरविन्दमिवेति विग्रहे मुखारविन्दयोरुपमानोपमेयभावाल्लुप्तोपमा । सा च हरे मधुपत्वसमारोपणाद्रूपकालङ्कारेण संसृष्टा ॥ १ ॥

सुकरान्तकान्तामणितानुकारं कूजन्तमाघूर्णितरक्तनेत्रम् ।
प्रस्फारितोन्नम्रविनम्रकण्ठं मुहुर्मुहु[2]र्न्यञ्चितचारुपुच्छम् ॥ २ ॥

सी०--सुकान्तेति । कथंभूतं पारावतम् । सुकान्तमतिमनोहरं यत्कान्तामणितं रमणीरतिकूजितम् । 'मणितं रतिकूजितम्' इत्यमरः । 'तस्यानुकारोऽनुकरणं यत्र यस्मिन्कर्मणि यथा तथा कूजन्तं शब्दायमानम् तथाघूर्णिते रक्तनेत्रे येन तथोक्तम् । तथा प्रस्फारितो विस्तारित उन्नम्र उच्चैस्तथा विनम्रः कण्ठो यस्य तम् । तथा मुहुर्मुहुर्वारंवारं न्यञ्चितः संकुचितश्चारुः पुच्छः पश्चाद्भागो येन तथोक्तमित्यर्थः । 'पुच्छः पश्चात्प्रदेशे स्यात्' इति विश्वः ॥ २ ॥

शि०—सुकान्तेति । श्लोकद्वयेन पारावतं विशिनष्टि । कीदृशं पारावतं । सुकान्तकान्तामणितानुकारम् । क्रियाविशेषणमिदम् । अतिमनोज्ञरमणीरतिकूजितानुकरणं यथा स्यात्तथा कूजन्तं शब्दायमानम् । पुनः कीदृशं । आघूर्णितरक्तनेत्रं भ्रान्तशोणनयनम् । पुनः कीदृशं । प्रस्फारितोन्नम्रविनम्रकण्ठं । विस्तारितोन्नतानतग्रीवं । पुनः कीदृशं । मुहुर्मुहुर्न्यञ्चितचारुपुच्छं वारं वारं संकुचितसुन्तर पश्चात्प्रदेशम् । सुकान्तकान्तयोरुन्नम्रविनम्रयोर्मुहर्मुहुः शब्दयोश्चानुप्रासालङ्कारः ॥ २ ॥

---

१. पारापतम्, २. नर्तित,

विशृङ्खलं पक्षतियुग्ममीषद्दधानमानन्दगतिं[1] मदेन।
शुभ्रांशुवर्णं जटिलाग्रपादमितस्ततो मण्डलकैश्चरन्तम् ॥ ३ ॥

सी०--विशृङ्खलमिति। पुनः कथंभूतम्। विशृङ्खलं विगतशृङ्खलाकम्। अनेन विशेषणेन कदाचित्कस्यापि बन्धनाभावस्य द्योतनात्स्वेच्छाविहारित्वं ध्वन्यते। 'शृङ्खला पुंस्कटीवस्त्रबन्धेऽपि निगडेऽपि च' इति विश्वः। पक्षत्योः पक्षमूलयोर्युग्मं द्वयम्। 'पक्षात्तिः' इति तिप्रत्ययः। तथेषन्मदेन हेतुनानन्दगतिं च दधानम्। तथा शुभ्रांशोश्चन्द्रस्य वर्ण इव वर्णो यस्य तम्। 'जटिलस्तु जटायुक्तः' इति विश्वः। तथा मण्डलकैर्मण्डलाकारगतिविशेषैरितस्ततश्चरन्तं भ्रममाणम्। तं कपोतं ददर्शेति संबन्धः। 'मण्डलके' इति पाठे सुरतमण्डप इति व्याख्येयम्। त्रिभिरेतद्विशेषकम् ॥ ३ ॥

शि०—विशृङ्खलमिति। पुनः कीदृशं। विगता शृङ्खला यस्य स विशृङ्खलस्तं विशृङ्खलं विगतबन्धनम् पक्षतियुग्मं पक्षमूलोभयं तथा ईषन्मदेनाऽल्पगर्वेण आनन्दगतिं सुखगमनं दधानं धारयन्तम्। तथा शुभ्रांशुवर्णं चन्द्रवद्विशदम्। तथा जटिलाग्रपादं जटायुक्ताग्रचरणम्। तथा मण्डलकैर्मण्डलाकारगतिविशेषैरितस्ततश्चरन्तं परिभ्रमन्तम्। तं कपोतं ददर्शेति पूर्वेण सम्बन्धः। शुभ्रांशुवर्णमित्यत्र शुभ्रांशुवर्ण इव वर्णो यस्येत्यर्थे लुप्तोपमाऽलङ्कारः ॥ ३ ॥

रतिद्वितीयेन मनोभवेन ह्रदात्सुधायाः प्रविगाह्यमानात्।
तं वीक्ष्य फेनस्य चयं नवोत्थमिवाभ्यनन्दत्क्षणमिन्दुमौलिः ॥ ४ ॥

सी०--रतीति। रत्या सपत्न्या द्वितीयेन। रतिसहायेनेत्यर्थः। मनोभवेन कर्त्रा। प्रविगाह्यमानादवलोड्यमानात्सुधाया ह्रदान्नवमुत्थमुत्पन्नं फेनस्य चयमिव स्थितं तं कपोतं वीक्ष्येन्दुमौलिः शिवः क्षणमभ्यनन्ददस्तौषीत्। कपोतरूपे वस्तुनि धवलिमरूपधर्मेण गम्यमानेन फेनचयरूपवस्तूत्प्रेक्षालंकारः ॥ ४ ॥

शि०—रतिद्वितीयेनेति। रतिद्वितीयेन रमणीसहितेन मनोभवेन कामेन कर्त्रा प्रविगाह्यमानाद्विलोड्यमानात् सुधाया अमृतस्य ह्रदात् तडागात् नवोत्थं नवीनमुत्पन्नं फेनस्य जलविकारस्य चयं पुञ्जमिव स्थितं तं पारावतं वीक्ष्य दृष्ट्वा इन्दुर्मौलौ यस्य स इन्दुमौलिः चन्द्रमस्तकालङ्करणः शिवः क्षणं किञ्चित्कालमभ्यनन्दत् अवन्दत्। अत्रोत्प्रेक्षाऽलङ्कारः ॥ ४ ॥

[2]तस्याकृतिं कामपि वीक्ष्य दिव्यामन्तर्भवश्छद्मविहंगमग्निम्।
विचिन्तयन्संविविदे स देवो भ्रूभङ्गभीमश्च रुषा बभूव ॥ ५ ॥

---

१. आनन्दगतम्, आमन्दगतिम्, २. तदाकृतिम्.

सी०—तस्येति। अन्तर्भवतीत्यन्तर्भवः। सर्वान्तर्व्यापीत्यर्थः। स देवो हरः दिव्यां भव्यां कामपि लोकोत्तरां तस्य पारावतस्याकृतिं वीक्ष्य छद्मना कैतवेन विहंगं कपोतस्वरूपधारिणमग्निं विचिन्तयन्वितर्कयन्संविविदे विजज्ञे। निश्चयात्मकबुद्ध्याग्निरेवायमिति बुबुध इत्यर्थः। 'समो गम्यृच्छि–' इत्यादिनात्मनेपदम्। रुषा भ्रुवोर्भङ्गेन भीमो भयंकरश्च बभूव। असामयिकागमनकारित्वादिति भावः॥ ५॥

शि०—तस्येति। अन्तर्भवो निखिलान्तर्व्यापी स देवः शिवः दिवि भवां दिव्यां (दिगादिभ्यो यत्) उत्कृष्टां तस्य पारावतस्याकृतिमाकारं वीक्ष्य समवलोक्य छद्मविहङ्गं कपटकपोतरूपधारिणम् अग्निं कृशानुं विचिन्तयन् विचारयन् संविविदे संबुद्धवान् रुषा क्रोधेन भ्रूभङ्गभीमो भ्रुकुटिभङ्गभयङ्करश्च बभूव। असमयागमनादग्निं प्रति चुक्रोधेत्यर्थः। एकस्य हरस्य कर्तृविदभूधातूभयवाच्यक्रियाद्वयेऽन्वयाद्दीपकालङ्कारः॥ ५॥

स्वरूपमास्थाय ततो हुता[१]शस्त्र[२]सन्वलत्कम्प[३]कृताञ्जलिः सन्।
प्रवेपमानो [४]नितरां स्मरारिमिदं वचो व्यक्तमथाभ्युवाच[५]॥ ६॥

सी०—स्वरूपमिति। ततोऽनन्तरं हुताशोऽग्निस्त्रसन्बिभ्यत्सन्। 'वा भ्राश–' इत्यादिना वैकल्पिकत्वान्न श्यन्। स्वरूपमाग्नेयं रूपमास्थायाश्रित्य। अथ स्वरूपाश्रयणानन्तरम्। वलन्नुद्भवन्कम्पो यथा तथा कृतो बद्धोऽञ्जलिर्येन। तथा नितरां प्रवेपमानः कम्पमानश्च सन् स्मरारिं शिवं व्यक्तं स्फुटमिदं वक्ष्यमाणं वचोऽभ्युवाचोक्तवान्। 'दुह्याच्' इत्यादिना ब्रुवो द्विकर्मकत्वम्॥ ६॥

शि०—स्वरूपेति। ततस्तदनन्तरं हुताशोऽग्निः त्रसन् भयं प्राप्नुवन् सन् स्वरूपं निजाकृतिम्। आग्नेयरूपमित्यर्थः। आस्थायाश्रित्य। अथ स्वरूपाश्रयणानन्तरम्। वलत्कम्पकृताञ्जलिः सकम्पबद्धाञ्जलिः। तथा नितरां प्रवेपमानः अतिशयेन कम्पमानश्च सन् स्मरारिं शिवं व्यक्तं स्पष्टमिदं वक्ष्यमाणं वचो वाक्यमभ्युवाच जगाद। अग्निः शिवं रुष्टं विज्ञाय सकम्पो बद्धाञ्जलिः सन्निदं जगादेत्यर्थः॥ ६॥

असि त्वमेका जगतामधीशः स्वर्गौकसां त्वं विपदो निहंसि।
[६]ततः सुरेन्द्रप्रमुखाः प्रभो त्वामुपासते दैत्यवरैर्विधूताः॥ ७॥

सी०—असीति। हे प्रभो, त्वमेको जगतामधीशोऽसि त्वत्सदृशो जगतां पालयिता न कोऽप्यन्योऽस्तीत्यर्थः। अत एव स्वर्गौकसामिन्द्रादीनां

१. त्रास, श्वास, २. स्खलत्, ३. कम्प्र, कण्ठः, ४. अतितराम्, ५. अभ्युवाचम्, ६. अतः,

विपदस्त्वं निहंसि दूरीकरोषि । ततः कारणात्सुरेन्द्रप्रमुखा देवास्त्वामुपासते । यतो दैत्यवरैर्विधूतास्तिरस्कृताः ॥ ७ ॥

शि०—असीति । हे प्रभो, त्वमेकोऽद्वितीयो जगतां स्थावरजङ्गमानामधीशः पालकोऽसि । अतः स्वर्ग ओको गृहं येषां ते स्वर्गौकसस्तेषां स्वर्गौकसामिन्द्रप्रभृतीनां विपदो दुःखानि निहंसि विनाशयसि । ततस्तस्मात्कारणात् दैत्यवरैः प्रबलदानवैर्विधूता अनादृताः सुरेन्द्रप्रमुखाः शक्रप्रधाना देवास्त्वां भवन्तमुपासते । प्रार्थयन्ति ॥ ७ ॥

त्वया प्रियाप्रेमवशंवदेन शतं व्यतीये [1]सुरतादृतूनाम् ।
[2]रहः स्थितेन [3]त्वदवीक्षणार्तो दैन्यं परं प्राप सुरैः सुरेन्द्रः ॥ ८ ॥

सी०—त्वयेति । हे प्रभो, प्रियायाः पार्वत्याः प्रेम्णा हेतुना वशंवदेन वशीभूतेन । 'प्रियवशे वदः खच्' । इति खच् । अरुर्द्विषत्–' इत्यादिना मुम् । तेन त्वया रहःस्थितेन सता सुरताद्धेतोर्ऋतूनां शतं व्यतीतम् । इणः कर्मणि लिट् । अथ च सुरेन्द्रस्त्वदवीक्षणेन तवानवलोकनेनार्तः पीडितः सन्सुरैः सह परमत्यन्तं दैन्यं प्राप । त्वद्विरहासहत्वादिति भावः ॥ ८ ॥

शि०—त्वयेति । हे प्रभो, प्रियाप्रेमवशंवदेन पार्वतीस्नेहायत्तेन रहःस्थितेन एकान्तस्थितेन त्वया भवता सुरतात् स्त्रीप्रसङ्गाद्धेतोः ऋतूनां शतं व्यतीये शतवर्षाणि व्यतीतानि । अतः सुरेन्द्रः शक्रः तवावीक्षणं त्वदवीक्षणं तेनार्त्तः भवदनवलोकनपीडितः सन् सुरैर्देवैः सह परमतिशयं दैन्यं क्लेशं प्राप प्राप्तवान् ॥ ८ ॥

त्वदीयसेवावसरप्रतीक्षैरभ्यर्थितः शक्रमुखैः सुरैस्त्वाम् ।
उपागतोऽन्वेष्टुमहं विहंगरूपेण विद्वन्समयोचितेन ॥ ९ ॥

सी०—त्वदीयेति । हे विद्वन्, त्वदीया त्वत्कर्मिका या सेवा तस्या अवसरस्य प्रतीक्षा येषां तैः शक्रमुखैरिन्द्रादिभिः सुरैरभ्यर्थितोहं त्वामन्वेष्टुं मृगयितुं समयोचितेन विहंगरूपेण पारावतरूपेण । 'जिह्रेति यन्नैव कुतोऽपि तिर्यक्कश्चित्तिरश्चस्त्रपते न तेन' इति (नैषधीयचरिते ३।४३) श्रीहर्षोक्तेरिति भावः । उपागतोऽस्मि ॥ ९ ॥

शि०—त्वदीयेति । हे विद्वन् त्वदीयसेवावसरप्रतीक्षैर्भवच्छुश्रूषाक्षणप्रत्याशैः शक्रमुखैरिन्द्रप्रभृतिभिः सुरैर्देवैः अभ्यर्थितः प्रार्थितोऽहं त्वां भवन्तमन्वेष्टुं मृगयितुं समयोचितेन विहङ्गरूपेण कपोतवेशेन उपागतः प्राप्तोऽस्मि ॥ ९ ॥

इति प्रभो चेतसि संप्रधार्य [4]तन्नोपराधं भगवान् क्षमस्व ।
पराभिभूता वद किं क्षमन्ते कालातिपातं शरणार्थिनोऽमी ॥१०॥

---

१. अत्रभवन्, २. बाहस्थितोपि, ३. त्वदनक्षीणेन, ४. मम,

सी०—इतीति । हे प्रभो, हे भगवान्, तत्तस्मात्कारणात् । इति चेतसि संप्रधार्य संविचार्य नोऽस्माकमपराधं क्षमस्व । असमय इन्द्रप्रेरितस्य तवापराधः कथं सोढव्य इति चेत्तत्राह—परेति । परैरभिभूता पराभिभूता अत एव शरणार्थिनो रक्षितारं याचमानाः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अमी इन्द्रादयः कालातिपातं कालविलम्बं किं कथं क्षमन्ते । आर्तैः कालाविलम्बो न सह्यत इति भावः । 'प्रतीक्षते जातु न कालमार्तः' इति न्यायात् । वद । कथयेत्यर्थः ॥ १० ॥

शि०—इतीति । हे प्रभो हे देवदेव तत्तस्माद्धेतोः । इति इदं चेतसि हृदये सम्प्रधार्य विचिन्त्य नोऽस्माकमपराधं दोषं क्षमस्व सहस्व । अकालप्राप्तस्य तव दोषो न क्षन्तव्य इत्याशङ्क्यामुत्तरार्द्धेन परिहरति—परेति । पराभिभूता दैत्यविधूता अत एव शरणार्थिनो रक्षितारं मृगयमाणाः अमी देवाः कालातिपातं समयातिक्रमं किं कथं क्षमन्ते सहन्ते । वद कथय ॥ १० ॥

प्रभो [1]प्रसीदाशु [2]सृजात्मपुत्रं यं प्राप्य सेनान्यमसौ सुरेन्द्रः ।
[3]स्वर्लोकलक्ष्मीप्रभुतामवाप्य[4] जगत्त्रयं पाति तव प्रसादात् ।११।

सी०—प्रभो इति । हे प्रभो, प्रसीद प्रसन्नो भव । आत्मपुत्रमाशु सृज यमात्मपुत्रं सेनान्यं प्राप्यासौ सुरेन्द्रस्तव प्रसादात्स्वर्लोकलक्ष्मीप्रभुतामवाप्य जगत्त्रयं पाति रक्षिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥ ११ ॥

शि०—प्रभो इति । हे प्रभो स्वामिन्, प्रसीद प्रसन्नो भव । आत्मपुत्रं निजसुतं सृज उत्पादय । यमात्मपुत्रं सेनान्यं कार्त्तिकेयं प्राप्य असौ सुरेन्द्रः शक्रः तव प्रसादात् भवतोऽनुग्रहात् स्वर्लोकलक्ष्मीप्रभुतां दिवैश्वर्याधिपत्यमवाप्य प्राप्य जगत्त्रयं स्वर्मर्त्यपातालं पाति पास्यति रक्षिष्यति ॥ ११ ॥

स शंकरस्तामिति जातवेदोविज्ञापनामर्थवतीं निशम्य ।
अभूत्प्रसन्नः परितोषयन्ति गीर्भिर्गिरीशा रुचिराभिरीशम् ॥ १२ ॥

सी०—स इति । स शंकर इतीत्येवंभूतामर्थवतीं सार्थकाम् । योग्यामिति यावत् । तां जातवेदसोऽग्नेर्विज्ञापनां प्रार्थनां निशम्य श्रुत्वा प्रसन्नोऽभूत् । तथाहि । गिरीशा वाग्मिनः पुरुषा रुचिराभिर्गीर्भिरीशं स्वामिनं परितोषयन्ति । प्रसादयन्तीत्यर्थः ॥ १२ ॥

शि०—स इति । स शङ्करः शिव इतीत्थं भूतामर्थवतीमर्थयुक्तां जातवेदोविज्ञापनामग्निप्रार्थनां निशम्य समाकर्ण्य प्रसन्नो हृष्टोऽभूत् । तथाहि गिरामीशा गिरीशाः वाग्मिनः पुरुषा रुचिराभिर्मनोज्ञाभिर्गीर्भिर्वाणीभिरीशं स्वामिनं परितोष-

---

१. अथ, २. सृजाशु पुत्रम्; सृजस्व पुत्रम्, ३. स्वर्गैकलक्ष्मी, ४. उपेत्य,

यन्ति आनन्दयन्ति। उत्तरार्द्धगतसामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः॥ १२॥

**प्रसन्नचेता [1]मदनान्तकारः स तारकारेर्जयिनो भवाय।**
**शक्रस्य सेनाधिपतेर्जयाय व्यचिन्तयच्चेतसि भावि किंचित्॥१३॥**

सी०—प्रसन्नेति। प्रसन्नचेताः स मदनान्तकारो हरो जयिनो जयशीलस्य तथा जयाय शत्रुपराजयार्थं शक्रस्य सेनाधिपतेस्तारकारेस्तारकशत्रोः अपत्यस्येत्यर्थः। भवाय जन्मने। तत्कर्तुमित्यर्थः। भावि भविष्यत्किंचिच्चेतसि व्यचिन्तयत् विचचारेत्यर्थः॥ १३॥

शि०—प्रसन्नेति। प्रसन्नं चेतो यस्य स प्रसन्नचेता हृष्टमानसः मदनस्यान्तकारो मदनान्तकारः कामविनाशकः स शिवः जयिनो जयशीलस्य शक्रस्य सुरेन्द्रस्य जयाय उत्कर्षप्राप्तये सेनाधिपतेः सेनानायकस्य तारकारेः तारकरिपोर्भवाय समुत्पत्तये भावि भविष्यत्किञ्चित् चेतसि मनसि व्यचिन्तयत् विचारितवान्॥ १३॥

**युगान्तकालाग्निमिवाविषह्यं परिच्युतं मन्मथरङ्गभङ्गात्।**
**रतान्तरेतः स हिरण्यरेतस्यथोर्ध्वरेतास्तदमोघमाधात्॥ १४॥**

सी०—युगान्तेति। अथ स शिवः। युगान्तकालस्याग्निमिवाविषह्यं सोढुमशक्यं मन्मथरङ्गस्य कामक्रीडाया भङ्गाद्धेतोः परिच्युतं भ्रष्टं तथामोघं सफलं तत्प्रसिद्धं रतान्तस्य सुरतान्तस्य रेतो वीर्यं हिरण्यरेतसि वह्नावाधान्निदधे। यत ऊर्ध्वरेता ऊर्ध्वगामिवीर्य इत्यर्थः॥ १४॥

शि०—युगान्तेति। अथानन्तरं स शिवः युगान्तकालाग्नि प्रलयकालिकानलमिव अविषह्यं सोढुमशक्यं मन्मथरङ्गभङ्गात् मदनक्रीडाविघाताद्धेतोः परिच्युतं परिभ्रष्टं तथाऽमोघमविफलं तत्प्रसिद्धं रतान्तरेतः सुरतान्तवीर्यं हिरण्यरेतसि पावके आधात् निहितवान्। यतः स हिरण्यरेताः ऊर्ध्वरेता उर्ध्वगामिवीर्यः॥ १४॥

**[2]अथोष्णबाष्पानिलदूषितान्तं विशुद्धमादर्शमिवात्मदेहम्।**
**बभार भूम्ना सहसा पुरारिरेतः [3]परिक्षेपकुवर्णमग्निः॥ १५॥**

सी०—अथेति। अथानन्तरमाग्निर्विशुद्धमात्मदेहमुष्णवाष्पानिलेन मुखनिःश्वासेन दूषितं म्लानीकृतमन्तमध्यं यस्य तमादर्शमिव सहसा भूम्नं बाहुल्येन पुरारेः शिवसंबन्धिनो रेतसः परिक्षेपस्तेन कुवर्णं कुत्सितवर्णं बभार धृतवान्॥ १५॥

शि०—अथेति। अथानन्तरमग्निः विशुद्धं भास्वरमात्मदेहमुष्णवाष्पानिल-

१. मदनान्तकारी, २. अथोष्मवाष्पानलदूषितान्तर, अत्युष्णबाष्पानिलदूषितान्तर, ३. परिक्षिप्तकुवर्णम्, परिक्षेपविवर्णम्,

दूषितान्तं मुखनिश्वासम्लानीकृतमध्यमादर्शं दर्पणमिव सहसा भूम्ना बाहुल्येन पुरारिरेतः परिक्षेपकुवर्णं शिववीर्याधानविरूपं बभार दधौ । अत्रादर्शात्मदेहयोरुपमानोपमेयभावादुपमालङ्कारः ॥ १५ ॥

त्वं सर्वभक्षो भव भीमकर्मा कुष्ठाभिभूतोऽनल धूमगर्भः ।
इत्थं शशापाद्रिसुता हुताशं [1]रुष्टा रतानन्दसुखस्य भङ्गात् ॥१६॥

सी०—त्वमिति । रतानन्दः सुरतानन्दस्तत्र यत्सुखं तस्य भङ्गादन्तरायाद्धेतो रुष्टाद्रिसुता पार्वती । हे अनल, त्वं सर्वं मेध्यममेध्य वा भक्षति तथोक्तः । तथा भीमं भयानकं कर्म यस्य । तथा कुष्ठेनाभिभूतः पराभूतः । तथा धूमो गर्भे मध्ये यस्य तथोक्तश्च भव । इत्थं हुताशमग्निं शशाप । शपति स्मेत्यर्थः । अत्र ज्ञीप्स्यमानत्वाभावात् 'श्लाघह्नुङ्स्था—' इति न संप्रदानत्वम् ॥ १६ ॥

शि०—त्वमिति । रतानन्दसुखस्य सुरतहर्षसातस्य भङ्गात् विनाशात् हेतोः रुष्टा क्रुद्धाऽद्रिसुता पार्वती । हे अनल, पावक, त्वं सर्वभक्षो मध्यामेध्याशनशीलः तथा भीमकर्मा भयानकक्रियः । तथा कुष्ठाभिभूतः कुष्ठपराभूतः । तथा धूमगर्भो धूममध्यश्च भव । इत्थं हुताशं पावकं शशाप आचुक्रोश ॥ १६ ॥

दक्षस्य शापेन शशी [2]क्षयीव [3]प्लुष्टो हिमेनेव सरोजकोशः ।
वह्न्विरूपं वपुरुग्ररेतश्चयेन वह्निः किल निर्जगाम ॥ १७ ॥

सी०—दक्षस्येति । वह्निरग्निर्दक्षस्य शापेन हेतुना क्षयी क्षयरोगवान् शशी चन्द्र इव । तथा हिमेन शीतेन प्लुष्टो दग्धः । 'प्लुष दाहे' कर्मणि निष्ठा । सरोजकोश इव । वपुः स्वशरीरमुग्रस्य शिवस्य । 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरः । रेतश्चयेन वीर्यसङ्घातेन । 'शुक्रं तेजोरेतसी च' इत्यमरः । हेतुभूतेन विरूपं भ्रष्टशोभमेतादृशं वहन्निर्जगाम सम्भोगवेश्मतो निःसृतवान् । किलेति प्रसिद्धे ॥ १७ ॥

शि०—दक्षस्येति । वह्निः पावकः दक्षस्य दक्षप्रजापतेः शापेन विरुद्धानुध्यानेन क्षयी क्षयरोगवान् शशी विधुरिव । तथा हिमेन तुषारेण प्लुष्टो नष्टः सरोजकोशः पद्ममुकुल इव वपुरात्मदेहम् । उग्ररेतश्चयेन शिववीर्यसमूहेन विरूपं नष्टकान्ति वहन् धारयन् निर्जगाम निःससार किल ॥ १७ ॥

स पावकालोकरुषा विलक्षां स्मरत्रपास्मेरविनम्रवक्त्राम् ।
विनोदयामास [4]गिरीन्द्रपुत्रीं शृङ्गारगर्भैर्मधुरैर्वचोभिः ॥ १८ ॥

सी०—स इति । पावकस्य वह्नेरालोकेन या रुट् क्रोधस्तया हेतुना विलक्षां विरूपो विकृतिमापन्नो लक्षो लक्षणं चिह्नं शरीरशोभा यस्या-

1. तथा, 2. क्षयाय, 3. प्रुष्टः, आलोकनतः, 4. नगेन्द्र,

स्ताम् । तथा स्मरत्रपाभ्यां कामलज्जाभ्यां स्मेरं सस्मितं विनम्रं नतं च वक्रं यस्यास्तथोक्तां गिरीन्द्रपुत्रीं पार्वतीं स हरः शृङ्गारगर्भैरत एव मधुरैर्वचोभिर्विनोदयामास । प्रसादितवानित्यर्थः ॥ १८ ॥

शि०—स इति । स हरः । पावकालोकरुषाऽनलदर्शनक्रोधेन हेतुना विलक्षां विकृतशरीरशोभाम् । तथा स्मरत्रपास्मेरविनम्रवक्त्रां मदनव्रीडास्मितनतमुखीम् गिरीन्द्रपुत्रीं पार्वतीं शृङ्गारगर्भैः शृङ्गाररसयुक्तैर्मधुरैर्मनोज्ञैर्वचोभिर्वचनैर्विनोदयामास प्रासादयामास ॥ १८ ॥

हरो विकीर्णं घनघर्मतोयैर्नेत्राञ्जनाङ्कं [1]हृदयप्रियायाः ।
[2]द्वितीयकौपीनचलाञ्चलेनाहरन्मुखेन्दोरकलङ्किनोऽस्याः[3] ॥ १९ ॥

सी०—हर इति । हरो हृदयस्य प्रियाया अस्याः पार्वत्या अकलङ्किनो मुखेन्दोः सम्बन्धिनं तथा घनानि यानि घर्मतोयानि प्रस्वेदजलानि तैर्विकीर्णं व्याप्तं नेत्रयोरञ्जनमेवाङ्कः कलङ्कस्तं द्वितीयं यत्कौपीनं योगिनः स्कन्धलम्बि वस्त्रम् । 'कौपीनं स्यादधोवस्त्रं योगिनः स्कन्धलम्बि च' इति मेदिनी । तस्य चलं यदञ्चलं प्रान्तस्तेनाहरदपघृतवान् । अकलङ्कस्य कलङ्कानौचित्यादिति भावः ॥ १९ ॥

शि०—हर इति । हरः शिवः । हृदयप्रियायाः मनःप्रसादकारिण्या अस्याः अकलङ्किनोऽविद्यमानलाञ्छनस्य मुखेन्दोरास्यचन्द्रस्य सम्बन्धिनं घनघर्मतोयैः प्रचुरप्रस्वेदजलैर्विकीर्णं व्याप्तं नेत्राञ्जनाङ्कं नयनाञ्जनकलङ्कं द्वितीयकौपीनचलाञ्चलेन, अपरयोगिस्कन्धावलम्बिवस्त्रस्थिरप्रान्तेनाऽहरत् हृतवान् ॥ १९ ॥

मन्देन [4]खिन्नाङ्गुलिना करेण [5]कम्प्रेण तस्या वदनारविन्दात् ।
परामृशन्घर्मजलं जहार हरः सहेलं व्यजनानिलेन ॥ २० ॥

सी०—मन्देनेति । हरः शिवः । मन्देन लघुप्रचारेण । तथा खिन्ना अलसप्रयोगेणोदासीना अङ्गुलयो यस्य । तथा कम्प्रेण कम्पशालेन । 'नमिकम्पिस्म्यजसकम्'— इति रः । करेण कृत्वा तस्याः पार्वत्या वदनारविन्दाद्घर्मस्य घर्म रूपं वा जलं परामृशन्विश्लेषयन्सहेलं सक्रीडं यथा तथा व्यजनस्यानिलेन कृत्वा जहार ॥ २० ॥

शि०—मन्देनेति । हरः शिवः । मन्देन स्थिरेण । तथा खिन्नाऽङ्गुलिनोदासीनाऽङ्गुलिना । तथा कम्प्रेण विधूतेन करेण हस्तेन तस्याः पार्वत्याः वदनारविन्दान्मुखकमलात् घर्मजलं प्रस्वेदपयः परामृशन् स्पृशन् सहेलं सक्रीडं यथा तथा व्यजनानिलेन तालवृन्तवायुना जहार दूरीचकार ॥ २० ॥

---

१. सदयं प्रियायाः, २. हरन्, ३. अपि, ४. स्विन्नाङ्गुलिना, ५. कम्पेन, प्रेम्णा च,

**रतिश्लथं तत्कबरीकलापमंसावसक्तं विगलत्प्रसूनम् ।**
**स पारिजातोद्भवपुष्पमय्या स्रजा बबन्धामृतमूर्तिमौलिः ॥ २१ ॥**

सी०—रतिश्लथमिति । अमृतमूर्तिश्चन्द्रो मौलौ यस्य स हरो देवः । रतौ श्लथं शिथिलबन्धनमत एवांसयोः स्कन्धयोरवसक्तं लग्नमत एव विगलन्त्यधः—पातुकानि प्रसूनानि यस्य सं तस्याः कबरीकलापं कचभारं पारिजातोद्भवपुष्पमय्या पारिजातोद्भवानि कल्पवृक्षजानि यानि पुष्पाणि तत्प्रचुरया स्रजा मालया बबन्ध । 'तत्प्रकृतवचने—' इति प्राचुर्ये मयट् । ततः 'टिड्ढा—' इति ङीप् । २१ ॥

शि०—रतीति । अमृतमूर्त्तिमौलिर्विधुशेखरः स हरः रतिश्लथं सुरतशिथिलबन्धनम् । अंसावसक्तं स्कन्धलग्नं विगलत्प्रसूनमधःपातुकपुष्पं तत्कबरीकलापं पार्वतीकचभारं पारिजातोद्भवपुष्पमय्या कल्पवृक्षोद्भूतकुसुमनिर्मितया स्रजा मालया बबन्ध संयतवान् ॥ २१ ॥

**कपोलमाल्यां मृगनाभिचित्रपत्रावलीमिन्दुमुखः सुमुख्याः ।**
**स्मरस्य सिद्धस्य जगद्विमोहमन्त्राक्षरश्रेणिमिवोल्लिलेख ॥ २२ ॥**

सी०—कपोलपाल्यामिति । इन्दुमुखो हरः सुमुख्याः पार्वत्याः सम्बन्धिन्यां कपोलपाल्यां मृगनाभ्याः कस्तूर्या या चित्रा पत्रावली पत्ररचना तां सिद्धस्य स्मरस्य कामस्य जगन्ति विमुह्यन्ति यैस्तेषां मन्त्राणां यान्यक्षराणि वर्णास्तेषां श्रेणिं पङ्क्तिमिवोल्लिलेख लिखितवान् । अत्र पत्ररचनारूपे वस्तुन्यक्षरश्रेणिरूपोत्प्रेक्षणाद्वस्तूत्प्रेक्षालङ्कारः ॥ २२ ॥

शि०—कपोलेति । इन्दुमुखश्चन्द्रवदनः शिवः सुमुख्याः पार्वत्याः कपोलपाल्यां गण्डस्थलप्रदेशे मृगनाभिचित्रपत्रावलीं कस्तूरिकाविविधवर्णपत्ररचनां सिद्धस्य स्मरस्य जगद्विमोहमन्त्राक्षरश्रेणिं जगद्वशीकरणमन्त्रवर्णपङ्क्तिमिव उल्लिलेख लिखितवान् ॥ २२ ॥

**रथस्य [1]कर्णाविभि तन्मुखस्य ताटङ्कचक्रद्वितयं [2]न्यधात्सः ।**
**जगज्जिगीषुर्विषमेषुरेष ध्रुवं यमारोहति पुष्पचापः ॥ २३ ॥**

सी०—रथस्येति । स हरः । कर्णाविभि कर्णसंमुखे तन्मुखस्य पार्वतीमुखरूपस्य रथस्य सम्बन्धि ताटङ्करूपं चक्रद्वितयं चक्रद्वयं न्यधात् । यतो विषमेषुरेष पुष्पचापः कामो जगज्जिगीषुस्त्रिभुवनविजयेच्छुः सन् यमारोहति । ध्रुवं निश्चितम् । मुखरूपिणं रथमारुह्य जगन्ति विजेतुमिच्छति काम इति भावः ॥ २३ ॥

शि०—रथस्येति । स हरः । कर्णाविभि श्रोत्रसंमुखे तन्मुखस्य पार्वतीवदन-

---

१. कर्णावलितं मुखस्य, २. व्यधात्,

रूपस्य रथस्य स्यन्दस्य सम्बन्धि ताटङ्कद्वितयं ताटङ्करूपचक्रद्वयं न्यधात् स्थापितवान् । यतो विषमेषुरेष पुष्पचापः कामः जगतीषुस्त्रिलोकीविजयाभिलाषी सन् ध्रुवं निश्चितं यमारोहति समवलम्बते ॥ २३ ॥

तस्याः स कण्ठे [1]पिहितस्तनाग्रां न्यधत्त मुक्ताफलहारवल्लीम् ।
[2]या प्राप मेरुद्वितयस्य मूर्ध्नि स्थितस्य गाङ्गौघयुगस्य लक्ष्मीम् ॥

सी०—तस्या इति । स हरस्तस्याः कण्ठे । पिहिते स्वप्रसारेणावृत्ते स्तनाग्रे चूचुके यया तथोक्तां मुक्ताफलहार एव वल्ली तां न्यधत्त निदधे । या मुक्ताफलाहारवल्लीमेरुद्वितस्य मूर्ध्नि स्थितस्य गङ्गाया ओघयोः प्रवाहयोर्युगस्य लक्ष्मीं शोभां प्राप । तद्वच्छुशुभ इत्यर्थः । अभूतोपमा ॥ २४ ॥

शि०—तस्या इति । स हरः तस्याः पार्वत्या कण्ठे गले पिहितस्तनाग्रामावृत्तचूचुकाम् । तथा मुक्ताफलहारवल्लीं मौक्तिकस्रक्लतां न्यधत्त निहितवान् । या मुक्ताफलहारवल्ली मेरुद्वितयस्य सुमेरुद्वयस्य मूर्ध्नि शिखरे स्थितस्य विद्यमानस्य गङ्गा प्रवाहद्वयस्य लक्ष्मीं शोभां प्राप । यथा सुमेरुद्वयशिखरे गङ्गाप्रवाहद्वयं शोभते तद्वत्पार्वतीस्तनद्वयस्थितमौक्तिकहारलता शुशुभे इत्यर्थः । अत्रोपमानस्य प्रसिद्धत्वादभूतोपमा ॥ २४ ॥

नखव्रणश्रेणिवरे[3] बबन्ध नितम्बबिम्बे रशनाकलापम् ।
[4]चलस्वचेतोमृगबन्धनाय मनोभुवः पाशमिव स्मरारिः ॥ २५ ॥

सी०—नखेति । स्मरारिर्हरः नखव्रणश्रेणिभिरात्मप्रयुक्ताभिर्वरे मनोहरे तस्या नितम्बबिम्बे रशनाकलापम् । चल स्वं चेत एव मृगस्तस्य बन्धनाय मनोभुवः सम्बन्धिनं पाशमिव बबन्ध । मनोभूरस्यात्मनश्चेतोमृगस्य रशनाकलापरूपजालेन बन्धनं करिष्यत्यतो हरः स्वयमेव तत्र तं निदधावित्यर्थः । नहि कामलुब्धक आत्मनीनं गणयतीति भावः ॥ २५ ॥

शि०—नखेति । स्मरारिः शिवः नखव्रणश्रेणिवरे करजक्षतपङ्क्तिमनोज्ञे तस्याः पार्वत्या नितम्बबिम्बे नितम्बभागे रसनाकलापं रसनासमुदायं चलस्वचेतोमृगबन्धनाय चपलात्ममानसमृगसंयमनाय मनोभुवः कामस्य पाशजालमिव बबन्ध संयेमे । स्मरकर्तृकात्ममनोमृगबन्धनायैव पार्वतीनितम्बे रसनाकलापं बबन्धेत्यर्थः । अत्र चेतसि मृगत्वारोपणाद्रूपकम् । पाशरसनाकलापयोरुपमानोपेभयभावादुपमा चेत्युभयोः संसृष्टिः ॥ २५ ॥

भालेक्षणाग्नौ स्वयमञ्जनं स [5]भङ्क्त्वा दृशोः साधु निवेश्य तस्याः ।
नशोत्पलाक्ष्याः पुलकोपगूढे[6] कंठे [7]विनोलेऽङ्गुलिमुज्जवर्ष ॥ २६ ॥

---

१. अभिघनस्तनं याम्, अभिघलस्ताग्रम्, २. सा, ३ श्रेणिकरे, ४. चलत्, ५. न्यक्त्वा, ६. उपगूढः, ७. विनीलाङ्गुलिम्,

सी०--भालेक्षण इति। स हरः भाले यदीक्षणं नेत्रं तदेवाग्निः। दीपरूप इत्यर्थः। तत्राञ्जनं स्वयं भङ्क्त्वा पातयित्वा। अथ च नवोत्पलाक्ष्यास्तस्याः पार्वत्यां दृशोः साधु निवेश्य सम्यगञ्जयित्वा। अथ च पुलकै रोमाञ्चैरुपगूढे व्याप्ते विनीले श्यामले कण्ठे। स्वीय इति शेषः। अङ्गुलिमुज्जघर्ष घृष्टवान्। यथान्योऽपि दीपकोपर्यङ्गुल्यैव कज्जलं पातयित्वा स्वस्त्रीनेत्रयोर्निवेश्य कुत्रचिदङ्गुलिमुद्धर्षति तद्वत्। अङ्गुलिलग्नकज्जलनिवारणार्थमिति भावः। स्वभावोक्तिरलङ्कारः॥ २६॥

शि०—भालेक्षणेति। स हरः। भालेक्षणाग्नौ कपालनेत्रवह्नौ स्वयं साक्षादञ्जनं कज्जलं भङ्क्त्वा संपात्य नवोत्पलाक्ष्या नूतनपद्मनयनायाः तस्याः पार्वत्याः दृशो नेत्रयोः साधु सम्यक् निवेश्य संयोज्य पुलकोपगूढे रोमाञ्चव्याप्ते विनीले श्यामवर्णे कण्ठे गलेऽङ्गुलिं कराग्रमुज्जघर्ष संघृष्टवान्॥ २६॥

अलक्तकं पादसरोरुहाग्रे सरोरुहाक्ष्याः किल संनिवेश्य।
स्वमौलिगङ्गासलिलेन हस्तारुणत्वमक्षालयदिन्दुचूडः[1]॥ २७॥

सी०—अलक्तमिति। इन्दुचूडो हरः सरोरुहाक्ष्याः पार्वत्याः पादसरोरुहाग्रेऽलक्तं संनिवेश्यानुलिप्य। करेणेति शेषः। स्वस्य मौलौ यद्गंगासलिलं तेन कृत्वा हस्तस्यारुणत्वमक्षालयन्ममार्ज॥ २७॥

शि०—अलक्तकमिति। इन्दुश्चूडा यस्य स इन्दुचूडश्चन्द्रशेखरः शिवः सरोरुहाक्ष्याः पद्मनेत्रायाः पार्वत्याः पादसरोरुहाग्रे चरणकमलाग्रेऽलक्तकं लाक्षारसं संनिवेश्य समनुलिप्य हस्तेनेतिशेषः। स्वमौलिगङ्गासलिलेन निजशिरःस्थगङ्गाजलेन हस्तारुणत्वं करारुण्यमक्षालयत्। ममार्ज। यथाऽन्यः कश्चिदलक्तकं निवेश्य करं मार्जयति तद्वद्धरोऽपीत्यर्थः॥ २७॥

भस्मानुलिप्ते वपुषि स्वकीये सहेलमादर्शतलं विमृज्य।
नेपथ्यलक्ष्म्याः[2] परिभावनार्थमदर्शयज्जीवितवल्लभां सः॥ २८॥

सी०—भस्मेति। स हरः। आदर्शतलं भस्मानुलिप्ते स्वकीये वपुषि विमृज्य शुद्धं कृत्वा नेपथ्यानामाकल्पवेषाणां लक्ष्म्याः शोभायाः परिभावनार्थमवलोकनार्थं सहेलं यथा तथा जीवितवल्लभां प्रियामदर्शयत्॥२८

शि०—भस्मेति स शिवः। आदर्शतलं दर्पणं स्वकीये आत्मीये वपुषि शरीरे विमृज्य विशोध्य (प्रोञ्छ्य) नेपथ्यलक्ष्म्या वेषरचनाशोभायाः परिभावनार्थं प्रेक्षणार्थं सहेलं सकौतूहलं यथा तथा जीवितवल्लभां प्राणप्रियामदर्शयत् समालोचयत्॥ २८॥

---

१, इन्दुमौलिः, २. क्ष्मी,

प्रियेण दत्ते मणिदर्पणे [1]सा [2]संभोगचिह्नं स्ववपुर्विभाव्य ।
त्रपावती तत्र घनानुरागं रोमाञ्चदम्भेन बहिर्बभार ॥ २९ ॥

सी०—प्रियेणेति । प्रियेण हरेण दत्ते मणीनां दर्पण आदर्शे सम्भोगस्य चिह्नानि नखक्षतादीनि यत्र तथोक्तं स्वं वपुर्विभाव्यावलोक्य । भावनात्र विलोकोनपरिणता ज्ञेया । त्रपावती सलज्जा । एतानि चिह्नानि विलोक्यान्यः किं वदिष्यतीति विचारजनितया लज्जयान्धेत्यर्थः । सा पार्वती तत्र हरे घनमनुरागं प्रेम रोमाञ्चानां दम्भेन कैतवेन बहिर्बहिः स्थितत्ववैशिष्ट्य पूर्वकं बभार घृतवती । अन्तरस्या योऽनुरागोऽभूत्स एव बही रोमाञ्चत्वेन परिणत इति भावः ॥ २९ ॥

शि०—प्रियेणेति । सा पार्वती प्रियेण हरेण दत्तेऽर्पिते मणिदर्पणे मणिरूपादर्शे विषये सम्भोगचिह्नं नखक्षतादिसुरतलक्षणयुक्त स्ववपुर्निजशरीरं विभाव्य समवलोक्य त्रपावती सलज्जा सती तत्र हरे घनानुरागं प्रचुरप्रेम रोमाञ्चदम्भेन पुलकोद्गमव्याजेन वहिर्बभार दधौ । पतिप्रेमपुलकोद्गमद्वारा प्रादर्शयदित्यर्थः ॥ २९ ॥

नेपथ्यलक्ष्मीं दयितोपक्लृप्तां सस्मेरमादर्शतले विलोक्य ।
अमंस्त सौभाग्यवतीषु धुर्यमात्मानमुद्भूतविलक्षभावा[3] ॥ ३० ॥

सी०—नेपथ्येति । सा पार्वती । आदर्शतले दयितेन हरेणोपक्लृप्तां रचितां नेपथ्यलक्ष्मीमाभूषणमण्डनं सस्मेरं सस्मितम् । अत्र स्मितस्यानुरागव्यञ्जकत्वम् । यथा तथा विलोक्योधूतस्त्यक्तो विलक्षभावः पूर्वसंजातवैलक्ष्यं यया । प्रसन्नेत्यर्थः तथोक्ता सती । आत्मानं सौभाग्यवतीषु सतीषु मध्ये धुर्यमग्रगण्यममंस्त मेने प्रियकृतनेपथ्यलक्ष्म्या अन्यदुर्लभत्वादिति भावः ॥ ३० ॥

शि०—नेपथ्येति । उद्भूतविलक्षभावा प्रसन्ना सा पार्वती दयितोपक्लृप्तां नेपथ्यलक्ष्मीं वेषशोभां सस्मेरं सस्मितं यथा तथा विलोक्य दृष्ट्वा आत्मानं सौभाग्यवतीषु स्त्रीषु मध्ये धुर्यं श्रेष्ठममंस्त समबोधि ॥ ३० ॥

अन्तः प्रविश्यावसरेऽथ तत्र स्निग्धे वयस्ये विजया जया च ।
[4]सुसंपदोपाचरतां कलाना[5]मङ्के स्थितां तां शशिखण्डमौलेः ।३१।

सी०—अन्तरिति । अथानन्तरं तत्रावसरे समये विजया जया चेत्युभे स्निग्धे सार्द्रचित्ते वयस्ये सख्यौ । 'आलिः सखी वयस्या च' इत्यमरः । अन्तः प्रविश्य तत्र शशिनः खण्डं मौलौ यस्य तथोक्तस्य हरस्य सम्बधि-

---

१. च २. सयोगचिह्नम्, ३. विलक्षतां सा; विलक्षभावम्,
४. उमां तदोपाचरतां कलाभाम्, स्वसम्पदोपाचरतां कलानाम्,
५. दूरे स्थिताम्, अङ्कस्थिताम्,

ऱ्यङ्के स्थितां तां पार्वतीं कलानां भूषणकरणचातुरीविशेषाणां सुसंपदा शोभनया संपदा । शोभयेत्यर्थः । उपाचरताम् । अलंचक्रतुरित्यर्थः । उपाचरतामिति लङः प्रथमपुरुषस्य द्विवचनम् ॥ ३१ ॥

शि०—अन्तरिति । अथानन्तरं तत्र तस्मिन्नवसरे काले जया विजया चेति द्वे स्निग्धे स्नेहयुक्ते वयस्ये सख्यौ अन्तः प्रविश्य शशिखण्डमौलेः विभूभूषणस्य हरस्याऽङ्के क्रोडे स्थितां विद्यमानां तां पार्वतीं कलानां भूषणन्यसनकौशलानां सुसंपदा शोभया उपाचरतां शोभयाञ्चक्रतुः ॥ ३१ ॥

व्यधुर्बहिर्मङ्गलगानमुच्चैर्वैतालिका[1]श्चित्रचरित्रचारु ।
जगुश्च गन्धर्वगणाः सशङ्खस्वनं[2] प्रमोदाय पिनाकपाणेः ॥ ३२ ॥

सी०—व्यधुरिति । बहिः प्रदेशे वैतालिका बन्दिनश्चित्रेण चरित्रेण चारु मनोहरं मङ्गलरूपं गानम् गीतमित्यर्थः । उच्चैरुच्चस्वरेण व्यधुश्चक्रुः । तथा गन्धर्वगणाश्च पिनाकपाणेर्हरस्य प्रमोदायानन्दाय । 'प्रमोदामोदसंमदाः' इत्यमरः । सशङ्खस्वनं पाञ्चजन्यशब्दसहितं यथा तथा जगुः । गायन्ति स्मेत्यर्थः ॥ ३२ ॥

शि०—व्यधुरिति । वैतालिकाः स्तुतिपाठकाः बहिर्बाह्यप्रदेशे चित्रचरित्रचारु विविधचरित्रमञ्जुलं मङ्गलगानं स्तुतिगीतं व्यधुरकुर्वन् । तथा गन्धर्वगणा देवयोनिविशेषाः पिनाकपाणेः शिवस्य प्रमोदाय हर्षाय सशङ्खस्वनं शङ्खध्वनिसहितं यथा तथा जगुरगायन् ॥ ३२ ॥

ततः स्वसेवावसरे सुराणां गणांस्तदालोकनतत्पराणाम् ।
द्वारि प्रविश्य प्रणतोऽथ नन्दी निवेदयामास कृताञ्जलिः सन् ॥ ३३ ॥

सी०—तत इति । ततोऽनन्तरं स्वस्य स्वकर्तृकायाः सेवाया अवसरे समये तस्य हरस्य यदालोकनं तत्र तत्पराणामासक्तानां सुराणां गणान्कर्मभूतान् । नन्दी कर्ता । प्रणतो नम्रीभूतः सन् द्वारि प्रविश्य । न त्वन्तरेवेत्यर्थः । कृताञ्जलिः सन् । निवेदयामास । देवा भवदवलोकने समुत्सुकाः सन्तीति हरं बोधयामासेत्यर्थः ॥ ३३ ॥

शि०—तत इति । ततस्तदनन्तरं स्वसेवावसरे निजशुश्रूषाक्षणे तदालोकनतत्पराणां हरदर्शनाकांक्षिणां सुराणां देवानां गणान् समूहान् ( कर्मभूतान् ) अथ प्रणतो नम्रीभूतो नन्दी हरपरिचारकः ( कर्ता ) द्वारि प्रविश्य कृताञ्जलिर्येन सकृताञ्जलिर्बद्धाञ्जलिः सन् निवेदयामास विज्ञापयामास ॥ ३३ ॥

महेश्वरो मानसराजहंसीं करे दधानस्तनयां हिमाद्रेः ।
संभोगलीलालयतः सहेलं [3]हरो बहिस्तानभि निर्जगाम ॥ ३४ ॥

---

१. चित्रितचारुवेष्यम्, २. ध्वनिम्, ३. हसन्,

सी०—महेश्वर इति। महानीश्वरः समर्थो हरो मानसस्य मनोरूपस्य सरसो राजहंसीं हिमाद्रेस्तनयां पार्वतीं करे दधानः सन्। संभोगलीलाया आलयतो मन्दिरात्। 'निकाय्यानिलयालयाः' इत्यमरः। बहिस्तान्सुराभि सहेलं सलीलं यथा तथा निर्जगाम। निश्चक्रामेत्यर्थः॥ ३४॥

शि०—महेश्वर इति। महेश्वरो हरः मानसराजहंसीं चेतोराजहंसपक्षितुल्यां हिमाद्रेः शैलाधिराजस्य तनयां पुत्रीं पार्वतीं करे हस्ते दधानः धारयन् सन्। संभोगलीलालयतः क्रीडाभवनात् बहिर्बाह्यप्रदेशे तान् सुरानभि संमुखं सहेलं सलीलं यथा तथा निर्जगाम निःसृतवान्। पार्वत्यां राजहंसीत्वारोपो मानसे सरोवरत्वारोपे निमित्तमितिपरम्परितरूपकालङ्कारः॥ ३४॥

क्रमान्महेन्द्रप्रमुखाः प्रणेमुः शिरोनिबद्धाञ्जलयो महेशम्[1]।
प्रालेयशैलाधिपतेस्तनूजां देवीं च लोकत्रयमातरं ते[2]॥ ३५॥

सी०—क्रमादिति। महेन्द्रप्रमुखास्ते देवाः शिरःसु निबद्धा अञ्जलयो यैस्तथोक्ताः। सन्तो महेशं हरम्। तथा प्रालेयो हिमानीरूपो यः शैलाधिपतिः पर्वतराजो हिमालयस्तस्य तनूजां कन्यां लोकत्रयस्य मातरं जननीं देवीं पार्वतीं च क्रमात्प्रणेमुः। नमश्चक्रुरित्यर्थः। 'उपसर्गादसमासेऽपि' इति णत्वम्॥ ३५॥

शि०—क्रमादिति। महेन्द्रमुखाः शक्रप्रधानास्ते सुराः शिरोनिबद्धाञ्जलयः उत्तमाङ्गकृताञ्जलयः सन्तः महेशं शिवं प्रालेयशैलाधिपतेः हिमाद्रेस्तनूजां पुत्रीं लोकत्रयमातरं त्रिभुवनजननीं देवीं पार्वतीं च क्रमात् यथाक्रमं प्रणेमुर्नमश्चक्रुः।३५।

यथागतं तान्विबुधान्विसृज्य [3]प्रसाद्य मानक्रियया प्रतस्थे।
स नन्दिना दत्तभुजोऽधिरुह्य वृषं वृषाङ्कः सह शैलपुत्र्या॥ ३६॥

सी०—यथागतमिति। स वृषाङ्को हरस्तान्विबुधानिन्द्रादीन्मानक्रियया समानविधानेनेत्यर्थः। प्रसाद्य प्रसन्नान्कृत्वा। तथा यथागतं विसृज्य च। नन्दिना दत्तो भुजो यस्मै तथोक्तः सन्। शैलपुत्र्या पार्वत्या सह वृषमधिरुह्यास्थाय प्रतस्थे। 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। 'साकं सार्धं समं सह' इत्यमरः॥ ३६॥

शि०—यथागतमिति। वृषोऽङ्कं चिह्नं वाहनं यस्य स वृषाङ्को वृषभवाहनः स हरः तान् शक्रप्रभृतीन् विबुधान् देवान् मानक्रियया सत्कारव्यापारेण प्रसाद्य सन्तुष्टान् विधाय। तथा यथागतं विसृज्य संप्रेष्य च नन्दिना दत्तभुजोऽर्पितकरः सन् शैलपुत्र्या पार्वत्या सह वृषमधिरुह्य प्रतस्थे जगाम अत्र हरस्यैकस्य कर्तुः प्रसादविसर्गप्रस्थानक्रियास्वन्वयाद्दीपकालङ्कारः॥ ३६॥

---

१. गिरीशम्, २. ताम्, ३. प्रसन्दमानक्रियया, प्रसाद्यमानः प्रियया,

मनोतिवेगेन ककुद्मता स प्रतिष्ठमानो [1]गगनाध्वनोऽन्तः ।
वैमानिकैः साञ्जलिभिर्ववन्दे विहारहेलागतिभिर्गिरीशः ॥ ३७ ॥

सी०—मन इति । मनसोऽप्यत्यन्तं वेगो गतिर्जवो यस्य तेन ककुद्मता वृषेण गगनरूपिणोऽध्वनो मार्गस्यान्तर्मध्ये प्रतिष्ठते चलतीति प्रतिष्ठमानः स गिरीशो हरो विहारार्थं हेलया क्रीडया गतिर्येषां तैः । यदृच्छया संचरमाणैरित्यर्थः । वैमानिकैर्विमानैश्चरन्तीति वैमानिका 'चरति' इति ठक् । 'ठस्येकः' इतीकादेशः । 'किति च' इत्यादिवृद्धिः । तथोक्तैः । देवैरित्यर्थः साञ्जलिभिः । सद्भिर्ववन्दे नमस्कृतः । कर्मणि लिट् ॥ ३७ ॥

शि०— मनोतिवेगेनेति । मनोऽतिवेगेन चेतोऽधिकजवेन ककुद्मता वृषेण गगनाध्वनान्तः आकाशमार्गमध्ये प्रतिष्ठमानो विद्यमानः स गिरिशः शिवः विहारहेलागतिभिः आनन्दक्रीडागमनशीलैः ( स्वेच्छाचारिभिः ) वैमानिकैः व्योमयानमारूढैः ( देवैः ) साञ्जलिभिः सद्भि र्ववन्दे प्रणतः ॥ ३७ ॥

स्वर्वाहिनीवारिविहारचारी रतान्तनारीश्रमशान्तिकारी ।
तौ पारिजातप्रसवप्रसङ्गी मरुत्सिषेवे गिरिजागिरीशौ ॥ ३८ ॥

सी०—स्वर्वाहिनीति । तौ गिरिजागिरीशौ गौरीहरौ । कर्मभूतावित्यर्थः । स्वर्वाहिन्या मन्दाकिन्याः संबन्धिनि वारिणी विहारं संचारं चरत्याचरति । करोतीति यावत् । मन्दाकिनीशीकरवाहीत्यर्थः । अनेन शैत्योक्तिः । तथा रतान्ते यो नारीणां सम्बन्धी श्रमः खेदस्तस्य शान्ति करोति । अनेन मान्द्योक्तिः तथा पारिजातस्य कल्पवृक्षस्य संबन्धिनां प्रसवानां पुष्पाणां प्रसङ्गः संबन्धो यस्य अनेन सौगन्ध्योक्तिः शैत्यमान्द्यसौगन्ध्यरूपगुणत्रयविशिष्टो मरुत्समीरणः । कर्तृभूत इत्यर्थः । सिषेवे । आराधयामासेत्यर्थः ॥ ३८ ॥

शि०— स्वर्वाहिनीति । स्वर्वाहिनीवारिविहारचारी सुरनदीजलकणावाही रतान्तनारीश्रमशान्तिकारी सुरतस्त्रीखेदापहारी पारिजातप्रसवप्रसङ्गः मन्दारकुसुमसौरभवान् मरुत् वायुः तौ गिरिजागिरीशौ पार्वतीपरमेश्वरौ सिषेवे सेवितवान् ॥ ३८ ॥

पिनाकिनापि स्फटिकाचलेन्द्रः कैलासनामा कलिताम्बरांशः ।
[2]धृतार्धसोमोऽद्भुतभोगिभोगो विभूतिधारी स्व इव प्रपेदे ॥ ३९ ॥

सी०—पिनाकिनेति । पिनाकिनापि हरेणापि कलितः स्वमहत्त्वेनावृतोऽम्बरांस आकाशप्रान्तदेशो येन तथोक्तः । द्वितीयपक्षे कलिता वेष्टिता अम्बरस्यांशा दिग्रूपा येन । दिगम्बर इत्यर्थः । तथः अर्धो यः सोमश्चन्द्रः

१. गगनाध्वनीनः, २. भृतभोगिभोगः,

सोऽस्यास्तीत्यर्धसोमी हरः स धृतो येन। कैलासवासी हि भगवान्गिरीश इति भावः। द्वितीयपक्षे धृतोऽर्धः कलाल्पश्चन्द्रो येन। चन्द्रशेखरो हि भगवान्गिरीश इति भावः। भोगिन्यश्च भोगिनश्च भोगिनः। 'पुमान्स्त्रिया' इत्येकशेषः। भोगिनः कामुका इत्यर्थः। तेषां तत्कर्तृको यो भोगः संभोगः सोऽद्भुत आश्चार्यंकारी यत्र। द्वितीयपक्षेऽद्भुता भोगिनां सर्पाणां भोगा देहा यत्र। सर्पभूषणो हि भगवानिति भावः। तथा विभूतिं धरतीति विभूतिधारी। संपद्वानित्यर्थः। द्वितीयपक्षे विभूतिं भस्म धरतीति तथा। भस्मोद्धूलनकारी हि भगवान्गिरीश इति भावः। तथा कैलासनामा स्फटिकानामचलेन्द्रो गिरीन्द्रः। कर्मभूत इत्यर्थः। इवात्मेव प्रपेदे प्राप्तः। कर्मणि लिट्। पूर्णोपमालंकारः॥ ३९॥

शि०—पिनाकिनेति। पिनाकिना शिवेनाऽपि (गिरिपक्षे) कलिताम्बरांशः स्वमहत्त्वावृतवियत्प्रान्तदेशः (शिवपक्षे) कलिताम्बरांशो धृताकाशादिग्रूपांशः (गिरिपक्षे) धृतार्द्धसोमः धृतशिवः। (शिवपक्षे) धृतार्द्धसोमो धृतार्द्धचन्द्रः। (गिरिपक्षे) अद्भुतभोगिभोगः विचित्रकामुकसंभोगः। (शिवपक्षे) अद्भुतभोगिभोगः अद्भुतसर्पदेहः (गिरिपक्षे) विभूतिधारी ऐश्वर्यशाली (शिवपक्षे) विभूतिधारी भस्मधारणशीलः। एतादृशः कैलाससंज्ञकः स्फटिकाचलेन्द्रः स्फटिकगरिन्द्रः स्व इव प्रपेदे प्राप्तः॥ ३९॥

विलोक्य यत्र स्फटिकस्य भित्तौ सिद्धाङ्गनाः [1]स्वं प्रतिबिम्बमारात्।
भ्रान्त्या [2]परस्या विमुखीभवन्ति प्रियेषु मानग्रहिला [3]नमत्सु॥ ४०॥

सी०—विलोक्येति॥ यत्र कैलासे स्फटिकस्य भित्तावारात्समीपम्। 'आराद्दूरसमीपयोः' इत्यमरः। पतितं स्वं स्वकीयं प्रतिबिम्बं विलोक्य परस्याः सपत्नया भ्रान्त्या भ्रमेण मानग्रहिला माने प्रणयकलहे ग्रहिला आग्रहवत्यः। तुन्दादेराकृतिगणत्वाश्रयणादिलच्। सिद्धाङ्गनाः प्रियेषु नमत्स्वपि सत्सु विमुखीभवन्ति। पराङ्मुख्यो भवन्तीत्यर्थः॥ ४०॥

शि० – विलोक्येति। यत्र यस्मिन् कैलासे स्फटिकस्य तदाख्यप्रस्तरविशेषस्य भित्तौ कुड्ये आरात्समीपे स्वं स्वकीयं प्रतिबिम्बं स्वरूपान्तरं विलोक्य दृष्ट्वा परस्याः सपत्न्या भ्रान्त्या भ्रमेण मानग्रहिलाः प्रणयकलहाग्रहवत्य सिद्धाङ्गनाः प्रियेषु स्वामिषु मत्सु न प्रणतेष्वपि सत्सु विमुखीभवन्ति पराङ्मुख्यो भवन्तीत्यर्थः॥ ४०॥

सुबिम्बितस्य स्फटिकांशुगुप्तेश्चन्द्रस्य चिह्नप्रकरः करोति।
गौर्यार्पितस्येव रसेन यत्र [4]कस्तूरिकायाः शकलस्य लीलाम्॥४१॥

---

१. स्वप्रतिबिम्बम्, २. परस्याभिमुखीभवन्ति, ३. मनःसु,
४. कस्तूरिकास्थासकुलस्य,

सी०—सुबिम्बितस्येति । यत्र स्फाटिकाचलेन्द्रे सुबिम्बितस्य प्रतिबिम्बस्यात एव स्फटिकांशुभिः । शुभ्रैरित्यर्थः । गुप्तिः प्रतिबिम्बगोपनं यस्य । उभयोः शुक्लत्वात्पृथगभासमानस्येत्यर्थः । तथोक्तस्य चन्द्रस्य सम्बन्धी चिह्नप्रकरः कलङ्कसंचयः । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । गौर्या पार्वत्यार्पितस्य निहितस्य कस्तूरिकायाः शकलस्य खण्डस्य । संचय इवेत्युत्प्रेक्षा । लीलां क्रीडाम् । शोभामिति । यावत् । करोति । निदर्शनाभेदः । स चोपमयोत्प्रेक्षया वा सङ्कीर्यत इति संदेहसङ्करोऽत्रालङ्कारः । यदि गौर्यार्पितं तर्ह्युपमा यदि नार्पितं तर्ह्युत्प्रेक्षेत्यवधेयम् ॥ ४१ ॥

शि०—सुबिम्बितस्येति । यत्र यस्मिन् कैलासे सुबिम्बितस्य प्रतिबिम्बितस्य स्फटिकांशुगुप्तेः शुभ्रांशुप्रतिबिम्बगोपनस्य चन्द्रस्य सुधांशोः चिह्नप्रकार कलङ्कसमुदायः गौर्या पार्वत्या अर्पितस्य दत्तस्य कस्तूरिकाया मृगनाभेः रसेन शकलस्य खण्डस्य लीलां शोभां करोति जनयति । यत्र कैलासे प्रतिबिम्बितस्य चन्द्रस्य कलङ्कश्चन्द्रकलङ्कत्वे नाभिज्ञायते किन्तु पार्वतीदत्तं कस्तूरीखण्डमित्येवाभिज्ञायते । एतेन कैलासस्यातिस्वच्छत्वमुक्तम् ॥ ४१ ॥

यदीयभित्तौ प्रतिबिम्बताङ्गमात्मानमालोक्य रुषा करीन्द्राः ।
[1]मत्तान्यकुम्भिभ्रमतोऽतिभीमदन्ताभिघातव्यसनं वहन्ति ॥ ४२ ॥

सी०—यदीयेति । करीन्द्रा आत्मानं शरीरम् । स्वीयमिति शेषः । यदीयभित्तौ प्रतिबिम्बिताङ्गं प्रतिबिम्बितावयवमालोक्य विलोक्य मत्ता येऽन्ये कुम्भिनो दन्तिनस्तेषां भ्रमतो भ्रमाज्जनितया रुषया क्रोधेन । 'प्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः । अतिभीमा ये दन्तास्तेषां योऽभिघात आघातस्तेन यद्व्यसनं दुःखं दन्तजर्जरितत्वलक्षणं वहन्ति प्राप्नुवन्ति । भ्रमात्मकं ज्ञानं दुःखावहं भवतीति भावः ॥ ४२ ॥

शि०—यदीयभित्ताविति । करीन्द्रा गजा यदीयभित्तौ यस्य कैलासस्य कुड्ये आत्मानं शरीरं प्रतिबिम्बिताङ्गं प्रतिबिम्बितावयवमालोक्य मत्ताऽन्यकुम्भिभ्रमतो मत्तापरगजभ्रमेण जनितया रुषा क्रोधेन अतिभीमदन्ताभिघातव्यसनमतिभयानकदन्ताघातजनितदुःखं वहन्ति प्राप्नुवन्ति भ्रान्तिजन्यज्ञानस्य कदापि सुखावहत्वं चेति तात्पर्यम् ॥ ४२ ॥

निशासु यत्र प्रतिबिम्बितानि ताराकुलानि स्फटिकालयेषु ।
दृष्ट्वा [2]रतान्तच्युततारहारयुक्ताभ्रमं बिभ्रति सिद्धवध्वः ॥ ४३ ॥

सी०—निशास्विति । यत्र स्फटिकाचले स्फटिकालयेषु प्रतिबिम्बितानि ताराकुलानि नक्षत्रकुलानि निशासु दृष्ट्वा सिद्धवध्वः किंनरनार्यो

१. नाग, २. रतान्ते,

रतान्ते च्युतो भ्रष्टस्तारोऽत्युच्चैर्यो हारो मुक्ताहारः। 'तारोऽत्युच्चैस्त्रय-स्त्रिषु' इत्यमरः। तस्य या मुक्ता मौक्तिकानि तासां भ्रमं बिभ्रति। स्फटिकालयप्रतिबिम्बितमुक्तासदृशनक्षत्रकुलमभिवीक्ष्य सुरतान्तकालीनहारभ्रंशोन्मुक्ताफलभ्रान्तिमत्यः सिद्धवध्वो भवन्तीति भावः॥ ४३॥

शि०—निशास्विति। यत्र स्फटिकाचले सिद्धवध्वः सिद्धाङ्गनाः निशासु रात्रिषु स्फटिकालयेषु स्फटिकनिर्मितगृहेषु प्रतिबिम्बितानि ताराकुलानि नक्षत्रवृन्दानि दृष्ट्वा विलोक्य रतान्तच्युततारहारमुक्ताभ्रमं संभोगावसानभ्रष्टोत्कृष्टमुक्ताहारमौक्तिकभ्रान्ति बिभ्रति दधाति। यत्र रात्रौ स्फटिकप्रतिबिम्बितनक्षत्रचयावलोकनेन क्रीडान्तपतितहारच्युतमौक्तिभ्रमं कुर्वन्ति किंनरस्त्रिय इति भावः॥ ४३॥

नभश्चरीमण्डनदर्पणश्रीः सुधानिधिर्मूर्धनि यस्य तिष्ठन्।
अनर्घ्यचूडामणितामुपैति [1]शैलाधिनाथस्य शिवालयस्य॥ ४४॥

सी०—नभश्चरीति। नभसि चरतीति नभश्चरी। आकाशचारिणीत्यर्थः। 'चरेष्टः' इति टप्रत्यये टित्वात् 'टिड्ढाणञ्–' इति ङीप्। तथोक्ता मण्डनस्य विलासस्य यो दर्पण आदर्शस्तस्य श्रीरिव श्रीर्यस्य तथोक्तः। अत्र श्रीशब्दस्य रूढत्वेन शोभेति संज्ञावाचकत्वात् 'संज्ञापूरण्योश्च' इति पुंवद्भावो न। सुधानिधिश्चन्द्रो यस्य कैलासस्य मूर्धनि शृङ्गे तिष्ठन्। शिवालयस्य शिवाः कल्याणकारिण आलया गृहा यत्र तस्य। शैलानामधिनाथस्य कैलासशिखरात्किंचिदधिकत्वम्। यदा कैलासमूर्धनि चन्द्रस्तदा हिमालयस्य मूर्ध्नोऽधः किंचिद्वर्तत इति भावः॥ ४४॥

शि०—नभ इति। यस्य कैलासस्य मूर्धनि नभश्चरीमण्डनदर्पणश्रीः आकाशचारिणीविलासादर्शशोभः। सुधानिधिः चन्द्रः तिष्ठन् विद्यमानः सन् शिवालयस्य कल्याणकारिगृहस्य शैलाधिनाथस्य हिमालयस्य अनर्घ्यचूडामणितामुपैति प्राप्नोति। हिमाद्रिशृङ्गस्य कैलासशृङ्गादधिकत्वमिति कैलासशृङ्गस्थचन्द्रो हिमाद्रिचूडामणिरिति भावः॥ ४४॥

समीयिवांसो रहसि स्मरार्ता रिरंसवो यत्र सुराः प्रियाभिः।
एकाकिनोऽपि प्रतिबिम्बभाजो विभान्ति भूयोभिरिवान्विताः स्वैः॥

सी०—समीयिवांस इति। यत्र सुराः स्मरार्ता अत एव रिरंसवो रन्तुमिच्छन्तः। रमतेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। तथोक्ताः। अत एव प्रियाभिः सहैकाकिनोऽपि प्रत्येकमेकसंख्याका अपि रहसि समीयिवांसः प्राप्नुवन्तो भूयोभिः स्वैर्देहैरन्विता इव विभान्ति। यतः प्रति-

1. शैलाधिराजस्य,

बिम्बभाजः। प्रतिबिम्बवशादेक एवानेकधा दृश्यत एवेति युक्तमेवेति भावः ॥ ४५ ॥

शि०—समीयिवांस इति। यत्र कैलासे स्मरार्ताः कामपीडिताः अत एव रिरंसवोरन्तुमिच्छवः, अत एव प्रियाभिः निजाङ्गनाभिः सह रहसि एकान्ते समीयिवांसः प्राप्नुवन्तः सुरा देवाः एकाकिनोऽपि प्रत्येकमेकसंख्याका अपि प्रतिबिम्बभाजः बिम्बिताः सन्तः भूयोभिर्बहुभिः स्वैः स्वकीयैर्देहैः अन्विता युक्ता इव विभान्ति शोभन्ते। प्रतिबिम्बवशादेकोऽप्यनेक इव भातीत्यर्थः ॥ ४५ ॥

[1]देवोऽपि गौर्या सह चंद्रमौलिर्यदृच्छया स्फाटिकशैलशृङ्गे।
शृङ्गारचेष्टाभिरनारताभिर्मनोहराभिर्व्यहरच्चिराय ॥ ४६ ॥

सी०-देवोऽपीति। चन्द्रमौलिर्देवोऽपि हरोऽपि स्फाटिकशैलः कैलासस्तस्य शृङ्गे शिखरे। 'शृङ्गं प्रभुत्वे शिखरे' इति मेदिनी। गौर्या पार्वत्या सह यदृच्छया स्वेच्छया। यथाकाममित्यर्थः। मनोहराभिरत एवानारताभिर्निरन्तरं भवन्तीभिः शृङ्गारचेष्टाभिश्चिराय व्यवहरद्विजहार ॥

शि०—देव इति। चन्द्रो मौलौ यस्य स चन्द्रमौलिः विधुभूषणः देवः शिवोऽपि स्फटिकशैलशृङ्गे कैलासाचलशिखरे गौर्या शैलपुत्र्या सह यदृच्छया स्वेच्छया मनोहराभि र्मनोज्ञाभिः अनारताभिः निरन्तराभिः शृङ्गारचेष्टाभिः चिराय चिरकालं व्यहरत् चिक्रीड ॥ ४६ ॥

देवस्य तस्य स्मरसूदनस्य हस्तं [2]समालिङ्ग्य सुविभ्रमश्रीः।
सा नन्दिना [3]वेत्रभृतोपदिष्टमार्गा पुरोगेण कलं चचाल ॥ ४७ ॥

सी०—देवस्येति। सुविभ्रमश्रीः शोभना विभ्रमस्य विलासस्य श्रीर्यस्याः सा पार्वती। स्मरसूदनस्य स्मरविनाशकस्य तस्य देवस्य हरस्य हस्तं समालिङ्ग्य। अवलम्ब्येत्यर्थः। वेत्रभृता यष्टिधारकेन तथा पुरोगेणाग्रगामिना नन्दिना गणेनोपदिष्टमार्गतो गमनं विधेयमिति प्रदर्शितमार्गा सती कलं मधुरं यथा तथा चचाल। मन्थरां गतिमकार्षीदित्यर्थः ॥ ४७ ॥

शि०—देवस्येति। सुविभ्रमश्रीः सुविलासकान्तिः सा पार्वती स्मरसूदनस्य कामारेः तस्य देवस्य शिवस्य हस्तं करं समालिङ्ग्य समवलम्ब्य वेत्रभृता यष्टिमता पुरोगेन अग्रेगच्छता नन्दिना तदाख्यगणेन उपदिष्टमार्गा प्रदर्शितसरणिः सती कलं मधुरं ( मञ्जुलं ) यथा स्यात्तथा चचाल जगाम ॥ ४७ ॥

[4]चलच्छिखाग्रो विकटाङ्गभङ्गः [5]सुदन्तुरः [6]शुक्लसुतीक्ष्णतुण्डः।
भ्रुवोपदिष्टः स [7]तु शङ्करेण तस्या विनोदाय ननर्त भृङ्गी ॥४८॥

---

१. दिशः, २. समालम्ब्य, ३. उपदिष्टं मार्गम्, ४. चलद्विषाणः,
५. सदन्तुरः, ६. शुष्क, ७. हि,

सी०—चलदिति। चलन्ति शिखाग्राणि चूडाग्राणि यस्य। 'शिखा शाखा बर्हिचूडालाङ्गलिक्यग्रमात्रके। चूडामात्रं शिखायां च ज्वालायां प्रपदेऽपि च ॥' इति मेदिनी। तथा विकटाः कराला अङ्गभङ्गा नृत्यचेष्टा विशेषा यस्य। 'विकटा वज्रवाराह्यां त्रिषु रुचिरकालयोः' इति मेदिनी। तथा सुदन्तुर उन्नतः। 'दन्तुरस्तून्नते त्रिषु' इति मेदिनी। 'दन्त उन्नत उरच्' इत्युरच्प्रत्ययः। शुक्लं शुभ्रं सुतीक्ष्णं सुतरां निग्मं तुण्डं मुखं यस्य। एतादृशः स प्रसिद्धो भृङ्गी गणविशेषस्तु। तस्या भवान्या विनोदायानन्दाय शङ्करेण भ्रुवोपदिष्टः प्रेरितः सन्ननर्त ॥ ४८ ॥

शि०—चलदिति। चलच्छिखाग्रः कम्पितचूडाग्रभागः विकटाङ्गभङ्गः करालनृत्यचेष्टाविशेषः सुदन्तुरः समुन्नतः शुक्लसुतीक्ष्णदण्डः शुभ्रतिग्ममुखः भृङ्गी स गण वशेषः तस्या गौर्या विनोदाय प्रमोदाय शङ्करेण शिवेन भ्रुवा भ्रूकुट्या उपदिष्टः प्रेरितः सन् ननर्त नृत्यंचकार ॥ ४८ ॥

कण्ठस्थलीलोलकपालमाला दंष्ट्राकरालाननमभ्यनृत्यत्।
प्रीतेन तेन प्रभुणा नियुक्ता[1] काली कलत्रस्य मुदे प्रियस्य ॥ ४९ ॥

सी०—कण्ठस्थलीति। कण्ठस्य स्थल्यां लोला कपालानां नृकपालानां माला यस्याः। तथा दृष्टाभिः करालं भयानकमाननं बिभ्रती काली कालिका। 'काली तु कालिका क्षीरकीटेषु परिकीर्तिता' इति मेदिनी। प्रियस्य कलत्रस्य पार्वत्या मुदे प्रीत्यै तेन प्रभुणा हरेण प्रीतेन सता नियुक्ता प्रेरिता सती। अभ्यनृत्यन्ननर्त। नृत्यतेर्देवादिकात्कर्तरि लङ् ॥ ४९ ॥

शि०—कण्ठस्थलीति। कण्ठस्थलीलोलकपालमाला ग्रीवास्थचपलमुण्डस्रक् दंष्ट्राकरालाननं दशनभयङ्करमुखं (दधती) अध्याहृतमिदम्। काली प्रियस्य कलत्रस्य स्त्रियाः पार्वत्याः मुदे हर्षाय प्रीतेन प्रसन्नेन तेन प्रभुणा शिवेन नियुक्ता प्रेरिता सती अभ्यनृत्यत् ननर्त पार्वतीम्प्रसादयितुं हरः कालीमनर्तयदित्यर्थः ॥४९॥

भयंकरौ तौ विकटं [2]नदन्तौ विलोक्य बाला भयविह्वलाङ्गी।
[3]सरागमुत्सङ्गमनङ्गशत्रोर्गाढं प्रसह्य स्वयमालिलिङ्ग ॥ ५० ॥

सी०—भयंकराविति। विकटं करालं यथा तथा नदन्तौ शब्दायमानौ। अत एव भयंकरौ तौ कालीभृङ्गिणौ विलोक्य भयेन विह्वलमङ्गं यस्याः सा बाला पार्वती प्रसह्य बलात्कारेण स्वयमात्मनैवानङ्गशत्रोर्हरस्योत्सङ्गं सरागं सानुरागं यथा तथा। 'सरङ्गम्' इति पाठे भावे नलोपश्चिन्त्यः। गाढमालिलिङ्ग। अन्योऽपि भीतः सन्कंचिदालिङ्गति तद्वदिति भावः ॥ ५० ॥

---

१. प्रणुन्ना, २. नटन्तौ, ३. सुरंगम्,

शि०—भयङ्कराविति । बाला नववयस्का पार्वती विकटं विकरालं यथा तथा नदन्तौ शब्दं कुर्वाणौ । अत एव भयंकरौ भीतिजनकौ तौ कालीभृङ्गिणौ विलोक्य दृष्ट्वा भयविह्वलाङ्गी साध्वसोत्कम्पितविग्रहा सती प्रसह्य सहसा स्वयमात्मनैवाऽनङ्गशत्रोः शिवस्योत्सङ्गं क्रोडं सरागं सस्नेहं यथा तथा गाढं भृशमालिलिङ्ग समालिङ्गितवती । कश्चिदन्यो भीतः सन् कञ्चिदालिङ्गति यथा तथा पार्वती शिवोत्सङ्गमालिलिङ्गेति भाव । अत्र गम्योपमा ॥ ५० ॥

**उत्तुङ्गपीनस्तनपिण्डं ससंभ्रमं तत्परिरम्भमीशः ।**
**प्रपद्य सद्य पुलकोपगूढः स्मरेण रूढप्रमदो ममाद ॥ ५१ ॥**

सी०—उत्तुङ्गेति । ईशो हरो रूढोपर्यारूढा प्रमदा पार्वती यस्यात एवोत्तुङ्गमुच्चैः पीनं पुष्टं यस्तनपिण्डम् । उभयोरतिस्थूलतया परस्परसंयुक्तत्वात्पिण्डीभूतमिति भावः । तेन कृत्वा पीडा यत्र । तथा ससम्भ्रमं सभयं तस्यास्तत्कर्तृकं परिरम्भमाश्लेषं प्रपद्य प्राप्य स्मरेण कामेन हेतुना सद्यः सहसा पुलकैरुपगूढः सन्ममाद मत्तो बभूव ॥ ५१ ॥

शि०—उत्तुङ्गेति । रूढप्रमदः आरुढकलत्रः ईशः शिवः उत्तङ्गपीनस्तनपिण्डपीडं समुन्नतस्थूलपयोधरद्वयाघातं ससंभ्रमं सभयं तत्परिरम्भं पार्वतीस्तनकर्तृकाश्लेषं प्रपद्य प्राप्य स्मरेण मदनेन सद्यः तत्क्षणं पुलकोपगूढः सञ्जातरोमाञ्चः सन् ममाद मत्तो बभूव । पार्वत्यालिङ्गितहरक्रोडे तदङ्गस्पर्शाद्धरः सञ्जातकामो बभूवेत्यर्थ ॥ ५१ ॥

**इति गिरि[1]तनुजाविलासलीलाविविधविभङ्गिभिरेष तोषितः सन् ।**
**अमृतकरशिरोमणिर्गिरीन्द्रे कृतवसतिर्वशिभिर्गणैर्ननन्द ॥ ५२ ॥**

सी०—इतीति । गिरीन्द्रे कैलासे कृता वसतिर्येन तथामृतकरश्चन्द्रः शिरसि मणिरिव यस्य स एष हर इत्येवंभूतैर्गिरितनुजायाः पार्वत्याः सम्बन्धिनी या विलासलीला सकामचेष्टक्रीडा तस्या विविधा नानाविधा या विभङ्ग्यो रचनास्ताभिस्तोषितः प्रीतः सन् । वशिभिः स्ववशंगतैर्गणैर्नन्दिप्रभृतिभिः सह ननन्द जहर्ष । तेषां हर्षोऽनयोरलौकिकक्रीडादर्शनादिति भावोऽनुसंधेयः । पुष्पिताग्रावृत्तम् अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इतिलक्षणात् ॥ ५२ ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कैलासगमनो नाम नवमः सर्गः ॥

---

१. सुतया,

शि०—इतीति । गिरीणामिन्द्रः श्रेष्ठः तस्मिन् गिरीन्द्रे शैलोत्तमे कैलासे कृतवसतिः कृतवासः । तथाऽमृतकरशिरोमणिः चन्द्रमौलिरेष शिवः इति इत्थं गिरितनुजाविलासलीलाविविधविभङ्गिभिः पार्वतीसमदनोद्यमानानेकविधरचनाभिः तोषितः प्रसन्नीकृतः सन् वशिभिर्निजायत्तैर्गणैर्नन्दिप्रमुखैः सह ननन्द हृष्टवान् । पार्वतीहरयोरनङ्गजन्यस्तेषां च तयोरपूर्वक्रीडावलोकनजन्यश्च हर्ष इति भावः ।५२।

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितशिशु-
हितैषिणीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसम्भवमहाकाव्ये कैलासगमनो नाम
नवमः सर्गः ।



# दशमः सर्गः

आससाद सुनासीरं सदसि त्रिदशैः सह ।
[1]एष त्रैयम्बकं तीव्रं वहन्वह्निर्महन्महः ॥ १ ॥

सी०—आससादेति । एष वह्निः । तीव्रं दुःसहं महत्त्रैयम्बकं शैवम् । त्र्यम्बकशब्दात् इदमर्थकेऽणि 'न य्वाभ्याम्' इत्यैजादेशः । महो वीर्यं वहन् । त्रिदशैर्देवैः सह सदसि सभायां स्थितं सुनासीरं महेन्द्रमाससाद प्राप । 'वृद्धश्रवाः सुनासीरः' इत्यमरः ॥ १ ॥

शि०—आससादेति । एष वह्निरनलः तीव्रमसह्यं त्र्यम्बकस्येदं त्रैयम्बकमैशं महद् गुरुभूतं महस्तेजः ( वीर्यरूपं ) वहन् धारयन् सन् त्रिदशैर्देवैः सह सदसि सभायां स्थितं सुनासीरं शक्रमाससाद प्राप्तवान् । स्थितमिति पदमध्याहृतं बोध्यम् । अस्मिन् सर्गेऽनुष्टुप्वृत्तम् ॥ १ ॥

सहस्रेण दृशामीशो [2]कुत्सिताङ्गं च सादरम् ।
दुर्दर्शनं ददर्शाग्निं [3]धूम्रधूमितमण्डलम् ॥ २ ॥

सी०—सहेति । कुत्सिताङ्गमत एव दुर्दर्शनं धूम्रं धूम्रवर्णं धूमितं संजातधूमम् । तारकादित्वादितच् । मण्डलं यस्य तमग्निमीशो महेन्द्रो दृशां सहस्रेण सादरं यथा तथा ददर्श दृष्टवान् ॥ २ ॥

शि०—सहस्रेणेति । ईशो मघवा दृशां सहस्रेण सहस्रनयनैः कुत्सितमङ्गं यस्य तं कुत्सिताङ्गं निन्दितवेशम्, अत एव दुष्टं दर्शनं यस्य तं दुर्दर्शनम् अशुभावलोकनं धूम्रधूमितमण्डलं कपिशसंजातधूमसमुदायम् अग्निं सादरं सस्नेहं यथा तथा ददर्श समपश्यत् ॥ २ ॥

दृष्ट्वा तथाविधं वह्निमिन्द्रः [4]क्षुब्धेन चेतसा ।
व्यचिन्तयच्चिरं किंचित्कन्दर्पद्वेषिरोषजम् ॥ ३ ॥

सी०—दृष्ट्वेति । इन्द्रो वह्निं तथाविधं दृष्ट्वा क्षुब्धेन संचलितेन चेतसा कन्दर्पद्वेषिणो हरस्य रोषाज्जातं किंचिदपराधलक्षणं चिरं व्यचिन्तयत् ॥ ३ ॥

शि०—दृष्ट्वेति । इन्द्रः शक्रः वह्निमग्निं तथाविधं उक्तरूपं दृष्ट्वा समवलोक्य क्षुब्धेन संचलितेन चेतसा हृदयेन कन्दर्पं द्वेष्टुं शीलमस्य स तस्य रोषाज्जातं कन्दर्पद्वेषिरोषजं शिवक्रोधोद्भूतं किञ्चिदपराधरूपं चिरं बहुकालं व्यचिन्तयत् स्मृतवान् । अग्नेर्वैरूप्यं वीक्ष्य हरकोपफलमचिन्तयदित्यर्थः ॥ ३ ॥

---

१. तच्च, मत्वा, २. द्युसदां सोऽतिसादरम्, द्युसत्संसदि सादरम्, ३. धूमिल, ४. क्रुद्धेन,

[1]स विलक्ष्यमुखैर्देवैर्वीक्ष्यमाणः क्षणं क्षणम् ।
उपाविशत्सुरेन्द्रेणादिष्टं सादरमासनम् ॥ ४ ॥

सी०—स इति । सोऽग्निर्विलक्ष्यमुखैर्म्लानमुखैर्देवैः क्षणं क्षणं प्रतिक्षणं वीक्ष्यमाणो दृश्यमानः सन् । सुरेन्द्रेण सादरमादिष्टमासनमुपाविशत् ॥ ४ ॥

शि०—स इति । स वह्निः विलक्ष्यं विकृतं मुखं वदनं येषां ते तथोक्तास्तैर्विलक्ष्यमुखैः विकृतवदनैः देवैः सुरैः क्षणं क्षणं सततं वीक्ष्यमाणो विलोक्यमानः सन् सुरेन्द्रेण शक्रेण सादरं सत्कारपूर्वकं यथा तथाऽऽदिष्टं समाज्ञप्तमासनमास्तरणमुपाविशत् उपविष्टवान् ॥ ४ ॥

हव्यवाह! त्वयासादि [2]दुर्दशेयं दशा कुतः ?
इति पृष्टः सुरेन्द्रेण स निःश्वस्य वचोऽवदत् ॥ ५ ॥

सी०—हव्यवाहेति । सोऽग्निः । हव्यवाह! त्वया दुर्दशेयं दुःखावस्था कुतो हेतोरासादि प्रापीति सुरेन्द्रेण पृष्टः सन्निःश्वासं कृत्वा वचो वक्ष्यमाणमवदत् ॥ ५ ॥

शि०—हव्यवाहेति । हे हव्यवाह वह्ने, त्वया भवता इयमेषा दुर्दशा दुःखावस्था कुतः कस्मात्कारणात् आसादि प्रापि, इतीत्थं सुरेन्द्रेण शक्रेण पृष्टः जिज्ञास्यमानः सन् वह्निः क्षणं किञ्चित्कालं निश्श्वस्य निःश्वासं कृत्वा वचो वक्ष्यमाणं वाक्यमवदत् जगाद ॥ ५ ॥

अथ युग्मेनाह—

अनतिक्रमणीयात्ते शासनात्सुरनायक ।
पारावतं वपुः प्राप्य वेपमानोऽतिसाध्वसात् ॥ ६ ॥
[3]अभिगौरिरतासक्तं जगामाहं महेश्वरम् ।
कालस्येव स्मराराते: [4]स्वं रूपमहमासदम् ॥ ७ ॥

सी०—अनतीति । अभिगौरीति । हे सुरनायक, अहं पारावतं कापोतं वपुः प्राप्यानतिक्रमणीयादनुल्लङ्घनीयात्ते तव शासनाद्धेतोरभिगौरि गौर्यामित्यभिगौरि । 'अव्ययं विभक्ति—' इत्यादिना विभक्त्यर्थेऽव्ययीभावः । रतासक्तं महेश्वरं जगाम प्राप । जगामेति लिट उत्तमपुरुषैकवचनम् । अथ चातिसाध्वसाद्वेपमानः कम्पमानोऽहं कालस्येव । तद्वद्भयानकस्येत्यर्थः । स्मरारातेर्हरस्य । पुर इति शेषः । स्वं रूपमाग्नेयस्वरूपमासदं प्रापम् । लङ उत्तमपुरुषैकवचनम् ॥ ६-७ ॥

---

१. स्रवज्जलमुखैः, स विलक्षमुखैः, २. सुमहाद्दुर्दशा; सुदर्दर्शा दशा,
३. अतिगौरी, ४. उपान्तम्,

शि०—अनतीति। अभिगौरीति। हे सुरनायक सुरश्रेष्ठ अनतिक्रमणीयात् अत्याज्यात् ते तव शासनात् आदेशात् अहं पारावतं कापोतं वपुः शरीरं प्राप्य गृहीत्वा अभिगौरि गौर्यां रतासक्तं महेश्वरं शिवं जगाम प्राप। अथ चातिसाध्वसाद्भीतिबाहुल्यात् वेपमानः कम्पमानोऽहं कालस्येव तत्सदृशभयानकस्य स्मरारातेः शिवस्य, स्थाने इति शेषः। स्वं रूपमाग्नेयरूपमासदं प्रापम् ॥ ६-७ ॥

दृष्ट्वा छद्मविहङ्गं मां सुज्ञो विज्ञाय [1]जम्भभित्।
ज्वलद्भालानले होतुं [2]कोपनो [3]माममन्यत ॥ ८ ॥

सी०—दृष्ट्वेति। हे जम्भभिदिन्द्र! सुज्ञो हरो मां दृष्ट्वा। अथ च छद्मना विहङ्गं विज्ञाय ज्ञात्वा। दर्शनमात्रादेव तु कापट्यानवगम एव, किन्तु विलम्बोपस्थिततया। अतो ज्ञानदर्शनयोर्भिन्नकालीनत्वात्पृथग्व्यपदेशः। अतो ल्यब्द्वयस्य मननक्रियापेक्षया पूर्वत्वेनान्वयः। कोपनः क्रोधनः सन्। 'क्रुधमण्डार्थेभ्यश्च' इति युच्। मां ज्वलति भालस्थेऽनलेऽग्नौ होतुं दग्धुममन्यत मेने। मननमत्र विचारणं तद्भवनफलकमिति। अहमेनमग्नौ धक्ष्यामीति विचचारेत्यर्थः॥ ८॥

शि०—दृष्ट्वेति। हे जम्भभित् इन्द्र सुष्ठु जानातीति सुज्ञः शिवः मां दृष्ट्वा समीक्ष्य, अथ च छद्मना विहङ्गरतं तथोक्तं कपटेन कपोतरूपधारिणं मां विज्ञाय बुद्ध्वा कोपनः क्रोधनः सन् मां ज्वलंश्चासौ भालानलः ज्वलद्भालानलस्तस्मिन् ज्वलद्भालानले ललाटस्थे वह्नाविद्यर्थः होतुं दग्धुममन्यत विचारितवान् ॥ ८ ॥

वचोभिर्मधुरैः [4]सार्थैर्विनम्रेण मया स्तुतः।
प्रीतिमानभवद्देवः स्तोत्रं कस्य न तुष्टये ॥ ९ ॥

सी०—वचोभिरिति। मया विनम्रेण सता सार्थैरत एव मधुरैर्मनोहरैर्वचोभिः करणैः। स्तुत ईडितो देवो हरः प्रीतिमानभवत्। मदुपरि प्रससादेत्यर्थः। तथाहि। स्तोत्रं स्तुतिः। 'स्तवः स्तोत्रं स्तुतिर्नुतिः' इत्यमरः। कस्य तुष्टये संतोषाय न भवति। अपि तु सर्वस्यापीत्यर्थः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः॥ ९॥

शि०—वचोभिरिति। विनम्रेण विनीतेन मया सार्थैरभिप्रेतार्थयुक्तैरत एव मधुरैर्मञ्जुलैर्वचोभिर्वाक्यैः करणैः स्तुतो वन्दितो देवो हरः प्रीतिरस्यास्तीति प्रीतिमान् प्रसन्नोऽभवत् बभूव। तथा हि स्तोत्रं स्तवनं कस्य तुष्टये प्रीत्यर्थं न भवति, किन्तु सर्वस्यापि तुष्टये भवतीत्यर्थः॥ ९॥

शरण्यः सकलत्राता मामत्रायत शंकरः।
क्रोधाग्नेर्ज्वलतो ग्रासात्त्रासतो दुर्निवारतः॥ १०॥

---

१. ज्ञानभृत्, यज्ञभित्. २. कोपतः, ३. भयममन्यत, मामलोकयत्, ४. सान्त्वैः.

सी०—शरण्य इति। शरण्यः शरणे साधुः। 'तत्र साधुः' इति यत्प्रत्ययः। अत एव सकलत्राता सर्वेषां रक्षिता। एवंभूतः शंकरो हरो ज्वलतो दीप्यमानस्य दुर्निवारतो दुःखेन निवारयितुं शक्यस्य क्रोधाग्नेः क्रोधाग्निकर्तृकाद् ग्रासाद्यस्त्रासो भयं तस्मान्मामत्रायत ररक्ष। 'त्रैङ् पालने' लङ्॥

शि०—शरण्य इति। शरण्यः शरणे साधुः रक्षक इत्यर्थः, अत एव सकलत्राता सर्वरक्षकः शङ्करो हरः ज्वलतो दीप्तस्य दुर्निवारतोऽशक्यवारणस्य क्रोधाग्नेः कोपानलस्य ग्रासात्तत्कर्तृकभक्षणात्, जन्यादिति शेषः, त्रासतो भयात् माम् अत्रायत अरक्षत्॥ १०॥

परिहृत्य [1]परीरम्भरभसं दुहितुर्गिरेः।
कामकेलिरसोत्सेकाद् व्रीडया विरराम सः॥ ११॥

सी०—परिहृत्येति। स हरो गिरेर्दुहितुः पार्वत्याः संबन्धिनं परीरम्भरभसं परिहृत्योत्सृज्य व्रीडया हेतुभूतया कामस्य केलेः रसस्योत्सेकान्मानसस्यासक्तेर्विरराम विरतोऽभूत्। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्॥ ११॥

शि०—परिहृत्येति। स हरः गिरेर्हिमवतो दुहितुः पार्वत्याः सम्बन्धिनं परीरम्भरभसम् आलिङ्गनवेगं परिहृत्य परित्यज्य व्रीडया लज्जया हेतुभूतया कामकेलिरसोत्सेकात् रतिक्रीडारसासक्तेर्विरराम विश्रान्तोऽभूत्॥ ११॥

रङ्गभङ्गच्युतं [2]रेतस्तदामोघं [3]सुदुर्वहम्।
त्रिजगद्दाहकं सद्यो मद्विग्रह[4]मधि न्यधात्॥ १२॥

सी०—रङ्गेति। तदा स हरो रङ्गस्य कामकेलेर्भङ्गादन्तरायात्। अस्य हेतोः क्रोधाभिव्यञ्जकत्वे न दोषः। च्युतं पतितममोघं सफलं त्रिजगद्दाहकमत एव सुदुर्वहं सुतरां दुःखेन वोढुं शक्यं रेतः शुक्रं मद्विग्रहमधि। मम शरीर इत्यर्थः। सद्यो न्यधात्। 'अधिमद्विग्रहम्' इति वक्तव्ये मद्विग्रहमधीत्युक्तं महाकविप्रयोगान्न दोषाय॥ १२॥

शि०—रङ्गेति। तदा तत्क्षणे स हरः रङ्गभङ्गच्युतं रतिक्रीडान्तरायपतितम् अमोघं सफलं त्रिजगद्दाहकं जगत्त्रयविनाशकम् अत एव सुदुर्वहम् अतिक्लेशेन वोढव्यं रेतो वीर्यं मद्विग्रहमधि ममविग्रहे इत्यर्थः सद्यस्तत्क्षणं न्यधात् स्थापितवान्। मद्विग्रहमधीत्यत्राधेः परप्रयोगो महाकविप्रयोगात्कवेर्निरङ्कुशत्वाच्च समाधेयः॥ १२॥

---

१. परीरम्भं रभसात्, २. तदमोघम्, ३. सुदुर्धरम्,
४. अभिन्यधात्,

दुर्विषह्येण तेनाहं तेजसा दहनात्मना ।
निर्दग्धमात्मनो देहं दुर्वहं वोढुमक्षमः ॥ १३ ॥

सी०—दुर्विषह्येणेति । दहनात्मनाग्निरूपेणात एव दुर्विषह्येण दुःखेन वोढुं शक्येन । 'शकिसहोश्च' इति यत् । तेन तेजसा वीर्येण निर्दग्धम् अत एव दुर्वहमात्मनो देहं वोढुमहमक्षमोऽस्मि । यथाहं क्षमः स्यां तथैव त्वयाशु विधेयमिति व्यज्यते ॥ १३ ॥

शि०—दुर्विषह्येणेति । दहन आत्मा स्वरूपं यस्य स तेन दहनात्मना वह्नि-स्वरूपेण अत एव दुर्विषह्येण क्लेशतो वोढुं शक्यम् तेन तेजसा हरवीर्येण निर्दग्धं नितरां दग्धम् अत एव दुर्वहं दुःखेन वोढुं शक्यम आत्मनः स्वस्य देहं शरीरं वोढुम् अहमक्षमः अस्मीति शेषः । तत्र मां क्षमं विधेहीति भावः ॥ १३ ॥

रौद्रेण दह्यमानस्य महसातिमहीयसा ।
मम प्राणपरित्राणप्रगुणो भव वासव ॥ १४ ॥

सी०—रौद्रेणेति । हे वासव इन्द्र, अतिमहीयसा रौद्रेण शाम्भवेन महसा तेजसा दह्यमानस्य मम प्राणानां परित्राणेन प्रगुणो विख्यातो भव । मम प्राणत्राणे भवतो महद्यशो भविष्यतीति भावः ॥ १४ ॥

शि०—रौद्रेणेति । हे वासव मघवन्, महीयांसमतिक्रान्तमतिमहीयस्तेनाति-महीयसा दुःसहेन रुद्रस्येदं रौद्रं तेन रौद्रेण शैवेन महसा तेजसा दह्यमानस्य पीडितस्य मम प्राणपरित्राणप्रगुणो जीवरक्षणप्रसिद्धो भव । अस्मत्प्राणरक्षणतो भवान् यशस्वी भविष्यतीति भावः ॥ १४ ॥

इति श्रुत्वा वचो वह्नेः परितापोपशान्तये ।
हेतुं विचिन्तयामास मनसा विबुधेश्वरः ॥ १५ ॥

सी०—इतीति । विबुधानामीश्वरो महेन्द्रो वह्नेरितीत्येवंभूतं वचः श्रुत्वा परितापस्योपशान्तये । अर्थात्तस्यैवेत्यर्थः । मनसा हेतुं निदानं विचिन्तयामास । केनोपायेनास्य तापोपशान्तिर्भवेदिति विचारयामासे-त्यर्थः ॥ १५ ॥

शि०—इतीति । विबुधेश्वरः सुराधिपः शक्रः वह्नेः कृशानोः इत्युक्तप्रकारं वचो वाक्यं श्रुत्वा समाकर्ण्य परितापोपशान्तये दुःखनिवृत्तये मनसा हृदयेन हेतुं कारणं विचिन्तयामास । कथमस्योपशान्तिः स्यादिति विचारं विदधे इति भावः ॥ १५ ॥

तेजोदग्धानि गात्राणि पाणिनास्य परामृशन् ।
किंचित्कृपीटयोनिं तं दिवस्पतिरभाषत ॥ १६ ॥

सी०—तेज इति । दिवस्पतिरिन्द्रस्तं कृपीटयोनिमग्निं कर्मभूतं तेजसा

शाम्भवेन धाम्ना दग्धानि प्लुष्टान्यस्याग्नेर्गात्राणि पाणिना परामृशन्स्पृशन् सन्। किंचिद्वक्ष्यमाणमभाषतोवाच। भाषतेर्द्विकर्मकत्वं हि ब्रूञर्थनिबद्धत्वात्, 'अर्थनिबन्धनेयं संज्ञा' इति वार्तिकात्। 'कृपीटयोनिर्ज्वलनः' इत्यमरः। 'शतमन्युर्दिवस्पतिः' इति च॥ १६॥

शि०—तेज इति। दिवस्पतिः शक्रः तं कृपीटयोनिं वह्निं प्रति, अस्य वह्नेस्तेजोदग्धानि हरमहःप्लुष्टानि गात्राणि शरीराणि पाणिना करेण परामृशन् स्पृशन् सन् किञ्चित् वक्ष्यमाणमभाषत अब्रवीत्॥ १६॥

अथेन्द्रोऽग्निं सप्तभिः स्तौति—

प्रीतः स्वाहास्वधाहन्तकारैः प्रीणयसे स्वयम्।
देवान्पितॄन्मनुष्यांस्त्वमेकस्तेषां मुखं यतः॥ १७॥

सी०—प्रीत इति। भो अग्ने, त्वं प्रीतः सन्। स्वाहाकारः स्वधाकारो हन्तकार एतैः शब्दैः कृत्वा होतृभिः प्रक्षिप्तेन। हविषेति शेषः। देवानिन्द्रादीन्पितॄन्मनुष्यांश्च स्वयं प्रणीयसे प्रसादयसि। कथमेतान्प्रसादयामीत्याह—यत एक एव त्वं तेषां देवादीनां मुखमसि॥ १७॥

शि०—प्रीत इति। हे कृपीटयोने त्वं प्रीतः सन् प्रसन्नो भूत्वा स्वाहास्वधाहन्तकारैः स्वाहास्वधाहन्तशब्दैः शब्दानिमानुच्चार्येत्यर्थः। होतृभिः प्रक्षिप्तहविर्द्रव्येणेति शेषः। देवान् शक्रप्रभृतीन् पितॄन् पितृलोकवासिनो निजपूर्वजान् मनुष्यांश्च स्वयं केवलं प्रीणयसे संतोषयसि। तेषां प्रीणवे हेतुमाह— यत इति। यतो यस्मात् कारणात्त्वं तेषामेक एव मुखमाननमसि॥ १७॥

त्वयि जुह्वति होतारो हवींषि ध्वस्तकल्मषाः।
[1]भुञ्जन्ति स्वर्गमेकस्त्वं स्वर्गप्राप्तौ हि कारणम्॥ १८॥

सी०—त्वयीति। होतारो हवींषि त्वयि जुह्वति। अत एव ध्वस्तकल्मषाः स्रस्तपापाः सन्तः स्वर्गं भुञ्जन्ति। हि यतस्त्वमेक एव स्वर्गप्राप्तौ कारणम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुत्युक्तयागफलस्वर्गप्राप्तौ यागस्य त्वदायत्ततया कारणत्वोक्तेरिति भावः॥ १८॥

शि०—त्वयीति। भो अग्ने होतारो हवनकर्तारः हवींषि हवनीयद्रव्याणि त्वयि विषये जुह्वति प्रक्षिपन्ति। अत एव ध्वस्तं कल्मषं येषां ते ध्वस्तकल्मषा विगतपापाः सन्तः स्वर्गं भुञ्जन्ति अनुभवन्ति। हि यस्मात्। त्वमेक एव स्वर्गप्राप्तौ कारणं हेतुरसि। स्वर्गकामस्य ज्योतिष्टोमेन यागस्य स्वर्गफलमुक्तं श्रुत्या, यागश्च त्वदधीन इति नानुपपन्नं त्वयि हेतुत्वाभिधानमिति तत्त्वम्। पादत्रयगतसामान्यार्थस्य तुर्यपादगतविशेषार्थेन समर्थनादर्थान्तरन्यासः॥ १८॥

---

१. भुञ्जते,

हवींषि मन्त्रपूतानि हुताश त्वयि जुह्वतः।
तपस्विनस्तपःसिद्धिं यान्ति त्वं [1]तपसां प्रभुः ॥ १९ ॥

सो०—हवींषीति। भो हुताश, तपस्विनो मन्त्रपूतानि हवींषि त्वयि जुह्वतः सन्तः। 'नाभ्यस्ताच्छतुः' इति नुम्निषेधः। तपःसिद्धिं यान्ति प्राप्नुवन्ति। यतस्त्वं तपसां प्रभुः ॥ १९ ॥

शि०—हवींषीति। भो हुताश वह्ने; तपस्विनो योगिनो मन्त्रैर्वेदमन्त्रैः पूतानि पवित्राणि हवींषि हव्यानि त्वयि भवति जुह्वतः (अभ्यस्तत्वान्न नुम्) प्रक्षिपन्तः सन्तः तपःसिद्धिं तपसः फलं यान्ति प्राप्नुवन्ति। यतस्त्वं तपसां प्रभुरीशोऽसि। अत्रापि पूर्ववदर्थान्तरन्यासः ॥ १९ ॥

[2]निधत्से हुतमर्काय स पर्जन्योऽभिवर्षति।
ततोऽन्नानि [3]प्रजास्तेभ्यस्तेनासि जगतः पिता ॥ २० ॥

सो०—निधत्स इति। भो अग्ने, त्वमर्काय देवान्तःपातिने सूर्याय हुतं हविर्निधत्से निधानरूपतया ददासि। अतः सोऽर्कः पर्जन्यः सन्नभिवर्षति। ततो वर्षणादन्नान्युत्पद्यन्ते॥ तेभ्योऽन्नेभ्यः प्रजा जायन्ते। तेन कारणेन जगतः पितासि। पातीति पितेति व्युत्पत्त्या साधारणरक्षकस्यापि पितृत्वम्। न केवलं जनकस्यैवेति भावः। अत एवोक्तं नीतौ—'अन्नदाता भयत्राता यश्च कन्यां प्रयच्छति। जनिता चोपनेता च पञ्चैते पितरः स्मृताः॥' इति ॥ २० ॥

शि०—निधत्स इति। भो अग्ने, त्वमर्काय सूर्याय हुतं हव्यं निधत्से ददासि। स सूर्यः पर्जन्यः सन् मेघो भूत्वाऽभिवर्षति जलं ददाति। ततो वर्षणादन्नानि जायन्ते। तेभ्योऽन्नेभ्यः प्रजाः जायन्ते। अतो हेतोस्त्वं जगतः पिताऽसि। पितेत्यस्य पाति रक्षतीति व्युत्पत्तिरतो जनकातिरिक्तसामान्यरक्षकोऽपि पितेति भावः ॥ २० ॥

[4]अन्तश्चरोऽसि भूतानां तानि [5]त्वत्तो भवन्ति च।
[6]ततो [7]जीवितभूतस्त्वं जगतः प्राणदोऽसि च[8] ॥ २१ ॥

सो०—अन्तरिति। भो अग्ने, त्वं भूतानां प्राणिनामन्तश्चरोऽन्तर्व्याप्यसि। तानि भूतानि च त्वत्तो भवन्त्युत्पद्यन्ते। तत उभयकारणतस्त्वं जीवितानि प्राणितानि भूतानि येन तथोक्तो जगतः प्राणदश्चासि। अग्नेरन्तराधेयतयैव प्राणिनां जीवनमतो जीवितभूतत्वम्। अग्नेरेव जगदुत्पादकतया प्राणदत्वं चार्थात्सिद्धम्। उत्तरवाक्यद्वयस्य पूर्ववाक्यद्वयान्तर्गतत्वात् पृथक्त्वेन ग्रहणं व्यर्थमिति चेन्न। अन्तर्व्यापित्वजीवितभूतत्वयोः साह-

१. तपसः, २. नयन, ३. प्रजान्ते, ४. अन्तश्चरास, ५. त्वद्बलवति, ६. त्वत्ता, ७. जीवितमयः, ८. तत्,

चर्यं प्रयुक्तं न सामानाधिकरण्यम् । यस्य यत्र यत्रान्तर्भावित्वं तस्य तत्रतत्र जीविभूतत्वमिति नियमाभावात् । न च वह्निसंबन्धावच्छिन्नत्वेन तयोः सामानाधिकरण्यमिति वाच्यम् । वह्निसंबन्धावच्छिन्नत्वमन्तर्व्याप्ते तप्ताऽयःपिण्डे न तत्र जीवितभूतत्वम् । अतो वह्निसंबन्धावच्छिन्नत्वेनापि सामानाधिकरणतानियमः कर्तुं न शक्यते । उत्पादकत्वप्राणदत्वयोः साहचर्यनियमाभावात् । कुलालस्य सत्यप्युत्पादकत्वे प्राणदत्वं नास्ति । घटमुत्पादयतोऽपि कुलालस्य न जीवनदातृत्वशक्तिरित्यलं विवादेन । अतिगहनोऽयं विवादः । 'जगतः' इति षष्ठी प्राणान्वयान्नतु दानान्वयात् । अन्यथा 'कर्मणा यमभिप्रैति स संप्रदानम्' इति संप्रदानत्वाच्चतुर्थी प्रसज्जेतेति । ननु जगत इत्यस्य प्राणान्वये केवलसंबन्धवाचकत्वेन तस्य नित्यसंप्रदानविवक्षा केन निरास्यते । एवं च संप्रदानान्तरं मृग्यं स्यात् । अथवा जगत्संबन्धिनां प्राणानां दानं जगत्संप्रदानकमेवेत्यर्थात् संप्रदानसिद्धिः ॥ २१ ॥

शि०—अन्तरिति । भो अग्ने त्वं भूतानां प्राणिनामन्तश्चरोऽसि । अन्तर्व्याप्यसि । तानि भूतानि च त्वत्तो भवन्ति जायन्ते । ततोऽन्तश्चरत्वभूतोत्पादकत्वोभयहेतुभ्यामित्यर्थः । जीवितभूतः प्राणितजीवः जगतः प्राणदश्चासि ॥ २१ ॥

जगतः सकलस्यास्य त्वमेकोऽस्युपकारकृत् ।
कार्योपपादने तत्र त्वत्तोऽन्यः कः प्रगल्भते ॥ २२ ॥

सी०—जगत इति । भो अग्ने, त्वमेक एवास्य सकलस्य जगत उपकारकृद्धितकृदसि । अत एवास्माकं तत्र कार्योपपादने त्वत्तोऽन्यः । 'अन्यारात्—' इति पञ्चमी । कः प्रगल्भते समर्थो भवेत् । न कोऽपीत्यर्थः ॥२२॥

शि०—जगत इति । भो अग्ने, त्वम् एक एवाऽद्वितीय एव सकलस्य समग्रस्य अस्य जगतः संसारस्य उपकारं करोतीत्युपकारकृत् हितकारकोऽसि, अतोऽस्माकं तत्र कार्योपपादने कार्यसम्पादने त्वत्तोऽन्यः कः प्रगल्भते समर्थो भवति, कोऽपि नेत्यर्थः । प्रोपसृष्टात् 'गल्भ धार्ष्ट्ये' इत्यस्माद्धातोः कर्तरि लट् ॥ २२ ॥

अमीषां [1]सुरसंघानां त्वमेकोऽर्थसमर्थने ।
[2]विपत्तिरपि संश्लाघ्योपकारव्रतिनोऽनल ॥ २३ ॥

सी०—अमीषामीति । भो अनल, अमीषां सुरसंघानां देवसमूहानामस्मदादीनामर्थसमर्थने कार्यसाधने विषयेत्वमेक एव समर्थोऽसि । एवं-

---

१. सुरसैन्यानाम्, २. विपदोऽपि पदं श्लाघ्योपकारयति नो हि सः; विपदोऽपि पदं श्लाघोपकारवतिनो हि सा,

विघोऽप्यहं विपन्नः किं करोमीत्याह–विपत्तिरिति। उपकारेषु परहितेषु व्रतिनो नियमवतः पुरुषस्य विपत्तिरपि सम्यक् श्लाघ्या भवति। अतो विपन्नोऽपि स्तूयस इति भावः॥ २३॥

शि०—अमीषामिति। हे अनल, अग्ने, त्वम् एक एवाऽसहाय एव अमीषां पुरोवर्त्तिनां सुरसंघानां देववृन्दानामस्मत्प्रभृतीनाम् अर्थसमर्थने कार्यसम्पादने समर्थोऽसीत्यर्थः। सुरकार्यसाधकस्यापि मे विपदित्याह—विपत्तिरिति। उपकारव्रतिनः परहितनियमवतो जनस्य विपत्तिरपि क्लेशोऽपि श्लाघ्यः प्रशंसनीयो भवति॥ २३॥

संप्रत्युपायमुपदिशति—

**देवी भागीरथी पूर्वं भक्त्यास्माभिः प्रतोषिता।**
**निमज्जतस्तवोदीर्णं तापं निर्वापयिष्यति॥ २४॥**

सी०—देवीति। पूर्वमस्माभिर्भक्त्या प्रतोषिता भागीरथी देवी निमज्जतः स्नानं कुर्वतस्तवोदीर्णमत्युल्बणं तापं निर्वापयिष्यतीत्यर्थः॥ २४॥

शि०—देवीति। हे अनल, अस्माभिः पूर्वं प्राक् भक्त्या सेवया प्रतोषिता प्रसन्नीकृता भागीरथी देवी गङ्गा निमज्जतः स्नानं कुर्वतस्तव भवत उदीर्णमुत्कृष्टदाहजनकं तापं निर्वापयिष्यति शान्तं विधास्यति॥ २४॥

**गङ्गां तद्गच्छ मा कार्षीः [1]विलम्बं हव्यवाहन।**
**[2]कार्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता॥ २५॥**

सी०—गङ्गामिति। भो हव्यवाहन, तत्तस्माद्गङ्गां देवीं गच्छ याहि। विलम्बं मा कार्षीर्मा कुरु। 'न माङ्योगे' इत्यडागमनिषेधः। तथाहि। अवश्यकार्येषु सिद्धये क्षिप्रकारितानलसितत्वम्। उचितेति शेषः। तस्मात्त्वया शीघ्रमेव गन्तव्यमित्ति भावः॥ २५॥

शि०—गङ्गामिति। भो हव्यवाहन, वह्ने, तत्तस्मात्कारणात् गङ्गां भागीरथीं देवीं गच्छ व्रज। विलम्बं मा कार्षीः समययापनं मा विधेहि। तथाहि—अवश्यकार्येषु नियमतः सम्पादनीयेषु कार्येषु कृत्येषु सिद्धये कार्यसिद्ध्यर्थं क्षिप्रकारिता शीघ्रकारिता कर्तव्येतिशेषः। अतो द्रुतं याहीत्यर्थः॥ २५॥

ननु शक्तेनापि मया दुर्वाह्यं शैवं तेजो गङ्गा कथं धरिष्यतीत्याशङ्क्याह–

**शंभोरम्भोमयी मूर्तिः सैव देवी सुरापगा।**
**[3]त्वत्तः स्मरद्विषो बीजं दुर्धरं धारयिष्यति॥ २६॥**

---

१. विषादम्, २. अर्थेष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता, ३. तत्र गत्वा च तद् बीजममोघं मुञ्च सुस्थिरम्,

सं०—शंभोरिति । भो अग्ने, शंभोरम्भोमयी जलमयी मूर्तिर्देवी सा सुरापगैव गङ्गैव दुर्धरं स्मरद्विषो हरस्य बीजं तेजस्त्वत्त आदाय धारयिष्यति । धरिष्यतीत्यर्थः । 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' इत्यमरः ॥ २६ ॥

शि०—शम्भोरिति । भो अनल शम्भोः शिवस्याऽम्भोमयी जलस्वरूपा मूर्त्तिराकारः, शरीरमिति यावत् । देवी सा पूर्वोक्ता सुरापगैव गङ्गैव, स्मरं द्वेष्टीति स्मरद्विट् तस्य स्मरद्विषः शिवस्य दुर्धरं दुःखेन धर्तुं शक्यं बीजं तेजस्त्वत्तो भवत्तः सकाशात् गृहीत्वेति शेषः धारयिष्यति स्वस्यां स्थापयिष्यतीत्यर्थः ॥ २६ ॥

इत्युदीर्य सुनासीरो विरराम स चानलः ।
[1]तद्विसृष्टस्तमापृच्छ्य प्रतस्थे स्वर्धुनीमभि ॥ २७ ॥

सं०—इतीति । इत्येवंभूतमुदीर्योक्त्वा सुनासीर इन्द्रो विरराम । तूष्णीं तस्थावित्यर्थः । विररामेति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । 'वृद्धश्रवाः सुनासीरः' इत्यमरः । सोऽनलश्चाग्निस्तु तद्विसृष्टस्तेन सुनासीरेण विसृष्टस्त्यक्तः । गन्तुमनुमत इत्यर्थः । तादृशः सन् । तमिन्द्रमापृच्छ्याहं गच्छामीत्याज्ञामादाय स्वर्धुनीं गङ्गामभि प्रतस्थे प्रस्थितवान् ॥ २७ ॥

शि०—इतीति । सुनासीरः शक्रः इत्युक्तप्रकारं वचनमिति शेषः, उदीर्य अभिधाय विरराम मौनमवलम्बतेस्म । सोऽनलश्च वह्निस्तु तद्विसृष्टः सुनासीरत्यक्तः सन् तं सुनासीरमापृच्छ्य गमनानुमतिं गृहीत्वा स्वर्धुनीं गङ्गामभि गङ्गामुद्दिश्य प्रतस्थे जगाम ॥ २७ ॥

हिरण्यरेतसा तेन देवी स्वर्गतरङ्गिणी ।
तीर्णाध्वना प्रपेदे सा [2]निःशेषक्लेशनाशिनी ॥ २८ ॥

सं०—हिरण्येति । तेन प्रस्थितेन तीर्णाध्वनावगाहितमार्गेण हिरण्यरेतसा वह्निना निःशेषक्लेशनाशिनी निःशेषा ये क्लेशाः पञ्च क्लेशास्तेषां नाशिनी । मुक्तिदायिनीत्यर्थः । सा प्रसिद्धा स्वर्गतरङ्गिणी स्वर्णदी देवी प्रपेदे प्राप्ता । कर्मणि लिट् ॥ २८ ॥

शि०—हिरण्येति । तेन गच्छता तीर्णाऽध्वना अतिवाहितमार्गेण हिरण्यं रेतो वीर्यं यस्य स तेन हिरण्येरतसा वह्निना पावकेन निःशेषक्लेशनाशिनी सकलपञ्चक्लेशोन्मूलिनी, मोक्षदेति यावत् सा प्रसिद्धा स्वर्गतरङ्गिणी मन्दाकिनी देवी प्रपेदे प्राप्ता । प्रपद्यतेः कर्मणि लिट् ॥ २८ ॥

---

१. आमन्त्र्य, २. अघविनाशिनी,

अथ त्रिभिस्तामेव विशिनष्टि—

**स्वर्गारोहणनिःश्रेणिर्मोक्ष[1]मार्गाधिदेवता ।**
**उदारदुरितोद्गारहारिणी दुर्गतारिणी ॥ २९ ॥**

सी०—स्वर्गेति । स्वर्गे यदारोहणं तस्य निःश्रेणि सोपानपंक्तिः । यस्यां स्नानमात्रेणैव स्वर्गमारोहन्तीत्यर्थः । पुनश्च मोक्षमार्गस्य मुक्तिपथस्याधिदेवता । यां प्रसाद्य मुक्तिमाप्नुवन्तीत्यर्थः । पुनश्चोदाराणामुच्चैस्तराणां दुरितानां पापानामुद्गारस्य समूहस्य हारिणी । विनाशिनीत्यर्थः । पुनश्च तरन्त्यनया सा तारिणी । दुर्गस्य संसाररूपस्य तरन्तीत्यर्थः । तारिणी इति णिजन्तात्तरतेः 'करणाधिकरणयोश्च' इति करणे ल्युट् । अतः 'टिड्ढा —' इति ङीप् । 'तारिणी' इति पाठे तारयति लोकान्सा तारिणी । दुर्गात्तारिणी । अत्र णिनौ कृते 'ऋन्नेभ्यः—' इति ङीप् ॥ २९ ॥

शि०—स्वर्गेति । स्वर्गारोहणनिःश्रेणिः स्वर्गमनसोपानपङ्क्तिः स्नानमात्रेण स्वर्गदायिनीत्यर्थः । मोक्षमार्गाधिदेवता मुक्तिपथाधिष्ठात्री यत्प्रसादान्मुक्तिः प्राप्यते जनैरित्यर्थः । उदारदुरितोद्गारहारिणी उत्कृष्टपापपुञ्जध्वंसिनी । दुर्गतारिणी संसारोच्छेदिनी, प्रपेदे इति पूर्वेणान्वयः ॥ २९ ॥

**महेश्वरजटाजूटवासिनी पापनाशिनी ।**
**[2]सरागान्वयनिर्वाणकारिणी धर्मधारिणी ॥ ३० ॥**

सी०—महेश्वरेति । पुनश्च महेश्वरस्य जटाजूटे वासिनी वासवती । पुनश्च पापनाशिनी । अत्रापि तारिणीवत्प्रत्ययव्यवस्था । पुनश्च सरागस्य विषयलिप्सोरन्वयस्य वंशस्यापि निर्वाणकारिणी । किं पुनर्विमुक्तानामित्यर्थः । धर्मं धारयतीति धर्मधारिणी । आत्मसम्बन्धेन जन्तून् धर्मवतः कुर्वन्तीत्यर्थः ॥ ३० ॥

शि०—महेश्वरेति । महेश्वरजटाजूटवासिनी शिवजटापुञ्जस्थिता पापनाशिनी दुरितध्वंसिनी सरागान्वयनिर्वाणकारिणी विषयिकुलमुक्तिप्रदा धर्मधारिणी पुण्यसम्पादिनी स्नानाद्यात्मसम्पर्कतो लोकान् पुण्यवतः विदधती ॥ ३० ॥

**विष्णुपादोदकोद्भूता ब्रह्मलोकादुपागता ।**
**त्रिभिः स्रोतोभिरश्रान्तं [3]पुनाना भुवनत्रयम् ॥ ३१ ॥**

सी०—विष्णवति । पुनश्च विष्णुपादोदकोद्भूतोत्पन्ना विष्णुपादोदकमेवास्या जन्महेतुरित्यर्थः । विष्णुपादोदकमेवोद्भूतं रूपं यस्याः सेति वा । पुनश्च ब्रह्मलोकादुपागतेहागता पुनश्च त्रिभिः स्रोतोभिः प्रवाहैर्भुवन

---

१. स्वर्गं, २. सागरान्वय, ३. पुनाति,

त्रयं स्वर्गमृत्युपाताललक्षणमश्रान्तं निष्परिश्रमं यथा भवति तथा पुनाना। पवित्रीकुर्वाणेत्यर्थः। अत एव त्रिस्रोता इति नाम दधतीत्यर्थः। 'पूञ् पवने', शानच् श्नाप्रत्ययश्च ॥ ३१ ॥

शि०—विष्ण्विति। विष्णुपादोदकोद्भूता हरिचरणजलोत्पन्ना ब्रह्मलोकादुपागता स्वर्गादिहप्राप्ता त्रिभिः स्रोतोभिः प्रवाहैः भुवनत्रयं स्वर्गमृत्युपातालरूपम् अश्रान्तं निःप्रयासं यथा भवति तथा पुनाना पुनन्ती ॥ ३१ ॥

जातवेदसमायान्तमूर्मिहस्तैः [1]समुत्थितैः।
[2]आजुहावार्थसिद्ध्यै तं सुप्रसादधरेव सा ॥ ३२ ॥

सी०—जातवेदसमिति। सुतरामतिशयितो यः प्रसादस्तस्य धराधारिणी सा गङ्गा आयान्तमागच्छन्तं तं जातवेदसमग्निमर्थसिद्ध्या अर्थसिद्धिं कर्तुं समुत्थितैरुच्चलितैरूर्मय एव हस्तास्तैः कृत्वाजुहावेव। अन्योऽपि हस्तसंकेतेन कंचिदाह्वयति। पुनः पुनरूर्मिसमुत्थानं तत्कर्तृकमाह्वानमिवेत्युत्प्रेक्षा। आपूर्वाद् ह्वयतेः कर्तरि लिट् ॥ ३२ ॥

शि०—जातवेदसमिति। धरतीति धरा सुष्ठु शोभनः सुतरां वा प्रसादः सुप्रसादस्तस्य धरा सुप्रसादधरा शोभन (विपुल)-प्रसन्नताशालिनी सा स्वर्नदी आयान्तमागच्छन्तं जातवेदसं वह्निं समुत्थितैः सम्यगुच्चलितैः ऊर्मिहस्तैस्तरङ्गरूपकरैः अर्थसिद्ध्यै कार्यसम्पादनाय हरवीर्यधारणसन्तप्तानलशान्त्यर्थमित्यर्थः। आजुहावेव आह्वानं चकारेव। यथाऽन्यः कश्चित्करसंकेतेन कार्यसिद्धये कञ्चित् समाकरणयति तथेयमपि समुच्चलितोर्मिरूपकरैर्वह्निमाकरणयतीत्यर्थः। आह्वानस्य चेतनवृत्तित्वात् प्रवाहरूपाया अस्यास्तदसम्भवादेतदूर्मिसमुत्थितावाह्वानत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ ३२ ॥

संमिलद्भिर्मरालैः सा कलं कूजद्भिरुन्मदैः।
ददे श्रेयांसि दुःखानि निहन्मीति तमभ्यधात् ॥ ३३ ॥

सी०—संमिलद्भिरिति। संमिलद्भिः सम्यङ्मिलन्त्येकीभवन्तीति तथोक्तैः। तथोन्मदैरुन्मत्तैरत एव कलं मधुरं यथा भवति तथा कूजद्भिः शब्दायमानैर्मरालैर्हंसैर्युक्ता सा देवी गङ्गा तमग्निमित्यभ्यधादुवाच। किमिति तत्। भो अग्ने, तुभ्यं श्रेयांसि ददे। दुःखानि निहन्मि। आत्मशक्त्याभिधाने जलरूपतयाशक्तापि स्वकीयतीरगतहंसनिनादेन वदति स्मेति भावः ॥ ३३ ॥

शि०—संमिलद्भिरिति। संमिलद्भिः सङ्घीभूतैः उन्मदैः उत्कृष्टमदशालिभिः, अत एव कलं कूजद्भिः मरालैर्हंसैः युक्ता सा देवी गङ्गा, श्रेयांसि कल्याणानि ददे

---

१. समुच्छ्रितैः २. आजुहावास्य,

दुःखानि निहन्मि विनाशयामि इतीत्थं तं वह्नि प्रति अग्रयात् उक्तवती । स्वतोऽभिधानाऽसम्भवेऽपि हंसद्वाराऽभ्यधादित्यर्थः ॥ ३३ ॥

कल्लोलैरुद्गतैरर्वाचीनं [1]तटमभिद्रुतैः ।
[2]प्रीतेव तमभीयाय स्वर्धुनी जातवेदसम् ॥ ३४ ॥

सी०-कल्लोलैरिति। स्वर्धुनी गङ्गा प्रीता सती । उद्गतैरानन्दादुद्वेलैरत एवार्वाचीनमर्वाग्भवं तटमभिद्रुतैः पलायितैः कल्लोलैः कृत्वा तं जातवेदसमभीयायेव संमुखीबभूवेव ॥ ३४ ॥

शि०—कल्लोलैरिति । स्वर्धुनी मन्दाकिनी प्रीता प्रसन्ना सती उद्गतैः समुत्थितैः अर्वाचीनं नवीनं तटं कूलमभिद्रुतैः प्राप्तैः कल्लोलैः तरङ्गैः करणैः तं जातवेदसं वह्निमभियाय इव अभिमुखमाजगाम इव । उत्प्रेक्षाऽलङ्कारः ॥ ३४ ॥

[3]अथाभ्युपेतस्तापार्तो निममज्जानलः किल ।
विपदा [4]परिभूताः किं [5]व्यवस्यन्ति विलम्बितुम् ॥ ३५ ॥

सी०—अथेति । अथानन्तरं तापेन हरतेजोजन्मनार्तः पीडितोऽत एवाभ्युपेतः संमुखमुपगतोऽग्निः । किलेति प्रसिद्धौ । निममज्ज निमग्नोऽभूत् । ननु झटित्येव किं मग्न इत्यर्थान्तरं न्यस्यति—विपदापदा परिभूता जिताः पुरुषा विलम्बितुमापत्प्रतीकारभविष्णुतां सोढुं किं व्यवस्यन्त्युद्युञ्जते । अपि तु नेत्यर्थः । 'प्रतीक्षते जातु न कालमार्तिः' इति न्यायादिति भावः ॥ ३५ ॥

शि०—अथेति । अथानन्तरं तापार्तः हरवीर्यजन्यदुःखपीडितोऽत एवाभ्युपेतः सम्प्राप्तोऽनलः निममज्ज किल निमग्नोऽभूत् खलु । तथा हि—विपदा दुःखेन परिभूताः संक्रान्ताः, जना इति शेषः । विलम्बितुं विपदुद्धारसमयं सोढुं किं व्यवस्यन्ति समीहन्ते, नेत्यर्थः । नार्त्तानां समयप्रतीक्षणं प्रसिद्धमिति भावः । उत्तरार्द्धगतसामान्यार्थेन पूर्वार्द्धगतविशेषार्थस्य समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ३५ ॥

गङ्गावारिणि कल्याणकारिणि श्रमहारिणि ।
स मग्नो निर्वृतिं प्राप [6]पुण्यभारिणि तारिणि ॥ ३६ ॥

सी०—गङ्गेति । सोऽग्निः कल्याणकारिण्यनेकमङ्गलविधायिनि श्रमहारिणि परिश्रमहारके । पुण्यं भारयति जनैः संग्राहयति तस्मिन्पुण्यभारिणि, येन जनाः पुण्यभारवन्तो भवन्तीति भावः । तारिणि भवार्णव-

---

१. उपागतैः, २. प्रीत्येव, ३. अभ्युपेत्य, ४. परिभूतः, ५. व्यवस्यति, ६. पुण्यतारिणि,

तारिणि गाङ्गेयजले मग्नः स्नातः सन् निर्वृतिं सुखं प्राप। तापार्तानां वारिनिमज्जनमेव सुखैकहेतुरिति भावः ॥ ३६ ॥

शि०—गङ्गेति। स वह्निः, कल्याणकारिणि श्रेयःसम्पादके श्रमहारिणि सन्तापविनाशके पुण्यभारिणि धर्मग्राहिणि तारिणि संसारोच्छेदिनि गङ्गावारिणि मन्दाकिनीजले मग्नः स्नातः स वह्निः निर्वृतिं सुखं प्राप। सम्यक् वारिनिमज्जनादेव तापशान्तिरिति भावः ॥ ३६ ॥

तत्र माहेश्वरं धाम संचक्राम हविर्भुजः।
[1]गङ्गायामुत्तरंगायामन्तस्तापविपद्धृति[2] ॥ ३७ ॥

सी०—तत्रेति। माहेश्वरं शैवं धाम तेजो हविर्भुजोऽग्नेः सकाशात्तत्र गङ्गायां संचक्राम संक्रान्तम्। लग्नमिति यावत्। अत एव किंभूतायां गङ्गायाम्। अन्तर्मध्ये ताप एव विपत्तां धरति तथोक्तायामत एवोल्लसिता अतिवेलास्तरंगाः कल्लोला यस्यास्तथोक्तायाम्। विशेषणद्वयार्थस्य पूर्ववाक्यानन्तरभावितया पृथग्वाक्यत्वेन व्यपदेशे कर्तव्ये विशेषणतया वाक्यात्पूर्वोपमादानं यत्तत्पूज्यतया व्यवस्थितम्। न तु चित्तपरितोषाय। धामसंक्रमणात्प्रागग्निविपद्धरणासंभवात्। 'धृता' इति पञ्चम्यन्तपाठे हविर्भुजो विशेषणम्। उत्तरंगत्वं च जलप्रकृतिविलसितं च स्वीकर्तव्यम् ॥ ३७ ॥

शि०—तत्रेति। महेश्वरस्येदं माहेश्वरं शिवसम्बन्धि धाम तेजः हविर्भुजो हुताशनात्सकाशात्तत्र अन्तस्तापविपद्धृति मध्यसंतापापद्धारिण्याम् उत्तरङ्गायां प्रचुरोर्मिशालिन्यां मन्दाकिन्यां संचक्राम संक्रान्तम् सम्बद्धमित्यर्थः ॥ ३७ ॥

कृशानुरेतसो [3]रेतस्यादृते सरिता तया।
निश्चक्राम ततः सौख्यं हव्यवाहो बहन्बहु ॥ ३८ ॥

सी०—कृशान्विति। तया सरिता गंगया कृशानुरेतसो हरस्य रेतसि धामनि। 'कृशानुरेताः सर्वज्ञः' इत्यमरः। आदृते। आदरपूर्वकं गृहीते सतीत्यर्थः। हव्यवाहोऽग्निः। णिजन्तात्पचाद्यच्। बहु सौख्यं वहन् सन्। ततो गंगातो निश्चक्राम बहिर्निःसृतः ॥ ३८ ॥

शि०—कृशानुरेतस इति। तया पूर्वोक्तया सरिता नद्या गङ्गया कृशानुः रेतो यस्य स तस्य कृशानुरेतसो महेश्वरस्य रेतसि आदृते सत्कारपूर्वकं नीते सति हव्यवाहो वह्निः बहुः सौख्यं वहन् प्राप्नुवन् सन् ततो गङ्गातो निश्चक्राम बहिः निःससार ॥ ३८ ॥

---

१. इद्धभङ्गायाम् २. अन्तस्तापविपद्भृतः, अन्तस्तापभिदाभृति.
३. आहृते.

[1]सुधासारैरिवाम्भोभिरभिषिक्तो[2] हुताशनः ।
यथागतं जगामाथ परां निर्वृतिमादधत् ॥ ३९ ॥

सी०--सुधासारैरिति । अथानन्तरम् । सुधासारैरिवाम्भोभिर्जलैरभिषिक्तः स्नातोऽत एव परामत्युत्कटां निवृर्ति सुखमादधद्विभ्रद्धुताशनोऽग्निर्यथागतमनतिक्रम्य जगाम गतवान् ॥ ३९ ॥

शि०—सुधासारैरिति । अथानन्तरं सुधासारैः पीयूषसदृशैरिव अम्भोभिर्जलैः अभिषिक्तः स्नातः अत एव परामुत्कृष्टां निर्वृतिं सुखमादधत् धारयन् हुताशनो वह्निः यथागतं जगाम ॥ ३९ ॥

सा सुदुर्विषहं [3]गङ्गा धाम कामजितो महत् ।
आदधाना परीतापमवाप व्योमवाहिनी ॥ ४० ॥

सी०--सेति । व्योम्नि वाहः प्रवाहोऽस्ति यस्यास्तथोक्ता सा गंगा कामजितो महेश्वरस्य महत् सुदुर्विषहम् । 'ईषद्दुःसुषु--' इति कृच्छ्रार्थे खल् । धाम तेज आदधाना सती परीतापं संतापम् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । अवाप प्राप्तवतीत्यर्थः ॥ ४० ॥

शि०—सेति । व्योमवाहिनी वियत्प्रवाहवती सा गङ्गा कामं जयतीति कामजित् तस्य कामजितः शिवस्य ( कामोपपदज्जायतेः क्विप् । 'ह्रस्वस्य पितीति' तुक् ) महत् विशिष्टं सुदुर्विषहं विषतुल्यम् असह्यमित्यर्थः । आदधाना धारयन्ती सती परीतापं दुःखम् अवाप प्राप ॥ ४० ॥

बहिरार्ता युगान्ताग्नेस्तप्तानीव शिखाशतैः ।
हित्वोष्णानि [4]जलान्यस्या निर्जग्मुर्जलजन्तवः ॥ ४१ ॥

सी०--बहिरिति । जलजन्तवो यादांस्यार्ताः सन्तो युगान्ताग्नेः प्रलयकालीनानलस्य शिखाशतैः प्रकरणाच्छिवधाम्न एव तप्तान्यत एवोष्णान्यस्या गंगाया जलानि हित्वा परित्यज्य बहिर्निर्जग्मुः । निर्गतवन्त इत्यर्थः । यानि महेश्वरधामशिखाशतानि तान्यत्युग्रसंतापरूपसाधारणधर्मेण गम्यमानेन प्रलयकालानलसंबन्धिनीवेत्युत्प्रेक्षा । 'अर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः । हित्वेति 'ओहाक् त्यागे' इत्यस्य ॥ ४१ ॥

शि०—बहिरिति । जलजन्तवः जलचरप्राणिनः आर्ताः पीडिताः सन्तः युगान्ताग्नेः प्रलयकालिकवह्नेः शिखाशतैः ज्वालासमुदायैः ( हरतेजोभिरिति भावः ) तप्तानीव, अत एवोष्णानि अस्या गङ्गाया जलानि हित्वा त्यक्त्वा बहिर्निर्जग्मुः ययुः । हरतेजसि प्रलयकालिनाग्नित्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः ॥ ४१ ॥

---

१. उदारैः, २. परिषिक्तः, ३. कामम्., ४. पयांसि.

तेजसा तेन रौद्रेण तप्तानि सलिलान्यपि।
समुदञ्चन्ति चण्डानि [1]दुर्धराणि बभार सा ॥ ४२ ॥

सी०—तेजसेति। सा गंगा। रौद्रेण तेन तेजसा तप्तान्यत एव समुदञ्चन्ति अतितापवशादुत्प्लुत्य बहिर्निःसरन्तीत्यर्थः। अत एव चण्डानि प्रचण्डस्वरूपाण्यत एव दुर्धराण्यपि सलिलानि बभार धृतवती। तेजसो रुद्रसंबन्धितत्वादिति भावः ॥ ४२ ॥

शि०—तेजसेति। सा गङ्गा रौद्रेण माहेश्वरेण तेन तेजसा धाम्ना तप्तानि उष्णानि अत एव समुदञ्चन्ति उत्प्लवन्ति चण्डानि भीषणाकाराणि दुर्धराणि दुःखेन धर्तुं शक्यानि अपि सलिलानि जलानि बभार ॥ ४२ ॥

जगच्चक्षुषि चण्डांशौ किंचिदभ्युदयोन्मुखे।
जग्मुः षट् कृत्तिका माघे मासि स्नातुं सुरापगाम् ॥ ४३ ॥

सी०—जगदिति। माघे माघसंज्ञके मासि। 'पद्दन्–' इति मासशब्दस्य हलन्तमासादेशः। जगच्चक्षुषि जगन्नेत्रभूते चण्डांशौ सूर्ये किंचिदभ्युदयोन्मुखे। शैलान्तर्हितेन तेजसा दिशः किंचित्प्रकाशयतीत्यर्थः। षट् कृत्तिकाः स्नातुं सुरापगां मन्दाकिनीं जग्मुः प्रापुः ॥ ४३ ॥

शि०—जगदिति। माघे तदाख्यमासे जगच्चक्षुषि संसाराक्षिभूते चण्डांशौ सूर्ये किञ्चिदभ्युदयोन्मुखे अल्पमुदयति सती षट् कृत्तिकाः तदाख्यस्त्रियः सुरापगां गङ्गां स्नातुं जग्मुः ॥ ४३ ॥

अथ चतुर्भिः सुरापगां विशिनष्टि—

शुभ्रैरभ्रंकषैरूर्मिशतैः [2]स्वर्गनिवासिनाम्।
कथयन्तीमिवालोकावगाहा[3]चमनादिकम् ॥ ४४ ॥

सी०—शुभ्रैरिति। आलोको दर्शनमवगाहः स्नानमाचमनं चेत्यादीनि यस्य तादृशं कर्म कुर्वतां स्वर्गनिवासिनामभ्रंकषैरुत्प्लुत्याकाशस्पृग्भिः शुभ्रैरूर्मिशतैस्तरङ्गशतैरात्मदुःखं कथयन्तीमिवेत्युत्प्रेक्षा। अस्मिन् श्लोके पदद्वयाध्याहारदोषः स्फुट एव। क्रियाकारकयोः परस्परनित्यसंबन्धाद् आक्षेपलक्षणन्यायेन केचित्समादधते। उत्प्लुतानि यानि तरङ्गशतानि तानि कथनसंज्ञानानीवेति भावः। यथान्योऽप्यात्मव्याधिहेतुकं कंचिददनीयपदार्थं कंचिदपि पुरुषं दर्शयित्वाऽऽस्वाद्य च तत्पदार्थदोषं कथयति तथेयमपीति बोद्धव्यम्। अभ्रंकषैरिति 'सर्वकूलाभ्रकरीषेषु' इत्यभ्रोपपदात्कषेः खश् ॥ ४४ ॥

---

१. दुर्भराणि. २. स्वर्गमनं सताम्, ३. आचमादिना,

शि०—शुभ्रैरिति । आलोकावगाहाचमनादिकं कर्म अभ्रंकषैः वियद्गामिभिः शुभ्रैः स्वच्छैः ऊर्मिशतैस्तरङ्गशतैः कथयन्तीमिव सुरापगां जग्मुरिति पूर्वेण सम्बन्धः ॥ ४४ ॥

**सुस्नातानां मुनीन्द्राणां बलिकर्मोचितैरलम् ।**
**बहिः पुष्पोत्करैः कीर्णतीरां दुर्वाक्षतान्वितैः ॥ ४५ ॥**

सी०—सुस्नातानामिति । सुस्नातानां मुनीन्द्राणां सप्तर्षीणां बलिकर्मणि पूजाविधावुचितानि योग्यानि तैः । यथा दूर्वाभिरक्षतैश्चान्वितैर्युक्तैः पुष्पोत्करैः कुसुमसमूहैर्बहिः कीर्णतीरां व्याप्तसैकताम् । 'लाजाः पुं भूम्नि चाक्षताः' इत्यमरः । अलंशब्दोऽत्रात्यर्थवाचकः । स च कीर्णतीरामित्यतः प्रागन्वयितव्यः ॥ ४५ ॥

शि०—सुस्नातानामिति । सुस्नातानामभिषिक्तानां मुनीन्द्राणामृषिश्रेष्ठानां बलिकर्मोचितैः पूजाविधियोग्यैः दूर्वाक्षतान्वितैः दूर्वाक्षतयुक्तैः पुष्पोत्करैः कुसुमनिचयैः बहिः कीर्णतीरां व्याप्तकूलाम् ॥ ४५ ॥

**[1]ब्रह्मध्यानपरैः[2]र्योगपरैर्ब्रह्मासन[3]स्थितैः ।**
**योगनिद्रागतैर्योगपट्ट[4]बन्धैरुपाश्रिताम् ॥ ४६ ॥**

सी०—ब्रह्मेति । ब्रह्मासने स्थितैः । तथा ब्रह्मणो ध्याने परैः सक्तैः । तथा योग एव निद्रा तां गतैः, तथा योगपट्टस्य बन्धो बन्धनं येषां तैः । योगपट्टं बध्नद्भिरित्यर्थः । एवंविधैर्योगपरैर्योगिभिरुपाश्रितां सेविताम् । 'उभौ जानू ऊर्ध्वगमौ सकटयपसुन्नासता । बद्धौ च कृत्वा सततं ध्यायेत्परमतन्यधोः ' इति योगलक्षणम् ॥ ४६ ॥

शि०—ब्रह्मेति । ब्रह्मासनस्थितैः बद्धकमलासनैः ब्रह्मध्यानपरैः ब्रह्मचिन्तनासक्तैः योगनिद्रागतैः प्राप्तसमाधिलक्षणनिद्रैः योगपट्टबन्धैः योगलक्षणपट्टं बध्नद्भिः योगासक्तैः योगिभिरित्यर्थः । उपाश्रितां सेविताम् ॥ ४६ ॥

**पादाङ्गुष्ठाग्र[5]भूमिस्थैः सूर्य[6]संबद्धदृष्टिभिः ।**
**ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपसेविताम् ॥ ४७ ॥**

सी०—पादेति । पादसंबन्धिनोऽङ्गुष्ठस्याग्रेणैव । न समग्रपादेनेत्यर्थः । भूमिस्थैः पृथिव्यां स्थितैरित्यर्थः । तथा सूर्ये सम्बद्धदृष्टिभिरन्वितविलोचनैः । तथा परं ब्रह्म गृणद्भिर्जपद्भिर्ब्रह्मर्षिभिः सप्तर्षिभिरुपसेवितामुपाश्रिताम् ॥ ४७ ॥

---

१. ब्रह्म, २. योगिवरैः, ३. पद्मासन, ४. भोगिभोगबद्धैः, भोगिभोगयुक्तैः, ५. भूमिष्ठैः, भूयिष्ठैः, ६. संविष्टैः,

शि०—पादेति। पादाङ्गुष्ठाग्रभूमिस्थैः चरणांगुष्ठाग्रभूस्थितैः सूर्यसम्बद्धदृष्टिभिः सहस्रकिरणान्वितविलोचनैः परं ब्रह्म गृणद्भिः जपद्भिः सप्तर्षिभिः उपसेवितां संश्रिताम् ॥ ४७ ॥

अथ [1]दिव्यां नदीं देवीमभ्यनन्दन्विलोक्य ताः।
कं नभिनन्दयत्येषा [2]दृष्टा पीयूषवाहिनी ॥ ४८ ॥

सौ०—अथेति। अथानन्तरं ताः कृत्तिकाः दिव्यां स्वर्गीयां नदीं देवीं गंगां विलोक्याभ्यनन्दनन् आनन्दिता बभुवुरित्यर्थः। एतद्युक्तमेवेत्याह–एषा पीयूषवाहिनी गंगा दृष्टा दर्शनगोचरीभूता सती कं पुरुषं नाभिनन्दयति, अपि तु सर्वमेवेत्यर्थः। 'किन्नु' इति पाठे किं कुतः कारणान्नाभिनन्दयति मोदयति, अपि तु मोदयत्येवेत्यर्थः। अत एतदालोकन आनन्दयुक्त इति भावः ॥ ४८ ॥

शि०—अथेति। अथानन्तरं ताः कृत्तिकाः दिव्यां दिवि भवां नदीं देवीं मन्दाकिनीं विलोक्य दृष्ट्वाऽभ्यनन्दन् आनन्दं प्रापुरित्यर्थः। अर्थान्तरं न्यस्यति–एषेति। एषा कथितप्रभावा पीयूषवाहिनी सुधासलिला दृष्टाऽवलोकिता सती कं पुरुषं नाभिनन्दयति न सुखयति, किन्तु सर्वमपि सुखयत्येवेत्यर्थः ॥ ४८ ॥

चन्द्रचूडामणिर्देवो यामुद्वहति मूर्धनि।
[3]यस्या विलोकनं पुण्यं श्रद्दधुस्ता मुदा हृदि ॥ ४९ ॥

सौ०—चन्द्रेति। चन्द्रश्चूडामणिभूतो यस्य स देवो हरो मूर्धनि यामुद्वहति। यस्या विलोकनं पुण्यं पुण्यकारि तां गंगा ता हृदि मनसि मुदा प्रीत्या श्रद्दधुः। श्रद्धितां चक्रुरित्यर्थः। गुणवत्सु श्रद्धाया औचित्यादिति भावः ॥ ४९ ॥

शि०—चन्द्रेति। चन्द्रचूडामणि इन्दुशेखरो देवो हरो यां गङ्गां मूर्धनि मस्तके उद्वहति धारयति, यस्या गङ्गाया विलोकनं दर्शनं पुण्यजनकं तां गङ्गा ताः कृत्तिकाः हृदि चेतसि मुदा हर्षेण श्रद्दधुः विशश्वसुः विश्वस्तां चक्रुरित्यर्थः ॥४९॥

[4]दिव्यां विष्णुपदीं देवीं निर्वाणपददेशिनीम्[5]।
[6]निर्धूतकल्मषां [7]मूर्ध्ना सुप्रह्वास्ता[8] ववन्दिरे ॥ ५० ॥

सौ०—दिव्यामिति। निर्वाणपदस्य मोक्षपदस्य देशिनीं दात्रीम्। तथा निर्धूतकल्मषां दूरीकृतजनाकिल्बिषां दिव्यां स्वर्गीयाम्। 'द्युप्रागपागुदक्प्रतीचो यत्' इति दिवो यत्। विष्णोः पदीं चरणसंबन्धिनीम्। 'गंगा

---

१. देवीं धुनीम्, दिव्यनदीम्, २. देवी ३. तस्य विलोकनम्, तस्यावलोकनम्, ४. दिष्टया, ५. दर्शिनीम्, ६. निर्धूतकल्मषाः, ७. भूत्वा, ८. ताम्,

विष्णुपदी' इत्यमरः। देवीं गंगां ताः कृत्तिकाः सुतरां प्रह्वा नताः सत्यो मूर्ध्ना ववन्दिरे प्रणेमुः ॥ ५० ॥

शि०—दिव्यामिति। निर्वाणपददेशिनीं मुक्तिपदप्रदां निर्धूतकल्मषां ध्वस्त पापां दिव्यां दिवि भवां विष्णुपदीं हरिचरणसम्बन्धिनीं देवीं गङ्गां ताः कृत्तिकाः सुप्रह्वाः विनताः सत्यः मूर्ध्ना शिरसा ववन्दिरे ॥ ५० ॥

[1]सौभाग्यैः खलु [2]सुप्रापां मोक्षप्रतिभुवं [3]सतीम्।
भक्त्यात्र [4]तुष्टुवुस्तां[5] ताः श्रद्दधाना [6]दिवोधुनीम् ॥ ५१ ॥

सी०—सौभाग्यैरिति। अत्र ताः कृतिकाः श्रद्दधानाः सत्यः सौभाग्यैः शोभनभाग्यैः सुखेन प्राप्तुं शक्यां मोक्षस्य प्रतिभुवं लग्नकां सतीं पतिव्रतां तां दिवोधुनीं गंगां भक्त्या निमित्तेन तुष्टुवुः। भक्तिनिमित्तं स्तवनमित्यर्थः ॥ ५१ ॥

शि०—सौभाग्यैरिति। अत्र ताः कृत्तिकाः श्रद्दधाना विश्वस्ताः सत्य सौभाग्यैः शोभनादृष्टैः सुप्रापां सुखेन प्राप्तुं शक्यां मोक्षप्रतिभुवं मुक्तिलग्नकां सतीं साध्वीं तां दिवोधुनीं गङ्गां भक्त्या सेवया हेतुना तुष्टुवुः ववन्दिरे ॥ ५१ ॥

मुक्तिस्त्रीसङ्ग[7]दूत्यज्ञैस्तत्र [8]ता विमलैर्जलैः।
प्रक्षालितमलाः सस्नुः सुस्नातास्तपसान्विताः[9] ॥ ५२ ॥

सी०—मुक्तिरिति। ताः कृतिकाः विमलैर्विगतमलैः तथा मुक्तिर्मोक्षः सैव स्त्री तस्याः संगः संबन्धः, प्राप्तिरिति यावत्, तत्र यद्दूत्यं दूतीभावः कर्म वा, तस्य ज्ञैः ज्ञातृभिरित्यर्थः। येषां स्पर्शमात्रेण मुक्तिर्भवतीति भावः। तथाभूतैर्जलैः कृत्वा प्रक्षालितमला निर्वर्तितकल्मषाः सत्यस्तत्र गंगायां सस्नुः स्नानं चक्रुरित्यर्थः। मलापकर्षस्नानानन्तरं शुद्धस्नानं क्रियत इति भावः। किंभूताः? सुस्नाताः शोभनं विध्युक्तप्रकारकं स्नातं स्नानं यासां ताः। भावे निष्ठा। विध्युक्तप्रकारेण स्नानकर्त्र्य इत्यर्थः। पुनः किंभूताः? तपसान्विताः तपस्विन्य इत्यर्थः। 'ष्णा शौचे' कर्तरि लिट् ॥ ५२ ॥

शि०—मुक्तीति। ताः कृत्तिकाः विमलैः। विगतो मलो येषां तथोक्तैः प्रशस्तैरित्यर्थः। तथा मुक्तिस्त्रीसङ्गदूत्यज्ञैर्मोक्षनारीसम्पर्कदूतीभावविद्भिः जलैः करणैः सुस्नाताः शोभनस्नानाः तपसान्विताः तपोयुक्ताः प्रक्षालितमलाः प्रक्षालितं दूरीकृतं मलं यासां तास्तथोक्ताः ध्वस्तपापा इत्यर्थः, सत्यः तत्र गङ्गायां सस्नुः अभिसुषुविरे ॥ ५२ ॥

---

१, स्वभाग्यैः, २. संप्राप्ताम्, ३. सताम्, ४ प्रतुष्टुवुः, ५. तास्ताम्, ६. सिषेविरे, ७. दौत्यज्ञै ८. भाविमलैः, ९. तापसान्विताः,

**स्नात्वा तत्र [1]सुलभ्यायां भाग्यैः परिपचेलिमैः ।**
**चरितार्थं स्वमात्मानं [2]बहु ता मेनिरे मुदा ॥ ५३ ॥**

सी०—स्नात्वेति । परिपचेलिमैः परिपक्वैः । 'तव्यत्तव्यानीयरः' इत्यत्र केलिमर उपसंख्यानात् पचतेः केलिमर् । भाग्यैर्दिष्टैर्निमित्तभूतैः सुलभ्यायां सुखेन लब्धुं शक्यायाम् । 'पोरदुपधात्' इति यत् । तथाभूतायां तत्र गङ्गायां स्नात्वा ताः कृत्तिकाः स्वं स्वकीयमात्मानं मुदा प्रीत्या बहु यथा तथा चरितार्थं पुरुषार्थकारिणं मेनिरेऽमन्यन्त । 'मनु अवबोधने' कर्तरि लिट् ॥ ५३ ॥

शि०—स्नात्वेति । परिपचेलिमैः परिपक्वैः परिणतैरित्यर्थः, भाग्यैर्दैवैर्हेतुभूतैः सुलभ्यायां सुखेन प्राप्यायां तत्र गङ्गायां स्नात्वा सुत्वा ताः कृत्तिकाः स्वं स्वकीय-आत्मानं मुदा हर्षेण बहु विशेषं यथा तथा चरितार्थं कृतपौरुषं मेनिरे बुबुधिरे ॥

**कृशानुरेतसो रेतस्तासामभिकलेवरम् ।**
**अमोघं संचचाराथ सद्यो गङ्गावगाहनात् ॥ ५४ ॥**

सी०—कृशानुरेतस इति । अथानन्तरं गङ्गावगाहनाद्धेतोरमोघं सफलं कृशानुरेतसो हरस्य रेतो वीर्यं सद्यस्तत्कालं तासां कृत्तिकाना-मभिकलेवरं कलेवरे शरीर इत्यभिकलेवरम् । शरीरमध्य इत्यर्थः । संचचार संचक्राम । लग्नमिति यावत् । अत्र तृतीयायोगाभावात् समः-परतोऽपि चरतेर्नात्मनेपदम्, 'समस्तृतीयायुक्तात्' इति सौत्रनियमात् । ५४ ।

शि०—कृशानुरेतस इति । अथानन्तरं गङ्गाऽवगाहनात् गङ्गास्नानाद्धेतोः अमोघं सफलं कृशानुरेतसो धूर्जटेः रेतस्तेजः तासां कृत्तिकानाम् अभिकलेवरं कलेवरे शरीरे इत्यर्थः । सद्यस्तत्कालं संचचार सम्बद्धम् ॥ ५४ ॥

**रौद्रं सुदुर्धरं धाम दधाना दहनात्मकम् ।**
**परितापमवापुस्ता मग्ना इव विषाम्बुधौ ॥ ५५ ॥**

सी०—रौद्रमिति । दहनात्मकमग्निरूपमत एव सुतरां दुर्धरं दुःखेन धर्तुं शक्यं रौद्रं शैवं धाम तेजो दधानास्ताः कृत्तिका विषाम्बुधौ मग्ना इवेत्युत्प्रेक्षा । परितापमवापुः । विषाम्बुधिमग्नत्वे यादृशः परितापो भवति तादृशो रौद्रतेजोधारणे जात इति भावः ॥ ५५ ॥

शि०—रौद्रमिति । दहन आत्मा यस्य तं तथोक्तं वह्निस्वरूपम्, अत एव सुदुर्धरं अतिक्लेशेन धर्तुं शक्यं रौद्रं रुद्रसम्बन्धि धाम तेजो दधाना धारयन्त्यः ताः कृत्तिकाः विषाम्बुधौ गरलाब्धौ मग्नाःकृतस्नाना इव परितापं दुःखमवापुः प्राप्ताः ।

---

१. सुरम्यायाम्, २. बहुलाः

विषाब्धिस्नानजन्यपरितापमिव हरतेजोधारणजन्यपरितापमवापुरित्यर्थः । अत्रो-त्प्रेक्षालङ्कारः ॥ ५५ ॥

अक्षमा [1]दुर्वहं वोढुमम्बुनो बहिरातुराः ।
[2]अग्निं ज्वलन्तमन्तस्ता दधाना इव निर्ययुः ॥ ५६ ॥

सी०—अक्षमा इति । दुर्वहं दुर्धरं तद्धाम वोढुमक्षमा अत एवातुरा व्याकुलास्ताः कृत्तिकाः । अन्तर्मध्ये ज्वलन्तमग्निमिव दधानाः सत्योऽम्बुनो जलाद्बहिर्निर्ययुः । निर्जग्मुरित्यर्थः । अत्र धामन्यग्नित्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥ ५६ ॥

शि०—अक्षमेति । दुर्वहमसह्यं तत् रौद्रतेजो वोढुं धर्तुमक्षमा असमर्था अत एवाऽऽतुराः व्यग्रास्ताः कृत्तिकाः अन्तः शरीरमध्ये ज्वलन्तं दीप्यमानमग्निमिव धारयन्त्यः सत्यः । तेज इति शेषः, बहिर्निर्ययुः बहिर्गताः ॥ ५६ ॥

अमोघं शांभवं बीजं सद्यो [3]नद्योज्झितं महत् ।
तासामभ्युदरं [4]दीप्तं स्थितं गर्भत्वमागमत् ॥ ५७ ॥

सी०—अमोघमिति । नद्या गङ्गया सद्य उज्झितमत एव तासां कृत्तिकानामभ्युदरं दीप्तं सत्स्थितममोघं सफलं महच्छांभवं बीजं गर्भत्वमागमत् । गर्भीभूतमित्यर्थः ॥ ५७ ॥

शि०—अमोघमिति । नद्या सुरापगाया सद्यस्तत्क्षणमुज्झितं त्यक्तमत एव तासां कृत्तिकानामभ्युदरं कुक्षौ दीप्तं सत् स्थितं विद्यमानम् अमोघं सफलं महत् विशिष्टं शाम्भवं वीर्यं तेजो गर्भत्वमगमत् गङ्गोज्झितहरतेजः कृत्तिकोदरे गर्भोऽभूदित्यर्थः ॥ ५७ ॥

सुज्ञा विज्ञाय ता [5]गर्भभूतं तद्वोढुमक्षमाः ।
विषादमदधुः[6] सद्यो गाढं [7]भर्तृभिया ह्रिया ॥ ५८ ॥

सी०—सुज्ञा इति । सुज्ञाश्चतुरा अत एव गर्भभूतं तद्वीर्यं विज्ञायापि वोढुमक्षमा असमर्थाः । तस्यातिशयप्रज्वलितत्वादिति भावः । ताः

---

५८-५९ श्लोकयोर्मध्ये श्लोको दृश्यते—

अकाममरणं जात[1]मकाण्डं भाविनोऽर्थतः ।
संभूयान्योन्यमात्मानं [2]शुशुचुस्तास्तदाविलम् ॥

( १. अकाण्डे २. शुश्रुवुः )

१, दुर्धरम्, २. अग्निं ज्वलन्तमन्तःस्थं दधाना इव निर्ययुः, निर्ययुसहिताः शीघ्रं कृत्तिका विस्मयान्विताः, ३. नद्यां स्थितम्, ४. तीव्रम्, ५. गर्भीभूतम्, ६. आगमन्. ७. भर्तृभयात्.

कृत्तिका भर्तृभिया भयेन। यदि न धरिष्यामस्तदानुचितं नो चेच्छरीर दाह इति भयेनेत्यर्थः। ह्रिया लज्जया एवंविधा इमाः। याभिर्भर्तृवीर्यमपि न धृतमिति लोकप्रवादजन्मनेत्यर्थः। सद्यो गाढं विषादं खेदमदधुर्धृतवत्यः॥ ५८॥

शि०—सुज्ञेति। सुज्ञा निपुणास्ताः कृत्तिका गर्भभूतं तत् हरतेजो विज्ञाय ज्ञात्वापि वोढुं धर्तुमक्षमाः सत्यः भर्तृभिया स्वामिसाध्वसेन ह्रिया लज्जया च सद्यो गाढं बहुलं विषादमदधुः प्राप्तवत्यः। तासां वोढुमक्षमत्वे तेजसः प्रज्वलितत्वं भर्तृभयेऽनुचितत्वशरीरदाहोभयं च हेतुरिति बोध्यम्॥ ५८॥

ततः शरवणे [1]सार्धं भयेन व्रीडया च[2] ताः।
तद्गर्भजातमुत्सृज्य [3]स्वान् गृहानभिनिर्ययुः[4]॥ ५९॥

सी०—तत इति। ततोऽनन्तरं ताः कृत्तिकास्तद्गर्भजातं गर्भसामान्यम्। 'जातिर्जातं च सामान्यम्' इत्यमरः। भयेन व्रीडया च सार्धं सह शरवणे। 'प्रनिरन्तः—शरेक्षु—' इत्यादिना शरशब्दात् परवननकारस्य णत्वम्। 'शरः स्तुते जने बाणे' इति भेदिनी। उत्सृज्य परित्यज्य स्वान् गृहानभिनिर्ययुर्गतवत्यः। 'गृहाः पुंसि च भूम्न्येव' इत्यमरः॥ ५९॥

शि०—तत इति। ततस्तदनन्तरं ताः कृत्तिकाः तद्गर्भजातं गर्भसामान्यं भयेन साध्वसेन व्रीडया लज्जया च सार्धं शरवणे शरकाण्डवने उत्सृज्य त्यक्त्वा स्वान् गृहान् अभिनिर्ययुः गताः। गृहशब्दस्य पुंस्त्वं कोशात्॥ ५९॥

ताभिस्तत्रामृतकरकलाकोमलं भासमानं
[5]तद्विक्षिप्तं क्षणमभिनभोगर्भमभ्युज्जिहानैः।
[6]स्वैस्तेजोभिर्दिनपतिशतस्पर्धमानैरमानै[7]
[8]र्वक्त्रैः षड्भिः [9]स्मरहरगुरुस्पर्धयैवाजनीव॥ ६०॥

सी०—ताभिरिति। ताभिः कृत्तिकाभिस्तत्र शरवणे विक्षिप्तं त्यक्तम्। तथामृतकरकलावच्चन्द्रकलेव कोमलं मृदु यथा तथा क्षणं भासमानं तद्गर्भजातं कर्तृ। अभिनभोगर्भं नभोगर्भं आकाशमध्य इत्यभिनभोगर्भम्। 'गर्भो भ्रूणेऽर्भके कुक्षौ' इति मेदिनी। अभ्युज्जिहानैरभ्युज्जिहते संमुखमुदयन्ते तानि तैः। 'ओ हाङ् गतौ' इत्यतः शानच्। तथा दिनपतिशतं सूर्यशतं स्पर्धन्ते तानि तैः। ततोऽप्यधिकैरित्यर्थः। तथामानैरसंख्यैः

१. शापभयेन, २. सह, ३. ता, ४. अभितो ययु; अभि ता ययुः,
५. निक्षिप्तम्, ६. तै, ७. दिनकर, ८. वक्त्रम्
९. स्मरहरशिरःस्पर्धयेव प्रपेदे.

स्वैस्तैजोभिः तथा षड्भिर्वक्त्रैश्च युक्तं स्मरहरगुरोर्ब्रह्मणः। स्पर्धयेर्ष्ययेव। तव चत्वारि मम षडित्यतस्त्वत्तोऽप्यहमधिकोऽस्मीत्येवंभूतवाग्वादावसर- फलकयेत्यर्थः। अजनि परिप्राप्तमभूदित्यर्थः। 'दीपजन-' इत्यादिना च्लेश्चिण्। 'जनिवध्योश्च' इति वृद्धिनिषेधः। अत्र तेजसां षण्णां वक्त्राणां चोत्पादने ब्रह्मस्पर्धया अहेतुत्वेऽपि तद्धेतुत्वेन कल्पनाद्धेतूत्प्रेक्षालंकारः। मन्दाक्रान्ता वृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्' इति लक्षणात्॥ ६०॥

इति श्रीपर्वणीकरोपनामक श्रीलक्ष्मणभट्टात्मजसतोगर्भसंभव श्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कुमारोत्पत्तिर्नाम दशमः सर्गः॥

●

शि०—ताभिरिति। ताभिः कृत्तिकाभिः तत्र शरवणे विक्षिप्तमुज्झितम् अमृतकरकलाकोमलं चन्द्रकलामनोज्ञं यथा तथा क्षणं भासमानं ज्वलत् तत् गर्भ- जातम् अभिनभोगर्भं नभो गर्भेऽभ्युज्जिहानैरुदयद्भिः दिनपतिशतस्पर्द्धमानैः शतसूर्या- धिकैः अमानैः अपरिमेयैः स्वैः स्वकीयैस्तेजोभिर्घामभिः षड्भिर्वक्त्रैर्मुखैश्च युक्तं सत् स्मरहरगुरुस्पर्द्धया वेधस ईर्ष्ययेव अजनि जातम्॥ ६०॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मज श्रीकनकलालठक्कुरविरचिता शिशुहितै- षिणीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे काव्ये कुमारोत्पत्तिर्नाम दशमः सर्गः॥

●

# एकादशः सर्गः

[1]अभ्यर्थ्यमाना विबुधैः समग्रैः प्रह्वैः सुरेन्द्रप्रमुखैरुपेत्य ।
तं पाययामास [2]सुधातिपूर्णं [3]सुरापगा [4]स्वं स्तनमाशु [5]मूर्ता ॥ १ ॥

सी०--अभ्यर्थ्येति । सुरेन्द्रप्रमुखैरिन्द्रादिभिः समग्रैः समस्तैर्विबुधैर्देवैरुपेत्य समीपमागत्य प्रह्वैर्नम्रैः सद्भिरभ्यर्थ्यमाना याच्यमाना सुरापगा मन्दाकिनी । आशु शीघ्रं मूर्ता मूर्तिमती सती । तं कुमारं सुधया दुग्धामृतेनातिपूर्णं बहुभृतं स्वमात्मीयं स्तनं पाययामास पानं कारितवती । सर्गेऽस्मिन्वृत्तमुपजातिः ॥ १ ॥

शि०—अभ्यर्थ्येति । प्रह्वैर्नतैः समग्रैः सर्वैः सुरेन्द्रप्रमुखैः इन्द्रप्रभृतिभिः विबुधैः सुरैः उपेत्य समीपमागत्य अभ्यर्थ्यमाना संस्तूयमाना सुरापगा गङ्गा आशु शीघ्रं मूर्ता मूर्तिमती सती तं कुमारं सुधातिपूर्णं पीयूषाढ्यं स्वं स्वकीयं स्तनं पयोधरं पाययामास । उपजातिश्छन्दः ॥ १ ॥

पिबन् स तस्याः स्तनयोः सुधौघं क्षणं क्षणं साधु समेधमानः ।
प्रापाकृतिं कामपि [6]षड्भिरेत्य निषेव्यमाणः खलु कृत्तिकाभिः ॥ २ ॥

सी०—पिबन्निति । स कुमारस्तस्या मन्दाकिन्याः स्तनयोः सम्बन्धिनं सुधौघं दुग्धामृतसमूहं पिबन् अत एव क्षणंक्षणं प्रतिक्षणं साधु यथा स्यात्तथा समेधमानः सम्यग्वर्धमानः षड्भिः कृत्तिकाभिरेत्य निषेव्यमाणः श्रियमाणश्च सन् । कामपि लोकोत्तरमाकृतिं प्राप्तवान्, खलु वाक्यालङ्कारे 'खलु स्याद्वाक्यभूषायाम्' इति विश्वः ॥ २ ॥

शि०—पिबन्निति । स कुमारः तस्याः गङ्गायाः स्तनयोः सुधौघं पीयूषबहुलं पिबन् क्षणं क्षणं प्रतिक्षणं साधु यथा स्यात्तथा समेधमानः वर्द्धमानः ताभिः कृत्तिकाभिः एत्य निषेव्यमानः संश्रीयमाणश्च सन् कामपि अनिर्दिष्टां लोकोत्तरामपूर्वामाकृतिमाकारं प्राप लेभे । अमृतपानाद्भव्याकृतिलाभो योग्य एवेति भावः ॥ २ ॥

भागीरथीपावककृत्तिकानामानन्दबाष्पाकुललोचनानाम् ।
तं नन्दनं दिव्यमुपात्तुमासीत्परस्परं प्रौढतरो विवादः ॥ ३ ॥

सी०—भागीरथीति । आनन्दबाष्पैराकुललोचनानां व्याप्तनेत्राणाम् । पावकश्च कृत्तिकाश्च पावककृत्तिकाः । भागीरथ्या गङ्गया सहिता याः पावककृत्तिकास्तासां सम्बन्धि दिव्यं लोकोत्तरस्वरूपं तं नन्दनं पुत्रमुपात्तुं

---

१. अभ्यर्थमाना, २. सुधाभिपूर्णम्, ३. स्वर्गापगा, ४ स्वस्तनम्, ५. धात्रा, ६. एष,

गृहीतुं परस्परमन्योन्यं प्रौढतोऽतिशयितो विवादः कलह आसीत्। ममायं ममायमिति प्रवादपूर्वकः कलिर्बभूवेत्यर्थः ॥ ३ ॥

शि० —भागीरथीति । आनन्दबाष्पाकुललोचनानां हर्षाश्रुपूरितचक्षुषां भागीरथीपावककृत्तिकानां मन्दाकिनीसहितपावककृत्तिकाख्यस्त्रीणां दिव्यमुत्तमं तं नन्दनमुपात्तुमादातुं परस्परमन्योऽन्यं प्रौढतरो बहुलो विवादः कलह आसीत् ॥३॥

अत्रान्तरे पर्वतराजपुत्र्या समं शिवः स्वैरविहारहेतोः ।
नभो विमानेन विगाहमानो मनोतिवेगेन जगाम तत्र ॥ ४ ॥

सी०—अत्रान्तर इति । अत्रान्तरे कलहावसरे शिवः पर्वतराजपुत्र्या पार्वत्या समं सह स्वैरविहारो यथेच्छविहारस्तस्माद्धेतोः कारणान्मनोतिवेगेन चेतसोऽप्यतिशयजवेन विमानेन नभोऽन्तरिक्षं विगाहमानोऽवलोडयंस्तत्र कलहस्थाने जगाम प्राप ॥ ४ ॥

शि०—अत्रान्तर इति । अत्रावसरे विवादक्षणे शिवो हरः पर्वतानां राजा पर्वतराजः 'राजाहःसखिभ्य' इति टच् । तस्य पुत्री तया पर्वतराजपुत्र्या गिरिराजकन्यया पार्वत्या समं सह स्वैरविहारहेतोः यथेच्छक्रीडाकारणात् मनोतिवेगेन चेतोऽधिकजवेन विमानेन व्योमयानेन नभ आकाशं विगाहमानोऽवलोडयंस्तत्र विवादस्थाने जगाम प्राप । शिवस्य भगवती निखिलजगतो ध्यानगोचरतया विवादनिर्णयार्थमाजगामेति भावः ॥ ४ ॥

[1]निसर्गवात्सल्यवशाद्विवृद्धचेतःप्रमोदौ गलदश्रुनेत्रौ ।
अपश्यतां [2]तं गिरिजागिरीशौ षडाननं [3]षड्दिनजातमात्रम् ॥ ५ ॥

सी०—निसर्गेति । गिरजागिरीशौ निसर्गेण स्वभावेन यद्वात्सल्यं दयावत्त्वं तस्य वशाद्धेतोर्विवृद्धः प्रवृद्धश्चेतसः प्रमोदो हर्षो ययोस्तथाभूतौ । अत एव गलदश्रुणी प्रवहद्बाष्पे नेत्रे ययोस्तथाभूतौ सन्तौ । षड्दिनादारभ्येत्यर्थः । जातानि व्यतीतानि यस्य स षड्दिनजातः स एव षड्दिनजातमात्रस्तं षडाननं षण्मुखं तं कुमारमपश्यतां दृष्टवन्तौ ॥ ५ ॥

शि०—निसर्गेति । गिरिजागिरीशौ पार्वतीहरौ निसर्गवात्सल्यवशात् स्वभावदयालुत्ववशात्कारणात् विवृद्धचेतः प्रमोदौ समेधमानहर्षौ गलदश्रुनेत्रौ मुक्ताश्रुनेत्रौ संतौ षड्दिनजातमात्रं व्यतीतदिनषट्कं षडाननं षण्मुखं तं सुतम् अपश्यतां दृष्टवन्तौ ॥ ५ ॥

अथाह देवी शशिखण्डमौलिं कोऽयं शिशुर्दिव्यवपुः पुरस्तात् ।
कस्याथवा धन्यतमस्य पुंसो [4]मातास्य का भाग्यवतीषु धुर्या ॥ ६ ॥

---

१. निसर्गवात्सल्यरसाद्विवृद्धचेतःप्रमोदौ; निसर्गवात्सल्यविवृद्धचेतःपृथुप्रमोदौ,
२. तौ, ३. तद्दिन.

सी० —अथेति । अथ दर्शनानन्तरं देवी भवानी । पुरस्तादयं कः । अथवा कस्य धन्यतमस्य पुंसो दिव्यवपुरादित्यसदृशविग्रहः शिशुर्बालः । पुत्र इति यावत् । अस्य शिशोर्माता जननी का या भाग्यवतीषु धुर्याग्रगण्या । 'धुरो यड्ढकौ' इति यत् । एतन्मातृत्वादिति भावः । इत्येवं प्रश्नभूतं वचः शशिखण्डमौलिं हरमाहोक्तवती । आहेति विभक्तिप्रतिरूपकमव्ययम् । तथा चोक्तम्—'अव्ययानामनन्तत्वाद्गणनाय न शक्यते । यह्वाकविप्रयोगेषु यदि सिद्धात्परं च तत् ॥' इति ॥ ६ ॥

शि०—अथेति । अथानन्तरं दर्शनानन्तरमित्यर्थ । देवी पार्वती पुरस्तादग्रे दिव्यवपुः लोकोत्तरशरीरोऽयं शिशुः कः । अथवा कस्य धन्यतमस्य भाग्यवतः पुंसोऽयं शिशुः । अस्य शिशो माता जननी का या भाग्यवतीषु स्त्रीष्विति शेषः । धुर्या अग्रगण्या । दिव्याकृतेरस्य शिशोरवलोकनात् पित्रो प्रशस्तभाग्यवत्त्वमवगच्छामीति भावः ॥ ६ ॥

स्वर्गापगासावनलोऽयमेताः षट् कृत्तिकाः किं कलहायमानाः ।
पुत्रो ममायं न तवायमित्थं [1]मिथ्येति [2]वैलक्ष्यमुदाहरन्ति ॥ ७ ॥

सी०—स्वर्गापगेति । किं च । असौ स्वर्गापगा गङ्गा । अयमनलोऽग्निः । एताः षट् कृत्तिकाः कलहायमानाः कलहं कुर्वाणाः सत्यः । 'शब्दवैरकलह—' इत्यादिना करोत्यर्थे क्यङ् । अयं पुत्रो मम मत्सम्बन्धी इति गङ्गावाक्यम् । अयं तव न, किन्तु मम इत्यग्निवाक्यम् । इत्थं मिथ्योभयोर्युवयोर्मध्ये न कस्यापि किंत्वस्माकमिति सत्यम्, इति कृत्तिकावाक्यम् । इति परस्परं वैलक्षण्यं वैलक्ष्यं यथा तथा किं किमर्थमुदाहरन्ति विवदन्ते ॥

शि०—स्वर्गापगेति । असौ स्वर्गापगा मन्दाकिनी अयमनलो वह्निः एता पुरोवर्त्तिन्यः षट्कृत्तिकाः कलहायमानाः विवादंकुर्वन्त्यः सत्यः । अयं पुत्रः सुतो मम मत्सम्बन्धी, इति गङ्गोक्तिः । नायं तवास्ति किन्तु ममेत्यनलोक्तिः । इत्थमनेन प्रकारेण मिथ्याऽलीकं युवयोर्मध्ये नायं कस्यापि, किन्तु ममायमिति कृत्तिकोक्तिः । इत्यन्योऽन्यं वैलक्ष्यं विलक्षणं यथा तथा किं किमर्थमुदाहरन्ति विवदन्ते ॥ ७ ॥

एतेषु कस्येदमपत्यमीशाखिलत्रिलोकीतिलकायमानम् ।
अन्यस्य कस्याप्यथ देवदैत्यगन्धर्वसिद्धोरगराक्षसेषु ॥ ८ ॥

सी०—एतेष्विति । हे ईश, एतेषु स्वर्गापगादिषु मध्ये कस्येदमपत्यं पुत्रः । किंभूतम् । अखिला या त्रिलोकी तत्र तिलकायमानं तिलक इवाचरत् । 'कर्तुः क्यङ् सलोपश्च' इत्याचारार्थे क्यङ् । तत आत्मनेपदित्वा-

---

१. मिथ्यः, २. उदाहरन्ते,

च्छानच्। अथाथवा। सिद्धा देवविशेषाः। उरगाः सर्पाः। राक्षसा निशाचराः। देवदैत्यगन्धर्वसहिता ये सिद्धोरगराक्षसास्तेषु मध्येऽन्यतमस्य कस्यापीति वदेत्यर्थः ॥ ८ ॥

शि०—एतेष्विति। हे ईश, एतेषु स्वर्गापगाप्रभृतिषु मध्ये कस्य पुंसः इदं पुरो दृश्यमानं अखिलत्रिलोकीतिलकायमानम् लोकत्रयसुन्दरमपत्यम् अस्तीति शेषः। अथाऽथवा देवदैत्यगन्धर्वसिद्धोरगराक्षसेषु सुरदानवगन्धर्वसिद्ध (देवविशेष)-पन्नगनिशाचरेषु मध्येऽन्यस्य कस्याप्यस्तीति कथय। शिशोरेतस्याऽतिसुन्दरत्वाद्देवादिष्वेव सम्भवो नेतरत्रेति तेषु कस्यायमित्यभिधेहीति भावः ॥ ८ ॥

श्रुत्वेति [1]वाक्यं हृदयप्रियायाः कौतूहलिन्या विमलस्मितश्रीः।
सान्द्रप्रमोदोदयसौख्यहेतुभूतं वचोऽवोचत चन्द्रचूडः ॥ ९ ॥

सी०—श्रुत्वेतीति। चन्द्रचूडो हरः कौतूहलिन्याः श्रवणे कौतुकवत्या हृदयप्रियायाः पार्वत्या इति पूर्वोक्तं वाक्यं वचः। 'वच परिभाषणे' 'ऋहलोर्ण्यत्' इति ण्यत्। श्रुत्वा विमला स्मितश्रीर्यस्य। किञ्चिद्विहस्येत्यर्थः। सान्द्रः सघनः बहुरिति यावत्। यः प्रमोदो हर्षः। 'प्रमोदामोदसंमदाः' इत्यमरः। तस्योदय उत्पत्तिस्तेन यत्सौख्यं तस्य हेतुभूतम्। तज्जनकमित्यर्थः। वचो वचनमवोचतोक्तवान् ॥ ९ ॥

शि०—श्रुत्वेतीति। चन्द्रश्चूडो मस्तकालङ्कारो यस्य स चन्द्रचूडो हरः कौतूहलिन्या उत्कण्ठितायाः हृदयप्रियायाः मनःप्रसादकारिण्याः पार्वत्या इति प्रागुक्तं वाक्यं वचनं श्रुत्वा आकर्ण्य विमलस्मितश्रीः प्रशस्तहास्यशोभः सन् ईषद्धास्यं विधायेत्यर्थः। सान्द्रप्रमोदोदयसौख्यभूतं प्रचुरानन्दोत्पत्तिसौख्यकारणं वचो वचनमवोचत जगाद ॥ ९ ॥

[2]जगत्त्रयीनन्दन एष वीरः [3]प्रवीरमातुस्तव नन्दनोऽस्ति।
कल्याणि कल्याणकरः सुराणां [4]त्वत्तोऽपरस्याः[5] कथमेष सर्गः ॥१०॥

सी०—जगत्त्रयीति। हे प्रिये, जगत्त्रय्या नन्दन आनन्दकारकः। नन्द्यादित्वात् 'नन्दिग्रहि—' इति ल्युः। वीरः पराक्रम्येष पुरोवर्ती शिशुः प्रवीरमातुः प्रकृष्टवीरजनन्यास्तव नन्दनः पुत्रोऽस्ति। ममैवायं नन्दन इत्यत्र किं मानमित्याशङ्क्याह—हे कल्याणि, सुराणामिन्द्रादीनां कल्याणकरः, शर्मकार्येषु पुरोवर्ती सर्गः सृष्टिः। पुत्र इति यावत्। त्वत्तोऽपरस्यास्त्वदन्यस्याः स्त्रियाः कथं केन प्रकारेण स्यात्। तारकविनाशजनितकल्याणकरत्वे त्वज्जनितस्यैव शक्तिः। अतस्तवैवायं पुत्र इति भावः ॥१०॥

---

१. वाचम्, २. जगत्त्रयानन्दन, ३. मातः ४. अयम्, ५. परस्याः।

शि०—जगत्त्रयीति। हे शिवे, एष पुरो दृश्यमानः वीरः पराक्रमवान् जगत्त्रयीनन्दनः त्रिलोकीसुखजनकः शिशुरिति शेषः, प्रवीरमातुः वीरजनन्यास्तव नन्दनः पुत्रोऽस्ति। अस्य मत्पुत्रत्वे किम्प्रमाणमित्याह—हे कल्याणि मङ्गलस्वरूपे! सुराणां शक्रप्रभृतीनां कल्याणकरः शुभसम्पादकः एष सर्गः शिशुः त्वत्तोऽपरस्या अन्यस्याः स्त्रिय इति शेषः। कथं कुतः सम्भवति। क्रियाऽध्यवहारः। तारकरिपुस्तव पुत्र एव प्रसिद्धो देवकार्यसाधकश्चेति भावः॥ १० ॥

**देवि त्वमेवास्य निदानमास्से[1] [2]सर्गे जगन्मङ्गलगानहेतोः।**
**सत्यं त्वमेवेति विचारयस्व रत्नाकरे युज्यत एव रत्नम्॥ ११ ॥**

सी०—देवीति। हे देवि प्रिये, जगतां मङ्गलानि मङ्गलकर्माणि गानानि। गीतानि। मङ्गलप्रबन्धरूपाणीति यावत्। तेषां हेतोः कारणस्यास्य शिशोः सर्गे सृष्टौ। उत्पत्ताविति यावत्। त्वमेव निदानमादिकारणमास्त उपविशसि। असीत्यर्थः। 'निदानं त्वादिकारणम्' इत्यमरः। 'आस उपवेशने', लटो मध्यमपुरुषैकवचनम्। नन्वहमेव कारणमित्यत्र किं मानमित्यत्र दृष्टान्तेन दर्शयति—त्वमेवेति सत्यम्। विचारयस्व। किमिति तत्। रत्नं रत्नाकरे समुद्र एव। अथ च रत्नखनावेव युज्यते युक्तं भवति। 'खनिः स्त्रियामाकरः स्यात्' इति, 'रत्नाकरो जलनिधिः' इति चामरः॥

शि०—देवीति। हे देवि, पार्वति, जगन्मङ्गलगानहेतोः जगत्त्रयशुभगतिकारणस्य अस्य दृश्यमानस्य शिशोः सर्गे जन्मनि त्वमेव निदानमादिकारणम् आस्से भवसि। रत्नाकरे समुद्रे एव रत्नं मणिः युज्यते उत्पद्यते इति वचनमेतत् त्वमेव सत्यं यथार्थतो विचारयस्व सञ्चिन्तय॥ ११ ॥

अथ युग्मेनाह—

**[3]अतः शृणुष्वावहितेन वृत्तं बीजं यदग्नौ निहितं मया तत्।**
**संक्रान्तमन्त[4]स्त्रिदशापगायां ततोऽवगाहे[5] सति कृत्तिकासु॥ १२ ॥**
**गर्भत्वमाप्तं [6]तदमोघमेतत्ताभिः शरस्तम्बमधि न्यधायि।**
**बभूव तत्रायमभूतपूर्वो महोत्सवोऽशेषचराचरस्य॥ १३ ॥**

सी०—अत इति। गर्भत्वमिति। हे प्रिये, अतः कारणात्। अवहितेनावधानेन। सावधानतयेति यावत्। भावे निष्ठा। वृत्तं वृत्तान्तं शृणुष्व शृणु। तथाहि। मया यद्बीजं वीर्यमग्नौ निहितं स्थापितं तद्बीजं त्रिदशापगायां गङ्गायामन्तर्मध्ये संक्रान्तं लग्नम्। अवगाहे स्नाने सति ततो गङ्गातः कृत्तिकासु च संक्रान्तं सद्गर्भत्वमाप्तं गर्भीभूतम्। अथ च ताभिः

१. आर्ये; आद्ये, २. स्वर्गे, ३. अत्र, ४. त्रिदिवापगायाम्, ५. विगाहे, ६. यत्।

कृत्तिकाभिरमोघं तदेतच्छरस्तम्बमधि अधिशरस्तम्बम्। अधेर्व्यंत्ययः प्रामादिक एव। न्यधायि निहितम्। धाञः कर्मणि लुङ्। तत्र शरस्तम्बेऽशेषचराचरस्य समस्तस्थावरजङ्गमस्य जगतोऽभूतपूर्वः पूर्वं भूतो भूतपूर्वस्ताहृङ् न भवतीत्यभूतपूर्वो महोत्सवो महानुत्सवोऽयं शिशुर्बभूव। जन्यजनकयोरभेदविवक्षयाऽऽयुर्घृतमितिवन्महोत्सवोऽयमिति प्रयोगः॥ १२-१३॥

युग्मम्—

शि०—अत इति। गर्भत्वमिति। हे पार्वति! अतोऽस्माद्धेतोः अवहितेन सावधानेन वृत्तं वृत्तान्तं शृणुष्व आकर्णय। शृणोतेः परस्मैपदित्वादात्मनेपदं कवेर्निरङ्कुशत्वान्महाकविप्रयोगाच्च समाधेयम्। तदेव वृत्तमुद्घाटयति—मया यद्बीजं वीर्यं वह्नौ निहितं संस्थापितं तद्बीजं त्रिदशापगायां मन्दाकिन्यामन्तर्मध्ये संक्रान्तं सम्बद्धम्। अवगाहे स्नाने कृते सति ततस्त्रिदशापगातः कृत्तिकासु तदाख्यषट्स्त्रीषु च संक्रान्तं सद् गर्भत्वमासम्। अथ च ताभिः कृत्तिकाभिः तदेतत् बीजं शरस्तम्बमधि शरकाण्डाक्रान्तप्रदेशे न्यधायि अस्थापि। तत्र शरस्तम्बे अशेषचराचरस्य निखिलस्थावरजङ्गमात्मकजगतः अभूतपूर्वः प्रागसञ्जातः महोत्सवः प्रचुरामोदजनकोऽयं पुत्रो बभूव संजज्ञे॥ १२-१३॥

अशेषविश्वप्रियदर्शनेन धुर्या त्वमेतेन सुपुत्रिणीनाम्।
अलं विलम्ब्याचलराजपुत्रि [1]स्वपुत्रमुत्सङ्गतले[2] निधेहि[3]॥ १४॥

सी०—अशेषेति। हे प्रिये, अशेषविश्वस्य समस्तजगतः प्रियं प्रीतिकारकम्। 'इगुपध—' इत्यादिना कः। तथाभूतं दर्शनं यस्य तथोक्तेनैतेन। अत्रान्वादेश एतच्छब्दस्य नित्यमेनादेशनियमात्कथमेनाभावः साधुः? सत्यम्। अत्रान्वादेश एव नास्ति। तत्र किञ्चिद्विधानोद्युक्तस्याश्रयीभूतस्य पुनरुपादानाश्रयीभूतस्य च भेदाभाववत्त्वेन विवक्षितत्वात्। प्रकृते तु तदन्यथात्वादन्वादेशाभावेनैनादेशाभावसिद्धिरित्यलम्। त्वं सुपुत्रिणीनां शोभनपुत्रवतीनां धुर्याग्रगण्या। श्रेष्ठतमेति यावत्। असीति शेषः। हे अचलराजपुत्रि, विलम्ब्य विलम्बं कृत्वाऽलम्। विलम्बो न कर्तव्य इत्यर्थः। किन्तु स्वपुत्रमात्मतनूजमुत्सङ्गतलेऽङ्कतले निधेहि स्थापय॥ १४॥

शि०—अशेषेति। हे प्रिये, निखिलजगत्सुखावलोकनेन एतेन शिशुना सुपुत्रिणीनां मध्ये त्वं धुर्या श्रेष्ठा असीति शेषः। हे अचलराजपुत्रि, पार्वति! विलम्ब्य विलम्बं कृत्वाऽलं व्यर्थं, विलम्बं मा विधेहीत्यर्थः, किन्तु स्वपुत्रं निजात्मजमुत्सङ्गतले क्रोडमध्ये निधेहि उपवेशय॥ १४॥

---

१. सुपूर्णम्, २. तलम्, ३. विदेहि,

अथ युग्मेनाह—

[1]अथेति वादिन्यमृतांशुमौलौ शैलेन्द्रपुत्री रभसेन सद्यः ।
सान्द्रप्रमोदेन सुपीनगात्री धात्री समस्तस्य चराचरस्य ॥ १५ ॥
किरीटबद्धाञ्जलिभिर्नभःस्थैर्नमस्कृता सत्वर[2]नाकिलोकैः ।
विमानतोऽवातरदात्मजं तं ग्रहीतुमुत्कण्ठितमानसाभूत् ॥ १६ ॥

सी०—अथेति । किरीटेति । अथामृतांशुश्चन्द्रो मौली यस्य तथाभूते हरे इति पूर्वोक्तप्रकारेण । वादिनि भाषमाणे सति । समस्तस्य चराचरस्य जगतो धात्री परिपोषिका । 'ऋन्नेभ्यः—' इति ङीप् । तथा सान्द्रः सघनो यः प्रमोद आनन्दस्तेन सुतरां पीनं प्रफुल्लत्वात्पुष्टं गात्रं यस्यास्तथाभूता शैलेन्द्रस्य हिमालयस्य पुत्री कन्या पार्वती नभःस्थैः । तत्काल आकाशमाश्रयद्भिरित्यर्थः । तथा सत्वरैश्च नाकिलोकैरिन्द्रादिलोकैः किरीटेषु बद्धा अञ्जलयो यैस्तथाभूतैः सद्भिर्नमस्कृता वन्दिता सती सद्यो रभसेन वेगेन विमानतो विमानात् । पञ्चम्यास्तसिल् । अवातरदुत्ततार । अथ च तमात्मजं कुमारं ग्रहीतुमुत्कण्ठितमानसा चाभूत् । अहमेनं गृह्णामीति मनस्यैच्छदित्यर्थः ॥ १५-१६ ॥

शि०—अथेतीति । किरीटेति । अथानन्तरम् अमृतांशुमौलौ चन्द्रशेखरे शिवे इत्युक्तप्रकारेण वादिनि कथयति सति समस्तस्य निखिलस्य चराचरस्य जगतो धात्री पालनकर्त्री सान्द्रप्रमोदेन प्रचुरानन्देन सुपीनगात्री स्थूलशरीरा शैलेन्द्रपुत्री हिमालयसुता नभःस्थैः आकाशवर्त्तिभिः किरीटबद्धाञ्जलिभिः मुकुटार्पितकरैः सत्वरनाकिलोकैः सजवैरिन्द्रप्रभृतिभिर्देवैः नमस्कृता प्रणता सती सद्यस्तत्क्षणं रभसेन वेगेन विमानतो व्योमयानात् अवातरत् उदतरत् । अथ च तमात्मजं पुत्रं ग्रहीतुम् उत्कण्ठितमानसाऽभिलाषवती अभूत् जाता ॥ १५-१६ ॥

स्वर्गापगापावककृत्तिकादीन् कृताञ्जलीनानमतोऽपि [3] भूयः ।
हित्वोत्सुका[4] तं सुतमाससाद पुत्रोत्सवे माद्यति का[5] न हर्षात् ॥ १७ ॥

सी०—स्वर्गेति । पुत्रोत्सव उत्सुकोत्कण्ठिता पार्वती । स्वर्गापगा गंगा तया सहिता याः पावककृत्तिकास्ता आदयो येषां तान् । अत्रादिशब्देनेन्द्रादयो ग्राह्याः । स्वर्गापगा च पावकश्च कृत्तिकाश्चेति द्वन्द्वसमासेऽल्पाच्तरत्वात्पावकशब्दस्य पूर्वनिपातः प्रसज्येतेति पूर्वरीतिरादृता । तान् कृताञ्जलीनत एव भूयोऽतिशयमानमतो नमस्कुर्वतोऽपि हित्वा परित्यज्य तं सुतमाससाद प्राप । तथाहि । हर्षादानन्दवशात्का न माद्यत्युन्मत्ता न भवति । पुत्रोत्सवेन सर्वासामुन्मत्तत्वं भवतीति भावः ॥ १७ ॥

---

१. तथा, २. नाक, ३. भूम्रा; मूर्ध्ना, ४. मुकान्तम्; ५. कः

शि०—स्वर्गापगेति। पुत्रोत्सवे सुतावलोकनसुखप्राप्तावित्यर्थः। उत्सुका स्पृहावती पार्वती स्वर्गापगापावककृत्तिकादीन् गङ्गाऽनलकृत्तिकाप्रभृतीन् इन्द्रादीनित्यर्थः। अल्पाच्तरत्वात्पावकस्य पूर्वनिपातभिया नात्र द्वन्द्वादरोऽपितु मध्यमपदलोपिसमास एव, स च पावककृत्तिकाशब्दयोर्द्वन्द्वोत्तरं स्वर्गापगया सहिताः पावककृत्तिका इति रीत्या बोद्धव्यः। कृताञ्जलीन् बद्धाञ्जलीन्, अत एव भूय आनमतो नमस्कारं कुर्वतः, अपि शब्दोऽध्याहर्तव्यः। हित्वा अनादृत्य तं पुत्रमाससाद प्राप्तवती। तथा हि हर्षात्प्रमोदवशात्का स्त्रीति शेषः। न माद्यति न हृष्टा भवति, किन्तु सर्वापीत्यर्थः। पुत्रावलोकनात्सर्वा अपि स्त्रियो विपुलानन्दवन्त्यो भवन्तीति भावः। तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थसमर्थनादर्थान्तरन्यासोऽलङ्कारः॥१७॥

**प्रमोदबाष्पाकुललोचना सा न तं ददर्श क्षणमग्रतोऽपि।**
**परिस्पृशन्ती [1]करकुड्मलेन सुखान्तरं प्राप किमप्यपूर्वम्॥ १८॥**

सी०—प्रमोदेति। सा पार्वती। अग्रतः स्थितमपि तं पुत्रं क्षणं न ददर्श। यतः प्रमोदबाष्पैरानन्दाश्रुभिराकुले व्याप्तत्वाद्दर्शनाशक्ते लोचने यस्याः। आनन्दाश्रुभिरन्धीभूतेत्यर्थः। अथ च कर एव कुड्मलं कलिका तेन परिस्पृशन्ती सती किमपि लोकोत्तरमपूर्वम्। अभूतपूर्वमित्यर्थः। शाकपार्थिवादीनामुत्तरपदलोपः। सुखान्तरम्। अन्यत्सुखमित्यर्थः। अन्तरशब्दोऽत्रोपमानाभावद्योतकः। प्राप प्राप्तवती॥ १८॥

शि०—प्रमोदेति। प्रमोदबाष्पाकुललोचना हर्षाश्रुव्याप्तनयना सा पार्वती अग्रतोऽग्रे विद्यमानमपि तं शिशुं क्षणं किञ्चित्कालं न ददर्श नावलोकितवती। अथ च करकुड्मलेन हस्तमुकुलेन परिस्पृशन्ती सती किमप्युत्कृष्टमपूर्वं सुखान्तरं शर्मविशेषं प्राप। अग्रस्थितस्यापि शिशोरदर्शने प्रमोदाश्रुव्याप्तलोचनत्वरूपहेतोः पदार्थत्वात् काव्यलिङ्गम्। तच्चैकस्या अपि पार्वतीरूपकर्त्र्या दर्शनाभावसुखप्राप्तिक्रियाद्वयेऽन्वयाद्दीपकेन संसृष्टम्॥ १८॥

**[2]सुविस्मयानन्दविकस्वरायाः शिशुर्गलद्बाष्पतरङ्गितायाः।**
**विवृद्धवात्सल्यरसोत्तरायाः देव्या [3]दृशोर्गोचरतां जगाम॥ १९॥**

सी०—सुविस्मयेति। शिशुः कर्ता। सुतरां यौ विस्मयानन्दावाश्चर्यहर्षौ ताभ्यां विकस्वरायाः प्रफुल्लीभूतायाः तथा गलद्बाष्पैस्तरंगितायाः संजाततरंगायाः। तारकादित्वादितच्। वपुषि गलद्भिर्बाष्पजलैरुद्भूतप्रवाहकल्लोलकलितायाः इत्यर्थः। तथा विवृद्धं यद्वात्सल्यं दयावत्त्वम्। पुत्रत्वादिति भावः। तत्र यो रसः प्रीतिः स उत्तरः प्रधानं यस्यास्तथाभूताया देव्याः पार्वत्याः संबन्धिनोर्दृशोर्विलोचनयोर्गोचरतां विषयतां

१. करकुड्मलाभ्याम्, २. सविस्मय, ३. दृशः,

जगाम प्राप । बाष्पनिर्मुक्ताभ्यां लोचनाभ्यां देवी तमपश्यदित्यर्थः ॥ १९ ॥

शि०—सुविस्मयेति । शिशुर्बालः सुविस्मयानन्दविकस्वराया अत्याश्चर्यहर्षप्रफुल्लिताया गलद्बाष्पतरङ्गिताया: पतिताश्रुजाततरङ्गाया विवृद्धवात्सल्यरसोत्तरायाः समृद्धदयालुत्वप्रीतिप्रधानाया देव्याः पार्वत्याः दृशोर्नयनयोर्गोचरतां विषयतां जगाम प्राप । पार्वत्या शिशुर्दृष्ट इति भावः ॥ १९ ॥

तमीक्षमाणा क्षणमीक्षणानां सहस्रमाप्तुं विनिमेषमैच्छत् ।
सा [1]नन्दनालोकनमङ्गलेषु क्षणं क्षणं [2]तृप्यति कस्य चेतः ? ॥ २० ॥

सी०—तमिति । तं बालं क्षणमीक्षमाणावलोकमाना सा देवी विनिमेषं निर्गतनिमेषमीक्षणानां नेत्राणां सहस्रमाप्तुं मम सहस्रं नेत्राणि भवन्त्वित्यैच्छदियेष । द्वाभ्यां विलोचनाभ्यामाकण्ठदर्शनजननाभावादिति भावः । तथाहि । नन्दनस्यालोकनान्येव मङ्गलानि तेषु विषये क्षणं क्षणम् प्रतिक्षणमित्यर्थः । 'नित्यवीप्सयोः' इति वीप्सायां द्विर्भावः । कस्य चेतस्तृप्यति तृप्तिं प्राप्नोति ? अपि तु न कस्यापीत्यर्थः ॥ २० ॥

शि०—तमिति । तं पुत्रं क्षणं किञ्चित्कालमीक्षमाणा पश्यन्ती सा पार्वती विनिमेषं अमुकुलितमीक्षणानामक्ष्णाम् सहस्रं सहस्रनेत्रमित्यर्थः । आप्तुं प्राप्तुमैच्छत् अभिलष्यतिस्म । तथा हि—नन्दनालोकनमङ्गलेषु पुत्रेक्षणशुभेषु विषये क्षणं क्षणं प्रतिक्षणं कस्य चेतो हृदय तृप्यति सन्तुष्यति न कस्यापीत्यर्थं । लोचनद्वयतः सम्यगवलोकनाऽसम्भवान्नेत्रसहस्रमिच्छतिस्मेति भावः । उत्तरार्द्धगतसामान्यार्थतः पूर्वार्द्धगतविशेषार्थसमर्थनादर्थान्तरन्यासोऽलङ्कारः ॥ २० ॥

विनम्रदेवासुरपृष्ठगाभ्यामादाय तं पाणिसरोरुहाभ्याम् ।
[3]नवोदयं पार्वणचन्द्रचारुं गौरी [4]स्वमुत्सङ्गतलं निनाय ॥ २१ ॥

सी०—विनम्रेति । गौरी पार्वती । 'षिद्गौरादिभ्यश्च' इति ङीप् । नवोदयं नूतनोद्भवम् । तत्कालजातमित्यर्थः । अत एव पार्वणः पर्वणि भवः । 'तत्र भवः' इत्यण् । स चासौ चन्द्रश्च तद्वच्चारुं मनोहरम् । चन्द्रोऽपि नवोदय इति ज्ञेयम् । तथाभूतं तं तनूजं पुत्रम् कर्मभूतमित्यर्थः । आदाननयने उभे अपि प्रत्यस्तकर्मत्वं विवेचनीयम् । विनम्राः पादप्रणता ये देवा सुरास्तेषां पृष्ठेषु गच्छतः संचरतस्ताभ्याम् । अनेन तेभ्योऽभयदानमुद्रा कृतेति व्यज्यते । पाणिसरोरुहाभ्यां करकमलाभ्यामादाय गृहीत्वा स्वमात्मीयमुत्सङ्गतलं निनाय प्रापयामास । हस्ताभ्यामुत्थाप्य स्वाङ्क आरोपितवतीत्यर्थः ॥ २१ ॥

---

१. न नन्दनालोकनमङ्गलेषु, सुनन्दनालोकनकौतुकेन, २. हृष्यते,
३. नवोदयात्, महोदयात्, ४. तम्,

शि०—विनम्रेति। गौरी पार्वती, नवोदयं तात्कालिकमित्यर्थः। अत एव पार्वणचन्द्रचारुं पूर्णेन्दुसुन्दरं तं पुत्रं विनम्रदेवासुरपृष्ठगाभ्यां प्रणतसुरासुरपृष्ठस्पर्शिभ्यां पाणिसरोरुहाभ्यां करपद्माभ्यामादाय गृहीत्वा स्वे निजमुत्सङ्गतलं क्रोडमध्यंनिनाय प्रापयामास। पुत्रं करकमलतः समादायाङ्कमारोपयामासेत्यर्थः। २१।

स्वमङ्कमारोप्य सुधानिधानमिवात्मनो नन्दनमिन्दुवक्त्रा।
[1]तमेकमेषां [2]जगदेकवीरं बभूव पूज्या धुरि पुत्रिणीनाम् ॥ २२ ॥

सी०—स्वमिति। इन्दुवक्त्रा चन्द्रमुख्येषा पार्वती। एकमद्वितीयं जगदेकवीरं जगत्स्वेकवीरं तमात्मनो नन्दनं पुत्रं सुधानिधानममृतपात्रमिव स्वमात्मीयमङ्कमारोप्य संस्थाप्य पुत्रिणीनां पुत्रवतीनां धुर्यग्रभागे पूज्या पूजयितुं योग्या बभूव। एतत्पुत्रस्य सर्वासामपि पुत्रेभ्योऽधिकत्वादग्रपूज्यत्वमुचितमेवेति भावः॥ २२॥

शि०—स्वमिति। इन्दुवक्त्रा चन्द्रवदना एषा पार्वती एकमसहायं जगदेकवीरं त्रिलोकीवलिनं तमात्मानः स्वस्या नन्दनं सुधानिधानमिव पीयूषपात्रमिव स्वमङ्कं क्रोडमारोप्य स्थापयित्वा पुत्रिणीनां पुत्रवतीनां धुरि अग्रे पूज्याऽर्च्या बभूव। अत्रोपमाद्वयम्॥ २२॥

निसर्गवात्सल्यरसौघसिक्ता सान्द्रप्रमोदामृतपूरपूर्णा।
तमेकपुत्रं जगदेकमाता[3]भ्युत्सङ्गिनं प्रस्नविणी बभूव॥ २३॥

सी०—निसर्गेति। निसर्गेण स्वभावेन। न तूपाधिनेत्यर्थः। यो वात्सल्यरसो दयावत्त्वरसस्तस्यौघेन सिक्ता प्लाविता। तत्रातिवात्सल्यवतीत्यर्थः। तथा सान्द्रप्रमोदोऽतिशयहर्षः। स एवामृतं पीयूषं तस्य पूरेण प्रवाहेण पूर्णा भृता जगतामेकाद्वितीया माता परिपोषिका देव्युत्सङ्गिनमधिश्रितोत्सङ्गं तमेकपुत्रमभिसंमुखं प्रस्नविणी दुग्धस्राववती बभूव। पुत्रं दृष्ट्वा मातुः स्तनाभ्यां पयः पततीति युक्तमिति भावः॥ २३॥

शि०—निसर्गेति। निसर्गवात्सल्यरसौघसिक्ता स्वभावकारुण्यवत्त्वप्रीतिसमूहप्लाविता सान्द्रप्रमोदामृतपूरपूर्णा विपुलानन्दपीयूषप्रवाहयुक्ता जगदेकमाता लोकैकजननी पार्वती उत्सङ्गिनं क्रोडस्थितं तमेकपुत्रमभि सम्मुखं प्रस्नविणी दुग्धस्राववती बभूव जाता॥ २३॥

अशेषलोकत्रयमातुरस्याः षाण्मातुरः स्तन्यसुधामथासीत्।
सुरस्रवन्त्याः किल कृत्तिकाभिर्मुहुर्मुहुः सस्पृहमोक्ष्यमाणः॥ २४॥

सी०—अशेषेति। षाण्मातुरः षण्णां मातृणामपत्यं षाण्मातुरः कार्त्तिकेयः। अत्र षण्मातृशब्दात् 'मातुरुत्संख्ये'त्यादिनाण् मातृशब्दस्यो-

---

१. एकमेवम्, एकदेवम्, २. एकदेवी ३. सोत्सङ्गितम्, अभ्युत्सङ्गितम्,

दादेश्च। 'षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः'। इत्यमरः। सुरस्रवन्त्या देवनद्याः। गङ्गाया इत्यर्थः। 'स्रवन्ती निम्नगापगा' इत्यमरः। तथा कृत्तिकाभिश्च सस्पृहं स्वेच्छं यथा तथा। 'इच्छा काङ्क्षा स्पृहेहा तृट्' इत्यमरः। अस्मदीयपयोधरस्रवदमृतपाताऽयमिदानीमेतदीयस्तनपयःपिबन्पुनरप्यस्मदीयपयोधरपयोऽपि स्मरेदेवंभूतेच्छासहितमित्यर्थः। मुहुर्मुहुरनुवेलमीक्ष्यमाणोऽवलोक्यमानः सन्नशेषं सकलं यल्लोकत्रयं तस्य मातुः पोषिण्या अस्या देव्याः स्तन्या स्तने भवा। 'शरीरावयवाद्यत्' इति यत्। सा चासौ सुधा च तामधासीत्पपौ। 'धेट् पाने' कर्तरि लुङ्। 'विभाषा घ्राधेडि'-ति सिज्लुग्न ॥ २४ ॥

शि०—अशेषेति। षाण्मातुरः षडाननः कार्त्तिकेयः सुरस्रवन्त्या मन्दाकिन्या तथा कृत्तिकाभिः षट् स्त्रीभिश्च मुहुर्मुहुः सततं सस्पृहं साभिलाषं यथा तथा ईक्ष्यमाणः दृश्यमानः सन् अशेषलोकत्रयमातुः सकलत्रिलोकीजनन्या पार्वत्याः स्तन्यसुधां पयोधरोत्पन्नपीयूषम् अधासीत् अपिबत् ॥ २४ ॥

[1]सुखाश्रुपूर्णेन मृगाङ्कमौलेः कलत्रमेकेन मुखाम्बुजेन।
तस्यैकनालो[2]द्गतपञ्चपद्मलक्ष्मीं क्रमात्षड्वदनीं [3]चुचुम्ब ॥ २५ ॥

सी०—सुखेति। मृगाङ्कमौलेर्हरस्य कलत्रं भार्या। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। एकनाल एककाण्ड उद्गतान्युदितानि यानि पञ्चपद्मानि तेषां लक्ष्मीरिव शोभेव लक्ष्मीः शोभा यस्यास्तथाभूतां तस्य कुमारस्य षण्णां वदनानां समाहारं षड्वदनीम्। 'द्विगोः' इति ङीप्। इह संख्यासादृश्यमन्तरा न विरोधः। सुखाश्रुपूर्णेनानन्दाश्रुजलपरिपूरितेनैकेन मुखाम्बुजेन वदनकमलेन क्रमाद्यथाक्रमं चुचुम्ब स्पृष्टवती। अतिशयप्रेमवशादिति भावः ॥ २५ ॥

शि०—सुखेति। मृगाङ्कश्चन्द्रो मौलौ शिरसि यस्य स तथोक्तस्तस्य मृगाङ्कमौले शिवस्य कलत्रं नारी पार्वती एकेनाऽद्वितीयेन सुखाश्रुपूर्णेन हर्षाक्षिपयोव्याप्तेन मुखाम्बुजेन वदनकमलेन एकनालोद्गतपञ्चपद्मलक्ष्मीम् एककाण्डोत्पन्नकमलपञ्चकशोभां तस्य पुत्रस्य षड्वदनीं वदनषट्कं क्रमात्क्रमशः चुचुम्ब चुम्बितवती पुत्रवात्सल्यादेकेनैव मुखेन पुत्रस्य षण्मुखं चुम्बितवतीत्यर्थः ॥ २५ ॥

हैमी[4] फलं हेमगिरेर्लतेव विकस्वरं नाकनदीव पद्मम्।
पूर्वेव दिङ्नूतनमिन्दुमाभात्तं पार्वती नन्दनमादधाना ॥ २६ ॥

सी०—हैमीति। तं नन्दनं तनयमादधाना सा पार्वती। फलं दधानां

---

१. सुखास्रपूर्णेन, २. उद्गम, ३. चुचुम्बे, ४. हैमम्,

हेमगिरेः सुमेरोः संबन्धिनी। तदुत्पन्नेत्यर्थः। हैमी हेमविकारा। विकारार्थकेऽणि 'टिड्ढे–'ति ङीप्। लतेव। विकस्वरं प्रफुल्लं पद्मं कमलं दधाना नाकनदीव गङ्गेव। नूतनं नवोदयमिन्दुं दधाना पूर्वा पूर्वसंज्ञिका दिगिव। आभाच्छुशुभे। अत्र मालोपमालंकारः॥ २६॥

शि०—हैमीति। तं नन्दनं पुत्रमादधाना धारयन्ती पार्वती फलं दधाना हेमगिरेः सुमेरोः हैमी स्वर्णविकारा लता वल्लीव, विकस्वरं विकसितं पद्मं कमलं दधाना नाकनदी मन्दाकिनीव नूतनंनवोदयमिन्दुं चन्द्रं दधाना पूर्वा दिगिव आभात् शुशुभे। अत्रोपमात्रयसत्वान्मालोपमाऽलङ्कारः॥ २६॥

प्रीतात्मना [1]सा प्रयतेन दत्तहस्तावलम्बा शशिशेखरेण।
कुमारमुत्सङ्गतले दधाना विमानमभ्रंलिहमारुरोह॥ २७॥

सी०—प्रीतेति। कुमारं पुत्रमुत्सङ्गतले दधाना बिभ्रती सा देवी प्रीतात्मना प्रसन्नीभूतमनसा प्रयतेन सावधानेन। न तु संभ्रमितेन। 'नयवर्त्मगाः प्रभवतां हि धियः' इति न्यायादिति भावः। तथाभूतेन शशिशेखरेण शिवेन दत्तहस्तावलम्बा सती। अत्यतिप्रेमभरादिति भावः। अभ्रंलिहमाकाशस्पृशं। 'वहाभ्रे लिहः' इति खश्। विमानमारुरोहारूढा॥

शि०—प्रीतेति। कुमारं कार्त्तिकेयमुत्सङ्गतले क्रोडमध्ये दधाना धारयन्ती सा पार्वती प्रीतात्मना प्रसन्नमनसा प्रयतेन सावधानेन शशिशेखरेण चन्द्रमौलिना शिवेन दत्तहस्तावलम्बाऽर्पितकराश्रया सती अभ्रंलिहं व्योमस्पृशं विमानं व्योमयानमारुरोह आरूढवती॥ २७॥

महेश्वरोऽपि प्रमदप्ररूढरोमोद्गमो भूधरनन्दनायाः।
[2]अङ्कादुपादत्त [3]तदङ्कतः [4]सा तस्यास्तु [5]सोऽप्यात्मजवत्सलत्वात्॥ २८॥

सी०—महेश्वर इति। प्रमदेनानन्देन प्ररूढा रोमोद्गमा यस्य तथाभूतो महेश्वरोऽप्यात्मजे पुत्रे वत्सलत्वाद् दयावत्त्वाद्धेतोर्भूधरनन्दनायाः पार्वत्या अङ्कादुत्सङ्गतस्तं पुत्रमुपादत्ताग्रहीत्। अथ च तदङ्कतो हरोत्सङ्गात्सा देव्युपादत्त। अथ च सोऽपि हरोऽपि तस्या देव्या अङ्कादुपादत्त। इत्यनुवेलमन्योन्यग्रहणं चक्रतुरित्यर्थः॥ २८॥

शि०—महेश्वर इति। प्रमदप्ररूढरोमोद्गमः आनन्दपुलकितो महेश्वरः शिवोऽपि आत्मजवत्सलत्वात् पुत्रस्नेहवशात् हेतोः भूधरनन्दनायाः पार्वत्या अङ्कात्क्रोडात् तं कुमारमुपादत्त गृहीतवान्। तदङ्कतो हरक्रोडात् सा पार्वती उपादत्त। तु पुनः

---

१. सुप्रयतेन, २. अकाण्डमादृत्त, ३. तमङ्कतः,
४. सः, ५. सौम्यात्मज,

तस्या देव्या अङ्कात् सोऽपि महेश्वरोऽपि उपादत्त गृहीतवान् । पुत्रप्रेमबाहुल्या-च्छिवपार्वत्योरन्योऽन्यपुत्रग्रहणमिति भावः ॥ २८ ॥

[1]दधानया नेत्रसुधैकसत्रं[2] पुत्रं पवित्रं सुतया [3]तयाद्रेः ।
संश्लिष्यमाणः शशिखण्डधारी[4] विमानवेगेन [5]गृहाञ्जगाम ॥ २९ ॥

सं०--दधानेति । शशिखण्डधारी महेश्वरः । सुधाया अमृतस्यैकं केवलं सत्रं सदादानम् 'सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः । नेत्रयोः संबन्धि सुधैकसत्रं येन । नेत्रयोरमृतवत्सुखदातारमित्यर्थः । तथा पवित्रं पूतम् । 'पुवः संज्ञायाम्' इति त्रप्रत्ययः । तथाभूतं पुत्रं सुतं दधानया बिभ्रत्या तयाद्रेर्हिमालयस्य सुतया कन्यया पार्वत्या कर्त्र्या । संश्लिष्यमाणः स्नेहवशादालिङ्ग्यमानः सन्विमानस्य वेगेन गृहाञ्जगाम प्रययौ । 'गृहाः पुंसि च भूम्न्येव इत्यमरः ॥ २९ ॥

शि०—दधानेति । शशिनः खण्डं धर्तुं शीलमस्येति शशिखण्डधारी चन्द्रशेखर-नेत्रसुधैकसत्रं नयनामृतैकदानं तथा पवित्रं पूतं पुत्रं सुतं दधानया धारयन्त्या तया अद्रे हिमवतः सुतया कन्यया पार्वत्या संश्लिष्यमाणः समालिङ्ग्यमानः सन् विमान-वेगेन व्योमयानजवेन गृहान् सदनानि जगाम गतवान् ॥ २९ ॥

[6]अधिष्ठितः स्फाटिकशैलशृङ्गे तुङ्गे निजं[7] धाम[8] निकामरम्यम् ।
महोत्सवाय [9]प्रमथप्रमुख्यान् [10]पृथून्गणाञ्शंभुरथादिदेश ॥ ३० ॥

सं०--अधिष्ठित इति । अथानन्तरं शंभुर्महेश्वरस्तुङ्गे उन्नते स्फटिकमयः स्फाटिको यः शैलः कैलासस्तस्य शृङ्गे शिखरे । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । निकामरम्यमतिमनोहरं निजं स्वीयम् । 'स्वके नित्ये निजं त्रिषु' इत्यमरः । अधिष्ठितः सन् । अधिशीङ्–' इत्यादिनाधारस्य कर्मसंज्ञा । महोत्सवाय महोत्सवं कर्तुम् 'तुमर्थाच्च' इति चतुर्थी । पृथून्महतः प्रमथप्रमुख्यान्प्रमथादीन्गणानादिदेशाज्ञापया-मास ॥ ३० ॥

शि०—अधिष्ठित इति । अथानन्तरं तुङ्गे समुन्नते स्फाटिकशैलशृङ्गे कैलास-शिखरे विद्यमानमिति शेषः निकामरम्यमतिमनोहरं निजं स्वकीयं धाम स्थानम् अधिष्ठितः समुपविष्टः सन् महोत्सवं विधातुमित्यर्थः पृथून् महतः प्रमथप्रमुख्यान् प्रमथप्रभृतीन् गणान् प्रमथगणानित्यर्थः आदिदेश आदिष्टवानित्यर्थः ॥ ३० ॥

---

१. दत्त्वानया, २. पात्रम्, ३. तथा, ४. मौलिः; वाही, ५. गृहम्
६. अधिष्ठित, ७. निजे, ८ धामनि कामरम्ये; धाम्नि निकामरम्ये
९. प्रमथान्नु नाथः १०. महिम्ना स्वमुदा; प्रथिम्ना पृथक्,

[1]पृथुप्रमोदः [2]प्रगुणो गणानां गणः समग्रो वृषवाहनस्य ।
गिरीन्द्रपुत्र्यास्तनयस्य जन्मन्यथोत्सवं संववृते विधातुम् ॥ ३१ ॥

सी०—पृथ्विति । अथानन्तरं पृथुर्महान्प्रमोदो हर्षो यस्य । तथा प्रकृष्टा गुणा यस्यैवंविधः समग्रः संपूर्णो गणानां गणः प्रमथादीनां समूहो वृषवाहनस्य महेश्वरस्य गिरीन्द्रपुत्र्याः पार्वत्याश्च तनयस्य जन्मन्युत्सवं विधातुं कर्तुं संववृते संवृत्तः । उद्युक्त इति यावत् ॥ ३१ ॥

शि०—पृथ्विति । अथानन्तरं पृथुप्रमोदः प्रचुरानन्दः प्रगुणः विशेषगुणवान् गणानां प्रमथानां समग्रो निखिलो गुणः समुदायः वृषवाहनस्य वृषभयानस्य शिवस्य गिरीन्द्रपुत्र्याः पार्वत्याश्च तनयस्य पुत्रस्य जन्मनि उत्सवमुद्धवं विधातुं कर्तुं संववृते समुद्यतः ॥ ३१ ॥

इतः परं सप्तभिरुत्सवानेवाह—
स्फुरन्मरीचिच्छुरिताम्बराणि संतानशाखिप्रसवाञ्चितानि ।
[3]उच्चिक्षिपुः काञ्चनतोरणानि गणा [4]वराणि स्फटिकालयेषु ॥ ३२ ॥

सी०—स्फुरदिति । गणाः प्रमथाः स्फटिकालयेषु स्फटिकगृहेषु स्फुरन्त्यो भासमाना या मरीचयः किरणास्ताभिश्छुरितं मिश्रीकृतमम्बरं यैस्तानि । संतानशाखिनां देववृक्षाणां प्रसवानि पत्राणि तैरञ्चितानि निर्मितानि वराणि श्रेष्ठानि काञ्चनं काञ्चनस्य विकारः काञ्चनं स्वर्णसूत्रं तदाधेयीभूतानि तोरणानि मालाविशेषानुच्चिक्षिपुरुच्चैश्चिक्षिपुः । बबन्धुरित्यर्थः ॥ ३२ ॥

श्लोकसप्तकेनोत्सवमेव वर्णयति—
शि०—स्फुरदिति । गणाः प्रमथगणाः स्फटिकालयेषु स्फटिकसदनेषु स्फुरन्मरीचिच्छुरिताम्बराणि दीप्यमानकिरणरञ्जिताकाशानि सन्तानशाखिप्रसवाञ्चितानि कल्पवृक्षपत्ररचितानि वराणि प्रशस्तानि काञ्चनतोरणानि स्वर्णसूत्रग्रथिताम्रपल्लव-माल्यविशेषान् उच्चिक्षिपुः ऊर्ध्वं बबन्धुः ॥ ३२ ॥

दिक्षु प्रसर्पंस्तदधीश्वराणामथामराणामिव [5]मध्यलोके ।
महोत्सवं शंसितुमाहतोऽन्यैर्दध्वान धीरः[6] पटहः पटीयान् ॥ ३३ ॥

सी०—दिक्ष्विति । अथ तोरणोत्क्षेपानन्तरम् । दिक्षु दशसु दिशासु प्रसर्पन्प्रसिद्धो भवन् । आत्मनिनादेनेति शेषः । गम्यमानार्थत्वादप्रयोगः । तासां दिशामधीश्वराणां दिक्पालानाममराणां देवानामिन्द्रादीनां संबन्धी

---

१. प्रमोद, २. प्रगुण, ३. विचिक्षिपुः, ४. क्षलानि, ५. नाकिलोक, ६. धीरम्,

पटीयान्समर्थः। घोरनिनाद इति शेषः। धीरो गम्भीरः पटहोऽन्यैर्भृत्यभूतैरमरैराहतस्ताडितः सन् मध्यश्चासौ लोकश्च मध्यलोकः। भूलोक इत्यर्थः। तस्मिन्। महोत्सवम्। अत्रापि भवत्पुत्रजन्मनास्माकं महानुत्सवो जात इति शंसितुमिव कथयितुमिव। दध्वान ध्वनिं चकार। ध्वनिकरणे महोत्सवज्ञापनस्य फलत्वाभावेऽपि फलत्वकल्पनात्फलोत्प्रेक्षा॥ ३३॥

शि०--दिक्ष्विति। अथ तोरणबन्धनोत्तरमित्यर्थः। दिक्षु दिशासु प्रसर्पन् व्याप्नुवन् तदधीश्वराणां दिक्पालानाममराणां सुराणां शक्रप्रभृतीनाम् पटीयान् समर्थः भीषणनिनाद इति शेषः। धीरो गम्भीरः पटहो वाद्यविशेषः। अन्यैरनुचरभूतैर्देवैराहतस्ताडितः सन् मध्यलोके भूतले महोत्सवं हरसुतजन्मोत्सवं शंसितुं कथयितुमिव दध्वान ननाद हरसुतजन्मोत्सवोपलक्षे शक्रादयः पटहमाजघ्नुरिति भावः॥ ३३॥

महोत्सवे तत्र समागतानां गन्धर्वविद्याधरसुन्दरीणाम्।
संभावितानां गिरिराजपुत्र्या गृहेऽभवन्मङ्गलगीतकानि॥ ३४॥

सी०--महेति। तत्र महोत्सवे समागतानां प्राप्तानामत एव गृहे गिरिराजपुत्र्या भवान्या संभावितानां पूजितानाम्। सत्कृतानामित्यर्थः। गन्धर्वा विद्याधराश्च देवविशेषास्तेषां सुन्दरीणां स्त्रीणां स्त्रीकर्तृकाणि मंगलगीतकानि मंगलप्रयोजनगीतान्यभवन् जातानीत्यर्थ॥ ३४॥

शि०--महोत्सव इति। तत्र तस्मिन् महोत्सवे हरसुतजन्मोत्सवे विषये समागतानां प्राप्तानां गिरिराजपुत्र्या पार्वत्या गृहे भवने सम्भावितानां कृतसत्काराणां गन्धर्वविद्याधरसुन्दरीणां गन्धर्वविद्याधरनामसुरविशेषस्त्रीणां मङ्गलगीतकानि माङ्गलिकगानानि अभवन् जातानि॥ ३४॥

सुमङ्गलोपायन[1]पात्रहस्तास्तं मातरो मातृवदभ्युपेताः।[2]
विधाय दूर्वाक्षतकानि मूर्ध्नि निन्युः स्वमङ्कं गिरिजातनूजम्॥ ३५॥

सी०--सुमङ्गलेति। सुमङ्गलानि यान्युपायनान्युपदासामाग्र्यस्तेषां पात्रं तत्सहिता हस्ता यासामेवंभूताः सत्योऽभ्युपेताः प्राप्ता मातरो ब्राह्म्याद्याः। सप्तेति शेषः। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः॥' इत्यमरः। मूर्ध्नि शिरसि दूर्वाक्षतानि निधाय संस्थाप्य तं गिरिजातनूजं कुमारं मातृवत्पार्वतीवत्तत्तुल्यं यथा तथा स्वं स्वीयमङ्कं निन्युः। स्वाङ्के स्थापयामासुरित्यर्थः। मातृवदित्यनेन तासामप्यत्र महत्प्रेमास्तीति दर्शितम्॥ ३५॥

१. तूर्ण २. अभ्युपेत्य.

शि०—सुमङ्गलेति । सुमङ्गलोपायनपात्रहस्ताः अतिमाङ्गलिकोपायनपात्रकराः अभ्युपेताः प्राप्ताः मातरः ब्राह्मीप्रभृतयः, ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डेति सप्तमातर इत्यर्थः । मूर्ध्नि मस्तके दूर्वाक्षतकानि दूर्वाविशिष्टाक्षतानि निधाप्य संस्थाप्य मातृवत् पार्वतीतुल्यं यथा तथा गिरिजातनूजं पार्वतीसुतं कार्तिकेयं स्वमात्मीयमङ्कं क्रोडं नित्युः समुपवेशयामास । सप्तमातॄणामपि पार्वतीतुल्यस्नेहादङ्कोपवेशनमुचितमेवेति भावः ॥ ३५ ॥

ध्वनत्सु तूर्येषु सुमन्द्रमङ्कयालिङ्ग्योर्ध्वकेष्वप्सरसो रसेन ।
[1]सुसंधिबन्धं ननृतुः सुवृत[2]गीतानुगं भावरसानुविद्धम् ॥ ३६ ॥

सी०—ध्वनत्स्विति । अङ्कयालिङ्ग्योर्ध्वकेष्वतत्संज्ञकेषु तूर्येषु वाद्येषु सुतरां मन्द्रं गम्भीरं यथा तथा । 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः । ध्वनस्तु शब्दायमानेषु सत्सु । अप्सरसो रम्भादिका रसेन स्नेहेन शोभना मधुराः संधयः स्वरसंध्यादयो येषु तथाभूता बन्धाः गीतप्रबन्धा यत्र यस्मिन्कर्मणि । सुवृत्तानि शोभनच्छन्दांसि गीतानुगानि यत्र यस्मिन्कर्मणि । भावा रत्यादयस्तैरनुविद्धं व्याप्तं यत्र यस्मिन्कर्मणि यथा तथाननृतुर्गात्राणि विचिक्षिपुः ॥ ३६ ॥

शि० ध्वनत्स्विति । अङ्कयालिङ्ग्योर्ध्वकेषु तदाभिधेयेषु तूर्येषु वाद्येषु सुमन्द्रं गम्भीरं यथा तथा ध्वनत्सु ध्वनिं कुर्वत्सु अप्सरसो रसेन रम्भाद्यप्सरःस्नेहेन सुसन्धिबन्धं मधुरस्वरसन्ध्यादिगीतप्रबन्धं सुवृत्तगीतानुगं शोभनच्छन्दोनुगं भावरसानुविद्धम् रत्यादिश्रृङ्गारादिव्याप्तं च यथा तथा ननृतुः नृत्यं चक्रुः ॥ ३६ ॥

वाता ववुः सौख्यकराः प्रसेदुराशा विधूमो हुतभुग्ददीपे ।
जलान्यभूवन्विमलानि तत्रोत्सवेऽन्तरिक्षे प्रससाद सद्यः ॥ ॥ ३७ ॥

सो०—वाता इति । तत्रोत्सवे । वाताः पवनाः सौख्यकरा ववुश्चेलुः । आशा दिशः प्रसेदुर्निर्मला बभूवुः । हुतभुगग्निर्विधूमो निर्धूमः सन्दिदीपे ज्वलतिस्म । 'दीपी दीप्तौ' इति लिट् । जलानि विमलान्यभूवन् । 'भवो हि लोकाभ्युदयाय तादृशाम्' इति न्यायादिति भावः ॥ ३७ ॥

शि०—वाता इति तत्र तस्मिन् उत्सवे हरपुत्रोत्सवे जाते सति वाता वायवः सौख्यकराः सुखजनका ववुः चलन्ति स्म । आशा दिशः प्रसेदुः प्रसन्ना बभूवुः । विधूमो धूमरहितो हुतभुक् वह्निः दिदीपे जज्वाल । जलानि पयांसि विमलानि स्वच्छानि अभूवन् जातानि । अन्तरिक्षमाकाशः सद्यः तत्क्षणं प्रससाद विमलं बभूव । महतामुदयो निखिलाभ्युदयजनको भवत्येवेति भावः ॥ ३७ ॥

---

१. सुगन्धि, २. सुतन्त्रि, सवृत्ति,

गम्भीरशङ्ख[1]ध्वनिमिश्रमुच्चैर्गृहोद्भवा दुन्दुभयः प्रणेदुः ।
दिवौकसां व्योम्नि विमानसंघा [2]विमुच्य पुष्पप्रचयान्प्रसस्रुः ॥ ३८ ॥

सी०—गम्भीरेति । गृहोद्भवा महेश्वरनिकेतनीया दुन्दुभयो गम्भीरो मन्द्रो यः शङ्खध्वनिः पाञ्चजन्यशब्दस्तेन मिश्रं यथा स्यात्तथोच्चैः प्रणेदुः 'उपसर्गादसमासेऽपि' इति णत्वम् । अथ च दिवौकसां देवानां विमानसंघा व्योम्नि पुष्पप्रचयान्विमुच्य विकीर्य प्रसस्रुः । प्रतस्थिर इत्यर्थः ॥ ३८ ॥

शि०—गम्भीरेति । गुहोद्भवा हरालयोत्पन्ना दुन्दुभयः गम्भीरशंखध्वनिमिश्रं मन्द्रकम्बुग्रीवशब्दमिलितं यथा तथोच्चैरधिकं प्रणेदुः शब्दं चक्रुः । दिव ओको गृहं येषां ते तथोक्तास्तेषां दिवौकसां सुराणां विमानसंघाः व्योमयानसमुदायाः व्योम्नि नभसि पुष्पप्रचयान् कुसुमनिकरान् प्रसस्रुः प्रस्थानं विदधुः ॥ ३८ ॥

इत्थं महेशाद्रिसुतासुतस्य [3]जन्मोत्सवे संमदयांचकार ।
चराचरं विश्वमशेषमेतत्परं चकम्पे किल तारकश्रीः ॥ ३९ ॥

सी०—इत्थमिति । महेशो हरः । अद्रिसुता पार्वती तस्याः सुतस्य पुत्रस्येत्थमेवंभूते जन्मत्सवेऽशेषं समस्तं चराचरं स्थारजंगममेतद्विश्वं जगत्संमदयांचकारोन्मत्तीचकार । उन्मादसाधनैरिति शेषः । परं केवलं तारकस्य तारकासुरस्य श्रीर्लक्ष्मीश्चकम्पे । बिभायेत्यर्थः ॥ ३९ ॥

शि०—इत्थमिति । महेशाद्रिसुतस्य शिवपार्वतीपुत्रस्येत्थमेवं जन्मोत्सवे जाते सति अशेषं समग्रमेतत्चराचरं स्थावरजङ्गमोभयं विश्वं संमदयाञ्चकार उन्मत्तं बभूव । परं केवलं तारकश्रीस्तारकालक्ष्मीः चकम्पे कम्पितवती किल खलु । हरसुतजन्मोत्सवे प्राप्ते तारकमन्तरा समस्तजगत आनन्दो बभूवेत्यर्थः ॥ ३९ ॥

ततः कुमारः [4]समुदां निदानैः [5]स बाललीलाचरितैर्विचित्रैः ।
गिरीशगौर्योर्हृदयं जहार मुदे न हृद्या किमु बालकेलिः ॥ ४० ॥

सी०—तत इति । ततोऽनन्तरं स कुमारो विचित्रैरनेकरूपैरत एव समुदां सुतरां प्रीतीनां निदानैरादिकारणैः । 'निदानं त्वादिकारणम्' इत्यमरः । बाललीलाचरितैः शिशुक्रीडाचरितैर्गिरीशगौर्योः शिवपार्वत्योः । अभ्यर्हितत्वाद्द्वन्द्वेऽपि पूर्वनिपातः । हृदयं मनो जहार । प्रसादयामासेत्यर्थः । हृद्या मनोहरा बालकेलिर्मुदे न किमु भवतीति । किं तु भवत्येवेत्यर्थः ॥ ४० ॥

शि०—तत इति । ततस्तदनन्तरं महोत्सवातीतोत्तरमित्यर्थः । स कुमारः कार्तिकेयः विचित्रैर्विविधैरत एव समुदामतिशयप्रीतीनां निदानैर्बीजैः बाललीला-

---

१. शब्द, २. विमुञ्चता पुष्पचयान्; विमुच्यते पुष्पचयान्
३. जन्मोत्सवः, ४. समुदः ५. स्वबाललीलाललितः,

चरितैः शिशुक्रीडनचरित्रैः गिरीशगौर्योः शिवपार्वत्योः हृदयं मानसं जहार हृतवान् । हृद्या प्रीतिदा मनोज्ञेति यावत बालकेलिः शिशुक्रीडा मुदे प्रीत्यै न किमु भवतीतिशेषः । अपितु प्रीत्यै भवत्येवेत्यर्थः । तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थसमर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।। ४० ।।

महेश्वरः शैलसुता [1]च हर्षा[2]त्सतर्षमेकेन मुखेन गाढम् ।
अजातदन्तानि [3]मुखानि सूनोर्मनोहराणि [4]क्रमत[5]श्चुचुम्ब ।। ४१ ।।

सी०-- महेश्वर इति । महेश्वरो हरः शैलसुता पार्वती च हर्षाद्धेतोः सतृष्णं यथा तथा जातदन्तान्युद्भूतदशनानि मनोहराणि सूनोः कुमारस्य मुखान्येकेन मुखेन गाढं दृढं यथा तथा क्रमतो यथाक्रमं चुचुम्ब पस्पर्श । अत्र कर्तृद्वयस्य पार्थक्येन क्रियान्वयो विधेयः । अन्यथा द्विवचनापत्तिरिति विवेचनीयम् ।। ४१ ।।

शि०—महेश्वर इति । महेश्वरः शिवः शैलसुता गौरी च हर्षादानन्दाद्धेतोः सतर्षं सलिप्सं यथा तथा अजातदन्तानि अनुत्पन्नदशनानि मनोहराणि मनःप्रसादकराणि सूनोः कार्तिकेयस्य मुखानि वक्त्राणि एकेन मुखेन क्रमतः क्रमेण चुचुम्बे । चुम्बनक्रियायामेकवचनसत्त्वात्कर्तृद्वयं पृथक्पृथगन्वयितव्यम् ।। ४१ ।।

क्वचित्स्खलद्भिः क्वचिदस्खलद्भिः क्वचित्प्रकम्पैः क्वचिदप्रकम्पैः ।
बालः [6]स लीलाचलनप्रयोगैस्तयोर्मुदं वर्धयति स्म पित्रोः ।। ४२ ।।

सी०— क्वचिदिति । स बालः कुमारः क्वचित्प्रदेशे स्खलद्भिः पतद्भिः क्वचित्प्रदेशेऽस्खलद्भिः क्वचित्देशे प्रकम्पैः प्रकृष्टकम्पैः क्वचित्प्रदेशेऽप्रकम्पैर्लीलया ये चलनप्रयोगास्तैर्निमित्तभूतैस्तयोः पित्रोर्जननीजनकयोः । माता च पिता च पितरौ तयोः पित्रोः । 'पिता मात्रा' इत्येकशेषः । मुदं प्रीतीं वर्धयति स्म । 'कन्दलयांचकार' इत्यपि पाठः । अर्थः स एव ।। ४२ ।।

शि०—क्वचिदिति । बालः शिशुः स कुमारः क्वचित्कुत्रचित्प्रदेशे स्खलद्भिः पतद्भिः क्वचित्कुत्रचित्प्रदेशेऽस्खलद्भिरपतद्भिः क्वचित्प्रदेशे प्रकम्पैः कम्पयुक्तैः क्वचित्प्रदेशेऽप्रकम्पैः कम्परहितैः लीलाचलनप्रयोगैः लीलागमनैः तयोः पित्रोः हरपार्वत्योः मुदं प्रीतिं वर्द्धयति वृंहयतिस्मेत्यर्थः । विचित्रं शिशुगमनं मातरं पितरं च प्रीणयत्येवेत्यर्थः ।। ४२ ।।

अहेतुहासच्छुरिताननेन्दुर्गृहाङ्गण[7]क्रीडनधूलिधूम्रः ।
मुहुर्वदन्किंचिदलक्षितार्थं मुदं तयोरङ्कगतस्ततान ।। ४३ ।।

---

१. अपि २. सहर्षम्, ३. वक्त्राणि, ४. क्रमशः, ५. चुचुम्बे,
६. सलीलम्, ७. गेहाङ्गण,

सी०—अहेत्विति। गृहाङ्गणे यत्क्रीडनं तेन निमित्तेन धूलिभी रजोभिर्धूम्रो धूसरः सन्नङ्कगत उत्सङ्गं प्राप्तः कुमारः। अहेतुरकारणो यो हासो हसितं तेन च्छुरितो मिश्रित आननेन्दुर्मुखचन्द्रो यस्य। अलक्षितार्थमव्यक्तार्थं मुहुः किंचिद्वदंस्तयोर्मुदं प्रीतिं ततान चकार॥ ४३॥

शि०—अहेत्विति। गृहाङ्गणक्रीडनधूलिधूम्रः भवनाजिराविहरणरजोधूसरः सन् अङ्कगतः क्रोडस्थितः कुमारः। अहेतुहासच्छुरिताननेन्दुः अनिमित्तहास्यमिलितवदनचन्द्रः अलक्षितार्थमस्फुटाभिप्रायं शब्दमिति शेषः। मुहुरसकृत् किञ्चिद्वदन् कथयन् तयोः शिवपार्वत्योर्मुदं हर्षं ततान कृतवान्। शिशूक्तेरव्यक्तार्थत्वप्रसिद्ध्या तदाकर्णनोत्तरमाकर्णयितुः प्रीतिःसम्भवत्येवेति भावः॥ ४३॥

**गृह्णन्विषाणे हरवाहनस्य स्पृशन्नुमाके[1]सरिणं सलीलम्।**
**स भृङ्गिणः सूक्ष्मतरं शिखाग्रं कर्षन्बभूव प्रमदाय पित्रोः॥ ४४॥**

सी०—गृह्णन्निति। स कुमारः। हरवाहनस्य वृषस्य विषाणे शृङ्गे गृह्णन्। कराभ्यामिति शेषः। तथोमाकेसरिणं पार्वतीसिंहं सलीलमप्रयासं यथा तथा स्पृशन्। तथा भृङ्गिणो गणस्य सूक्ष्मतरं शिखाग्रं कर्षन्। पित्रोर्जननीजनकयोः प्रमदाय हर्षाय बभूव। क्रियाग्रहणात्संप्रदानत्वम्॥ ४४॥

शि०—गृह्णन्निति। स कुमारः हरवाहनस्य वृषभस्य शृङ्गे गृह्णन् आददानः हस्तद्वयेनेति शेषः। तथा उमाकेसरिणं पार्वतीवाहनं सिंहं सलीलमनायासं यथा तथा स्पृशन्। तथा भृङ्गिणो हरगणस्य सूक्ष्मतरमतिसूक्ष्मं शिखाग्रं कर्षन् आकर्षन् पित्रोर्जननीजनकयोः प्रमदाय हर्षाय बभूव जातः॥ ४४॥

**एको नव द्वौ दश पञ्च सप्तेत्यजीगणन्ना[2]त्ममुखं प्रसार्य।**
**महेशकण्ठोरगदन्तपंक्तिं [3]तदङ्कगः शैशव[4]मौग्ध्यमैशिः॥ ४५॥**

सी०—एक इति। तस्य पितुरङ्कग उत्सङ्गगत ऐशिः। ईशस्यापत्यमित्यर्थः। 'अत इञ्' इत्यपत्यार्थ इञ्। आत्ममुखं प्रसार्य महेशस्य ये कण्ठोरगाः सर्पास्तेषां दन्तपंक्तिम्। एको नव द्वौ दश पञ्च सप्तेत्यजीगणत्संख्यातवान्। यतः शैशवमौग्ध्यं बालत्वनिमित्तमूढतां दधानः। अजीगणदिति गणतेर्लुङ्। 'ई चगण.' इत्यभ्यासाकारस्येकारः॥ ४५॥

शि०—एक इति। तदङ्कगः हरक्रोडस्थितः ऐशिः कार्त्तिकेयः शैशवमौग्ध्यं बाल्यनिबन्धनाविवेकित्वं दधानः सन्। आत्ममुखं स्वाननं प्रसार्य विस्तीर्य महेशकण्ठोरगदन्तपंक्तिं शिवगलस्थाहिदशनश्रेणिमेको नव द्वौ दश पञ्च सप्तेतीत्येवं

---

१. केसरिणः सटालीः, २. मञ्जुः, ३. तदङ्गगः, ४. नुन्नभीतिः मुग्धमैशिः

रीत्याऽमजोगणत् संचख्यौ। कुमारस्य हरकण्ठोरगश्रेणिगणनायां हेतोः शैशव-मौग्ध्यस्य पदार्थत्वेनोक्त्या पदार्थहेतुकं काव्यलिङ्गम् ॥ ४५ ॥

**कपर्दिकण्ठान्तकपालदाम्नोऽङ्गुलि प्रवेश्याननकोटरेषु।**
**दन्तानुपात्तुं रभसी बभूव मुक्ताफलभ्रान्तिकरः[1] कुमारः ॥ ४६ ॥**

सी०—कपर्दीति। कुमारः कार्तिकेयः कपर्दिकण्ठान्ते शिवकण्ठमध्ये स्थितस्य कपालदाम्नो नृकरोटीस्रज आननकोटरेषु वदनकूपेषु। 'कोटरो नागरे कूपे पुष्करिण्युच्चघाटके' इति मेदिनी। अङ्गुलिं प्रवेश्य दन्तानुपात्तुं ग्रहीतुं रभसी रभसो वेगोऽस्यास्तीति तथोक्तः। 'रभसो वेगहर्षयोः' इति मेदिनी। बभूव। एतान्वेगेन गृह्णामीत्यैच्छदित्यर्थः यतो मुक्ताफलभ्रान्तिकरो मौक्तिकभ्रमकारी ॥ ४६ ॥

शि०—कपर्दीति। मुक्ताफलभ्रान्तिकरः मौक्तिकसन्देहशीलः कुमारः कपर्दिकण्ठान्तकपालदाम्नो हरगलस्थितशवशिरःस्रजः आननकोटरेषु मुखकूपेषु अङ्गुलिकरशाखाम्प्रवेश्य संनिवेश्य दत्त्वेति यावत्। दन्तान् दशनानि उपात्तुं ग्रहीतुं रभसी वेगवान् बभूव जातः ॥ ४६ ॥

**शंभोः शिरोऽन्तःसरितस्तरंगान्विगाह्य गाढं शिशिरान्रसेन।**
**[2]स जातजाड्यं निजपाणिपद्ममतापयद्भालविलोचनाग्नौ ॥ ४७ ॥**

सी०—शंभोरिति। स कुमारः। शिशिराञ्छीतलाञ्छंभोः संबन्धिनः शिरसोऽन्तर्मध्ये स्थितायाः सरितो गङ्गायास्तरंगान्रसेन स्वादेन। स्वादोत्र त्वगिन्द्रियग्राह्यत्वेन विवक्षितः। 'रसो गन्धरसे जले। शृङ्गारादौ विषे वीर्ये तक्रादौ द्रव्यरागयोः। देहधातुप्रभेदे च पारदस्वादयोः पुमान्' इति मेदिनी। गाढं दृढम्। 'गाढबाढदृढानि च' इत्यमरः। विगाह्यावगाह्य। अत एव जातजाड्यं जातशीतकृतजडत्वं निजपाणिपद्मं स्वीयकरकमलं भाले यद्विलोचनं तत्र योऽग्निस्तत्रातापयत्। अन्याऽपि शीतजडं हस्तमग्नौ तापयति तद्वदिति भावः ॥ ४७ ॥

शि०—शम्भोरिति। स कुमारः शिशिरान् शीतान् शम्भोः हरस्य शिरोऽन्तःसरितः जटावर्त्तिमन्दाकिन्याः तरङ्गान् भङ्गान् रसेन स्वादेन गाढं स्थिरं यथा विगाह्य विलोड्य जातजाड्यमुद्भूतशैत्यं निजपाणिपद्मं स्वकरसरोजं भालविलोचनाग्नौ कपालाक्षिवह्नौ अतापयत् संतप्तं चकार ॥ ४७ ॥

**किंचित्कलं [3]भङ्गुरकंधरस्य नमज्जटाजूटधरस्य शंभोः।**
**प्रलम्भमानं किल कौतुकेन चिरं चुचुम्बे मुकुटेन्दुखण्डम् ॥ ४८ ॥**

---

१. करान्, धरः, २. संजातजाड्यः, ३. भङ्गुरकण्ठरम्य,

सी०—किंचिदिति। किंचिद्भङ्गुरा पतनशीला। 'भञ्जभासमिदा घुरच्' इति घुरच्। 'चजोः' इति कुत्वम्। कंधरा ग्रीवा यस्य। बालत्वात् स कुमारो नमज्जटाजूटस्य धरस्तस्य शंभोर्हरस्य प्रलम्बमानमाश्रयमाणं कलं मधुरं मुकुटेन्दुखण्डं मुकुटचन्द्रशकलम्। 'भित्तं शकलखण्डे वा' इत्यमरः। कौतुकेनानन्देन चिरं बहुकालं चुचुम्बे। पस्पर्शेत्यर्थः ॥ ४८ ॥

शि०—किञ्चिदति। किञ्चित् ईषत् भङ्गुरकन्धरः कुटिलग्रीवः स कुमारः नमज्जटाजूटधरस्य नतजटानिकरधारिणः शम्भोः शिवस्य प्रलम्बमाणं विद्यमानं कलं मनोहरं मुकुटेन्दुखण्डं मुकुटचन्द्रशकलं कौतुकेन कुतूहलेन चिरं बहुकालं चुचुम्बे स्पृष्टवान् किल ॥ ४८ ॥

इत्थं शिशोः [1]शैशवकेलिवृत्तैर्मनोऽभिरामैर्गिरिजागिरीशौ।
[2]मनोविनोदैकरसप्रसक्तौ दिवानिशं नाविदतां कदाचित् ॥ ४९ ॥

सी०—इत्थमिति। गिरिजागिरीशौ मनोभिरामैर्मनोथैस्त्थमेवंभूतैः शिशोः कुमारस्य शैशवस्य बालस्य याः केलयस्तासां वृत्तैश्चरित्रैः। 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः। मनसो विनोदस्तत्र य एको रसः प्रीतिस्तत्र प्रसक्तावासक्तौ सन्तौ कदाचिदपि दिवानिशमहर्निशं नाविदतां नाबुध्येताम्। अगाधपुत्रोत्सवार्णवमग्नत्वादिति भावः ॥ ४९ ॥

शि०—इत्थमिति। मनोविनोदैकरसप्रसक्तौ हृदयानन्दैकप्रीतितत्परौ गिरिजागिरीशौ पार्वतीहरौ मनोऽभिरामैः चेतःप्रसादकरैः शिशोः कुमारस्य शैशवकेलिवृत्तौ बाल्यक्रीडाचरित्रैः करणैः दिवानिशं रात्रिन्दिवम् कदाचित् नाविदताम् न बुबुधाते ॥ ४९ ॥

इतिबहुविधं बालक्रीडाविचित्रविचेष्टितं
ललितललितं सान्द्रानन्दं मनोहरमाचरन्।
अलभत परां [3]बुद्धिं षष्ठे दिने नवयौवनं
स किल सकलं शास्त्रं शस्त्रं विवेद [4]विभुर्यया ॥ ५० ॥

सी०—इतीति। इत्येवंभूतं बहुविधं नाना प्रकारकं ललितललितं ललितप्रकारमतिसुन्दरं सान्द्र आनन्दो येन। मनोहरं बालक्रीडाया विचित्रं विचेष्टितं चेष्टाम्। चरित्रमिति यावत्। आचरन्विदधद्विभुः स कुमारः षष्ठे दिने परामुत्कृष्टां बुद्धिं धिषणां नवयौवनं तारुण्यं चालभत प्राप। यया बुद्ध्या सकलं समस्तं शस्त्रम्। सकलानि शस्त्राणीत्यर्थः। शास्त्रम्। शास्त्राणीत्यर्थः। उभयत्रापि जातावेकवचनम्। विवेद ज्ञातवान्। किलेति प्रसिद्धौ। प्राचीनसत्संस्काराणां किमिवाशक्यमिति भावः।

---

१. कनव, २. मुदा ३. वृद्धिम्, ४. विभोरपि,

हरिणीच्छन्दः--'रसयुगहयैन्सौं म्नौ लो गो यदा हरिणो तदा' इति लक्षणात् ॥ ५० ॥

[इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीताराम-
कविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः
श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
कुमारोत्पत्तिर्नामैकादशः सर्गः ॥

शि०—इतीति। इत्युक्तप्रकारं बहुविधं विविधं ललितललितमतिसुन्दरं सान्द्रानन्दं विपुलामोदं मनोहरं बालक्रीडाविचित्रविचेष्टितं शिशुक्रीडनानेकविधव्यापारमाचरन् कुर्वन् विभुः स कुमारः षष्ठे दिने परामुत्कृष्टां बुद्धिं मतिं नवयौवनं युवत्वं चालभत प्राप। यया बुद्धया सकलं समग्रं शास्त्रं शस्त्रं च विवेद ज्ञातवान् ॥ ५० ॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचिता-
शिशुतोषिणीसमाख्यया व्याख्यया सहितः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये कुमारोत्पत्तिर्नाम
एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः

अथ प्रपेदे त्रिदशैरशेषैः क्रूरासुरोपप्लव[1]दुःखितात्मा।
पुलोमपुत्रीदयितोऽन्धकारिं [2]पत्रीव तृष्णातुरितः पयोदम् ॥ १ ॥

सी०—अथेति। अथानन्तरं क्रूरस्तीव्रो योऽसुरस्तारकसंज्ञकस्तस्य तत्कर्तृको य उपप्लव उपद्रवः स्वस्थानोच्चाटनादिकस्तेन दुःखितः क्लिष्ट आत्मा यस्य तथाभूतः पुलोमपुत्र्याः शच्या दयितः प्रिय इन्द्रोऽशेषैः समस्तैस्त्रिदशैरात्मभृत्यभूतवृन्दारकैः सह तृष्णातुरितस्तृष्णया तृषया कर्त्र्या आतुरित आतुरीतकृतः। 'तत्करोति—' इति णिचिकृते 'णाविष्ठवत्' इति टिलोपः। ततः कर्तरि क्तः। पत्री चातकः पयोदमिव। अन्धकारिं हरं प्रपेदे प्राप। अत्र पूर्णोपमालंकारः। सर्गेऽस्मिन्वृत्तमुपजातिः ॥ १ ॥

शि०—अथेति। अथानन्तरं कुमारस्य यौवनप्राप्त्युत्तरमित्यर्थः। क्रूरासुरोपप्लवदुःखितात्मा तारकोपद्रवपीडितजीवः पुलोमपुत्रीदयितः शचीपतिः शक्रः अशेषैः समस्तैः त्रिदशैः देवैः सह, तृष्णातुरितः तृषाऽऽकुलितः पत्री पक्षी चातकः पयोदं मेघमिव अन्धकस्यारिं शत्रुं शिवं प्रपेदे प्राप्तवान्। तृष्णाकुलश्चातको यथा मेघं प्राप्नोति तथा तारकोपद्रवितः शक्रो हरम्प्रापेति भावः। चातकशक्रयोरुपमानोपमेययोरिवशब्दस्य तृष्णातुरितत्वरूपसाधारणधर्मस्य च सत्त्वात्पूर्णोपमालङ्कारः। उपजातिश्छन्दोऽत्र सर्गे बोध्यम् ॥ १ ॥

[3]दृप्तारिसंत्रासखिलीकृतात्स कथंचिदम्भोदविहारमार्गात्।
अवाततारामिगिरिं [4]गिरीशगौरीपदन्यासविशुद्धमिन्द्रः ॥ २ ॥

सी०—दृप्तेति। स इन्द्रः। दृप्तोऽभिमानी योऽरिस्तारकस्तस्माद्यः संत्रासो भयं तेन खिलीकृतादुरवगाह्यमानोकृतादम्भोदानां मेघानां विहारो यत्र स चासौ मार्गश्च। आकाशमित्यर्थः। तस्मात् गिरीशसहिता या गौरी भवानी तस्याः पदे चरणे तयोर्न्यासो निधानं तेन विशुद्धं पवित्रं गिरिं कैलासमभि संमुखं कथंचित्केनापि प्रकारेण। कष्टेनेत्यर्थः। अवाततारोत्ततार। गिरीशगौरीति गिरीशस्याभ्यर्हितत्वाद्द्वन्द्वेऽपि पूर्वनिपात इति वा ॥ २ ॥

शि०—दृप्तेति। स इन्द्रो मघवा दृप्तारिसंत्रासखिलीकृतात् समुद्धतारिपुभीतिरिक्ती (शून्यी) कृतात् अम्भोदविहारमार्गात् आकाशात् गिरीशगौरीपदन्यासविशुद्धं

---

१. उपद्रव, २. पक्षीवतृष्णाव्यथितः तृष्णातुरश्चातकवत्,
३. दृप्तासुरत्रास. ४. गिरीशं,

शिवपार्वतीचरणस्पर्श( स्थापन )परिपूतं गिरिं कैलाससमभि कैलाससम्मुखं कथंचित् कृच्छ्रात् अवातरत् अवतृतवान् आजगमेति यावत् ।। २ ।।

संक्रन्दनः स्यन्दनतोऽवतीर्य मेघात्मनो मातलिदत्तहस्तः ।
[1]पिनाकिनोऽथालयमुच्चचाल शुचौ[2]पिपासाकुलितो यथाम्भः ।। ३ ।।

सी०—संक्रन्दन इति । अथानन्तरं संक्रन्दन इन्द्रः । 'संक्रन्दनो दुश्च्यवनः' इत्यमरः । मातलीना सारथिना दत्त आश्रयीकरणार्थमग्रेकृतो हस्तो यस्मै सः । अवलम्बितमातलिहस्तः सन्नित्यर्थः । मेघस्वरूपधारिण मेघरूपादित्यर्थः । स्यन्दनतो रथात् । पञ्चम्यास्तसिल् । अवतीर्योत्तीर्य शुचौ ग्रीष्मे पिपासया तृष्णया तृषेति यावत् । आकुलित आतुरः पुरुषोऽम्भो यथा जलमिव पिनाकिनो हरस्यालयं निलयमुच्चचाल । उद्दिश्य चलति स्मेत्यर्थ । 'निकाय्यनिलालयाः' इत्यमरः । पिपासेति 'अ प्रत्ययात्' इत्यकारप्रत्यये टाप् । अत्रापि पूर्णोपमालङ्कारः । सामान्यधर्मस्त्वाकुलितत्वमित्याकुलितत्वे निमित्तभूतौ पिपासोपप्लवौ । अनयोर्बिम्बप्रतिबिम्बभावेन सादृश्यम् ।। ३ ।।

शि०—संक्रनन्दन इति । अथानन्तर कैलासागमनानन्तरमित्यर्थः । संक्रन्दनः इन्द्रः मातलिदत्तहस्तः सारथिसमर्पितकरः मेघात्मनः जलस्वरूपात् स्यन्दनतो रथात् अवतीर्य उत्तरणं कृत्वा शुचौ ग्रीष्मे पिपासाकुलितः तृष्णार्त्त पुरुषोऽम्भो यथा जलमिव पिनाकिनो हरस्याऽऽलयं गृहमुच्चचाल उद्दिश्य जगाम । तृषार्तो जनो यथा शुचौ जलमुद्दिश्य चलति तथा तारकार्त्त इन्द्रो हरालयमुद्दिश्य जगामेति तदर्थः । रिपुपराभूतस्य तद्विनाशार्थमुद्योगो युक्त एवेति भावः । अत्रालङ्कारः पूर्णोपमा नाम ।। ३ ।।

इतस्ततोऽथ[3] प्रतिबिम्बभाजं विलोकमानः स्फटिकाद्रिभूमौ ।
आत्मानमप्येकमनेकधा स व्रजन्विभोरास्पदमाससाद ।। ४ ।।

सी०—इतस्तत इति । अथानन्तरं व्रजन्गच्छन्स इन्द्रः स्फटिकाद्रिः कैलासस्तस्य भूमौ पृथिव्यामितस्ततो यत्र तत्र प्रतिबिम्बभाजं प्रतिबिम्बितमेकमप्यात्मानं शरीरमनेकसंख्यं विलोकमानः पश्यन्सन् । विभोर्महेश्वरस्यास्पदं स्थानमाससाद प्राप ।। ४ ।।

शि०—इतस्तत इति । अथानन्तरं हरस्थानमुद्दिश्यगमनानन्तरमित्यर्थः। व्रजन् चलन् स इन्द्रः स्फटिकाद्रिभूमौ कैलासगिरिपृथिव्यामितस्ततो यत्र कुत्र

---

१. पिनाकिरम्यालयम्, २. पिपासाकुलवज्जलौघम्,
३. अपि,

प्रतिबिम्बिभाजं प्रतिबिम्बितमपि एकमद्वितीयमात्मानं स्वरूपमनेकधाऽनेकसंख्यकं विलोकमानः पश्यन् सन् विभोर्हरस्याऽऽस्पदं स्थानमाससाद प्राप ॥ ४ ॥

**विचित्रचञ्चन्मणिभङ्गि[1]सङ्गं सौवर्णदण्डं दधतातिचण्डम् ।**
**स नन्दिनाधिष्ठितमध्यतिष्ठत्सौधाङ्गणद्वारमनङ्गशत्रोः ॥ ५ ॥**

सी०—विचित्रेति । स इन्द्रः विचित्रा अनेकवर्णाश्चञ्चन्तो दीव्यमाना ये मणयो रत्नानि तेषां तत्कर्मिका या भङ्गयो रचनाविशेषास्तेषां सङ्गः सम्बन्धो यस्य । अनेकवर्णमणिखचितमित्यर्थः । तथातिचण्डमतिभीषणं सौवर्णदण्डं सुवर्णमयवेत्रं दधता बिभ्रता नन्दिना गणेनाधिष्ठितं द्वारपालतयाधिश्रितमनङ्गशत्रोः शिवस्य सौधस्य राजसदनसबन्धिनोऽङ्गणस्याजिरस्य । 'अङ्गणं चत्वराजिरे' इत्यमरः । द्वारं प्रतीहारम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । अध्यतिष्ठदधितस्थौ । 'अधिशीङ्स्थासां—' इति कर्मत्वम् । अन्तःप्रवेशे भवदाज्ञानुपालनं कुर्वन् द्वार एव तस्थावित्यर्थः ॥ ५ ॥

शि०—विचित्रेति । स संक्रन्दनः विचित्रचञ्चन्मणिभङ्गिसङ्गं विविधदीप्यमानरत्नरचनासम्पर्कम् अतिचण्डमत्यन्तभीषणं सौवर्णदण्डं काञ्चनमयवेत्रं दधता नन्दिना गणेन अधिष्ठितमाश्रितं द्वारत्राणकरत्वेनेति भावः । अनङ्गशत्रोः हरस्य सौधाङ्गणद्वारं राजभावनाजिरं प्रतीहारमध्यतिष्ठत् संतस्थौ । शिवाऽऽदेशमन्तराऽन्तःप्रवेशोऽयुक्त इत्यजिरप्रतिहारभूमौ स्थितवानित्यर्थः ॥ ५ ॥

**ततः [2]स कक्षाहितहेमदण्डो नन्दी सुरेन्द्रं प्रतिपद्य सद्यः ।**
**प्रतोषयामास [3]सुगौरवेण गत्वा [4]शशंस स्वयमीश्वरस्य ॥ ६ ॥**

सी०—तत इति । ततोऽनन्तरं स नन्दी गणः सुरेन्द्रमिन्द्रं सद्य आशु प्रतिपद्य समीपं प्राप्य सुतरां गौरवेणादरेण स्वागतादिना प्रतोषयामास संतोषितवान् । अथ च स्वयं गत्वा कक्षायां हर्म्यप्रकोष्ठे । 'कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । आहितः स्थापितो हेमदण्डः सुवर्णवेत्रो येन तथोक्तः सन् । ईश्वरस्य । ईश्वरमित्यर्थः । सम्बन्धविवक्षायां षष्ठी । शशंस कथयामास । ससुरो महेन्द्र आगत इति निवेदितवानित्यर्थः ॥ ६ ॥

शि०—तत इति । ततोऽनन्तरं स नन्दी गणः शिवद्वारपालः सुरेन्द्रं शक्रं सद्यस्तत्क्षणं सत्वरमित्यर्थः प्रतिपाद्य प्राप्य सुगौरवेण विशेषादरेण प्रतोषयामास प्रसादयामास । अथ च स्वयं साक्षादीश्वरस्य ईश्वरमित्यर्थः ( कर्मणः शेषत्वविवक्षायां षष्ठी ) गत्वा प्राप्य शशंसाऽभाषत । भवद्दर्शनार्थमिन्द्रो देवैः सहागता

---

१. सङ्गि, २. स्वकक्षा, ३. स गौरवेण. ४. सदोमण्डलम्,

इति विज्ञापितवानित्यर्थः । अत्रैकस्य नन्दिनः कर्तुः, प्रतीषणगमनशंसनक्रियात्रयेऽन्वयाद्दीपकालङ्कारः ॥ ६ ॥

**भ्रूसंज्ञयानेन[1] कृताभ्यनुज्ञः सुरेश्वरं तं जगदीश्वरेण ।**
**प्रवेशयामास सुरैः पुरोगः समं स नन्दी सदनं [2]सदस्य ॥ ७ ॥**

सी०—भ्रूसंज्ञयेति । अनेन जगतामीश्वरेण महेश्वरेण भ्रूसंज्ञया । भ्रूकुटीचमत्कृतिसंकेतेनेत्यर्थः । कृताभ्यनुज्ञः सुरेन्द्रागमनार्थं कृतानुशासनः स नन्दी गणः पुरोगोऽग्रगामी सन् । तं सुरेश्वरमिन्द्रं सच्छोभनमस्य महेश्वरस्य सदनं गृहं सुरैः समं प्रवेशयामास । प्रवेशितवानित्यर्थः ॥ ७ ॥

शि०—भ्रूसंज्ञयेति । अनेन जगदीश्वरेण शिवेन भ्रूसंज्ञया भ्रुकुटीसंकेतेन कृताभ्यनुज्ञः कृतानुमतिः स नन्दी गणः पुरोगोऽग्रगन्ता सन् तं सुरेश्वरं शक्रम् अस्य शिवस्य सत् उत्तमं सदनं गृहं सुरैर्देवैः समं प्रवेशयामास समानिनाय ॥ ७ ॥

**स चण्डिभृङ्गिप्रमुखैर्गरिष्ठैर्गणैरनेकैर्विविधस्वरूपैः ।**
**[3]अधिष्ठितं संसदि [4]रत्नमय्यां सहस्रनेत्रः[5] शिवमालुलोके ॥ ८ ॥**

सी०—स इति । स सहस्रनेत्र इन्द्रो गरिष्ठैरतिशयेन गुरुभिः । 'प्रियस्थिर–' इत्यादिना गुरुशब्दस्य गरादेशः । अनेकैर्बहुभिर्विविधस्वरूपैर्नानाकृतिभिश्चण्डिभृङ्गिप्रमुखैर्गणैः रत्नमय्यां रत्नप्रचुरायाम् । प्राचुर्ये मयट् । 'टिड्ढा–' इति ङीप् । संसदि सभायामधिष्ठितमुपविष्टं शिवमालुलोके ददर्श । इह 'अधिशीङ्–' इत्याधारस्य कर्मत्वप्रसङ्गो दुर्निवारः । अत एव रत्नमयीं सभां तामिति प्रतिष्ठितमिति वा पठनीयम् । यथास्थितविन्यासे दूषणोद्धारं सुधियो विभावयन्त्विति ॥ ८ ॥

शि०—स इति । स सहस्रनेत्रः शक्रः गरिष्ठैर्गुरुभिः अनेकैः बहुभिः विविधस्वरूपैः विचित्राकारैः चण्डिभृङ्गिप्रमुखैः चण्डिभृङ्गिप्रधानैः गणैः कृत्वा रत्नमय्यां संसदि सभायामधिष्ठितं संसेवितं शिवम् आलुलोके दृष्टवान् ॥ ८ ॥

**[6]कपर्द[7]मुद्बद्धमहीनमूर्धरत्नांशुभिर्भासुरमुल्लसद्भिः ।**
**दधानमुच्चैस्तरमिद्धधातोः सुमेरुशृङ्गस्य समत्वमाप्तम् ॥ ९ ॥**

सी०—तत्र कपर्दमिति । किंभूतं शिवम् । उद्बद्धं भुजंगरज्जुभिर्दृढीकृतमुल्लसद्भिः शोभमानैरत एवाहीनामिनाः स्वामिनस्तेषां वासुकिप्रभृति महासर्पाणां मूर्धसु शिरःसु यानि रत्नानि मणयस्तेषामंशुभिर्मयूखैर्भासुरं

---

१. तेन, २. हरस्य, ३. अधिष्ठितायां यदि, ४. रत्नवत्याम्, ५. सहस्रलोकः, ६. कदर्पम्, ७. उर्ध्वस्थमहाहि, उद्बन्धमहाहि,

दीप्यमानम् । 'भञ्जभास-' इति घुरच् । उच्चैस्तरं महन्तं कपर्दं जटाजूटं दधानं बिभ्रतम् । ,कपर्दोऽस्य जटाजूटः' इत्यमरः । अत एव पुनः किंभूतम् इद्धाः प्रवृद्धा धातवो गैरिकादयो यत्र तथाभूतं यत्सुमेरोः स्वर्णाद्रेः शृङ्गम् तस्य समत्वं सादृश्यमाप्तं प्राप्तम् ॥ ९ ॥

शिवं स्तौति त्रयोदशभिः—

शि०—कपर्दमिति । उद्बद्धं सर्परज्जुभिः कृतबन्धनमत एवोल्लसद्भिः दीप्यमानैः अहीनमूर्धरत्नांशुभिः सर्पेन्द्रवासुक्यादिशिरोमणिकिरणैः भासुरं भासनशीलम् उच्चैस्तरमत्युन्नतं कपर्दं जटाजूटं दधानं धारयन्तम् अत एव इद्धधातोः दीप्तगैरिकादेः सुमेरुशृङ्गस्य स्वर्णाद्रिशिखरस्य समत्वं सादृश्यमाप्तम्प्राप्तम् । शिवमालुलोक इति पूर्वेणान्वयः ॥ ९ ॥

बिभ्राणमुत्तुङ्ग[1]तरङ्गमालां गंगां जटाजूटतटं[2] भजन्तीम् ।
गौरीं तदुत्सङ्गजुषं हसन्तीमिव स्वफेनैः शरदभ्रशुभ्रैः ॥ १० ॥

सी०—बिभ्राणमिति । पुनः किंभूतम् । उत्तुङ्गोन्नतगामिनो । उत्प्लवनरीतिगामिनीत्यर्थः । तथाभूता तरङ्गमाला कल्लोलपंक्तिर्यस्याः जटाजूटस्य कपर्दस्य तटं समीपभागं भजन्तीम् । तत्र स्थितामित्यर्थः । तथा शरदभ्रवच्छरत्कालिकमेघवच्छुभ्रैर्विशदैः स्वफेनैस्तस्य हरस्योत्सङ्गम् जुषते सेवते ताम् । हराङ्कस्थितामित्यर्थः । गौरीं पार्वतीं हसन्तीमिवोपहास्यं कुर्वतीमिव । सापत्न्यप्रयुक्तमनःसंतापं हास्येन स्फुटीकुर्वाणामिवेत्युत्प्रेक्षा । गङ्गां बिभ्राणं दधानम् ॥ १० ॥

शि०—बिभ्राणमिति । पुनः कीदृशं शिवं । उत्तुङ्गतरङ्गमालामुन्नतोर्मिस्रजं जटाजूटतटं कदर्पसमीपभागं भजन्तीं सेवमानां जटाजूटनिकटस्थितामित्यर्थः । शरदभ्रशुभ्रैः शरत्कालिकमेघवद्विशदैः स्वफेनैः निजतरङ्गैः तदुत्सङ्गजुषं हरक्रोडस्थितां गौरीं पार्वतीं इहसन्तीमिव हास्यं कुर्वन्तीमिव सपत्नीकृतसन्तापं हास्येन व्यक्तं विदधतीमिवेत्यर्थः गङ्गां बिभ्राणं दधानम् ॥ १० ॥

[3]गंगातरङ्गप्रतिबिम्बितैः [4]स्वैर्बहू[5]भवन्तं शिरसा सुधांशुम् ।
चलन्मरीचिप्रचयैस्तु[6]षारगौरैर्हिमद्योतितमुद्वहन्तम् ॥ ११ ॥

सी०—गंगेति । पुनः किंभूतम् । गङ्गातरंगेषु जाह्नवीकल्लोलेषु प्रतिबिम्बितैः स्वैरात्मभिः । शरीरैरिति यावत् । बहूभवन्तमनेकीभवन्तं सुधांशुं चन्द्रं शिरसा मूर्ध्नोद्वहन्तं दधानम् । अत एव पुनः किंभूतम् ।

---

१. कपाल, २. तलम्, ३. तरङ्गः, ४. तैः,
५. बभ्रूभवन्तम् ६. तुषारगौरैर्दिग्द्योतितम्,

तुषारवत्तुहिनवद्गौरैः सितैः। 'गौरोऽरुणे सिते पीते' इति विश्वः। चलन्तः प्रसरन्तो ये मरीचिप्रचयाः किरणसंघातास्तैर्हिमद्योतितम्। द्योतते शोभते स द्योती। शोभावानित्यर्थः। तस्य भावो द्योतिता। द्युतिरित्यर्थः। हिमवद्धिमसंघातवद्द्योतिता द्युतिर्यस्य तम्। पूर्वं धवलाङ्गमप्यनेकचन्द्रशोभाभिरधिकधवलीभूतमित्यर्थः॥ ११॥

शि०—गङ्गेति। पुनः कीदृशम्। गङ्गातरङ्गप्रतिबिम्बितैः मन्दाकिन्यूर्मिदृष्टैः स्वैः स्वकीयैः शरीरैरिति यावत् बहूभवन्तमनेकीभूतं सुधांशुं चन्द्रं शिरसा मूर्ध्ना उद्वहन्तं धारयन्तम्। अत एव तुषारगौरैः हिमवद्विशदैः चलन्मरीचिप्रचयैः चपलकान्तिसमुदायै हिमद्योतितं तुषाराभम्। धवलस्यापि धावल्यसम्पादकैरतिधावल्यसंभवादुत्तरार्द्धगतविशेषणं नानुपपन्नमिति भावः॥ ११॥

भालस्थले लोचनमे[1]धमानधामाधरीभूतरवीन्दुनेत्रम्।
युगान्तकालोचितहव्यवाहं मीनध्वजप्लोषणमादधानम्॥ १२॥

सी०—भालस्थल इति। भालस्थले ललाटदेश एधमानं वर्धमानं यद्धाम तेजस्तेन निमित्तेनाधरीभूते परिभावमुपागते रवीन्दू एव नेत्रे तस्मात्। ताभ्यामधिकतेजस्कमित्यर्थः। यद्वा। एधमानधाम अधरीभूतं चेति पदद्वयम् तत्रैवं व्याख्येम्। एधमानं वर्धमानं धाम तेजो यस्य। वर्धिष्णुतेजस्कमित्यर्थः। तथोन्नतानतस्थानभेदेनाधरीभूते भालस्थनेत्रापेक्षया नीचैर्भूते रवीन्दू एव नेत्रे यस्य। तथा युगान्तकाले प्रलयकाल उचितं परिचितं हव्यवाहमग्निरूपम्। प्रलयकालिकानलरूपमित्यर्थः। अत एव मीनध्वजस्य कामस्य प्लोषणं दाहकम्। 'प्लुष दाहे' कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट्। एवंभूतं लोचनमादधानम् बिभ्राणमित्यर्थः॥ १२॥

शि०—भालस्थल इति भालस्थले ललाटप्रदेशे एधमानधामाधरीभूतरवीन्दुनेत्रम् वर्द्धमानतेजोऽभिभूतार्कचन्द्रनयनं युगान्तकालोचितहव्यवाहं प्रलयकालानलस्वरूपम् अत एव मीनध्वजप्लोषणं मदनदाहकं लोचनं नेत्रमादधानम् धारयन्तम्॥

महार्हरत्नाञ्चितयो[2]रुदारं स्फुरत्प्रभामण्डलयोः समन्तात्।
कर्णस्थिताभ्यां शशिभास्कराभ्यामुपासितं कुण्डलयोश्छलेन॥ १३॥

सी०—महेति। पुनः किंभूतम्। महार्हाणि बहुमूल्यानि यानि रत्नानि मणयस्तै रञ्चितयोः खचितयोरत एवं समन्तात्सर्वत उदारमधिकं यथा स्यात्तथा स्फुरत्प्रसरत्प्रभामण्डलं कान्तिवितानं ययोस्तथाभूतयोः कुण्डलयोः कर्णभूषणयोश्छलेन कैतवेन कर्णयोः श्रवणयोः स्थिताभ्यामुप-

---

१. एधमाननम्, २. उदार,

विष्टाभ्यां शशिभास्कराभ्यां चन्द्रसूर्याभ्यामुपासितं सेवितम् । कुण्डलविषये कैतवात्सूर्याचन्द्रमसोरारोप्यमाणत्वात्ताद्रूप्यरूपकं कैतवापह्नुतिश्चेत्युभयोः संसृष्टिः ।। १३ ।।

शि० --महार्हेति । पुनः कीदृशम् । महार्हरत्नाञ्चितयोः बहुशुल्कमणिखचितयोः अत एव समन्तात् सर्वतः उदारमधिकं यथा स्यात्तथा स्फुरत्प्रभामण्डलयोः दीप्यमानकान्तिसमूहयोः कुण्डलयोः श्रोत्रालंकरणयोः छलेन व्याजेन कर्णस्थिताभ्यां श्रोत्रवर्तिभ्यां शशिभास्कराभ्यां चन्द्रार्काभ्याम् उपासितं सेवितम् । नेमे हरकर्णद्वये कुण्डलेऽपितु तमुपसेवितुं चन्द्रार्काविवेतिभावः ।। १३ ।।

[1]स्वबद्धया कण्ठिकयेव नीलमाणिक्यमय्या कुतुकेन [2]गौर्याः ।
नीलस्य कण्ठस्य परिस्फुरन्त्या कान्त्या महत्या [3]सुविराजमानम् । १४।

सी० – स्वबद्धयेति । पुनः किंभूतम् । परिस्फुरन्त्या परितः प्रसरन्त्या नीलस्य श्यामस्य कण्ठस्यात्मगलस्य महत्या कान्त्या प्रभया सुतरां विराजमानं शोभमानम् । कयेवेत्युत्प्रेक्षते—कुतुकेन कौतुकेन स्वस्मिन्नात्मीयकण्ठे बद्धया निहितया नीलमाणिक्यमय्या नीलरत्नविशेषप्रचुरया गौर्याः कण्ठिकयेव कण्ठभूषयेव । 'कण्ठिका कण्ठभूषणम्' इति मेदिनी १४

शि०—स्वबद्धयेति । पुनः कीदृशम् । कुतुकेन कौतूहलेन स्वबद्धया स्वस्मिन् संयतया नीलमाणिक्यमय्या नीलरत्नबाहुल्यया गौर्याः पार्वत्या कण्ठिकयेव गलभूषयेव परिस्फुरन्त्या सर्वतो देदीप्यमानया नीलस्य श्यामस्य कण्ठस्य महत्या विशिष्टया कान्त्या दीप्त्या विराजमानं शोभमानम् ।। १४ ।।

कालार्दितानां त्रिदशासुराणां चितारजोभिः [4]परिपाण्डुरंगम् ।
महन्महेभाजिनमु[5]द्गताभ्रप्रालेयशैलश्रियमुद्वहन्तम् ।। १५ ।।

सी०--कालेति । पुनः किंभूतम् । कालेनावसानकालिकमृत्युनार्दितानां पीडितानाम् । मृतानामिति यावत् । त्रिदशासुराणां देवदैत्यानां चिताया मृतमण्डपस्य रजोभिर्भस्मभिः परितः पाण्डुरङ्गं शुभ्रमङ्गम् यस्य विहितमृतमण्डपभस्मोद्धूलनमित्यर्थः । इह देवानाममरत्वाभावो दुर्घटः । तत्र ज्ञानाभावेन निहितपदस्य कवेः प्रमाद इत्याहुः । केचित्पुनः । 'मनुजासुराणाम्' इति पाठान्तरं कल्पयन्ति । अथ यद्यपि कालार्दितानमिति विशेषणमुभयविशेष्यान्वयित्वेन द्वितीयविशेष्ये विवक्षितमप्यकालार्दितत्वविशेषणस्य व्यभिचारनियमने नियमनान्निषिद्धं भवति, तथापि प्रथमविशेष्ये लोकोपकारकतापक्षेऽपि व्यभिचरितार्थसम्भवेन विशेषणानुपयोगा-

१. सुबुद्धया २. गौर्या, ३. च विराजमानम्, ४. परिपाण्डुरागम्, ५. उन्नत,

त्संभवप्रयुक्तप्रधानभूतद्वितीयविशेष्यसम्बन्धेन प्रथमविशेष्यान्वयित्वनिरासः एवं चोपकार्यमनुजसहचरितत्वेन लोकोपकारकतापक्षावलम्बेन च विवक्षितार्थस्याविवक्षितत्वात् । संहारकतापक्षे तु प्रायो गतिरन्वेषणीयेत्यलम् तथा महत्परिणाहि महेभस्य महतो गजस्याजिनं चर्म परिदधानमिति पूर्वेण सम्बन्धः । अत एवोद्गतमुदितमभ्रं मेघो यत्र स चासौ प्रालेयशैलो हिमवांस्तस्य श्रियं शोभामुद्वहन्तं दधानम् । निदर्शनालंकारः ॥ १५ ॥

शि०—कालेति । पुनः किम्भूतम् । कालार्दितानां मृत्युपीडितानां त्रिदशासुराणां सुरदानवानां चितारजोभिः श्मशानधूलिभिः परिपाण्डुराङ्गम् अतिशुभ्रविग्रहं महन्महेभाजिनं विशालोन्मत्तकरिचर्म आदधानमिति पूर्वेणान्वयः । अत एवोद्गताभ्रप्रालेयशैलश्रियमुदितपयोदात्महिमगिरिशोभामुद्वहन्तमादधानम् उद्गताभ्रे शैलत्वारोपाद्रूपकम् ॥ १५ ॥

पाणिस्थितब्रह्मकपालपात्रं [1]वैकुण्ठभाजापि निषेव्यमाणम् ।
[2]नरास्थिखण्डाभरणं रणान्तमूलं त्रिशूलं कलयन्तमुच्चैः ॥ १६ ॥

सी०—पाणीति । पुनः किंभूतम् । पाणौ स्थितं ब्रह्मकपालमेव पात्रं यस्य । पाणिना ब्रह्मकरोटीपात्रं बिभ्राणमित्यर्थः । पुनः किंभूतम् । वैकुण्ठभाजापि हरेणापि निषेव्यमाणम् । सेवनमत्र कादाचित्कं नत्विदानींतनमेव त्रयाणामभेदस्यैवेष्टार्थकरत्वात् । एकैव मूर्तिरिति सप्तमसर्गोक्तेरिति भावः । हरापेक्षया हरेरपि लघुत्वसंभावनया संभवत्येव कदाचित्सेवनम् । तथा नराणामस्थिखण्डान्येवाभरणानि यस्य । हिंसाकालसंलग्नस्वशूलत्रितयास्थिकमित्यर्थः । तथा रणे योऽन्तो रिपूणामवसानं तस्य 'मूलं कारणमूल्ययोः' इति मेदिनी । उच्चैर्महत्त्रिशूलमायुधविशेषं कलयन्तं दधानम् ॥ १६ ॥

शि०—पाणीति । पुनः कीदृशम् । पाणिस्थितब्रह्मकपालपात्रं करगतनरमुण्डपात्रं वैकुण्ठभाजा वैकुण्ठालयेन हरिणाऽपि निषेव्यमाणं कदाचित् संश्रीयमाणं नरास्थिखण्डाभरणं मनुष्यास्थिशकलभूषणं रणान्तमूलं संग्रामे रिपुविनाशहेतुम् उच्चैर्महत् त्रिशूलं तदाख्यास्त्रविशेषं कलयन्तं धारयन्तम् ॥ १६ ॥

पुरातनीं ब्रह्मकपालमालां कण्ठे वहन्तं पुनराश्वसन्तीम् ।
[3]उद्गीतवेदां मुकुटेन्दुवर्षत्सुधा[4]भरोघाप्लवलब्धसंज्ञाम् ॥ १७ ॥

सी०—पुरातनीमिति । पुनः किंभूतम् । मुकुटे य इन्दुश्चन्द्रस्तस्माद्वर्ष-

---

१. वैकुण्ठकंकालकरालकायम्, २. सुरास्थिकण्ठाभरणम्; सुरास्थिखण्डाभरणम्, ३. उद्गीर्णवेदीम्; उद्गीर्णवेदाम्, ४. सुधौघसंप्लावन.

न्गलन्य: सुधाभरौघोऽमृतसमूहप्रवाहस्तत्र य आप्लवः स्नानं तेन निमित्तेन लब्धसंज्ञां प्राप्तचेतनामत एवाश्वसन्तीमुज्जीवन्तीम् । अत एव पुनर्भूयोऽप्युद्गीतवेदां पठितश्रुतिकाम् । ब्रह्मत्वादिति भावः । पुरातनीं प्राक्तनीम् । 'सायंचिरम्–' इत्यादिना पुराव्ययाट्ट्युतुटौ । टित्वान्ङीप् । ब्रह्मकपालानां मालां स्रजं कण्ठे गले वहन्तम् । दधानमित्यर्थः ॥ १७ ॥

शि०—पुरातनीमिति । पुनः कीदृशम् । मुकुटेन्दुवर्षत्सुधाभरौघाप्लवलब्धसंज्ञाम् मुकुटस्थचन्द्रपतदमृतनिकरप्रवाहमज्जनात्तचेतनामत एवाश्वसन्तीं उज्जीवन्तीम् अतः एव पुनर्भूयोऽपि उद्गीतवेदां अधीतश्रुतिं पुराभवां पुरातनीं प्राक्कालिकीं ब्रह्मकापलमालां नरमुण्डस्रजं कण्ठे गले वहन्तं धारयन्तम् ॥ १७ ॥

सलीलमंकस्थितया गिरीन्द्रपुत्र्या नवाष्टापद[1]वल्लिभासा ।
विराजमानं शरदभ्रखण्डं परिस्फुरन्त्याचिररोचिषेव ॥ १८ ॥

सी०—सलीलमिति । पुनः किंभूतम् । नवं यदष्टापदं हेम । 'हेमन्यष्टापदं वरे' इति मेदिनी । तस्य वल्ली लता । 'वल्ली तु व्रततिर्लता इत्यमरः । प्रकृत्या तु वल्लीशब्दस्य ह्रस्वत्वमेव । 'कृदिकारादक्तिनः' इति दीर्घत्वम् तस्या भा इव भा यस्याः । तद्वच्छोभमानयेत्यर्थः । तथा सलीलं सक्रीडमङ्कस्थितयाङ्कमारूढया गिरीन्द्रपुत्र्या हिमालयकन्यया परितः स्फुरन्त्या प्रसरन्त्याचिररोचिषा चलप्रभया विद्युता शरदभ्रस्य शरत्कालिकमेघस्य खण्डं शकलमिव विराजमानं शोभमानम् । महेश्वरस्य शुभ्रत्वं भस्मोद्धूलनादिति विवेचनीयम् खण्डौपम्यं च शुभ्रत्वमात्रतात्पर्येण न विरुध्यते ॥१८॥

शि०—सलीलमिति । पुनः कीदृशम् । नवाष्टापदवल्लिभासा स्वर्णलताकान्त्या तथा सलीलं सक्रीडं यथा तथाऽङ्कस्थितया क्रोडविद्यमानया गिरीन्द्रपुत्र्या पार्वत्या परिस्फुरन्त्या परितो देदीप्यमानयाऽचिररोचिषा विद्युता शरदभ्रखण्डं शरत्कालिकजलदशकलमिव विराजमानं शोभमानम् विद्युता शरन्मेघमिव पार्वत्या विराजमानं शिवमित्यर्थः । अत्रोपमाऽलङ्कारः ॥ १८ ॥

दृप्तान्धकप्राणहरं पिनाकं [2]महासुरस्त्री[3]विधवत्वहेतुम् ।
करेण गृह्णन्त[4]मगृह्यमन्यैः [5]पुरास्मरप्लोषणकेलिकारम् ॥ १९ ॥

सी०—दृप्तेति । दृप्तोऽभिमानी योऽन्धकोऽसुरस्तस्य प्राणानां हरमपहारकम् । तद्धननसाधनमित्यर्थः तथा महासुरास्त्रिपुरादयस्तेषां याः स्त्रियस्तासां विधवत्वं वैधव्यम् । मृतभर्तृकत्वमिति यावत् । तस्य हेतुं कारणम् । महासुरविनाशकमित्यर्थः । तथा पुरा पूर्वं स्मरस्य कामस्य

१. तुल्यभासा, २. गजासुर, ३. विधवात्वहेतुम्, ४. असह्यशूलम् ५. सुर,

प्लोषणं दाहं केल्यानायासेन करोतीति तथा। अन्यैः शिवातिरिक्तैरगृह्यं ग्रहीतुमशक्यं पिनाकं धनुः करेण पाणिना गृह्णन्तं दधानम् ॥ १९ ॥

शि०—दृप्तेति। पुनः कीदृशम्। दृप्तान्धकप्राणहरम् अन्धकासुरनाशकं महासुरस्त्रीविधवत्वहेतुं त्रिपुरकलत्रवैधव्यजनकं तथा पुरास्मरप्लोषणकेलिकारं पुरामदनदग्धारं तथाऽन्यैर्हरातिरिक्तजनैरगृह्यं ग्रहणायोग्यं पिनाकं धनुः करेण हस्तेन गृह्णन्तं दधानम् ॥ १९ ॥

भद्रासनं काञ्चनपादपीठं [१]महार्हमाणिक्यविभङ्गिचित्रम् ।
अधिष्ठितं चन्द्रमरीचिगौरैरुद्धोज्यमानं चमरैर्गणाभ्याम् ॥ २० ॥

सी०—भद्रासनमिति। महार्हाणां बहुमूल्यानां माणिक्यानां विभङ्गिभीरचनाभिश्चित्रं विचित्रम्। भद्रं शुभमासनं पट्टादिनिर्मितं यत्र तादृशम्। बध्नन्तमिति पदमध्याहार्यं भद्रासनमासनविशेषणमिति केचिद्व्याचक्षते, तत्त्वध्याहारदोषाद्योगाभ्याससमयाभावेन तदसंभावाच्चोपेक्षणीयमिति। काञ्चनपादपीठं सौवर्णसिंहासनमधिष्ठितम्। तत्रोपविष्टमित्यर्थः। 'अधिशीङ्स्थासाम्–' इति कर्मत्वम्। पुनश्च। चन्द्रमरीचिवद्गौरैर्विशदैश्चमरैः कृत्वा गणाभ्यां कर्तृभ्यामुद्धोज्यमानं प्रेङ्ख्यमानम्। कर्तृद्वित्वे चमरबहुत्वं प्रतिक्षणनूतनग्रहणात्संगमनीयम् ॥ २० ॥

शि०—भद्रासनमिति। पुनः कीदृशम्। महार्हमाणिक्यविभङ्गिचित्रम् बहुशुल्करत्नरचनाविचित्रम् भद्रासनं शुभपट्टादिरचितं काञ्चनपादपीठं हैमसिंहासनम् अधिष्ठितमुपविष्टं तथा चन्द्रमरीचिगौरैः इन्दुकिरणशुभ्रैः चमरैः केशव्यजनैः करणैः गणाभ्यां कर्तृभ्यामुद्धीज्यमानं संसेव्यमानम्। प्रतिक्षणमभिनवादानात्कर्तृकरणगतद्वित्वबहुत्वयोर्नासामञ्जस्यमित्यवधेयम् ॥ २० ॥

शस्त्रास्त्रविद्याभ्यसनै[२]कसक्ते सविस्मयैरेत्य गणैः [३]सुदृष्टे ।
[४]नीराध्यमाने [५]स्फटिकाचलेन सानन्दनिर्दिष्टदृशं कुमारे ॥ २१ ॥

सी०—शस्त्रास्त्रेति। शस्त्राणि धनुरादीनि। अस्त्राणि मोहनादीनि तान्येव विद्यास्तासामभ्यसन एवैकं केवलं सक्तेऽनुरक्ते। तथा गणैः प्रमथप्रभृतिभिरेत्य तत्समीपं प्राप्य सविस्मयैः साश्चर्यैः सद्भिः सुतरां दृष्टे। साभिलाषमवलोकित इत्यर्थः। तथा स्फटिकाचलेन कैलासेन। जङ्गमात्मकेन सतेति शेषः। नीराज्यमाने। आर्तिक्येनेति शेषः। एवं भूते कुमारे पुत्रे सानन्दं सामोदं निर्दिष्टा सन्निहिता दृग्दृष्टिर्येन तम्। सानन्दतया कुमारमवलोकयन्तमित्यर्थः॥ २१ ॥

---

१. महार्घ्यम्, २. अवसक्ते;, गकसक्तैः ३. सुदृष्टम्, ४. संवीज्यमाने, ५. अम्बिकयाञ्चलेन;

शि०—शस्त्रास्त्रेति । शस्त्रास्त्रविद्याभ्यसनैकसक्ते धनुरादिशस्त्रमोहनाद्यस्त्रास्त्रविद्याऽध्ययनैकतत्परे तथा सविस्मयैः आश्चर्यसहितैः गणैः प्रमथैरेत्य समीपमागत्य सुदृष्टे सम्यगवलोकिते स्फटिकाचलेन कैलासेन नीराज्यमाने कृतनीराजते कुमारे शिशौ कार्त्तिकेये सानन्दनिर्दिष्टदृशं सादरार्पितनेत्रम् । सम्यक् पश्यन्तमित्यर्थः ।२१।

**तथाविधं शैलसुताधिनाथं पुलोमपुत्रीदयितो निरीक्ष्य ।**
**आसीत्क्षणं क्षोभपरो [1]नु कस्य मनो न हि क्षुभ्यति धामधाम्नि ।२२।**

सी०—तथाविधमिति । पुलोमपुत्री पुलोमजा शचीति यावत् । 'पुलोमजा शचीन्द्राणी' इत्यमरः । तस्या दयितः प्रियः पुरंदरः । तथाविधं पूर्वोक्तविशेषणविशिष्टं शैलसुतायाः पार्वत्या अधिनाथं महेश्वरं निरीक्ष्य क्षणं मुहूर्तं क्षोभे चित्तसंचलने पर आसक्तः संचलनेन व्याकुल आसीत् ननु महेश्वरदर्शनेन कथं व्याकुल आसीदित्यर्थान्तरं न्यस्यति—हि यतः धामधाम्नि तेजोराशौ कस्य मनश्चेतो न क्षुभ्यति क्षोभं प्राप्नोति । अपि तु सर्वस्यापीत्यर्थः ॥ २२ ॥

शि०—तथाविधमिति । पुलोमपुत्रीदयितः शक्रः तथाविधमुक्तविशेषणविशिष्टं शैलसुताऽधिनाथं निरीक्ष्य दृष्ट्वा क्षणं किञ्चित्कालं क्षोभपरः सञ्चलनाऽऽसक्तः आसीत् बभूव । तथाहि—हि यतः धामधाम्नि तेजःपुञ्जे कस्य जनस्य मनश्चित्तं न क्षुभ्यति न सञ्चलति किन्तु सर्वस्यापीत्यर्थः । तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थस्य समर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥२२॥

**विकस्वराम्भोजवनश्रिया तं दृशां सहस्रेण [2]निरीक्षमाणः ।**
**[3]रोमालिभिः स्वर्गपतिर्बभासे पुष्पोत्कराकीर्ण[4]इवाम्रशाखी ॥ २३ ॥**

सी०—विकस्वरेति । स्वर्गपतिर्महेन्द्रः । विकस्वराणां प्रफुल्लानामम्भोजानां कमलानां वनस्य श्रीरिव श्रीः शोभा यस्य तथाभूतेन दृशां नेत्राणां सहस्रेण तं महेश्वरं निरीक्षमाणो विलोकमानः सन् । रोम्णामालिभिः समूहैर्निमित्तैः पुष्पाणामुत्करेण समूहेनाकीर्ण आसमन्ताद्व्याप्त आम्रशाख्याम्रवृक्ष इव बभासे शुशुभे । उपमालंकारः ॥ २३ ॥

शि०—विकस्वरेति । स्वर्गपतिरिन्द्रः विकस्वराम्भोजघनश्रिया विकसितकमलनिकरशोभेन दृशा चक्षुषां सहस्रेण तं शिवं निरीक्षमाणः पश्यन् सन् रोमालिभिः रोमसमुदायैर्हेतुभिः पुष्पोत्कराकीर्णः कुसुमनिकरव्याप्त आम्रशाखी चूतवृक्ष इव बभासे शुशुभे । कुसुमनिकरव्याप्तश्चूतवृक्षो यथा भासते तथा रोमालिव्याप्तो दिवस्पतिर्बभास इत्यर्थः । अत्र पूर्णोपमाऽलङ्कारः ॥ २३ ॥

---

१. अथ कस्य; अत्र कस्य; अन्तकस्य २. निरीक्ष्यमाणः ३. सर्वांगनेत्रो द्युपति; सर्वांजनेन द्युपतिः ४. अग्रशाखी,

**दृष्ट्वा सहस्रेण दृशां महेशमभूत्कृतार्थोऽति[1]तरां महेन्द्रः ।**
**[2]सर्वाङ्गजातं तदथो [3]विरूपमिव[4] [5]प्रियाकोपकरं विवेद ॥ २४ ॥**

सी०— दृष्ट्वेति दृशां सहस्रेण महेशं शिवं दृष्ट्वा महेन्द्र इन्द्रोऽतितरामतिशयं कृतार्थः कृतकृत्योऽभूत् । अथोऽनन्तरं तत्सर्वाङ्गजातं सर्वेष्वङ्गेषु भूतं विरूपं रोमाञ्चजनितवैरूप्यं प्रियायाः शच्याः कोपकरं क्रोधविधायीव विवेद जज्ञे । सपत्नीसम्बन्धजनितत्वशङ्काकुलत्वादिति भावः ॥

शि०—दृष्ट्वेति । महेन्द्रः शचीपतिः दृशां नेत्राणां सहस्रेण तत्संख्यकैर्नेत्रैरित्यर्थः । महेशमीशं दृष्ट्वा विलोक्य अतितरामतिशयं कृतोऽर्थः प्रयोजनं यस्य स कृतार्थः कृतकार्योऽभूत् । अथोऽनन्तरं तत् सर्वाङ्गजातं निखिलशरीरोद्भूतं विरूपं वैलक्ष्यं पुलकोद्गमजनितवैलक्ष्यमित्यर्थः । प्रियाकोपकरं स्त्रीर्ष्याजनकमिव विवेद ज्ञातवान् । महेश्वरावलोकनजन्यरोमोद्गमस्यान्यस्त्रीसम्पर्कजन्यत्वभियेत्यर्थः । सर्वाङ्गजातवैरूप्ये प्रियाकोपकरत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ २४ ॥

**ततः कुमारं कनकाद्रिसारं पुरंदरः प्रेक्ष्य धृतास्त्रशस्त्रम् ।**
**महेश्वरोपान्तिकवर्तमानं शत्रोर्जयाशां मनसा बबन्ध ॥ २५ ॥**

सी०—तत इति । ततोऽनन्तरम् । पुरंदर इन्द्रः कनकाद्रेः सुमेरोः सार इव सारो वीर्यं यस्य तम् । महाबलीयांसमित्यर्थः । अत एव धृतान्यस्त्राणि शस्त्राणि च येन तथा महेश्वरस्य पितुरुपान्तिके समीपे वर्तमानं तिष्ठन्तं कुमारं प्रेक्ष्य विलोक्य शत्रोस्तारकस्य जय आशां मनसा बबन्ध धृतवान् । एवंभूतोऽयं कुमारो मच्छत्रूञ्जेष्यत्येवेति पुरंदरस्य प्रतीतिरभूदित्यर्थः ॥ २५ ॥

शि०—तत इति । ततस्तदनन्तरम् । पुरन्दरो महेन्द्रः कनकाद्रिसारं सुमेरुवीर्यमितिबलिष्ठामित्यर्थः धृतास्त्रशस्त्रं शस्त्रास्त्रोभयधारिणं तथा महेश्वरोपान्तिकवर्तमानं शिवसमीपस्थितं कुमारं कार्त्तिकेयं प्रेक्ष्य विलोक्य शत्रोर्जयाशां रिपुपराजयाभिलाषं मनसा हृदयेन बबन्ध दधार । पुरन्दरस्य शत्रुजयाशाधृतावतिबलीयस्त्वशस्त्रास्त्रधारणकर्तृत्वपदार्थद्वयस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥ २५ ॥

अथ युग्मेनाह—

**श्रीनीलकण्ठ द्युपतिः पुरोऽस्ति [6]त्वयि प्रणामावसरं [7]प्रतीच्छन् ।**
**[8]सहस्रनेत्रेऽत्र भव त्रिनेत्र [9]दृष्ट्या प्रसाद[10] प्रगुणो [11]महेश ॥ २६ ॥**

---

१. खलु तेन शक्रः २. सर्वाङ्गजातं विकलम्; सर्वाङ्गजातेवदलम्, ३. विपूरम् ४. पुरा, ५. प्रियालोकरम्; प्रियाकोपपरः, ६. तय, ७. ज पृच्छन्, प्रतीक्षन् ८. सहस्रनेत्रोऽत्र भव त्रिनेत्र, सहस्रनेत्रं प्रसर त्रिनेत्र, ९. दृष्ट्वा १० प्रणवः ११. महेशः,

इति प्रबद्धाञ्जलिरेत्य नन्दी निधाय कक्षामभि हेम[1]नेत्रम् ।
प्रसादपात्रं पुरतो [2]भविष्णुरथ स्मरारातिमुवाच वाचम् ॥ २७ ॥

सी०—श्रीति । इतीति । अथ नन्दी गणः पुरतः सर्वेभ्योऽग्रगामितयेन्द्राधिष्ठितकक्षामारभ्य महेश्वराधिश्रितमन्दिरपर्यन्तमहंपूर्विकया । बहुविधगणगणसुरगणावृत्ते मध्यगतदेशेऽहंपूर्विकावलम्बेनेति तात्पर्यार्थः । प्रसादस्येन्द्रागमनिवेदनमुदन्धेनान्धकारिणा दत्तपारितोषिकरूपस्य पात्रं योग्यो भविष्णुर्भवितुमिच्छुः सन्नेत्य । अन्तरिति शेषः । तथा कक्षां द्वारमभि संमुखं हेमवेत्रं सौवर्णयष्टिकां निधाय संस्थाप्य । इयं वेत्रधारिणो रीतिर्वर्णिता । प्रबद्धाञ्जलिः सन्स्मराराति महेश्वरम् । भो श्रीयुक्तनीलकण्ठ सपार्वतीक महेश्वर । द्युपतिरिन्द्रस्त्वयि भवति प्रणामावसरं प्रणतिसमयं प्रतीच्छन्प्रतीक्षमाणः पुरोऽग्रेऽस्ति विद्यते । महेश्वरं प्रणिनंसुः सन्बहिरास्त इत्यर्थः । अतो हे त्रिनेत्र भो महेश, अत्र पुरोवर्तिनि सहस्रनेत्र इन्द्रे दृष्टया दर्शनेन प्रसादप्रगुणः प्रसादविधानानुकूलो भव । आत्मीयदर्शनरूपं प्रसादं तदुपरि कुर्वित्यर्थः । इत्येवंभूतां वाचमुवाचोक्तवान् ॥ २६-२७ ॥

शि०—श्रीति । इतीति । अथानन्तरमिन्द्रागमनोत्तरमित्यर्थः । नन्दी गणः पुरतोऽग्रतः प्रसादपात्रं शक्रागतिनिवेदनहर्षतो स्वामिना दत्तपारितोषिकयोग्यः भविष्णुर्भवितुमिच्छुः सन् एत्य आगत्यान्तरिति शेषः । तथा कक्षामभि द्वारसम्मुखं हेमवेत्रं स्वर्णयष्टिं निधाय संस्थाप्य प्रबद्धाञ्जलिः सन् स्मराराति मदनारिं शिवम् । हे श्रीनीलकण्ठ सपार्वतीक शिव, द्युपतिर्महेन्द्रः त्वयि भवति प्रणामावसरं प्रणतिकालं प्रतीक्षन् प्रत्याशाविषयं कुर्वन् पुरोऽग्रेऽस्ति तिष्ठति । अतोऽस्मात्करणात् अत्राऽस्मिन् सहस्रनेत्रे द्युपतौ दृष्ट्या दर्शनेन प्रसादप्रगुणः प्रसन्नताविधानतत्परो भव इतीत्थं वाचं वाक्यमुवाच जगाद । प्रसन्नो भूत्वा स्वकीयदर्शनमस्मै देहीत्यर्थः ॥

[3]पुरा [4]सुरेन्द्रं सुरसङ्घसेव्यं त्रिलोकसेव्यास्त्रिपुरासुरारिः ।
प्रीत्या [6]सुधासारनिधारिणेव ततोऽनुजग्राह विलोकनेन ॥ २८ ॥

सी०—पुरेति । ततोऽनन्तरं निवेदनानन्तरं त्रिलोकसेव्यस्त्रैलोक्यपूजनीयस्त्रिपुरासुरस्यारिः शत्रुर्महेश्वरः सुरसङ्घेन देवसमूहेन सेव्यं पूज्यं सुरेन्द्रमिन्द्रं पुरा प्रथमं प्रीत्या निमित्तेन सुधासारम् । अमृततुल्यमित्यर्थः । निधारयति नितरां धारारूपं करोति । 'तत्करोति–' इति करोत्यर्थे

१ हेमदण्डम्, २. भविष्णुमन्वन्धकारातिम्, भविष्णुरधिस्मरारातिम्,
३. मुदा, ४. असुरारिम् ५. त्रैलोक्यसेव्यः, त्रैलोकसेव्यः,
६. सुधासारविसारिणा, सुधासारविधारिणा,

णिच् । सुधासारधारां वर्षतेत्यर्थः । एवंभूतेनेव विलोकनेन दर्शनेन।नुजग्राह । तदुपर्यनुग्रहमकार्षीदित्यर्थः स्वामिनां प्रसादपूर्वकमवलोकनमेव भृत्यानामुपरि महानुग्रह इति भावः ।। २८ ।।

शि०—पुरेति । ततस्तदनन्तरं नन्दिकर्तृकनिवेदनोत्तरमित्यर्थः । त्रिलोकसेव्यो लोकत्रयाराध्यः त्रिपुरशत्रुः शिवः सुरसंघसेव्यं देवसमूहपूज्यं सुराणां देवानामिन्द्रं श्रेष्ठं शक्रं पुरा पूर्वं प्रीत्या स्नेहेन सुधासारनिधारिणेव पीयूषधारावर्षणं कुर्वतेव विलोकनेन दर्शनेन अनुचकम्पे । महेश्वरः प्रेम्णा प्राक् शक्रं पश्यतिस्मेत्यर्थः ।।२८।।

किरीटकोटिच्युतपारिजात[1]पुष्पोत्करेणानमितेन मूर्ध्ना ।
[2]स्वर्गैकवन्द्यो [3]जगदेकवन्द्यं तं देवदेवं प्रणनाम देवः ।। २९ ।।

सी०—किरीटेति । स्वर्ग एवैकं केवलं वन्द्यो नमस्करणीयो देव इन्द्रः । आनमितेनात एव किरीटकोट्याश्च्युतोऽधःपतितः पारिजातपुष्पाणां मन्दारकुसुमानामुत्करः समूहो यस्मात्तथाभूतेन मूर्ध्ना शिरसा जगतामेकमेव वन्द्यं नमस्करणीयम् । एतत्सदृशो जगतां वन्द्यतयान्यो न विद्यत इत्यर्थः । तं देवदेवं महेश्वरं प्रणनाम नमश्चक्रे । २९ ।।

शि०—किरीटेति । स्वर्गैकवन्द्यः स्वर्गे एव केवलं वन्द्यः प्रणम्यो देवो महेन्द्रः आनमितेन समन्तान्नम्रीभूतेन अत एव किरीटकोटिच्युतपारिजातपुष्पोत्करेण कोटिमुकुटस्रस्तमन्दारकुसुमप्रचयेन मूर्ध्ना शिरसा जगदेकवन्द्यं त्रैलोक्यस्तुत्यं तं देवदेवं शिवं प्रणनाम नमश्चकार ।। २९ ।।

अनेकलोकैकनमस्क्रियार्हं महेश्वरं तं [4]त्रिदशेश्वरः सः ।
भक्त्या नमस्कृत्य कृतार्थतायाः पात्रं पवित्रं परमं बभूव ।। ३० ।।

सी०—अनेकेति । स त्रिदशेश्वर इन्द्रो भक्त्या । भक्तिपूर्वकमित्यर्थः । अनेन त्रयो ये लोकास्तेषामेक एव नमस्क्रियायामर्हं उचितस्तथोक्तं तं महेश्वरं नमस्कृत्य 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इत्युक्तेर्द्वितीया परममत्यन्तं पवित्रं विशदं कृतार्थतायाः कृतकृत्यत्वस्य पात्रं स्थानं बभूव । महेन्द्रो महेश्वरं प्रणम्य कृतकृत्योऽभूदित्यर्थः ।। ३० ।।

शि०—अनेकेति । स त्रिदशानामीश्वरस्त्रिदशेश्वरो महेन्द्रः भक्त्या सेवया अनेकलोकैकनमस्क्रियार्हं त्रैलोक्यप्रणम्यं तं महेश्वरं शिवं नमस्कृत्य प्रणम्य परमतिशयं पवित्रं विगतकिल्बिषं कृतोऽर्थो येन स तस्य, भावस्तत्ता तस्याः कृतार्थतायाः कृतकृत्यस्य पात्रमास्पदं बभूव जातः । शिवं प्रणम्य शक्रः कृतार्थो जात इत्यर्थः ।।

---

१. पुष्पेण भक्त्या, २. स्वर्गैकवन्द्यः ३. जगदेकदेवं ननाम देवः स सहस्रनेत्रः, ४. त्रिदिवेश्वरः,

सुभक्तिभाजामधि [1]पादपीठ प्रान्तक्षितिं नम्रतरैः शिरोभिः ।
ततः प्रणेमुः पुरतो [2]गणानां गणाः [3]सुराणां क्रमतः पुरारिम् । ३१ ॥

सी०—सुभक्तीति । ततोऽनन्तरम् । सुभक्तिं भजन्ति तेषाम् । 'भजो ण्विः' इति ण्विः । सुराणामिन्द्रातिरिक्तानां सुराणां गणाः । गणानां प्रमथप्रभृतीनां पुरतोऽग्रे । अनेन मर्यादातिरिक्तकरणस्य दुर्विधेयत्वमुक्तम् । पादपीठस्य चरणाधारपीठविशेषस्य प्रान्तक्षितिः समीपभूमिस्तामध्यधिकृत्य । आधारभूतां कृत्वेत्यर्थः । अत्राधिशब्देनाधिकरणमाधारः । स चौपश्लेषिकः । अध्यानामाकृतिगणत्वादधिशब्दोऽत्राधिकरणपर्यायोऽव्ययम् । अन्यथामन्तत्वमन्वेषणीयम् । नम्रतरैः शिरोभिः पुरारिं महेश्वरं क्रमतः क्रमेण प्रणेमुर्नमश्चक्रुः ॥ ३१ ॥

शि०—सुभक्तीति । ततस्तदनन्तरं त्रिदशेश्वरनमस्कृत्युत्तरमित्यर्थः । सुभक्तिभाजां सद्भक्तिशालिनां सुराणां देवानां शक्रव्यतिरिक्तानामित्यर्थः गणाः संघा गणानां प्रमथानां पुरतोऽग्रे पादपीठान्तक्षितिं चरणाधारप्रदेशान्तिकभूमिमधि आश्रित्य आधारभूतां विधायेत्यर्थः । नम्रतरैरानतैः शिरोभिः क्रमतः यथाक्रमम् पुरारिं त्रिपुरशत्रुं हरं प्रणेमुः नमश्चक्रुः ॥ ३१ ॥

गणोपनीते प्रभुणोपदिष्टः[4] [5]शुभासने हेममये पुरस्तात् ।
प्रापोपविश्य [6]प्रमुदं सुरेन्द्रः [7]प्रभुप्रसादो हि मुदे न कस्य ॥ ३२ ॥

सी०—गणेति । सुरेन्द्रः । गणेन केनचिदुपनीते । प्रभुशासनेनेति शेषः । तथा हेममये सुवर्णमये शुभासने प्रभुणा हरेणोपदिष्ट आरोढुमाज्ञप्तः सन् । पुरस्तात्प्रभोरग्रत एवोपविश्य स्थित्वा प्रकृष्टां मुदं हर्षं प्राप । तथा हि । प्रभुप्रसादः प्रभुकर्तृकोऽनुग्रहः कस्यानुगतस्य मुदे प्रीत्यै न भवति । अपि तु सर्वस्यापीति काक्वा व्याख्येयम् ॥ ३२ ॥

शि०—गणेति । सुरेन्द्रः शक्रः गणोपनीते गणेन प्रमथानां मध्ये केनचिदेकेनोपनीते समानीते हेममये स्वर्णप्रचुरे शुभासने भद्रोपवेशनास्तरणे प्रभुणा शिवेनोपदिष्टः कृतादेशः सन् पुरस्तात्प्रभोरग्रे एवोपविश्य स्थित्वा प्रमुदं प्रकृष्टां मुदं हर्षं प्राप लेभे । तथा हि—प्रभुप्रसादः स्वाम्यनुग्रहः कस्य जनस्येति शेषः मुदं प्रीत्यै न भवति, अपि तु सर्वस्यापि प्रीत्यै भवतीत्यर्थः । तुर्यपादगतसामान्यार्थेन पादत्रयगतविशेषार्थसमर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ३२ ॥

---

१. पादपीठं प्रीताक्षिभिः, पादपीठ प्रान्तीकृतैः २. सुराणाम्, ३. सशक्राः क्रमतः स्मरारिम्, सुरेन्द्रक्रमतः पुरारिम्, ४. उपदिष्टे, ५. नृपासने, भ्रुवासने; ६. प्रभवम्, ७. प्रभोः प्रसादः

क्रमेण [1]चान्येऽपि विलोकनेन संभाविताः सस्मितमीश्वरेण ।
[2]उपाविशंस्तोषविशेषमाप्ता दृग्गोचरे तस्य [3]सुराः समग्राः ॥ ३३ ॥

सी०—क्रमेणेति ईश्वरेण महेश्वरेण क्रमेणानुक्रमतोऽन्येऽपि च समग्राः सुराः सस्मितं सप्रसादव्यञ्जकहासं यथा तथा विलोकनेन सम्भाविता आहृता अत एव तोषविशेषं संतोषाधिक्यमाप्ताः प्राप्ता सन्तस्तस्य प्रभोर्दृग्गोचरे दृष्टिविषय उपाविशंस्तस्थुः । यथा युगापदेव भगवान्सर्वानवलोकयेत्तथैव सर्वे तस्थुरित्यर्थः ॥ ३३ ॥

शि०—क्रमेणेति । महेश्वरेण शिवेन क्रमेण अनुक्रमशोऽन्येऽपि सुरेन्द्रातिरिक्ता अपि समग्राः सर्वाः । सुरा देवाः, सस्मितं प्रसादसूचककिञ्चिद्धास्ययुक्तं यथा तथा विलोकनेन दर्शनेन सम्भाविताः सत्कृता अत एव तोषविशेषं सन्तोषबाहुल्यमाप्ताः प्राप्ताः सन्तः तस्य महेश्वरस्य दृग्गोचरं दृष्टिविषये एव उपाविशन् संतस्थुः । प्रभोरेकदैव सुरानकरावलोकनं यथा भवेत्तथोपविविशुरित्यर्थः ॥ ३३ ॥

अथाह देवो बलवैरिमुख्यान् [4]गीर्वाणवर्गान्करुणार्द्रचेताः ।
कृताञ्जलीकान[5]सुराभिभूता[6]न्ध्वस्तश्रियः [7]श्रान्तमुखानवेक्ष्य ॥ ३४ ॥

सी०—अथेति । अथ देवो हरो बलवैरीन्द्रः स मुख्यो येषु तथाभूतान्गीर्वाणवर्गान्देवसमूहान् । असुरेण तारकेणाभिभूताञ्जितानत एव ध्वस्तश्रियो नष्टलक्ष्मीकानत एव श्रान्तं खिन्नं मुखं येषाम् । नष्टमुखतेजस इत्यर्थः । अत एव कष्टनिवृत्त्यर्थं कृतोऽञ्जलिर्यैस्तानवेक्ष्य दृष्ट्वा करुणयार्द्रं स्निग्धं चेतो यस्य तथा भूतः सन्नाहोवाच ॥ ३४ ॥

शि०—अथेति । अथानन्तरं सुरवर्गोपवेशनोत्तरमित्यर्थः । देवो महेश्वरो बलवैरिमुख्यान् इन्द्रप्रधानान् गीर्वाणवर्गान् सुरवृन्दान् असुराभिभूतान् तारकोपद्रवितान् अत एव ध्वस्तश्रियः विनष्टलक्ष्मीकः अत एव श्रान्तमुखाम् खिन्नाननान् अतएव कृताञ्जलीकान् बद्धाञ्जलीन् दृष्ट्वा विलोक्य करुणार्दचेताः दयास्निग्धमानसः सन् आह जगाद ॥ ३४ ॥

अहो बतानन्तपराक्रमाणां [8]दिवौकसो वीरवरायुधानाम् ।
हिमोदबिन्दुग्लपितस्य किं यः पद्मस्य दैन्यं दधते मुखानि ॥ ३५ ॥

सी०—अहो इति । अहोशब्दोऽत्र हेशब्दपर्यायः । हे दिवौकसो देवाः, अनन्तपराक्रमाणामपारविक्रमाणाम् । तथा वीरान्वृणतेऽभिलषन्ति । वीर-

१. अन्येन, २. उपाविशुः ३. पुरः समेताः ४. गीर्वाणमुख्यान्,
५. असुरावधूतान्, ६ ध्वस्तप्रियान् ७. गर्विणमुखान्,
८. दिवौकसाम्,

वरास्तल्लिगमिषाशालीनीत्यर्थः। एवं भूतान्यायुधानि येषां तथाभूतानां वो युष्माकं मुखानि हिमस्य यदुदमुदकं तस्य यो बिन्दुस्तेन ग्लपितस्य क्षीणहर्षीकृतस्य। 'उदकस्योदः संज्ञायाम्' इत्युदादेशः। तथाभूतस्य पद्मस्य दैन्यं दीनतां किं कुतो दधते बिभ्रति। यूयं कुतः कारणतो भ्रष्टलक्ष्मीका इति प्रश्नाशयः॥ ३५॥

शि०—अहो इति। सम्बोधनेऽर्थेऽत्रत्याऽहो शब्दो बोध्यः। हे दिवौकसः सुराः अनन्तपराक्रमाणाम् अनन्तोऽपरिमितः पराक्रमो येषां ते तथोक्तानामतिवीर्यवतां तथा वीरवराऽऽयुधानां विरोचितास्त्रधारिणां वो युष्माकं मुखानि वदनानि हिमोदबिन्दुग्लपितस्य तुषारोदकक्षीणस्य पद्मस्य कमलस्य दैन्यं मालिन्यं किं कस्मात्कारणात् दधते धारयन्ति। कुतो केन हेतुना मालिन्यमिति प्रश्नार्थः॥ ३५॥

**स्वर्गौकसः स्वर्गपरिच्युताः किं [1]स्वपुण्यराशौ [2]सुमहत्तमेऽपि।**
**चिह्नं चिरोढं [3]न तु यूयमेते निजाधिपत्यस्य परित्यजध्वम्॥ ३६॥**

सी०—स्वर्गौकस इति। हे स्वर्गौकसः स्वपुण्यराशौ स्वर्गप्राप्तिनिमित्तपुण्यव्रजे सुतरां महत्तेऽपि। अक्षयेऽपीत्यर्थः। किं कुतः स्वर्गपरिच्युताः स्वस्थानभ्रष्टाः। भ्रंशे किं कारणमिति प्रश्नाशयः। अथ चाश्वासयति—एते यूयं चिरोढं बहुकालमूढं निजाधिपत्यस्य स्वीयस्वामितायाश्चिह्नं छत्रचामरादि तु न परित्यजध्वं मा परित्यजत। विध्यर्थे लोट्। त्यजध्वमित्यात्मनेपदं चिन्त्यम्॥ ३६॥

शि०—स्वर्गौकस इति। हे स्वर्गौकसो देवाः स्वपुण्यराशौ निजसुकृतपुञ्जे सुमहत्तमेऽविनष्टेऽपि किं किमर्थं स्वर्गपरिच्युताः दिवो भ्रष्टाः। किं हेतुको वो निजच्युतिरिति प्रश्नः। आश्वासनमाह—एते यूयं चिरोढं बहुकालप्राप्तं निजाधिपत्यस्य स्वस्वामित्वस्य चिह्नं लक्षणं छत्रचामरादि मा परित्यजध्वं मा जहीत। पुण्यक्षये दिवश्च्युतिरुचिता नान्यथेति छत्रचामरदिराधिपत्यलक्षणस्य त्यागो न विधेय इत्यर्थः॥ ३६॥

**[4]दिवौकसो देवगृहं विहाय मनुष्यसाधारणतामवाप्ताः।**
**यूयं कुतः [5]कारणतश्चरध्वं [6]महीतले [7]मानभृतो महान्तः॥ ३७॥**

सी०—दिवौकस इति। हे दिवौकसः महान्तोऽत एव मानभृतो मनस्विनो यूयं कुतः कारणतः कारणाद्देवगृहं स्वर्गं विहाय परित्यज्य मनुष्यसाधारणतां मानवसाम्यमवाप्ताः सन्तो महीतले चरध्वम्। संप्रश्ने लोट्। अत्राप्यात्मनेपदं चिन्त्यम्॥ ३७॥

---

१. सुपुण्यराशौ, २. सुमहत्तरे, ३. बत, ननु, ४. स्वर्गौकसः, ५. चरध्वे, ६. महीभृतः, ७. मानधनाः

शि०—दिवौकस इति। हे दिवौकसः, सुराः महान्तः पूज्याः अत एव मानभृता मनस्विनो यूयं कुतः कारणतः कस्माद्धेतोः देवगृहं स्वर्ग विहाय त्यक्त्वा मनुष्यसाधारणतां मनुजसादृश्यमवाप्ताः प्राप्ताः सन्तः महीतले भूलोके चरत्वम् परिभ्रमन। परस्मैपदिनश्चरतेरात्मने पदं प्रामादिकमेव ॥ ३७ ॥

**अनन्यसाधारणसिद्धमुच्चै[१]स्तद्दैवतं धाम [२]निकामरम्यम्।**
**कस्माद[३]कस्मान्निरगा[४]द्भवद्भ्यश्चिरार्जितं पुण्यमिवा[५]पचारात् ॥ ३८ ॥**

सी०—अनन्येति। हे देवाः अन्यसाधारणेनान्यदीयदेशतुल्यत्वेन सिद्धं साधितम्। रचितमित्यर्थः। तन्न भवतीति तथोक्तमत एव निकामं बहु रम्यं मनोहरमुच्चैर्महत्तत्प्रसिद्धं दैवतं धाम स्वर्गमकस्मात्सहसैव कस्माद्धेतोः भवद्भ्योऽपचारात्पापाद्धेतोश्चिरार्जितं बहुकालेन सम्पादितं पुण्यमिव निरगान्निर्गतम्। 'तुह्मांपासून स्थल कसे जाहाले' इति लोकोक्तिरीतिरनुसंधेया ॥ ३८ ॥

शि०—अनन्येति। हे देवाः; अनन्यसाधारणसिद्धं लोकोत्तररचितम् अत एव निकामरम्यमतिमनोज्ञमुच्चै विशिष्टं तत्प्रसिद्धं दैवतं देवतासम्बन्धि धाम स्थानं स्वर्लोकमित्यर्थः। अकस्मात् सहसा ( हठात् ) कस्मादपचारात् कुतो दुष्कृताद्धेतोः चिरार्जितं बहुकालसम्पादितं पुण्यं सुकृतमिव भवद्भ्यः सकाशात् निरगात् गतम्। अत्रोपमालङ्कारः ॥ ३८ ॥

**[६]दिवौकसो वो हृदयस्य कस्मात्तथाविधं धैर्यमहार्यमार्याः।**
**अगादगाधस्य जलाशयस्य [७]ग्रीष्मातितापादिवशादिवाम्भः ॥ ३९ ॥**

सी०—दिवौकस इति। हे दिवौकसो, हे आर्याः तथाविधं तादृशमहार्यमनिर्वचनीयं वो युष्माकं हृदयस्य मनसो धैर्य कस्माद्धेतोग्रीष्मेण योऽतितापादिः संतापादिः तस्य वशाद्धेतोः अगाधस्य जलाशयस्याम्भ इव। अगादनशत्। अन्यत्र शुष्यतीत्यर्थः। धैर्य न हेयमिति भावः ॥३९ ॥

शि०—दिवौकस इति। हे दिवौकसो देवाः हे आर्याः, तथाविधं तादृशम् अहार्यमकथनीयं वो युष्माकं हृदयस्य चेतसो धैर्यं गाम्भीर्य कस्मात्कारणात् ग्रीष्मातितापादिवशात् ग्रीष्मजन्यसन्तापाधिक्यात् अगाधस्याऽतलस्पर्शस्य जलाशयस्य पुष्करिण्यादेरम्भो जलमिव अगात् ननाश। अम्भोगाम्भीर्ययोरुपमानोपमेयभावादुपमाऽलङ्कारः ॥ ३९ ॥

---

१. सुदैवतम् तदैव तम्, २. निकामकामम्; निकामकाम्यम्,
३. यमाद्यैः ४. अगाधम्, ५. अपवादाम्, ६. विरुद्धतः,
७. ग्रीष्मातपापत्तिवशात्,

संप्रति स्वयमेव भयनिमित्तं दर्शयति—

सुराः [1]सुराधीशपुरःसराणां [2]समीयुषां वः सममातुराणाम्।
[3]तद्ब्रूत लोकत्रयजित्वरात्किं [4]महासुरात्तारकतो विरुद्धम् ॥ ४० ॥

सी०—सुरा इति। हे सुराः, तत्तस्मादातुराणामत एव समं सह समीयुषामागतानां तथा सुराधीशपुरःसराणामिन्द्रप्रमुखानां वो युष्माकं लोकत्रयजित्वरात्त्रैलोक्यजेतुस्तारकतस्तारकसंज्ञकान्महासुराद्विरुद्धं वैरं किम्। स भवतां वैरी किमिति प्रश्नः। ब्रूत वदत ॥ ४० ॥

शि०—सुरा इति। हे सुरा देवाः तत्तस्मात्कारणात् आतुराणामाकुलितानामतएव समं सह समीयुषां समागतानां तथा सुराधीशपुरःसराणां शक्रप्रधानानां वो युष्माकं लोकत्रयजित्वरात् त्रिलोकीजयिनः तारकतः तारकनाम्नो महासुरात् विरुद्धं विरोधः किम् अस्तीति शेषः। किमसौ शत्रुर्भवतामिति प्रश्नः। ब्रूत कथयत यूयमिति शेषः ॥ ४० ॥

पराभवं तस्य महासुरस्य [5]निषेद्धुमेकोऽहमलंभविष्णुः।
दावानलप्लोषविपत्तिमन्यो [6]महाम्बुदात्किं हरते वनानाम् ॥ ४१ ॥

सी०—पराभवमिति। भो देवाः। तस्य महासुरस्य तारकस्य तत्कर्तृकम्। 'कर्तृकर्मणोः कृति' इति कर्तरि षष्ठी। पराभवं पराजयम्। अर्थाद्योष्माकीणमित्यर्थः। निषेद्धुं निवारयितुमहमेक एवालम्भविष्णुः। समर्थोऽस्मीत्यर्थः। तथा हि। वनानां सम्बन्धिनीं दावानलस्य दावानलकर्तृको यः प्लोषो दाहः स एव विपत्तिस्तां महाम्बुदान्महतो मेघादन्योऽपरः। 'अन्यारात्–' इत्यादिना पञ्चमी। हरते किम्। अपि तु नैवेति काक्वा व्याख्येयम् ॥ ४१ ॥

शि०—पराभवमिति। भो देवाः, तस्य महासुरस्य तारकस्य (अत्र कृद्योगा षष्ठी) तत्कर्तृकमित्यर्थः। पराभवं पराजयं निषेद्धुं वारयितुम् एक एवाहम् अलंभविष्णुः समर्थोऽस्मीतिशेषः। तथाहि वनानामरण्यानां सम्बन्धिनीं दावानलप्लोषविपत्तिं वनाग्निकर्तृकदाहात्मकव्यथां महाम्बुदात् महतो जलधरादन्योऽपरः किं हरते किन्तु नैव हरत इत्यर्थः। यथा मेघव्यतिरिक्तस्य न वनाग्निशामकत्वं तथा मद्व्यतिरिक्तस्य तारकविनाशकत्वं नेतिभावः। उत्तरार्द्धगतसामान्यार्थतः पूर्वार्द्धगतविशेषार्थस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः ॥ ४१ ॥

---

१. पुरारातिपुरोविवर्णम्, पुरारातिपुरः सुवर्णम्; सुनासीरपुरःसराणाम् २. समीयिवांसं सममातुराणाम्, समीहितं यतसममातुराणाम्, समीयुषां सामसमातुराणाम् ३. ब्रूत लोकत्रयजित्वरा, भुतलोकत्रयजित्वराः, ४. महासुरप्रायकतः, ५. निषेद्धकामः, ६. अरण्यस्य हर्तुं जलदात्प्रभुः किम्.

इतीरिते मन्मथमर्दनेन सुराः सुरेन्द्रप्रमुखा मुखेषु ।
[1]सान्द्रप्रमोदाश्रुतरङ्गितेषु दधुः श्रियं सत्वरमाश्वसन्तः ॥ ४२ ॥

सी०--इतीति । मन्मथमर्दनेन महेश्वरेण इतीत्यमीरिते उक्ते सति सुरेन्द्रप्रमुखाः सुरा देवा आश्वसन्तो विश्वसन्तः सन्तः । उज्जीवन्त इति यावत् । सान्द्राणि सघनानि यानि प्रमोदाश्रूण्यानन्दबाष्पाणि तैस्तरङ्गितेषु तरङ्गयुक्तेषु मुखेषु सत्वरं शीघ्रम् । महेश्वरवाक्यस्यात्यानन्दहेतुत्वाच्छैघ्यम् । श्रियं शोभां दधुर्बभ्रुः ॥ ४२ ॥

शि०--इतीति । मन्मथमर्दनेन मदनविनाशकेन हरेण इत्युक्तप्रकारेणेरितेऽभिहिते सति सुरेन्द्रः प्रमुखो येषु ते तथोक्ताः शक्रप्रधानाः सुरा देवा आश्वसन्त उज्जीवन्तः सन्तः सान्द्रप्रमोदाश्रुतरङ्गितेषु प्रचुरानन्दबाष्पोर्मिषु मुखेषु सत्वरं द्रुतं श्रियं शोभां दधु दधुः । हरोक्तिश्रवणाद्द्रुतमानन्दं प्रापुरित्यर्थः । सुराणां मुखशोभारणे मन्मथमर्दनोक्तिरूपपदार्थस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गम् ॥४२॥

ततो गिरीशस्य गिरां [2]विरामे जगाद [3]लब्धेऽवसरे [4]सुरेन्द्रः ।
भवन्ति वाचोऽवसरे प्रयुक्ता ध्रुवं [5]फलाविष्टमहोदयाय ॥ ४३ ॥

सी०--तत इति । ततोऽनन्तरं गिरीशस्य हरस्य गिरां वाचां विरामे सति लब्धे प्राप्तेऽवसरे समये सुरेन्द्र इन्द्रो जगादोवाच । तथा हि अवसरे काले प्रयुक्ताः प्रेरिताः । उक्ता इति यावत् । वाचो गिरः फलेनाविष्टः पूर्णो यो महोदयो महर्द्धिस्तस्मै तदर्थं भवन्ति ध्रुवम् । क्रियाग्रहणात्संप्रदानत्वम् । तादर्थ्ये वा चतुर्थी ॥ ४३ ॥

शि०--तत इति । ततस्तदनन्तरं महेश्वराभिधानानन्तरमित्यर्थः । सुरेन्द्रः शक्रः गिरीशस्य शिवस्य गिरां वचनानां विरामेऽवसाने सति लब्धे प्राप्तेऽवसरे काले जगाद् प्रत्यब्रवीत् । तथाहि—अवसरे काले प्रयुक्ताः कथिता वाचः वचनानि फलाविष्टमहोदयाय फलाढयसमृद्धये भवन्ति सफलानि जायन्त इत्यर्थः । अर्थान्तरन्यासोऽलङ्कारः ॥ ४३ ॥

ज्ञानप्रदीपेन तमोपहेनाविनश्वरेणास्खलितप्रभेण ।
भूतं भवद्भावि च यच्च [6]किंचित्सर्वज्ञ सर्वं तव [7]गोचरं तत् ॥ ४४ ॥

सी०--ज्ञानेति । हे सर्वज्ञ, तमोपहेनाज्ञानहन्त्राविनश्वरेणाक्षयेणास्खलितप्रभेणास्खलितकान्तिना । अनेन विशेषणेनामन्दकान्तित्वं हि बोद्धव्यम् । अतो न पौनरुक्त्यम् । तथाभूतेन ज्ञानप्रदीपेनात्मज्ञानरूपदीप-

---

१ सान्द्रप्रमोदाः सुचिरस्मितेषु, २. विताने, ३. लब्धावसरे, ४. सुरेशः, ५. अविस्पष्टफलोदयाय, प्रभाविष्टफलोदयाय, ६. सर्वत्र, ७ गोचर

केन भूतं व्यतीतं भवद्वर्तमानं भावि भविष्यच्च यत्किंचित्तत्सर्वमेव तव गोचरं ज्ञानविषयम् । अस्तीत्यर्थः। आत्मज्ञानेन त्रैकालिकस्यापि कर्मादि-कस्य ज्ञातासीति भावः ॥ ४४ ॥

शि०—ज्ञानेति । हे सर्वज्ञ, तमोपहेनाज्ञाननाशकेन अविनश्वरेण अक्षयेण अस्खलितप्रभेण अविहततेजस्केन ज्ञानप्रदीपेनात्मज्ञानात्मदीपेन भूतमतीतं भवद्वर्त-मानं भावि भविष्यच्च यत्तत्सर्वं तव भवतो गोचरं बुद्धिविषयं वर्त्तते इति शेषः । आत्मज्ञानिनस्त्रिकालज्ञा भवन्तीति भावः ॥ ४४ ॥

दुर्वार[1]दोरुद्यमदुःसहेन यत्तारकेणामरघस्मरेण ।
[2]तदीशतामाप्तवता निरस्ता वयं दिवोऽमी [3]वद किं न वेत्सि ॥ ४५ ॥

सी०—दुर्वारेति । हे भगवान्, दुर्वारो दुर्धर्षणीयो यो दोरुद्यमो भुज-दण्डबलं तेन कारणेन दुःसहेनात एवामराणां देवानां घस्मरेण वधकेन । 'घस्मरो वधकेऽपि च' इति मेदिनी । 'सृघस्यदः क्मरच्' इति क्मरच्प्रत्ययः ईशतां स्वर्गाधीशतामाप्तवता तारकेणामी वयं दिवः स्वर्गसकाशाद्यन्नि-रस्ता निष्क्रामितास्तन्न वेत्सि किम् । अपितु वेत्स्येव । वद । वाक्यार्थः कर्म ॥ ४५ ॥

शि०—दुर्वारेति । हे महेश्वर, दुर्वारदोरुद्यमदुःसहेन दुर्धर्षणीयभुजदण्ड-दुःसहेन अतएवामरघस्मरेण सुरघातुकेन अत एव तदीशताम् स्वर्गाधिपत्यमाप्तवता प्राप्तवता तारकेण तन्नाम्नाऽसुरेण अमी वयं देवा दिवः स्वर्गान्निरस्ताः निष्का-सिताः तन्न वेत्सि जानासि किम् किन्तु वेत्स्येवेत्यर्थः ॥ ४५ ॥

विधेरमोघं स[4] वरप्रसादमासाद्य सद्यस्त्रिजगज्जिगीषुः ।
[5]सुरानशेषानहकप्रमुख्यान्दोर्दण्डचण्डो मनुते तृणाय ॥ ४६ ॥

सी०—विधेरिति । हे भगवन् स तारको विधेर्ब्रह्मणः सकाशादमोघं सफलं वरप्रसादमभिलाषानुग्रहम् । 'वरोऽभिलषिते वरे' इति मेदिनी । आसाद्य प्राप्य सद्यः सहसैव दोर्दण्डाभ्यां भुजदण्डाभ्यां चण्डः प्रचण्डः । दुर्जय इति यावत् । अत एव त्रिजगतो जिगीषुर्जेता सन् । अहकप्रमुख्या-नहं प्रमुखो ज्येष्ठो येषु तथाभूतानशेषान्सर्वान्सुरान् । तृणाय तृणं मनुते मन्यते । 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' इति चतुर्थी सविकरणग्रहणा-त्तनोतियोगे चिन्त्या ॥ ४६ ॥

---

१. दोर्दुर्मद, २. तदीश नन्वात्मपदान्निरस्ताः, तदीश वामाप्लवता निरस्ताः ३. वत, ४. सुवर, ५. अस्मत्प्रमुख्यानमरावशेषान्, सुरान्स जम्भारिमुखा-न्प्रचण्डं, सुरान्स जम्भारिसुरारिमुख्यान्,

शि०—विधेरिति । हे ईश, स तारको विधेर्वेधसः अमोघम् अनिष्फलं वरप्रसादम् ईसिप्तानुकम्पामासाद्य प्राप्य सद्यस्तत्क्षणं दोर्दण्डचण्डो भुजदण्डदुर्जयः अत एव त्रिजगत् त्रैलोक्यं जिगीषुः जेतुमिच्छु सन् अहकप्रमुख्यान् इन्द्रप्रधानानित्यर्थः । अशेषान् समग्रान् सुरान्देवान् तृणाय मनुते तृणतुल्यान् जानातीत्यर्थः ॥

**स्तुत्या पुरास्माभिरुपासितेन पितामहेनेति निरूपितं नः ।**
**सेनापतिः संयति दैत्यमेतं[1] [2]पुरा स्मरारातिसुतो निहन्ति ॥ ४७ ॥**

सी०—स्तुत्येति । हे भगवन्, पुरा पूर्वमस्माभिः स्तुत्या श्लाघयोपासितेनानुकूलितेन पितामहेन ब्रह्मणा नोऽस्मान् हे देवाः, संयति संगरे स्मरारातिसुतः शांकरिः सेनापतिः सेनानीः सन्नेतं दैत्यं पुरोऽग्रे निहन्ति । निहनिष्यतीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' । इति निरूपितं कथितम् ॥ ४७ ॥

शि०—स्तुत्येति । हे ईश, पुरा प्राक् अस्माभिः स्तुत्या प्रार्थनया उपासितेन संस्तुतेन पितामहेन ब्रह्मणा नोऽस्मान्प्रति, हे सुराः, संयति संग्रामे स्मरारातिसुतः शिवपुत्रः सेनापतिः सेनानायक एतं दैत्यं तारकं पुरोऽग्रे निहन्ति हनिष्यति इति निरूपितमभिहितम् । निहन्तीति पुराशब्दयोगे भविष्यति लट् ॥ ४७ ॥

**[3]अहो ततोऽनन्तरमद्ययाव[4]त्सुदुःसहां तस्य पराभवार्तिम् ।**
**विषेहिरे [5]हन्त हृदन्तशल्यमाज्ञानिवेशं[6] त्रिदिवौकसोऽमी ॥ ४८ ॥**

सी०—अहो इति । अहो भगवन्, ततः पितामहनिरूपणादनन्तरमद्यपर्यन्तममी त्रिदिवौकसो देवा सुदुःसहाम् । ईषद्दुःसुषु—' इति खल् । तस्य तत्कर्तृकां पराभवेन निमित्तेनार्तिं पीडां हृदन्ते मनोमध्ये शल्यं तद्वद्दुःसहमाज्ञाया अनुशासनस्य 'भारं वहत' इत्यादिकस्य निवेशं स्थापनं विषेहिरेऽसहन्त । हन्तेति दुःखे ॥ ४८ ॥

शि०—अहो इति । अहो सम्बोधनार्थकोऽयं निपातः हे ईश, ततोऽनन्तरं ब्रह्मनिरूपणोत्तरम् अद्ययावत् इदानीं कालपर्यन्तम् अमी देवाः अमी त्रिदिवौकसः पुरोदृश्यमानाः सुराः सुदुःसहां सोढुमशक्यां तस्य ( अत्र कृद्योगा षष्ठी ) तत्कर्तृकामित्यर्थः । पराभवार्तिं पराजयव्यथां हृदन्तशल्यं मनो मध्यवाणमाज्ञानिवेशमादेशस्थापनं विषेहिरेऽसहन्त । हन्त खेदे ॥ ४८ ॥

**निदाघधामक्लमविक्लवानां नवीनमम्भोदमिवौषधीनाम् ।**
**[7]सुनन्दनं नन्दनमात्मनो नः सेनान्यमेतं[8] स्वयमादिश त्वम् ॥ ४९ ॥**

---

१. एनम्, २. पुरा स्मरारातिसुतः, पुरा स्मरारेस्तनयः,
३. अकामतः, अतस्ततः, ४. सुरा अदान्तस्य पराभवार्त्तिम्, सुदुःसहं तस्य पराभवं तम्, ५. तस्य, ६. नियोगम्, ७. सम्नन्दनम् ८. एनम्,

सी०—निदाघेति। हे भगवन्, त्वं स्वयमेव निदाघे ग्रीष्मे यद्धाम सौरं तेजस्तेन यः क्लमः खेदो दाहलक्षणस्तेन विक्लवानां मलिनानामोषधीनां सुतरां नन्दनमानन्दकारिणं नवीनमाषाढीयमम्भोदमिव नोऽस्माकं नन्दनमानन्दकारिणं तथा सेनान्यं सेनाधिपतिमेतं पुरोवर्तिनमात्मनो नन्दनं पुत्रम्। नन्द्यादित्वाल्ल्युः। 'युवोः' इत्यनादेशः। आदिशानुशाधि। प्रार्थनायां लोट्। अस्मत्कार्यं कर्तुमिति शेषः॥ ४९॥

शि०—निदाघेति। हे ईश, त्वं स्वयमेव साक्षादेव निदाघघामक्लमविक्लवानां ग्रीष्मार्कतेजोदाहमलिनानामोषधीनां भेषजानां सुनदनं सुखप्रदं नवीनं नूतनमम्भोदं मेघमिव नोऽस्माकं सुनन्दनं सुखजनकं तथा सेनान्यं सेनाधिपतिम् एतम् आत्मनः स्वस्य नन्दनं पुत्रम् आदिश आज्ञापय। अम्भोदनन्दनयोरुपमानोपमेययोरविशब्दस्य सुखप्रदत्वरूपसाधारणधर्मस्य च सत्वात्पूर्णोपमाऽलङ्कारः॥ ४९॥

त्रैलोक्यलक्ष्मीं [1]हृदयैकशल्यं समूलमुत्खाय महासुरं तम्।
अस्माकमेषां पुरतो [2]भवन्स दुःखापहारं [3]युधि यो विधत्ते॥ ५०॥

सी० त्रैलोक्येति। यो भवन्नन्दनस्त्रैलोक्यस्य लक्ष्म्या हृदय एकमद्वितीयं शल्यं तद्वद्दुर्धर्षं तं महासुरं तारकं युधि संगर एषामस्माकं पुरतोऽग्रे भवन्सन्। अग्रेभूत्वेत्यर्थः। समूलं सकुटुम्बपरिवारमुत्खाय निहत्य दुःखापहारं दुःखविनाशं विधत्ते कुरुते। त्वन्नन्दनं विनास्माकं दुःखसमूहः केन निवार्यंत इति भावः॥ ५०॥

शि०—त्रैलोक्येति। यस्तव नन्दनः त्रैलोक्यलक्ष्मीहृदयैकशल्यं त्रिलोकीश्रीमानसैकबाणरूपं तं महासुरं तारकं युधि संग्रामे एषां पुरोदृश्यमानानामस्माकं पुरतोऽग्रे भवन् सन् भूत्वा समूलं सपरिवारमुत्खाय विनाश्य दुःखापहारं क्लेशापहरणं विधत्ते जनयति। वाऽस्मत्क्लेशापहारको भवदात्मजातिरिक्तोऽस्ति कश्चिदिति भावः। स्वभावोक्तिरलङ्कारः॥ ५०॥

महाहवे नाथ तवास्य सूनोः [4]शस्त्रैः शितैः कृत्तशिरोधराणाम्।
महासुराणां रमणीविलापैर्दिशो दशैता मुखरीभवन्तु॥ ५१॥

सी०—महाहव इति। हे नाथ, महाहवे महति संग्रामेऽस्य पुरोवर्तिनस्तव सूनोः पुत्रस्य शितैस्तीक्ष्णैः शस्त्रैः करवालादिभिः कृत्तशिरोधराणां कर्तितग्रीवाणां महासुराणां दैत्यानां तारकपक्षाश्रयिणां रमणीनां विलापैर्वैधव्यप्रयुक्तप्रलापैरेता दश दिशो मुखरीभवन्तु वावदूका भवन्तु। 'मुखरो वावदूकेऽपि' इति मेदिनी। 'खमुखकुञ्जेभ्यो रः' इति रप्रत्ययः॥ ५१॥

---

१. द्वितयैक, २. भविष्णुः ३. सुधिया विधाता, ४. शरैः,

शि०--महाहव इति । हे नाथ, महादेव महाहवे प्रवृद्धसंग्रामे अस्य तव सूनोः सुतस्य कार्त्तिकेयस्य शितैस्तीक्ष्णैः शस्त्रैः खड्गादिभिः कृत्तशिरोधराणां छिन्नग्रीवाणां महासुराणां तारकपक्षमाश्रितानामित्यर्थः । रमणीविलापैः सुन्दरीप्रलापैः एता दश दिशो मुखरीभवन्तु सशब्दः सन्तु ॥ ५१ ॥

[1]महारणक्षोणिपशूपहारीकृतेऽसुरे तत्र तवात्मजेन ।
बन्दिस्थितानां सुदृशां करोतु [2]वेणिप्रमोक्षं सुरलोक एषः ॥ ५२ ॥

सी०–महेति । हे भगवन्, तत्रासुरे तारके तवात्मजेन पुत्रेण महती या रणक्षोणिः संग्रामभूमिस्तत्र ये पशवः क्रोष्ट्र्यादयस्तेषामुपहारीकृत उपकृते सति । 'उपहारश्चोपदायाम्' इति मेदिनी । एष सुरलोको बन्दिर्बन्धनागारं तत्र स्थितानां सुदृशां स्वरमणीनां वेणोप्रमोक्षं वेणोमोचनं करोतु ।५२।

शि०—महेति । हे नाथ, तत्र तस्मिन् असुरे तारके तव भवत आत्मजेन हतेन कार्त्तिकेयेनेत्यर्थः । महारणक्षोणिपशूपहारीकृते घोरसंग्रामभूमिभागधेयीकृते सति एष तव पुत्रः सुरलोके स्वर्गे बन्दिथिस्तानां कारागृहवर्त्तिनीनां सुदृशां नारीणां वेणिप्रमोक्षं संयतकेशमोचनं करोतु विदधातु । तवात्मजेन तारके हते बन्दीभूताः सुरास्त्रियो मुक्ता भविष्यन्तीति भावः ॥ ५२ ॥

इत्थं सुरेन्द्रे वदति स्मरारिः सुरारिदुश्चेष्टितजातरोषः ।
कृतानुकम्पास्त्रिदशेषु तेषु भूयोऽपि[3] भूताधिपतिर्बभाषे ॥ ५३ ॥

सी०—इत्थमिति । सुरेन्द्रे महेन्द्रे इत्थं वदति सति सुरारिस्तारकस्तस्य दुश्चेष्टितमपराधजनकश्चेष्टाविशेषस्तेन हेतुना जातरोष उत्पन्नामर्षः । स्मरारेर्भूतानामधिपतिर्हरः । तेषु त्रिदशेषु कृतानुकम्पो विहितदयः सन् । 'कृपा दयानुकम्पा स्यात्' इत्यमरः । भूयोपि पुनरपि बभाष उवाच ॥ ५३ ॥

शि०—इत्थमिति । सुरेन्द्रे शक्रे इत्थमुक्तप्रकारं वदति सति सुरारिदुश्चेष्टितजातरोषः तारकापराधोत्पन्नकोपः स्मरारिर्मदनशत्रुः भूताधिपतिः शिवः तेषु त्रिदशेषु देवेषु कृतानुकम्पः विहितानुग्रहः सन् भूयोऽपि पुनरपि बभाषे जगाद ।५३

अहो अहो देवगणाः [4]सुरेन्द्रमुख्याः शृणुध्वं वचनं [5]ममैते ।
विचेष्टते शंकर [6]एष देवः कार्याय सज्जो [7]भवतां सुताद्यैः ॥५४॥

सी०—अहो इति । अहो अहो इति सम्बोधने । संभ्रमे द्विरुक्तिः । हे देवगणाः सुरेन्द्रमुख्याः पुरंदरप्रधाना एते यूयं मम वचनं शृणुत । तदेव

---

१. क्षोणिपशूपहारे; २. वेणिप्रमोकम्, ३. सः ४. सुरेन्द्रमुखाः,
५. ममैतत्, ६. एव, ७. सकलं शुभाय, सकलैः शुभास्त्रैः

सार्धद्वयमाह— एष शङ्करो देवः सुताद्यैः पुत्रप्रभृतिभिः। पुत्रपौत्रादिभिरित्यर्थः। भवतां युष्माकं कार्याय कार्यं कर्तुमित्यर्थः। 'क्रियार्थ—' इत्यादिना चतुर्थी। सज्जः सिद्धो विचेष्टते। वर्तत इत्यर्थः। मम पुत्रपौत्रजनकतायामपि भवत्कार्यमेव बीजमिति भावः॥ ५४॥

शि०—अहो इति। अहो इत्येष सम्बोधनार्थको निपातः। द्विःप्रयोगस्तु सम्भ्रममूलक इत्यवसेयम्। अहो देवगणाः सुराः, सुरेन्द्रमुख्याः शक्रप्रधानाः एते पुरोदृश्यमानाः यूयमितिशेषः। मम वचनं शृणुध्वम् आकर्णयत। किन्तद्वचनमित्याह—एष युष्माभिः साक्षादवलोक्यमानः शङ्करो देवः सुताद्यैः पुत्रादिभिः सह भवतां युष्माकं कार्याय कार्यं कर्तुमित्यर्थः। सज्जः तत्परः सन् विचेष्टते वर्तते। सुरकार्यहेतुकमेव मम सुताद्युत्पादनमितिभावः॥ ५४॥

पुरा मयाकारि [1]गिरीन्द्रपुत्र्याः प्रतिग्रहोऽयं नियतात्मनापि।
[2]तत्रैष हेतुः खलु तद्भवेन वीरेण यद्वध्यत[3] एष शत्रुः॥ ५५॥

सी०—पुरेति। हे देवाः, पुरा पूर्वं नियतात्मनापि योगिनापि मया गिरीन्द्रपुत्र्या अयं प्रतिग्रह आदानम्। परिणयनमित्यर्थः। यदकारि कृतः। तत्रैष हेतुर्निमित्तम्। खलु निश्चितम्। यद्यस्मादेष शत्रुस्तारकसंज्ञकस्तद्भवेन पार्वतीजन्मना वीरेण वध्यते। अतस्तद्भवार्थं पार्वतीपरिग्रहः कृत इति भावः। अतोऽहं भवतामुपालम्भपात्रं नेति श्लोकतात्पर्यम्॥ ५५॥

शि०—पुरेति। भो देवगणाः पुरा पूर्वं नियतात्मना विगृहीतेन्द्रियेण कृतयोगाभ्यासेनापि मया गिरीन्द्रपुत्र्याः पार्वत्या अयं प्रतिग्रहः परिणयो यदकारि कृतः। तत्र एष शत्रुस्तारकासुरः तद्भवेन पार्वतीसुतेन वीरेण बलवता कार्त्तिकेयेन वध्यते विनाश्यते इत्येष हेतुः कारणम्। अतस्तदुत्पत्तये पार्वतीपरिणय इति भावः॥५५॥

[4]अत्रोपपन्नं [5]तदमी नियुज्य कुमारमेनं पृतनापतित्वे।
[6]निघ्नन्तु शत्रुं सुरलोकमेष [7]भुनक्तु भूयोऽपि सुरैः [8]सहेन्द्रः॥ ५६॥

सी०—अत्रेति। तत्तस्मादमी भवन्तोऽत्र भवत्कार्यं उपपन्नं युक्तम्। योग्यमित्यर्थः। तथाभूतमेनं कुमारं पृतनापतित्वे सैनापत्ये नियुज्य नियुक्तं कृत्वा शत्रुं तारकं निघ्नन्तु। एतत्साहाय्येन भवन्तस्तारकं मारयन्त्विति भावः। अत एष इन्द्रः सुरेन्द्रः सुरैः सह भूयोऽपि पुनरपि सुरलोकं स्वर्गं भुनक्तु पालयतु। आशिषि लोट्॥ ५६॥

शि०— अत्रेति। तत्तस्माद्धेतोः अमी भवन्तो देवाः अत्रास्मिन् भवत्कार्ये

१. गिरीशपुत्र्याः, २. एक हेतुः, ३. हन्यते ४. अथ, ५. इतः; अतः, ६. निहन्तु; निहत्य, ७. पुनातु, लभेत, ८. सुरेन्द्रः.

उपपन्नमुचितं एनं कुमारं पृतनापतित्वे सेनाधिपत्ये नियुज्य नियुक्तं विधाय शत्रुं तारकं निघ्नन्तु मारयन्तु । एष इन्द्रः सुरैः सह भूयोऽपि पुनरपि सुरलोकं स्वर्गं भुनक्तु रक्षतु । इन्द्रः कुमारं सेनाधिपतिं विधाय तारकं विजित्य पुरेव स्वर्गं पालयत्वित्यर्थः ॥ ५६ ॥

इत्युदीर्य भगवां[1]स्तमात्मजं घोरसंगरमहोत्सवोत्सुकम् ।
[2]नन्दनं हि [3]जहि [4]देवविद्विषं संयतीति निजगाद शंकरः ॥ ५७ ॥

सी०—इतीति । शङ्करः शङ्करसंज्ञको भगवानिति पूर्वोक्तमुदीर्योच्चार्य घोरो भीमः 'घोरं भीमं भयानकम्' इत्यमरः । यः सङ्गरः संग्रामः स एव महोत्सवो महानानन्दस्तत्रोत्सुकमुत्कण्ठितमत एव नन्दनमानन्दकरम् । 'नन्दिग्रहि—' इति ल्युः । तमात्मजं कुमारम् 'हे पुत्र, संयति संग्रामे देवानामिन्द्रादीनां विद्विषं विशेषेण द्वेष्टारं तारकं जहि' । 'हन्तेर्जः' इति हनो जादेशः । इति निजगादोक्तवान्हि । रथोद्धतावृत्तम् ॥ ५७ ॥

शि०—इतीति । शङ्करस्तदाख्यो भगवान् इति पूर्वोक्तमुदीर्याऽभिधाय घोरसङ्गरमहोत्सवोत्सुकम् भयङ्करयुद्धातिशयानन्दोत्कण्ठितम् अत एव नन्दनं सुखदं तमात्मजं पुत्रं कार्त्तिकेयं, हे पुत्र, संयति संग्रामे देवविद्विषं सुरद्रुहं तारकासुरं जहि इति निजगादोक्तवान् । पुत्रं तारकविनाशार्थमादिष्टवानित्यर्थः ॥ ५७ ॥

शासनं पशुपतेः [5]स कुमारः स्वीचकार शिरसावनतेन ।
सर्वथैव पितृभक्तिरतानामेष एव परमः खलु धर्मः ॥ ५८ ॥

सी०—शासनमिति । स कुमारः कार्तिकेयः पशुपतेः पितुर्हरस्य शासनमाज्ञामवनतेन नम्रीकृतेन शिरसा स्वीचकार । स्वीयं चकारेत्यर्थः । 'कृभ्वस्तियोगे' इति च्विः । 'अस्य च्वौ' इतीकारः । 'च्वौ च' इति दीर्घः । तथाहि । सर्वथैव सर्वप्रकारेणैव पितृभक्तो जनकश्रद्धायां रतानां सक्तानां खल्वेष एव परमो धर्मः । यदाज्ञां झटित्येव स्वीकुर्वन्तीति । स्वागतावृत्तम् ॥ ५८ ॥

शि०—शासनमिति स कुमारः कार्त्तिकेयः पशुपतेर्हरस्य पितुः शासनमादेशम् अवनतेन नम्रीभूतेन शिरसा मूर्ध्ना स्वीचकार अङ्गीकृतवान् । सर्वथैव सर्वप्रकारेणैव पितृभक्तिरतानां पितृसेवासक्तानां खलु एष एव परम उत्कृष्टो धर्मः अस्तीति शेषः । पित्रादेशपालनमेव पुत्रधर्म इति भावः । अर्थान्तरन्यासोऽलङ्कारः ॥ ५८ ॥

---

१. स्वम्, २. नन्दनैर्हि, ३. जय, ४. देवविद्विषः, ५. तु,

असुरयुद्धविधौ [1]विबुधेश्वरे पशुपतौ [2]वदतीति तवात्मजम् ।
गिरिजया मुमुदे सुतविक्रमे [3]सति न नन्दति [4]का खलु वीरसूः ॥

सी०—असुरेति । विबुधेश्वरे सकलदेवस्वामिनि पशुपतौ हरे । असुरस्य तारकस्य यो युद्धविधिः संग्रामकरणं तत्र । उक्तमिति शेषः । तमात्मजं पुत्रमिति वदति सति । गिरिजया पार्वत्या मुमुदे प्रसेदे । तथा हि खलु निश्चये । सुतविक्रमे पुत्रपराक्रमे सति का वीरसूर्वीरप्रसूतिः स्त्री न नन्दति । अपि तु सर्वापि नन्दतीत्यर्थः । पुत्रविषये पराक्रमसत्तैव परममुत्कारणं वीरसूनां भवतीति भावः । द्रुतविलम्बितं वृत्तम्—'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ ५९ ॥

शि०—असुरेति । विबुधेश्वरे सुरगणस्वामिनि पशुपतौ शिवेऽसुरयुद्धविधौ तारकासुरसङ्गरविधाने तमात्मजं पुत्रं इति पूर्वोक्तं वदति कथयति सति गिरिजया पार्वत्या मुमुदे प्रसन्ना बभूव । तथाहि—खलु निश्चये सुतविक्रमे तनुजपराक्रमे सति, का वीरसूः वीरप्रसवा स्त्री न नन्दति न मोदते । अपि तु सर्वा अपि स्त्रियो नन्दन्तीत्यर्थः । वीरपुत्रवतीनां पुत्रपराक्रमसद्भाव एवोत्कृष्टानन्दहेतुरितिभावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ॥ ५९ ॥

सुरपरिवृढः प्रौढं वीरं कुमारमुमापते-
र्बलवदमरारातिस्त्रीणां [5]दृगञ्जनभञ्जनम् ।
जगदभयदं सद्यः प्राप्य प्रमोदपरोऽभवद्-
ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥ ६० ॥

सी०—सुरेति । सुराणां परिवृढः परिशास्तेन्द्रः । 'वृहू हिंसायाम्' । कर्तरि क्तः । प्रौढमतिशयं वीरं पराक्रमशालिनं बलवान्योऽमरारातिस्तारकासुरस्तस्य स्त्रीणां दृगञ्जनस्य दृष्टिकज्जलस्य भञ्जनं भञ्जकम् । कर्तरि ल्युट् । मृतभर्तृकतया कज्जलधारणस्यानुचितत्वादिति भावः । अत एव जगद्भ्याऽभयदमभयदातारमुमापतेर्हरस्य कुमारं पुत्रं प्राप्य सद्यः सहसा प्रमोदे प्रकृष्टोन्मोदे । पर आसक्तोऽभवज्जातः । तथा हि । अभिमते मनोरथे । पूर्णे सति मुदा प्रीत्या निमित्तेन को वा न माद्यति । अपि तु सर्व एवोन्मत्तो भवतीत्यर्थः । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः इदं हरिणीछन्दः—'रसयुगहयैर्न्सौ म्रौ लो गो यदा हरिणी तदा' इति । लक्षणात् ॥ ६० ॥

---

१. विबुधेश्वरः, २. वदति प्रियमात्मजम्; वदति प्रियपुत्रकम्; वदति प्रियमाकम् ३. न किमु, ४. संयति, ५. गञ्ज नम्,

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभव-
श्रीसीतारामकविविरचितया संजीविनीसमाख्यया
व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
कुमारसैनापत्यवर्णनं नाम द्वादशः सर्गः ॥



शि०—सुरेति । सुरपरिवृढोऽमरगणशासकः शक्रः प्रौढमुत्कृष्टं वीरं पराक्रमवन्तं बलवदमरस्त्रीणां दृगञ्जनभञ्जनं नेत्रकज्जलापहम् अत एव जगदभयदं जगतोऽभयदातारमुमापतेर्हरस्य कुमारं पुत्रं प्रीत्या प्राप्य समासाद्य सद्यः सत्वरं प्रमोदभरः । उत्कृष्टहर्षसिक्तोऽभवत् । तथाहि—अभिमते मनोरथे पूर्णे सति को मुदा नहि माद्यति अपि तु सर्वोऽपीत्यर्थः । ध्रुवं निश्चितम् । अत्राप्युक्त एवाऽलङ्कारः ॥६०॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितशिशुहितैषिणी
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये
कुमारसैनापत्यवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥



# त्रयोदशः सर्गः

प्रस्थानकालोचितचारुवेषः स स्वर्गिवर्गैरनुगम्यमानः।
ततः कुमारः शिरसा नतेन [1]त्रैलोक्यभर्तुः प्रणनाम पादौ ॥ १ ॥

सी०—प्रस्थानेति। ततोऽनन्तरं स कुमारः कार्तिकेयः प्रस्थानकाल उचितो योग्यश्चारुश्च वेषो यस्य। तथा स्वर्गिवर्गैरिन्द्रादिदेवगणैरनुगम्यमानः सन्। नतेन शिरसा त्रैलोक्यभर्तुः शिवस्य पादौ प्रणनाम नमश्चक्रे। 'उपसर्गादसमासेऽपि' इति णत्वम् ॥ १ ॥

शि०—प्रस्थानेति। ततस्तदनन्तरं कुमारस्य पित्राज्ञाप्राप्त्युत्तरमित्यर्थः। स कुमारः कार्त्तिकेयः प्रस्थानकालोचितचारुवेषः यात्राकालयोग्यमनोज्ञाकृतिः। स्वर्गिवर्गैः सुरसङ्घैः अनुगम्यमानः अनुस्रियमाणः सन् नतेन नम्रीभूतेन शिरसा मूर्ध्ना त्रैलोक्यभर्त्तुः शिवस्य पादौ चरणौ प्रणनाम नमस्कृतवान्। सर्गेऽस्मिन्निन्द्रवज्रावृत्तम् ॥ १ ॥

जहीन्द्रशत्रुं समरेऽमरेशपदं स्थिरत्वं नय वीर वत्स।
इत्याशिषा तं प्रणमन्तमीशो मूर्धन्युपघ्राय मुदाभ्यनन्दत् ॥ २ ॥

सी०—जहीति। प्रणमन्तं नमस्कुर्वन्तं तं कुमारमीशो हरो मुदा प्रीत्या मूर्धन्युपाघ्राय गन्धमुपादाय 'हे वीर, हे वत्स, समरे युधीन्द्रशत्रुं तारकं जहि मारय। अथामरेशपदमिन्द्रपदं स्वर्गं स्थिरत्वं स्थैर्यं नय प्रापय'। उभयत्राप्याशिषि लोट्। इत्येवंभूतयाशिषाशीर्वादेनाभ्यनन्ददस्तौषीत् ॥ २ ॥

शि०—जहीति। ईशो हरः प्रणमन्तं नमस्कुर्वन्तं तं कुमारं पुत्रं मुदा हर्षेण मूर्धनि शिरसि उपाघ्राय गन्धमादाय, हे वीर, हे वत्स, समरे सङ्ग्रामे इन्द्रशत्रुं तारकासुरं जहि मारय पुनः अमरेशपद शक्रस्थानं स्थिरत्वं दृढत्वं नय प्रापय इत्येवंभूतयाऽऽशिषाऽऽशीर्वादेनाऽभ्यनन्दत् तुष्टाव ॥ २ ॥

प्रह्वीभवन्नम्रतरेण मूर्ध्ना नमश्चकाराङ्घ्रियुगं[2] स्वमातुः।
तस्याः प्रमोदाश्रुपयः[3]प्रवृष्टिस्तस्याभवद्वीरवराभिषेकः ॥ ३ ॥

सी०—प्रह्वीति। स कुमारः प्रह्वीभवन्नम्रीभवन्सन्नम्रतरेण मूर्ध्ना। अत्र प्रह्वीभवन्नित्यनेनैव मूर्ध्नो नम्रत्वे सिद्धे पुनर्विशेषणोपादानं सामान्यतोऽन्येषामङ्गानां नम्रत्वोक्त्यपेक्षया मूर्ध्नि क्रियातिशयद्योतनार्थम्।

---

१. त्रिलोक, २. युगं सः, युगाय, ३. प्रपूरः, प्रवर्षः,

पुनरुपादानेन तरब्ग्रहणलिङ्गाच्च। स्वामातुरङ्घ्रियुगं चरणद्वन्द्वं नमश्चकार। तस्याः पार्वत्याः सम्बन्धीनि यानि प्रमोदाश्रुपयांसि तेषां प्रवृष्टिर्वर्षणं तस्य कुमारस्य वीरेषु वरस्य श्रेयसः। सेनापतेरित्यर्थः। तस्याभिषेक इव योऽभिषेकः सोऽभवत्। तस्य यादृगभिषेको भवति स मात्रश्रुपयोवृष्टिराशिश्चरणनखपर्यन्तं प्लावयन्त्यभूदिति भावः ॥ ३॥

शि०—प्रह्वीति। स कुमारः प्रह्वोभवन् नम्रः सन् नम्रतरेणाऽतिनम्रीभूतेन मूर्ध्ना स्वमातुः पार्वत्या अङ्घ्रियुगं पादद्वयं नमश्चकार प्रणनाम। तस्याः पार्वत्या प्रमोदाश्रुपयःप्रवृष्टिः आनन्दाश्रुवर्षणं तस्य कुमारस्य वीरवराभिषेको बलवत्प्रधानस्नपनमभवत् बभूव। वीरेषु वरस्य प्रधानस्याऽभिषेको यथा भवति तथा कुमारस्य पार्वतीनेत्राश्रुवर्षणमभूदित्यर्थः। अत्र पार्वतीनेत्राश्रुपयोवर्षणे वीरवराभिषेकत्वादृश्यारोपाद्रूपकालङ्कारः ॥ ३॥

तमङ्कमारोप्य सुता [1]हिमाद्रेराश्लिष्य[2] गाढं सुतवत्सला सा।
शिरस्युपाघ्राय जगाद शत्रुं जित्वा [3]कृतार्थीकुरु वीरसूं माम् ॥४॥

सो०—तमिति। सुते पुत्रे वत्सला कृपावती सा हिमाद्रेः सुता पार्वती तं पुत्रम्। अस्य ल्यबन्तत्रयेण सम्बन्धो विधेयः। अङ्कमुत्सङ्गम्। 'अङ्को रूपकभेदाङ्कचिह्ने रेखाजिभूषणे। रूपकाण्डान्तिकोत्सङ्गस्थानेऽङ्कं पापदुःखयोः' इति मेदिनी। आरोप्य संस्थाप्य। तथा गाढं दृढं यथा तथा। 'प्रगाढः कृच्छ्रदृढयोः' इति मेदिनी। प्रेति त्रित्वसंघातनिवेशनायैव। एवं विना तदलाभात्। आश्लिष्यालिङ्गय। तथा शिरस्युपाघ्राय च। 'हे वत्स, त्वं शत्रुं तारकं जीत्वा वीरं सूते सा वीरसूस्तथोक्तां मां कृतार्थीकुरु' इति जगाद। एवंविधे महति कार्यं भवता प्रतिपादिते सति त्रैलोक्यप्रसृतिशीलेन यशसा धवलीकृतं सत् 'एष यदीयः पुत्रः सा कृतार्थैव' इति वर्णयिष्यतीत्यतो मत्कृतार्थत्वं सिद्धमेवेति भावः। ४॥

शि०—तमिति। सुतवत्सला पुत्रस्नेहवती सा हिमाद्रेः शैलाधिपतेः सुता पार्वती तं कुमारम् अङ्कमारोप्य क्रोडस्थितं विधाय गाढं सम्यक् आश्लिष्य आलिङ्ग्य शिरसि मूर्ध्नि उपाघ्राय शत्रुं तारकं जित्वा पराजित्य वीरसू वीरप्रसवां मां कृतार्थी कुरु तदुत्पन्नयशसा कृतार्थी विधेहीत्यर्थः। एकस्या एव पार्वतीरूपकर्त्र्याः आरोपणाऽऽश्लेषणोपाघ्राणाभिधानक्रियास्वन्वयाद्दीपकालङ्कारः। तदुक्तं दर्पणे—अथकारकमेकं स्यादनेकासु क्रियासु चेदिति ॥ ४॥

उद्दाम[4]दैत्येशविपत्तिहेतुः श्रद्धालुचेताः [5]समरोत्सवस्य।
आपृच्छ्य भक्त्या गिरिजागिरीशौ ततः प्रतस्थेऽभिदिवं कुमारः ॥

१. महाद्रेः, २. आश्लिष्टगात्रम्, ३. कृतार्थी कुरु ४. दैतेय, ५. समरोद्धुरः सः।

सी०—उद्दामेति। ततोऽनन्तरमुद्दाम उद्भटो यो दैत्येशस्तारकस्तस्य विपत्तिर्मृत्युस्तस्याः हेतुः कारणम्। तत्कर्तेत्यर्थः। तथा समरोत्सवस्य संग्रामरूपस्योत्सवस्य 'मह उद्धव उत्सवः' इत्यमरः। इयं कर्मणि षष्ठी। सम्बन्धमात्रविवक्षितत्वात् इह षष्ठ्यन्तस्य वृत्तिगतेनापि श्रद्धाशब्देन नित्यसम्बन्धवशात्सम्बन्धं कृत्वा कृद्योगलक्षणा षठी समर्थनीया। केचित्तु 'समरोत्सवे सः' इति विषयलक्षणसप्तम्यन्तत्वमङ्गीत्य पठन्ति। तत्रापि समासवृतिगतस्य श्रद्धालुशब्दस्य सम्बन्धोदुर्घट इत्यलम्। श्रद्धालु भक्तिशीलं चेतो यस्य। सङ्ग्रामश्रद्धाधायक इत्यर्थः। एवंभूतः कुमारो भक्त्या भक्तिपूर्वकं गिरिजागिरीशौ पितरावापृच्छ्य। मया गम्यत इत्युक्त्वेत्यर्थः। दिवमभि प्रतस्थे चचाल। 'समवप्रवि'—इत्यात्मनेपदम्॥ ५॥

शि०—उद्दामेति। ततोऽनन्तरं पार्वतीकर्तृकात्मजोत्साहवर्द्धनोत्तरमित्यर्थः। उद्दामदैत्येशविपत्तिहेतुः उद्धततारकासुरदुःखकारणं तथा समरोत्सवस्य संग्राममहोत्सवस्य श्रद्धालुचेताः भक्तिशीलमानसः कुमारः कार्त्तिकेयः भक्त्या भक्तिपूर्वकं गिरीजागिरीशौ पार्वतीहरौ आपृच्छ्य दिवमभि स्वर्गमुद्दिश्य प्रतस्थे जगाम॥ ५॥

**देवं महेशं गिरिजां च देवीं ततः प्रणम्य त्रिदिवौकसोऽपि।**
**प्रदक्षिणीकृत्य [1]च नाकनाथपूर्वाः समस्तास्तमथानुजग्मुः[2]॥ ६॥**

सी०—देवमिति। ततोऽनन्तरम्। नाकनाथपूर्वा इन्द्रप्रमुखाः समस्तास्त्रिदिवौकसो देवा अपि पूर्वोक्तकुमारप्रस्थानसमुच्चायकोऽपिशब्दः 'अपि सम्भावनाप्रश्नाशङ्कागर्हासमुच्चये' इति विश्वः। महेशं देवं गिरिजां देवीं च प्रणम्य। अथ प्रदक्षिणौ परिक्रमणवशात्सव्यभागस्थौ कृत्वेत्यर्थः। 'उर्यादिच्विडाचश्च' इनि गतिसंज्ञकतया 'कुगतिप्रादयः' इति समासत्वात् 'समासेऽनञ्पूर्वे–' इति क्त्वो ल्यबादेशः। कुमारमनु पश्चाज्जग्मुरित्यर्थः॥ ६॥

शि०—देवमिति। ततोऽनन्तरं कुमारस्य प्रस्थानोत्तरमित्यर्थः। नाकनाथपूर्वाः शक्रप्रभृतयः समस्ताः समग्राः त्रिदिवौकसो देवा अपि महेशं शंकरं देवं गिरिजां पार्वतीं च देवीं प्रणम्य च पुनः प्रदक्षिणीकृत्य परिक्रम्य तं कुमारमनु पश्चात् अनुजग्मुः गताः। एकस्यैव सकलसुररूपकर्तृकारकस्य प्रणमनपरिक्रमणगमनक्रियास्वन्वयादत्र दीपकालङ्कारः॥ ६॥

**अथ व्रजद्भिस्त्रिदशै[3]रशेषैः स्फुरत्प्रभा[4]भासुरमण्डलैस्तैः।**
**[5]नभो बभासे [6]परितो विकीर्णं दिवापि नक्षत्रगणैरिवोग्रैः॥ ७॥**

---

१. सुरेशमुख्याः सुराः २. अभिजग्मुः ३. सरोषैः ४. मण्डलभासुरैः, ५. ततः, ६. हरितोऽवकाशः,

सी०—अथेति। अथानन्तरं व्रजद्भिर्गच्छद्भिरत एव स्फुरत्प्रसरत्प्रभायाः कान्त्याः सम्बन्धि भासुरं दीप्यमानं मण्डलं चक्रवालं येषाम्। 'चक्रवालं तु मण्डलम्' इत्यमरः। तैरशेषैः संपूर्णैस्त्रिदशैर्देवैर्विकीर्णं व्याप्तं नभोऽन्तरिक्षं दिवापि दिनेऽपि। उग्रैर्भासुरैर्नक्षत्रगणैर्विकीर्णमिव। बभासे भासुरत्वरूपसाधारणधर्मेण त्रिदशविकिरणविशिष्टे नभसि नक्षत्रविकिरणविशिष्टत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः। ननु 'उग्रः शूद्रासुते क्षत्रादुद्रे पुंसि त्रिषूत्कटे' इति कोशोक्त्योत्कटवाचिनोऽप्युग्रशब्दस्य कथं भासुरवाचकतेति चेत्, सत्यम्। अत्रोत्कटत्वम् केनचिद्धर्मेण विवक्षितं न तु तेजसैव। कान्त्या तापेन वा सौन्दर्यादिना वोत्कटोऽधिक इत्यर्थंप्रणयनात्प्रकृते समाधेयम्॥ ७॥

शि०—अथेति। अथानन्तरं व्रजद्भिर्गच्छद्भिः स्फुरत्प्रभाभासुरमण्डलैः प्रसरत्कान्ति दीप्यमानचक्रवालैः तैरशेषैः समग्रैः त्रिदशैर्देवैः विकीर्णं व्याप्तं नभो गगनं दिवा दिवसेऽपि उग्रैर्दीप्तिमद्भिर्नक्षत्रगणैस्तारकादिभिः परितः सर्वतो विकीर्णमिव बभासे बभौ। अमरनिकरव्याप्ताकाशे नक्षत्रगणव्याप्तत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः॥ ७॥

रराज तेषां व्रजतां सुराणां मध्ये कुमारोऽधिककान्तिकान्तः[1]।
नक्षत्रताराग्रहमण्डलानामिव [2]त्रियामारमणो नभोन्ते[3]॥ ८॥

सी०—ररजेति। नभोऽन्तेऽन्तरिक्षमध्ये व्रजतां तेषां सुराणां मध्ये कुमारः कार्तिकेयः। अग्रेऽपि नभोन्त इत्यस्य सम्बन्धः कार्यः। नक्षत्राण्यश्विन्यादीनि, ताराः सप्तविंशतिव्यतिरिक्ताः ग्रहाः सूर्यादयो नव तेषां मण्डलानां गोलानां मध्ये त्रियामारमणश्चन्द्र इव ररज। यतोऽधिककान्त्या कान्तो मनोहरः। नक्षत्राणां मध्ये यथा चन्द्र एव शोभते तथा देवानां मध्ये कुमार एव शुशुभ इत्यर्थः। पूर्णोपमालंकारः॥ ८॥

शि०—ररजेति। नभोऽन्ते आकाशमध्ये व्रजतां गच्छतां तेषां सुराणां देवानां मध्येऽधिककान्तिकान्तः प्रचुरदीप्तिसुन्दरः कुमारः नक्षत्रतारागणमण्डलानां ऋक्षतारकार्कगोलानां मध्ये त्रियामारमणश्चन्द्रः इव ररज शुशुभे। नक्षत्रादिषु चन्द्रो यथा राजते देवेषु कुमारो ररजेत्यर्थः। अत्र पूर्णोपमालङ्कारः॥ ८॥

गिरीशगौरीतनयेन सार्धं पुलोमपुत्रीदयितादयस्ते।
उत्तीर्य नक्षत्रपथं [4]मुहूर्तात्प्रपेदिरे लोक[5]मथात्मनीनम्॥ ९॥

---

१. अधिककान्तकान्तः, २. दयितः, ३. अन्तः, ४. मुहूर्तम्, ५. अथो मुनीनाम्,

सी०—गिरीशेति। अथ पुलोमपुत्री शची तस्या दयित इन्द्रः स आदिर्येषां तथाभूतास्ते देवा गिरीशगौरीतनयेन ननु गिरीशगौर्योरेकतरेण सिद्धिरिति चेत्, सत्यम्। उभयगतवीर्याश्रयीभूतत्वेन कुमारवीर्याधिक्यस्य द्योतनार्थमुभयोर्ग्रहणमिति समाधातव्यम्। सार्धं मुहूर्तात्क्षणमात्रेणैव नक्षत्रपथमाकाशमुत्तीर्योल्लङ्घ्यात्मनीनमात्मने हितम्। 'तस्मै हितम्' इत्यधिकारस्थेन 'आत्मन्विश्वजन–' इत्यादिना खः। तथाभूतं लोकं स्वर्गं प्रपेदिरे प्रापुः। 'लोकस्तु भुवने जने' इत्यमरः॥ ९॥

शि०—गिरीशेति। अथानन्तरं दिवौकसां कुमारानुगमनोत्तरमित्यर्थः। पुलोमपुत्री दयितादयः सुरेन्द्रप्रभृतयस्ते देवा गिरीशगौरीतनयेन शिवपार्वतीपुत्रेण कार्त्तिकेयेनेत्यर्थः। सार्धं सह नक्षत्रपथमाकाशमुत्तीर्याऽतिक्रम्य आत्मनीनं निजहितकरं लोकं स्वर्गं मुहूर्तात्क्षणमात्रेण प्रपेदिरे प्राप्तवन्तः॥ ९॥

**ते स्वर्गलोकं चिरकालदृष्टं महासुरत्रासवशंवदत्वात्।**
**सद्यः प्रवेष्टुं न विषेहिरे [1]तत्क्षणं व्यलम्बन्त सुराः [2]समग्राः॥१०॥**

सी०–ते इति। समग्राः सुरा महासुरात्तारकाद्यस्त्रासो भयं तस्य वशंवदत्वादधीनत्वाद्धेतोः चिरकालेन बहुसमयेन दृष्टं तत्स्वर्लोकं सद्यः सहसा प्रवेष्टुं न विषेहिरे न शेकुः। किं तु क्षणं व्यलम्बन्त। कालं चिक्षिपुरित्यर्थः। अन्योऽपि समये स्वगृहेऽपि सद्यः प्रवेष्टुं न शक्नोति किंतु विलम्बते तद्वदिति भावः॥ १० ।

शि०—त इति। ते समग्राः सुरा देवा महासुरत्रासवशंवदत्वात् तारकभीतियुक्तत्वाद्धेतोः चिरकालदृष्टं बहुकालावलोकितं स्वर्गलोकं नाकं सद्यः सहसा प्रवेष्टुं न विषेहिरे नासहन्त किन्तु तत्क्षणं किञ्चित्कालं व्यलम्बन्त विलम्बं कृतवन्तः। तारकासुरभीता देवा न सहसा स्वर्गं प्राविशन्नित्यर्थः॥ १०॥

**[3]पुरो भव त्वं न पुरो भवामि [4]नाहं पुरोगोऽस्मि [5]पुरः सरस्त्वम्।**
**इत्थं [6]सुरास्तत्क्षणमेव भीताः स्वर्गं प्रवेष्टुं कलहं वितेनुः॥११॥**

सी०—पुर इति। तत्क्षणम्। 'कालाध्वनोः–' इति द्वितीया। प्रवेशसमय इत्यर्थः। भीता अतस्तारकावस्थानशङ्कया सभयाः सुराः स्वर्गं प्रवेष्टुम् 'त्वं पुरोऽग्रे भव। अहं पुरो न भवामि, किं तु त्वमेव भव। अहं पुरोगो नास्मि न भवामि। त्वं पुरःसरो भव' इत्थमेवंभूतं कलहं विग्रहं वितेनुः। चक्रुरित्यर्थः। अस्मीत्यहमर्थकमव्ययम्। सर्वेषां त्रिधाभूततया न कोऽप्यन्तः प्रवेष्टुं शशाक। किंतु तत्रैव कलहायमानास्तस्थुरिति भावः॥

---

१. तम्, २. समस्ताः, ३. पुरोऽतत्तत्त्वम्, ४. नव, ५. पुरःसरत्वम्, ६. द्विषा तेन कृते स्ववश्ये स्वर्गे, द्विषा तेन हता मिथस्ते स्वर्गे।

शि०—पुर इति । तत्क्षणमेव स्वर्गप्रवेशकाल एवेत्यर्थः । भीताः तारकावस्थितिसन्देहत्रस्ता सुरा देवाः स्वर्गं प्रवेष्टुं, त्वं पुरोऽग्रे भव, अहं पुरोऽग्रे न भवामि, अहं पुरोगोऽग्रगामी नास्मि भवामि, त्वं पुरःसरो भव, इत्थमेवंरीत्या कलहं विग्रहं वितेनुः कृतवन्तः ॥ ११ ॥

[1]सुरालयालोकनकौतुकेन मुदा [2]शुचिस्मेरविलोचनास्ते ।
दधुः कुमारस्य मुखारविन्दे दृष्टिं द्विषत्साध्वस[3]कातरान्ताम् ॥१२॥

सी०—सुरालयेति । सुरालयस्य स्वर्गस्य यदालोकनं तेन यत्कौतुकमानन्दस्तेन निमित्तेन शुचीनि शुद्धानि स्मेराणि समन्दहासानि च विलोचनानि येषां तथाभूतास्ते देवा द्विषत्साध्वसेन तारकशत्रुभयेन कातरान्तां भीतप्रान्ताम् । भयचिह्नतरलत्वादियुतामित्यर्थः । तथाभूतां दृष्टिं नेत्रं मुदा प्रीत्या । प्रसादेनेति यावत् । उपलक्षिते कुमारस्य मुखारविन्दे वदनकमले दधुः । दुर्घटप्रवेशोपायोपदेशापेक्षयेति भावः । कुमारो बालोऽपि सन् न भीत इति मुदेति विशेषणेन व्यज्यते ॥ १२ ॥

शि०—सुरेति । सुरालयालोकनकौतुकेन स्वर्गेक्षणकुतूहलेन हेतुना शुचिस्मेरविलोचनाः शुद्धेषद्धासविशिष्टेक्षणाः ते देवा मुदा हर्षेण युक्ते कुमारस्य कार्तिकेयस्य मुखारविन्दे वदनकमले द्विषत्साध्वसकातरान्तां तारकारिभयतरलप्रान्तां दृष्टिं नेत्रं दधुः धृतवन्तः स्वर्गप्रवेशक्षणे तारकभीता सुराः कुमारं पश्यन्तिस्मेत्यर्थः । सुराणां कुमाराननेक्षणप्रदाने रिपुभयकातरान्तत्वहेतोर्विशेषणतयाऽभिधानात्पदार्थहेतुककाव्यलिङ्गम् ॥ १२ ॥

सहेलहास[4]च्छुरिताननेन्दुस्ततः कुमारः पुरतो [5]भविष्णुः ।
स तारकापात[6]मपेक्षमाणो रणप्रवीरो [7]हि सुरानवोचत् ॥ १३ ॥

सी०—सहेलेति । ततो दृष्टिपातानन्तरं रणे प्रकृष्टं वीरोऽत एव तारकस्यापातं युद्धार्थमागमनमपेक्षते सोऽपेक्षमाणः । प्रतीच्छन्नित्यर्थः । अत एव पुरतोऽग्रतो भविष्णुः स कुमारः कार्तिकेयः सहेलः सक्रीडो यो हासस्तेन छुरिताननेन्दुर्मिश्रितमुखचन्द्रः सन् । किंचिद्विहस्येत्यर्थः । हि निश्चितम् । सुरानवोचज्जगाद ॥ १३ ॥

शि०—सहेलेति । ततोऽनन्तरं दृष्टिधारणोत्तरमित्यर्थः । रणप्रवीरः सङ्ग्रामपराक्रमी अत एव तारकापातमपेक्षमाणः तारकासुरागमनं प्रतीक्षन् । अत एव

---

१. सुरत्वरा २. सुविस्मरेविलोचनस्य, सुविस्मरेविलोचनान्तः
३. कामरास्ते, कामरान्ते, ४. उच्चरित; उच्छुरित, ५. निविष्टः,
६. अवेक्षणः, ७. अभि ।

पुरतोऽग्रतो भविष्णुर्भवितुमिच्छुः पुरोगामीत्यर्थः स कुमारः कार्त्तिकेयः सहेलहासच्छुरिताननेन्दुः सक्रीडहासास्पदवदनचन्द्रः सन् हि निश्चये। सुरान्देवान्प्रत्युवाचोक्तवान्। कुमारः सुरैर्दृष्टिपाते कृते किञ्चिद्विहस्य तानब्रवीदित्यर्थः ॥ १३ ॥

भीत्यालमद्य त्रिदिवौकसोऽमी स्वर्गं भवन्तः प्रविशन्तु सद्यः।
अत्रैव मे दृक्पथमेतु [1]शत्रुर्महासुरो [2]वः खलुः [3]दृष्टपूर्वः ॥ १४ ॥

सी०—भीत्येति। भो त्रिदिवौकसो देवाः, अद्य संप्रति भीत्या भयेनालम्। न भेतव्यमित्यर्थः। किं त्वमी भवन्त सद्यः सहसैव स्वर्गं प्रविशन्तु। स्वर्गप्रवेशे भयहेतुको विलम्बो न विधेय इति तात्पर्यम्। सद्यः सपदि। तत्क्षणमित्यर्थः। अथ रोषादाह—पूर्वं दृष्टो दृष्टपूर्वः। 'राजदन्तादिषु' इति प्राक्प्रयोगार्हस्य पूर्वशब्दस्य परः प्रयोगः। संभवानुरोधाद्धवद्भिरिति लभ्यते। ननु व इत्यनेनैव सिद्धिरिति चेन्न। 'नलोके—' इति षष्ठीनिषेधात्। तथा वो युष्माकं शत्रुर्दृष्टा महासुरस्तारकोऽत्रैव स्वर्गं एव मे मम दृक्पथं दृग्गोचरत्वमेतु प्राप्नोतु। दृक्पथमिति 'ऋक्पूरब्धूः—' इति समासान्तोऽप्रत्ययः ॥ १४ ॥

शि०—भीत्येति। हे त्रिदिवौकसः सुरा अद्येदानीं भीत्या साध्वसेनाऽलं व्यर्थम्। किन्तु अमी भवन्तः सद्यः सहसैव स्वर्गं प्रविशन्तु। दृष्टपूर्वः पूर्वोदृष्टः वो युष्माकं शत्रुः अरिः महासुरस्तारकः अत्रैव स्वर्गे एव मे मम दृक्पथं नेत्रगोचरतामेतु प्राप्नोतु। युष्मद्रिपोस्तारकस्यात्रैव भाविविनाशत्वाद्भवद्भिः स्वर्गप्रवेशे भयो न विधेय इत्यर्थः ॥ १४ ॥

[4]स्वर्लोकलक्ष्मीकचकर्षणाय दोर्मण्डलं [5]वलगति यस्य चण्डम्।
इहैव तच्छोणितपानकेलिमह्नाय कुर्वन्तु शरा ममैते ॥ १५ ॥

सी०—स्वर्लोकेति। स्वर्लोकस्य लक्ष्म्याः कचाः केशास्तेषां कर्षणाय। लक्ष्मीकेशानां हरणं कर्तुमित्यर्थः। 'तुमर्थात्' इति चतुर्थी। चण्डं प्रचण्डं यस्य तारकस्य दोर्मण्डलं वलगति चलति। तस्य तारकस्य यच्छोणितं रुधिरं तस्य पानं तदेव केलिः क्रीडा तां कमभूतामेते मम शरा अह्नाय झटिति। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः। इहैव कुर्वन्तु। तं विनाशयन्त्वित्यर्थः ॥ १५ ॥

शि०—स्वर्लोकेति। स्वर्लोकलक्ष्मीकचकर्षणाय नाकश्रीकेशान् हर्तुमित्यर्थः। यस्य तारकासुरस्य दोर्मण्डलं बाहुयुगलं वलगति चलति। एते मम शरा बाणा

---

१. अभि, २. यः ३. कालदृष्टः, ४. स्वर्गकलक्ष्मी,
५. यस्य बलातिचण्डम्,

इहैव स्वर्गे एव तच्छोणिततपानकेलिं तारकरुधिरपानक्रीडामह्नाय शीघ्रं कुर्वन्तु विदधतु । मम शराः स्वर्ग एव तारकं निघ्नन्त्वित्यर्थः ॥ १५ ॥

**शक्तिर्ममासावहतप्रचारा प्रभावसारा [1]सुमहःप्रसारा ।**
**स्वर्लोकलक्ष्म्या[2] विपदावहारेः[3] शिरो हरन्ती दिशतान्मुदं[4] वः ॥**

सी०—शक्तिरिति । अहतप्रचाराविघ्नितगतिः।, तथा प्रभावः सामर्थ्यं स एव सारो यस्याः । सुतरां महसस्तेजसः प्रसारो मण्डलं यस्याः । अतितेजस्वनीत्यर्थः । स्वर्लोकलक्ष्म्या या विपदा तस्या अवहा । सुखदेत्यर्थः । तथारेः प्रतिकूलस्य शिरः शीर्षं हरन्ती । असौ मम शक्तिरायुधं वो युष्माकं मुदं प्रीतिं दिशताद्दत्तात् । आशिषि लोट् ॥ १६ ॥

शि०—शक्तिरिति । अहतप्रचारा अहतोऽविघ्नितः प्रचारो गतिर्यस्याः सा तथोक्ता अविघ्नितगतिरित्यर्थः । प्रभावसारा प्रभावः सारो यस्याः सा तथोक्ता अतिबलवतीत्यर्थः । सुमहः प्रसारा सुतरां महसः प्रसारो मण्डलं यस्याः सा । प्रचुरतेजस्वनीत्यर्थः । स्वर्लोकलक्ष्म्या नाकश्रिया विपदावहा दुःखहारिणी । अरेः शत्रोः शिरोहरन्ती मूर्धच्छेदिनी असौ साक्षाद्दृश्यमाना मम शक्तिस्तदाख्याऽऽयुधविशेषः । युष्माकं मुदं प्रीतिं दिशतात् दत्तात् ॥ १६ ॥

**इत्यन्धकारातिसुतस्य दैत्यवधाय [5]युद्धोत्सुकमानसस्य ।**
**सर्वं [6]शुचिस्मेरमुखारविन्दं गीर्वाणवृन्दं [7]वचसा ननन्द ॥ १७ ॥**

सी०—इतीति । दैत्यवधाय दैत्यवधं कर्तुं युद्ध उत्सुकमानसस्योत्कण्ठितचेतसोऽन्धकारातिसुतस्य शिवपुत्रस्य कुमारस्य सम्बन्धिना । इति पूर्वोक्तेन वचसा सर्वं गीर्वाणवृन्दं देवसमूहः शुचि शुद्धं स्मेरं समन्दहासं मुखारबिन्दं मुखकमलं यस्य तथाभूतं सत् ननन्द जहर्ष ॥ १७ ॥

शि०—इतीति । सर्वं समग्रं गीर्वाणवृंदं सुरसङ्घः ( कर्तृपदं ) दैत्यवधाय तारकविनाशाय ( तुमर्थाच्चेति चतुर्थी ) दैत्यवधं कर्तुमित्यर्थः । युद्धोत्सुकमानसस्य युद्धे संग्रामे विषये उत्सुकमुत्कण्ठितं मानसं यस्य स तस्य सङ्ग्रामोत्कण्ठितचेतसः । अन्धकारातिसुतस्य अन्धकस्य तदाख्यासुरस्याऽरातिः शत्रुः शिवस्तस्य सुतः सूनुः कार्तिकेयः तस्य तथोक्तस्य शिवसूनोरित्यर्थः । इत्युक्तेन वचसा वाक्येन शुचिस्मेरमुखारविन्दं प्रशस्तसमन्दहासवदनकमलं सत् आननन्द जहर्ष । अभयदं कुमारवचो निशम्य सकलसुरगणः प्रसन्नवदनः सन् हृष्टवानित्यर्थः । सुरनिकरानन्दप्राप्तौ कुमारवचनरूपहेतोः पदार्थत्वेनाऽभिधानात्पदार्थहेतुकं काव्यलिङ्गम् ॥ १७ ॥

---

१. सुमहाप्रसारा, २. लक्ष्मीः ३. सहारिशिरः, सहारेः शिरः
४. दिशतां मुखम्, ५. युद्धोत्सवमानसस्य ६. [illegible]विस्मेर ७. ववन्द

[1]सान्द्रप्रमोदात्पुलकोपगूढः सर्वाङ्ग[2]संफुल्लसहस्रनेत्रः ।
तस्योत्तरीयेण निजाम्बरेण [3]निरुञ्छनचारु चकार शक्रः ।। १८ ।।

सी०—सान्द्रेति । सान्द्रप्रमोदाद्धनानन्दाद्धेतोः पुलकै रोमाञ्चैरुपगूढ आश्लिष्टः । 'पुलकः कृमिभेदेऽश्मभेदे च मणिदोषके । रोमाञ्चे हरिताले गजात्तपिण्डे च गन्धके' इति मेदिनी । तथा सर्वेष्वङ्गेषु सफुल्लानि सहस्रनेत्राणि यस्य । यतः । सहस्राक्षस्तथाभूतः शक्र इन्द्रस्तस्य कुमारस्योत्तरीयेण संव्यानेन । 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । तथा निजाम्बरेण निरुञ्छनं परिवर्तनं चारु चकार । भ्रातृभावायान्योन्यवस्त्रग्रहणं चक्रतुरित्यर्थः । तदुक्तं मेदिन्याम्—'निरुञ्छनं बन्धुतायै वाससः परिवर्तनम्' इति । लोकेऽपि भ्रातृतायै परस्योष्णिग्बन्धनव्यवहारस्तद्वदत्रापीति अनुशासने सामान्यतो वासोग्रहणेन प्रकृत उत्तरीयग्रहणं सङ्गच्छते । लोकव्यवहारस्तु संप्रदायसिद्धः । उष्णिहि विशेषश्रैष्ठ्योपलम्भ एव व्यवहारमूलमिति मन्तव्यम् ।। १८ ।।

शि०—सान्द्रेति । सान्द्रप्रमोदादत्यानन्दाद्धेतोः पुलकोपगूढो रोमाञ्चाश्लिष्टः तथा सर्वाङ्गसंफुल्लसहस्रनेत्रः निखिलात्मकायविकचसहस्रलोचनः शक्रः सुरेन्द्रः तस्य कुमारस्य उत्तरीयेण संव्यानेन तथा निजाम्बरेण स्वोत्तरीयवस्त्रेणं निरुञ्छनं परिवर्तनं चारु सम्यक् यथा तथा चकार कृतवान् । परस्परवस्त्रपरिवर्तनं बन्धुतासम्पादनार्थं कृतवानित्यर्थः ।। १८ ।।

घनप्रमोदाश्रुत[4]रंगिताक्षैर्मुखैश्चतुर्भिः प्रचुरप्रसादैः[5] ।
[6]अथो अचुम्बद्विधिरादिवृद्धः षडाननं षट्सु [7]शिरःसु [8]चित्रम् ।।

सी०—घनेति । अथो अनन्तरमाद्ययोर्हरिहरयोर्वृद्धो महान्विधिर्ब्रह्मा । घनः सान्द्रः । 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । ना मुस्तादौ घनाद्येषु विस्तारे लोहमुद्गरे । त्रिषु सान्द्रे च दृष्टार्थं' इति मेदिनी । यः प्रमोदो हर्षस्तेन निमित्तेन यदश्रु नेत्रपयस्तेन तरङ्गितानि संजाततरङ्गाणि 'तारकादिभ्य इतच्' । अक्षीणि नेत्राणि येषां तैः । हर्षवशादुद्गताश्रुभिरित्यर्थः । तथा प्रचुरप्रसादैरधिकप्रसन्नतायुक्तैश्चतुर्भिर्मुखैः षट्सु शिरःसु षडाननं कुमारं अचुम्बदस्पृशत् । इति चित्रं विस्मयः । चतुर्भिर्मुखैः षण्णां मुखानां यौगपद्येन स्पर्शासम्भवात् । परिहारस्तु प्रत्येकं षट्सु चतुर्भिश्चुम्बनेन सन्धेयः ।। १९ ।।

---

१. सान्द्रप्रमोदः, २. संलग्न, ३. निर्मञ्छनम्, निरूहणम्, निरुञ्छनम्, ४. परिप्लवाक्षैः ५. प्रमोदः, ६. क्रमाच्चुचुम्बे, ७ मुखेषु ८. हर्षात्,

शि०—घनेति । अथो अनन्तरमन्योऽन्योत्तरीयपरिवर्तनोत्तरमित्यर्थः । आदिवृद्धः हरिहरोभयाऽपेक्षया स्थविरः ( प्राचीनः ) विधिः प्रजापतिः । घनप्रमोदाश्रुतरङ्गिताक्षैः प्रचुरानन्दबाष्पाऽऽव्यासलोचनैः प्रचुरप्रसादैरतिशयप्रसन्नैश्चतुर्भिः चतुःसंख्यकैर्मुखैर्वदनैः ( करणैः ) षट्संख्यकेषूत्तमाङ्गेषु मध्ये षडाननं कार्त्तिकेयं अचुम्बत् चुम्बितवान् । चित्रमाश्चर्यम् ॥ १९ ॥

[1]तं साधु साध्वित्यभितः प्रशस्य मुदा कुमारं त्रिपुरासुरारेः ।
आनन्दयन्वीर जयेति वाचा गन्धर्वविद्याधरसिद्धसंघाः ॥ २० ॥

सी०—तमिति । गन्धर्वा देवगायकाः, विद्याधराः, सिद्धाश्च देवविशेषाः, एषां संघाः समुदायाः कर्तारः तं त्रिपुरासुरस्यारेः शिवस्य कुमारं पुत्रं मुदा प्रीत्या निमित्तेन साधु साध्वित्यभितः संमुखत्वेन प्रशस्य स्तुत्वा 'हे वीर, त्वं जय शत्रोः सकाशाज्जयं प्राप्नुहि' इत्येवंभूतया वाचानन्दयन्नानन्दितमकुर्वन् ॥ २० ॥

शि०—तमिति । गन्धर्वविद्याधरसिद्धसङ्घाः सुरगायकविद्याधरसुरविशेषसमूहाः तं त्रिपुरासुरारेः त्रिपुरासुरशत्रोः शिवस्य कुमारं पुत्रं कार्त्तिकेयं मुदा हर्षेण साधु साधु इत्यभितः साम्मुख्येन प्रशस्य संस्तुत्य हे वीर, त्वं जय शत्रुत उत्कर्षं लभस्वेति वाचा गिराऽनन्दयन् अमोदयन् । गन्धर्वादयो वचसा हरसुतं प्रासादयन्नित्यर्थः ॥ २० ॥

दिव्यर्षयः [2]शत्रुविजेष्यमाणं [3]तमभ्यनन्दन्किल नारदाद्याः ।
[4]निरुञ्छनं [5]चक्रुरथोत्तरीयैश्चामीकरीयैर्निजवल्कलैश्च ॥ २१ ॥

सी०—दिव्यर्षय इति । नारदाद्या नारदप्रमुखा दिव्या दिवि भवा ऋषयः । 'द्युप्रागपागुदक्–' इति यत् । शत्रुं तारकं विजेष्यमाणं जेष्यन्तं तं कुमारमभ्यनन्दंस्तुष्टुवुः किल । अथानन्तरं चामीकरीयैः सौवर्णैरुत्तरीयैर्वस्त्रैः । तथा निजवल्कलैश्च निरुञ्छनं बन्धुतायै वासः परिवर्तनं चक्रुः निरुञ्छनं पूर्वमेव निर्णीतम् ॥ २१ ॥

शि०—दिव्येति । नारदाद्या नारदप्रभृतयो दिव्यर्षयः स्वर्गोद्भवा ऋषयः शत्रुविजेष्यमाणं रिपुं जेष्यन्तं तं कुमारमभ्यनन्दन् प्रासादयन् ( अस्तुवन् ) अथ चामीकरीयैः हिरण्मयैः हिरण्यप्रचुरैर्वा उत्तरीयैः संव्यानैः निजवल्कलैः स्वतरुत्वग्भिश्च निरुञ्छनं वस्त्रपरिवर्तनं चक्रुः विदधुः । यथा भ्रातृभावसम्पादनार्थमिन्द्रो वस्त्रपरिवर्तनं चकार तथा नारदादयोऽपि तदर्थं तद्विदधुरिति भावः ॥ २१ ॥

---

१. सुसाधुः २. तस्य वचो वरार्थम्, ३. समभ्यनन्दन्, तदभ्यनन्दनम्. ४. निर्मञ्छनम्, निमञ्छनम्; ५. नववल्कः,

ततः सुरः शक्तिधरस्य तस्यावष्टम्भतः साध्वसमुत्सृजन्तः[1]।
उत्सेहिरे स्वर्गमनन्तशक्तेर्[2]गन्तुं वनं यूथपतेरिवेभाः ॥ २२ ॥

सी०—तत इति। ततोऽनन्तरं शक्तिरायुधविशेषस्तां धरतीति तथोक्तस्य तस्य कुमारस्य। 'शक्तिरस्त्रान्तरे शौर्ये उत्साहादौ बलेस्त्रियाम्' इति मेदिनी। अवष्टम्भत आश्रयतः। 'अवष्टम्भः सुवर्णे च स्तम्भआरम्भयोरपि' इति मेदिनी। अत्र स्तम्भशब्देनाश्रयो लक्षितः। स्तम्भस्याश्रयमिति तत्त्वात्। साध्वसं भयम्। 'भीतिर्भीः साध्वसं भयम्' इत्यमरः। उत्सृजन्तः सुरा देवाः। अनन्तशक्तेरपारशौर्यस्य यूथपतेर्गजरास्यावष्टम्भत इभा गजा वनमिव। स्वर्गं गन्तुं प्रवेष्टुमुत्सेहिर उत्साहं चक्रुः। अनन्तशक्तेरिति विशेषण कुमारेऽपि योजनीयम् ॥ २२ ॥

शि०—तत इति। ततोऽनन्तरं नारदादिकर्तृकनिरुञ्छनविधानोत्तरमित्यर्थः। सुरा देवाः अनन्तशक्तेरमितवीर्यस्य शक्तिधरस्य तदाख्यायुधविशेषधारिणः तस्य कार्त्तिकेयस्याऽवष्टम्भतः आश्रयादवलम्बादित्यर्थः। साध्वसं भयमुत्सृजन्तः त्यजन्तः सन्तः अनन्तशक्तेरतिबलवतो यूथपतेर्गजराजस्याऽवष्टम्भत आश्रयतः इभा गजा वनमिव स्वर्गं दिवं गन्तुं प्रवेष्टुमुत्सेहिरे उत्साहिता बभूवुः। गजराजाश्रयादिभा वनमिव कुमाराश्रयात्सुरा दिवं प्रवेष्टुमुत्कण्ठिता बभूवुरितिभावः। अत्र पूर्णोपमाऽलङ्कारः ॥ २२ ॥

[3]अथाभिपृष्ठं गिरिजासुतस्य पुरंदरारातिवधं[4] चिकीर्षोः।
सुरा निरीयुस्त्रिपुरं दिधक्षोरिव स्मरारेः प्रमथः समन्तात् ॥२३॥

सो०—अथेति। अथोत्साहानान्तरं सुराः पुरंदरस्येन्द्रस्यारातेस्तारकस्य वधं मृत्युं चिकीर्षोः कर्तुमिच्छोर्गिरिजासुतस्य कुमारस्याभिपृष्ठं पृष्ठसंमुखं त्रिपुरं दैत्यं दिधक्षोर्दग्धुमिच्छोः 'दह भस्मकरणे' इति धातोरिच्छार्थे सनि 'सन्यङोः' इति द्वित्वे 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। स्मरारेः शिवस्याभिपृष्ठं प्रमथा इव स्थिताः समन्तान्निरीयुर्निर्जग्मुः। अन्तर्विविशुरित्यर्थः ॥ २३ ॥

शि०—अथेति। अथानन्तरं सुरोत्साहोत्तरमित्यर्थः। सुरा देवाः पुरन्दरारातिवधमिन्द्रशत्रुविनाशं चिकीर्षोः कर्तुमिच्छोः गिरिजासुतस्य कार्त्तिकेयस्याऽभिपृष्ठं पृष्ठसम्मुखं त्रिपुरं तदाख्यासुरं दिधक्षोर्दग्धुमिच्छो स्मरारेः शिवस्य अभिपृष्ठं प्रमथा गणा इव समन्तात्सर्वतः निरीयु. निर्गता। त्रिपुरारेरभिपृष्ठं प्रमथा इव तारकारेभिपृष्ठं सुरा निर्जग्मुरित्यर्थः। अत्राप्यलङ्कारः पूर्णोपमा नामैव ॥ २३ ॥

---

१. उत्यजन्तः २. अनन्तशक्त्यै, ३. अभिपृष्ठे, ४. जयम्,

[१]सुराङ्गणानां जलकेलिभाजां प्रक्षालितैः संततमङ्गरागैः ।
प्रपेदिरे पिञ्जरवारिपूरां स्वर्गौकसः स्वर्गधुनीं पुरस्तात् ॥ २४ ॥

सी०—सुराङ्गणानामिति । स्वर्गौकसो देवाः पुरस्तादग्रे जलकेलिभाजां जलक्रीडासक्तानां सुराङ्गणानामप्सरसां सन्ततं निरन्तरं प्रक्षालितैरङ्गरागैः कुङ्कुमादिरचितैः पिञ्जरवारिपूरां पीतजलप्रवाहां स्वर्गधुनीं मन्दाकिनीं प्रपेदिरे प्रापुः । सुराङ्गणानामिति 'कुमति च' इति णत्वम् २४ ।

शि०—सुराङ्गणानामिति । स्वर्गौकसः सुराः पुरस्तात्पूर्वं जलकेलिभाजां जलेषु केलिं भजन्तीति तथोक्तास्तासां तथोक्तानां जलक्रीडारतानां सुराङ्गणानां सुरस्त्रीणामप्सरसामित्यर्थः । संततं सर्वदा प्रक्षालितैः त्यक्तैरङ्गरागैः कुङ्कुमादिरचितैः पिञ्जरवारिपूरां पीत (हरिद्राभ) जलप्रवाहा स्वर्गधुनी गङ्गां प्रपेदिरे प्राप्तवन्तः ॥

अथ चतुर्भिस्तामेव विशिनष्टि दिग्दन्तिनामित्यादिभिः—

दिग्दन्तिनां वारिविहारभाजां[२] कराहतै[३]र्भीमतरैस्तरंगैः ।
आप्लावयन्तीं मुहुरालबालश्रेणिं[४] तरूणां [५]निजतीरजानाम् ॥ २५ ॥

सी०—दिग्दन्तीति । किंभूतां स्वर्गधुनीम् । वारिणि विहारभाजां क्रीडतां दिग्दन्तिनामैरावतादीनां करैः शुण्डादण्डैः । 'करो वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयोः' इति मेदिनी । आहतैस्ताडितैरत एव भीमतरैरतिशयभयानकैस्तरङ्गैः कल्लोलैः कृत्वा निजतीरजानामात्मीयतटोत्पन्नानां तरूणां वृक्षाणां सम्बन्धिनीमालवालानां मूलस्थलीनां श्रेणिम् । 'श्रेणिः स्त्रीपुंसयोः पंक्तौ समाने शिल्पिसंहतौ' इति मेदिनी । मुहुर्वारंवारम् । 'मुहुः पुनःपुनः शश्वत्' इत्यमरः । आप्लावयन्तीं सेचयन्तीम् ॥ २५ ॥

गङ्गामेव वर्णयति श्लोकचतुष्टयेन—

शि०—दिग्दन्तिनामिति । वारिविहारभाजां जलक्रीडासक्तानां दिग्दन्तिनामैरावतप्रभृतिगजानां कराहतैः शुण्डादण्डताडितैरत एव भीमतरैरतिभयानकैः तरङ्गैरूर्मिभिः (करणैः) निजतीरजानां स्वकूलोत्पन्नानां तरूणां शाखिनाम् आलवालश्रेणिं मूलस्थलीपंक्तिं मुहुर्भूयोभूयः आप्लावयन्तीं सेचयन्तीम् । या दिग्गजावगाहनोत्थभीषणोर्मिद्वाराऽऽत्मकूलजतरुमूलस्थलीसेचनकारिणीनामित्यर्थः ॥ २५ ॥

[६]लीलारसाभिः सुरकन्यकाभि[७]र्हिरण्मयीभिः सिकताभिरुच्चैः ।
माणिक्यगर्भाभि[८]रुपाहिताभिः प्रकीर्णतीरां वरवेदिकाभिः ॥ २६ ॥

---

१. सुराङ्गनानाम्, २. विहारलीलाम्, ३. भीमवराहयूथैः, ४. श्रेणीः श्रेणीम्. ५. गुरुतीरजानाम्, ६. लालालसाभिः, ७. हिरण्यहसाभिरुतीभिः, हिरण्यजाभिः, सिकताभिः, ८. उपोहिताभिः.

सी०—लीलेति। पुनः किंभूताम्। लीलायां क्रीडायां रसः प्रीतिर्यासां ताभिः सुराणां कन्यकाभिः पुत्रीभिः। तथा हिरण्मयीभिः सौवर्णीभिः सिकताभिर्वालुकाभिः तथा माणिक्यगर्भाभिर्मणिखचितमध्याभिः तथोपाहिताभिर्निर्मिताभिः न त्वकृत्रिमाभिः। तथोच्चैर्महतीभिर्वराः श्रेयस्यो या वेदिकास्ताभिश्च प्रकीर्णतारां व्याप्तसैकताम् ॥ २६ ॥

शि०—लीलेति। पुनः कीदृशीं स्वर्गधुनीं। लीलारसाभिः क्रीडाप्रीतिभिः सुरकन्यकाभिः देवात्मजाभिः। तथा हिरण्मयीभिः स्वर्णसम्बन्धिनीभिः सिकताभिः वालुकाभिः। तथा माणिक्यगर्भाभिः रत्नव्याप्तमध्याभिः। तथा उपाहिताभिः रचिताभिः। तथोच्चैर्महतीभिर्वरवेदिकाभिश्च प्रकीर्णतीरामाक्रान्तकूलाम् ॥ २६ ॥

**सौरभ्यलुब्धभ्रमरोपगीतैर्हिरण्यहंसावलिकेलिलोलैः।**
**चामीकरीयैः कमलैर्विनिद्रैश्च्युतैः परागैः [2]परिपिङ्गतोयाम् ॥ २७ ॥**

सी०-सौरभ्येति। पुनः किंभूताम्। सौरभ्ये सौगन्ध्ये लुब्धा लम्पटा ये भ्रमरा द्विरेफास्तैरुपगीतैः। मुखरितैरित्यर्थः। हिरण्यस्य सुवर्णस्य ये हंसा मरालास्तेषामावल्यः पंक्तयस्तासां केलिः क्रीडा तया निमित्तेन लोलैश्चञ्चलैश्चामीकरीयैः सौवर्णैर्विनिद्रैर्विदलितैः कमलैरुपलक्षिताम्। अत एव च्युतैः कमलेभ्यो भ्रष्टैः परागैः सुमनोरजोभिः। 'परागः सुमनोरजः' इत्यमरः। परिपिङ्गं परितः पीतं तोयं जलं यस्यास्तथोक्ताम् ॥ २७ ॥

शि०—सौरभ्येति। पुनः कीदृशीम्। सौरभ्यलुब्धभ्रमरोपगीतैः सौगन्ध्येच्छुकद्विरेफमुखरितैः हिरण्यहंसावलिकेलिलोलैः हेममरालश्रेणिविलासचपलैः चामीकरीयैर्हिरण्यसम्बन्धिभिः विनिद्रैर्विकसितैः कमलैर्युक्ताम्। अत एव च्युतैः पतितैः परागैः रजोभिः परिपिङ्गतोयाम् सुपीतजलाम् ॥ २७ ॥

**कुतूहलात्प्रष्टुमुपागताभि[3]स्तीरस्थिताभिः [4]सुरसुन्दरीभिः।**
**[5]अभ्यूर्मिराजिप्रतिबिम्बिताभिर्मुदं दिशन्तीं व्रजतां जनानाम् ॥२८॥**

सी—कुतूहलादिति। द्रष्टुं कुतूहलात्कौतुकात्। आनन्दादिति यावत्। उपागताभिरागताभिः अत एव तीरस्थिताभिः। अत एवाभ्यूर्मिराजि। ऊर्मिराजावित्यभ्यूर्मिराजि तरङ्गमध्ये प्रतिबिम्बिताभिः सुरसुन्दरीभिर्देवाङ्गनाभिर्निमित्तेन व्रजतां गच्छतामपि जनानां मुदं दिशन्तीं ददतीम्। एकासामप्यप्सरसां प्रतिबिम्बवशादनेकधादृश्यमानत्वाद्युक्ता प्रीतिजनकतेति भावः ॥ २८ ॥

---

१. अवकीर्णः, २. परिपिङ्गतोयाम्, ३. तीरे स्थिताभिः,
४. सुरकन्यकाभिः, ५. अभ्यूर्मिराजीः, अत्यूर्मिराजि,

शि०—कुतूहलेति । पुनः कीदृशीम् । कुतूहलात्प्रमोदाद्द्रष्टुमवलोकितुमुपागताभिः प्राप्ताभिः तीरस्थिताभिः कूलाश्रिताभिः अत एवाऽम्यूर्मिराजि (अत्रोर्मिराजाविति विग्रहे विभक्त्यर्थेऽव्ययीभावसमासः) वीचिमध्ये इत्यर्थः । प्रतिबिम्बिताभिः सुरसुन्दरीभिः सुरस्त्रीभिः व्रजतामपि जनानां मुदं प्रीतिं दिशन्तं वितरन्तीम् ।२८।

ननन्द [1]सद्यश्चिरकालदृष्टां विलोक्य [2]शक्रः सुरदीर्घिकां ताम ।
[3]अदर्शयत्सादरमद्रिपुत्रीमहेशपुत्राय [4]ततः पुरोगः ॥ २९ ॥

सी०—ननन्देति । शक्र इन्द्रश्चिरकालेन बहुकालेन दृष्टां तां सुरदीर्घिकां मन्दाकिनीं विलोक्य सद्यो झटिति ननन्द जहर्ष । अतिरमणीयं वस्तु चिरकालदृष्टं सद्बहुप्रीतिजनकं भवतीति भावः । ततोऽनन्तरमद्रिपुत्रीमहेशयोः पुत्राय कुमाराय सादरं यथा तथा पुरोगः सन्नदर्शयत् ॥ २९ ॥

शि०—ननन्देति । शक्रो महेन्द्रः चिरकालदृष्टां बहुकालवलोकितां तामुक्तविशेषणविशिष्टां सुरदीर्घिकां विलोक्य दृष्ट्वा सद्यः शीघ्रं ननन्द हृष्टवान् । ततोऽनन्तरं पुरोगोऽग्रवर्ती सन् अद्रिपुत्रीमहेशपुत्राय गिरिजागिरीशसुताय कार्तिकेयाय सादरं सत्कारपूर्वकं यथा तथाऽदर्शयदलोकयत् । मनोज्ञवस्तुनो हर्षोत्पादकत्वादवलोकनं युक्तमिति भावः ॥ २९ ॥

स [5]कार्तिकेयः पुरतः [6]परीतः सुरैः समस्तैः सुरनिम्नगां ताम् ।
अपूर्वदृष्टा[7]मवलोकमानः [8]सविस्मयः स्मेरविलोचनोऽभूत् ॥ ३० ॥

सी०—स इति । समस्तैः सुरैः परीतो व्याप्तः स कार्तिकेयः कुमारः । अपूर्वदृष्टाम । अधुनैव दृष्टमित्यर्थः । तां सुरनिम्नगां पुरतोऽग्रेऽवलोकमानः सन्सविस्मयः साश्चर्यः स्मेरविलोचनः समन्दहासनेत्रश्चाभूत् ॥ ३० ॥

शि०—स इति । समस्तैः समग्रैः सुरैः परीतो व्याप्तः स कार्तिकेयो महेशतनुजः अपूर्वदृष्टां सद्योऽवलोकितां तां सुरनिम्नगां गङ्गां पुरतोऽग्रेऽवलोकमानः पश्यन् सन् सविस्मयः साश्चर्यः स्मेरलोचनः समन्दहासनयनश्चाऽभूत् बभूव । ३० ।

उपेत्य तां [9]तत्र किरीटकोटिन्यस्ताञ्जलिर्भक्तिपरः कुमारः ।
गीर्वाणवृन्दैः [10]प्रणुतां प्रणुत्य नम्रेण मूर्ध्ना [11]मुदितो ववन्दे ॥३१॥

---

१. शक्रः २. सद्यः ३. आशंसयन्सादरमद्रिपुत्रीमहेशपुत्राय पुरः पुरोगाः ।
४. पुरः ५. स कार्त्तिकेयः पुरतः परीतो वियच्चरैर्लोलतरैस्तरंगैः',
६. पुरोजः, ७. इव लोकमानः ८. सविस्मय, ९. रत्नकिरीट,
१०. प्रणताम्, ११. नमितः, प्रणतः.

सी०—उपेत्येत्ति। भक्तिपरो भक्तिप्रवणः कुमारः कार्तिकेयो गीर्वाणवृन्दैर्देवसमूहैः प्रणुतां प्रकर्षेण स्तुताम्। 'णु स्तुतौ' इति धातोः कर्मणि क्तः। तां मन्दाकिनीं तत्रोपेत्य। तत्समीपं गत्वेत्यर्थः। किरीटकोटौ मुकुटाग्रे। 'कोटिः स्त्री धनुषोऽग्रेऽस्त्रौ' इति मेदिनी। अत्राग्रशब्दस्य धनुःशब्दोपलक्षिततया सर्वेषामग्रवाचकत्वं बोध्यं। न्यस्तोऽञ्जलिर्येन तथाभूतः सन्। प्रणुत्येडयित्वा मुदितो मुमुदे। इदं कृदन्तरूपं क्रियापदम्। तथा नम्रेण मूर्ध्ना शिरसा ववन्दे नमश्चक्रे ॥ ३१ ॥

शि०—उपेत्येति। भक्तिपरो भक्तिप्रवीणः कुमारः कार्त्तिकेयः गीर्वाणवृन्दैः सुरसमूहैः प्रणुतां सस्तुतां तां गङ्गामुपेत्य समीपं प्राप्य किरीटकोटिन्यस्ताञ्जलिः मुकुटाग्रार्पितकरः सन् नम्रेण नतेन मूर्ध्ना शिरसा प्रणुत्य स्तुत्वा मुदितो हृष्टश्च सन् ववन्दे तुष्टाव तामिति शेषः ॥ ३१ ॥

[1]प्रर्णतितस्मेरसरोजराजिः पुरः परीरम्भमिलन्महोर्मिः।
कपोलपालिश्रमवारिहारि भेजे गुहं [2]तं सरितः समीरः ॥ ३२ ॥

सी०—प्रर्णतितेति। प्रर्णतिता कम्पिता स्मेरसरोजानां विकसितकमलानां राजिर्माला येन। अनेन सौगन्ध्योक्तिः। तथा परीरम्भेणाश्लेषेण मिलन्त आत्मनि मिश्रीभवन्तो महोर्मयो यस्य। अनेन शैत्योक्तिः। कपोलपाल्याः। कपोलरूपलताग्रस्येत्यर्थः। 'पालिः कर्णे लताग्रेऽश्रौ' इति विश्वः। श्रमेण यद्वारि स्वेदस्तस्य हारी। अनेन मान्द्योक्तिः। अन्यथा श्रमहृतेरसम्भवः। एवं भूतः सरितो मन्दाकिन्याः समीरः पवनः पुरोऽग्रे स्थितं तं गुहं स्वामिकार्तिकेयम्। यद्वा। पुरोऽग्रे भेजे सिषेवे।३२।

शि०—प्रर्णतितेति। प्रर्णतितस्मेरसरोजराजिः कम्पितविकसितकमलपङ्क्तिः तथा परीरम्भमिलन्महोर्मिः आश्लेषमिश्रीभवदविकतरङ्गः तथा कपोलपालिश्रमवारिहारी गण्डस्थलाग्राऽऽगतस्वेदापहारकः एवं भूतः सरितो गङ्गायाः समीरो वायुः पुरोऽग्रेविद्यमानं तं गुहं कार्त्तिकेयं भेजे सेवितवान्। आद्यविशेषणेन सौरभाभिधानम्। द्वितीयेन शैत्याभिधानम् तृतीयेन मान्द्याभिधानम् ॥ ३२ ॥

ततो [3]व्रजन्नन्दननामधेयं लीलावनं [4]जम्भजितः पुरस्तात्।
विभिन्नभग्नोद्[5]धृतशालसंघं प्रेक्षांचकार स्मरशत्रुसूनुः ॥ ३३ ॥

सी०—तत इति। ततो गङ्गावलोकनानन्तरं व्रजंश्चलन्स्मरशत्रुसूनुः कुमारः पुरस्तादग्रे विभिन्नो विदारितः। बाणैः शतरन्ध्रीकृत इति तात्पर्यार्थः। तथा भग्न आमर्दितो मूलं विनोपर्येव शतशकलीकृत उद्धृत

१. प्रपाटित, २. सरितः ३. जपात्, ४. वज्रभूतः, ५. उन्नतशाखि,

उत्पाटितश्च शालसंघो यस्य तत्। 'शालो ह्याले मत्स्यभेदे शालौकस्तत्प्रभेदयोः। शालद्रुस्कन्धशाखायां शालेति परिकीर्तिता ॥' इति मेदिनी। नन्दननामधेयं नन्दनसंज्ञकम्। 'नन्दनं वनम्।' इत्यमरः। जम्भजित इन्द्रस्य लीलावनमुपवनं प्रेक्षांचकार ददर्श। इजादेश्चेत्याम् ॥ ३३ ॥

शि०--तत इति। ततो गङ्गावलोकनानन्तरं व्रजन् गच्छन् स्मरशत्रुसूनुः मदनारिपुत्रः कार्तिकेयः पुरस्तादग्रे विभिन्नभग्नोद्धूतशालसंघं विदारितार्मर्दितोत्पाटितशालसमूहं नन्दननामधेयं नन्दनसंज्ञकं जम्भजित शक्रस्य लीलावनं क्रीडाकाननं प्रेक्षाञ्चकार दृष्टवान् ॥ ३३ ॥

सुरद्विषोपप्लुतमेवमे[1]तद्वनं बलस्य द्विषतो गतश्रि।
इत्थं विचिन्त्यारुणलोचनोऽभूद्भ्रूभङ्गदुष्प्रेक्ष्यमुखः[2] [3]स कोपात् ।३४।

सी०—सुरद्विषेति। स कुमारः। एतत्पुरोवर्ति बलस्य द्विषत इन्द्रस्य। अत्र 'नलोक—' इत्यादिना षष्ठीनिषेधेऽपि 'द्विषः शतुर्वा इति विकल्पात्षष्ठी। वनमुपवनं सुरद्विषा तारकेणैव न केनापि। यथा तारकेणोपद्रुतं तथा न केनापीत्यवधारणार्थेवेवकारेण ध्वन्यते। 'एवः प्रकारोपमयोरङ्गीकारावधारणे' इति विश्वः। अभितः सर्वतः। उपप्लुतमुपद्रुतमत एव गतश्रि नष्टशोभमित्थं विचिन्त्य कोपादरुणे लोचने यस्य तथा भ्रूभङ्गेन दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य तथोक्तश्चाभूत्, महतां सति स्वस्मिन्परदुःखं महादुःखावह भवतीति भावः ॥ ३४ ॥

शि०—सुरद्विषेति। स कुमारः कार्त्तिकेयः एतत् पुरोदृश्यमानं वलस्य तदाख्यासुरस्य द्विषतः शत्रोरिन्द्रस्येत्यर्थः। सुरद्विषोपप्लुतमेव तारकोपद्रवितमेव कृतविनाशमिति यावत्। अत एव गतश्रि गताः श्रीः शोभा यस्य तत् विहतशोभम् वनमुपवनं नन्दनसंज्ञकमिति यावत्। इत्थमेवं विचिन्त्य विचार्य कोपाद्रोषात् अरुणलोचनो रक्तनेत्रो घूर्णमाननयन इत्यर्थः। तथा भ्रूभङ्गाद्दुष्प्रेक्ष्यमुखः भ्रुकुटिकौटिल्यभीषणाननश्चाभूत् जातः ॥ ३४ ॥

निर्लूनलीलोपवनामपश्यद्[4]दुःसंचरीभूतविमानमार्गाम्
विध्वस्त[5]सौधप्रचयां [6]कुमारो विश्वैकसाराममरावतीं सः ॥ ३५ ॥

सी०—निलूनेति। स कुमारः कार्तिकेयः निर्लूनानि कर्तितानि लीलायाः क्रीडाया उपवनानि यस्याम्। तथा दुःखेन संचरः संचारो येषु तथाभूता विमानमार्गा विमानसंचारपथा यस्याम्। तथा विध्वस्ताः

---

१. एव, २. दुष्प्रेक्षमुखः ३. च. ४. असंचरी,
५. सौख्यप्रचयाम्, ६. प्रमृष्टविश्वौकसाराम्, प्रमृष्टवस्त्वेकसाराम्।

खण्डिताः। स्फोटिता इति यावत्। सौधप्रचया राजसदनसमूहा यस्याम्। 'सौधोऽस्त्री राजसदनम्' इत्यमरः। तथा विश्वस्मिन्नेकैव सारां तत्त्वभूतांताममरावतीमिन्द्रपुरीमपश्यत्। 'नगरी त्वमरावती' इत्यमरः॥

शि०—निर्लूनेति। स कुमारः कार्त्तिकेयः निर्लूनलीलोपवनां संछिन्नक्रीडारामां तथा दुःसंचरीभूतविमानमार्गाम् दुर्गम्यव्योमयानसरणिं विध्वस्तसौधप्रचयाम् खण्डित( पातित )नृपसदनसमूहां तथा विश्वैकसारां जगदुत्तमा लोकोत्तरामिति यावत्। अमरावतीं सुरेन्द्रनगरीमपश्यत् दृष्टवान्॥ ३५॥

[1]गतश्रियं [2]वैरिवराभिभूतां दशां सुदीनामभितो दधानाम्।
नारीमवीरामिव तामवेक्ष्य [3]स बाढमन्तः करुणापरोऽभूत्॥ ३६॥

सी०—गतश्रियमिति। स कुमारः वैरिवरेण तारकेणाभिभूतां पूर्वोक्तविधिना पराभूताम्। पराभवोऽत्र विध्वंसनक्रियानुकूलोव्यापारो ग्राह्यः। अत एव गतश्रियं भ्रष्टशोभाम्। अत एव सुतरा दीना कृपणाम्। अनुकम्प्यामिति यावत् दशामवस्थामभितो दधानाम्। अत एवावीरां नपुंसक भर्तृकां नारीमिव स्थितां ताममरावतीमवेक्ष्यान्तर्मनसि बाढं बहु यथातथा करुणायां पर आसक्तोऽभूत्॥ ३६॥

शि०—गतश्रियमिति। स कुमारः कार्त्तिकेयः वैरिवराभिभूतां तारकविध्वस्तामत एव गतश्रियं विहतशोभाम् अत एव सुदीनातिकृपणाम् अनुग्राह्यामिति यावत्। दशामवस्थां दधानां बिभ्रतीम्। अत एवाऽवीराम् असूरस्वामिकां नारीं भार्यामिव विद्यमानामिति शेषः। तामिन्द्रपुरीमवेक्ष्य दृष्ट्वा अत्र हृदये बाढमधिकं यथा तथा करुणापरः दयाऽऽसक्तोऽभूत् बभूव। अत्र पूर्णोपमाऽलङ्कारः॥ ३६॥

दुश्चेष्टिते देवरिपौ सरोषस्तस्या[4]विषण्णः समराय चोत्कः।
तथाविधां तां [5]स विवेश पश्यन्सुरैः सुराधीश्वरराजधानीम्॥ ३७॥

सी०—दुश्चेष्टित इति। दुश्चेष्टिते दुष्कर्मणि देवरिपौ तारके विषये सरोषः। सक्रोधः। तथा तस्य तत्कर्तृकाय समराय समरं युद्धं कर्तुमुत्कश्च तथाविषण्णोऽनलसः स कुमारः तथाविधां पूर्वोक्तप्रकारां तां सुराधीश्वरस्येन्द्रस्य राजधानीं पुरीं पश्यन्सन् विवेश। तदन्तरिति शेषः॥ ३७॥

शि०—दुश्चेष्टित इति। दुश्चेष्टिते दुर्दुष्टं चेष्टितं व्यापारो यस्य स तथोक्तस्तस्मिन्। दुर्व्यापारे देवरिपौ सुरशत्रौ तारकासुरे विषये सकोपः तस्य (कर्ता षष्ठी) तत्कर्तृकाय समराय संग्रामाय ( अत्र तुमर्थाच्चेति चतुर्थी ) समरं कर्तुमित्यर्थः।

१. गर्भश्रियम्, २. वैरिपराभिभूताम्, ३. सगाढम्, सबाष्पम्,
४. तस्यां विषण्णः, ५. च,

त्क उत्सुकश्च तथाऽविषण्णः विषादरहितोऽनलस इति यावत्। विषादयुक्तस्याऽलसत्वप्रसिद्धेरितिभावः। स कुमारः कार्त्तिकेयः तथाविधामुक्तप्रकारां तां सुराधीश्वरराजधानीमिन्द्रनगरीममरावतीम् पश्यन्नवलोकयन् सन् सुरैर्देवैः सह विवेश प्रविष्टवान् ॥ ३७ ॥

दैतेय[1]दन्त्यावलिदन्तघातैः [2]क्षुण्णान्तराः स्फाटिकहर्म्यपङ्क्तीः।
महाहिनिर्मोकपिनद्धजालाः [3]स वीक्ष्य तस्यां विषसाद सद्यः ॥ ३८ ॥

सी०—दैतेयेति। दैतेयानां दैत्यानां दन्त्यावलिर्गजावलिस्तस्यास्तत्कर्तृका ये दन्तघाता रदनताडितानि तैः क्षुण्णान्तराः क्षोदितमध्या अत एव महाहीनां महासर्पाणां निर्मोकाः कञ्चुकाः। 'समौ कञ्चुकनिर्मोकौ' इत्यमरः। तैः पिनद्धानि जालानि सौधजालानि यासु ताः स्फाटिकहर्म्यपंक्तिः स्फाटिकनिर्मितसौधनिचयान्वीक्ष्य स सद्यस्तस्यां विषसाद। खिद्यति स्मेत्यर्थः 'सद्यः सपदि तत्क्षणे' इत्यमरः ॥ ३८ ॥

शि०—दैतेयेति। तस्याममरावत्यां। दैतेयदन्त्यावलिदन्तघातैः दैत्यकरिपङ्क्तिदशनताडितैः क्षुण्णान्तरा संपिष्टमध्यभागा अत एव महाहिनिर्मोकपिनद्धजालाः सर्पेन्द्रकञ्चुकसम्बद्धसौधजालाः स्फाटिकहर्म्यपङ्क्तीः स्फटिकरचितसौधश्रेणीः वीक्ष्य दृष्ट्वा सद्यः शीघ्रं विषसाद विषादं प्राप। उत्तमवस्तुनोऽधःपतनावलोकनेन विषादप्रापणमुचितमेवेति भावः। कुमारस्य विषादप्राप्तौ पादत्रयवाक्यार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३८ ॥

अथ युग्मेनाह—

उत्कीर्णचामीकरपङ्कजानां दिग्दन्तिदानद्रवदूषितानाम्।
हिरण्यहंसव्रजवर्जितानां [4]विदीर्णवैदूर्यमहाशिलानाम् ॥ ३९ ॥
[5]आविर्भवद्बालतृणाञ्चितानां तदीयलीलागृहदीर्घिकाणाम्।
[6]स दुर्दशां वीक्ष्य [7]विरोधिजातां विषादवैलक्ष्यभरं बभार ॥ ४० ॥

सी०—उत्कीर्णेति। आविर्भवदिति च। स कुमारः। उत्कीर्णान्युत्खनितानि चामीकरस्य सुवर्णस्य पङ्कजानि कमलानि यासाम्। उत्खनितसुवर्णकमलानामित्यर्थः। तथा दिग्दन्तिनामैरावतादीनां दानाः खण्डनाः तज्जेतारस्तारकगजाः। कर्तरि ल्युट्। तेषां द्रवो मदजलं तेन दूषितानां म्लानिकृतानाम्। तारककुम्भीन्द्रमदकलुषीकृतजलानामित्यर्थः। हिरण्यप्रचुरा ये हंसास्तेषां व्रजेन वर्जितानां रहितानाम्। दैत्योपद्रवादिति भावः। तथा विदीर्णाः स्फोटिता वैदूर्याणां रत्नविशेषाणां महत्यः शिला

---

१. दैत्येन्द्रदन्तावलः, दैतेयदन्तावल, २. क्षुण्णन्तर, ३. संवीक्ष्य, ४. तदीय, ५. तृणावृतानाम्, ६. सुदुर्दशाम् ७. विरोधिजां ताम्,

यासाम् । तथाविर्भवन्त्युदयमानानि कानि बालतृणानि शष्पाणि तैरङ्कितानां व्याप्तानाम् । तदीया ऐन्द्रयो या लीलार्थं गृहदीर्घिका गृहवापिकास्तासां सम्बन्धिनीम् । विरोधिभ्योऽरिभ्यो जातां दुर्दशां दुष्टावस्थां वीक्ष्य विषादवैलक्ष्ययोः खेदलज्जयोर्भरम् । बह्वयो विषादलज्जेत्यर्थः । बभार दुर्दशादर्शनजनितकरुणाबीजं दुःखं मयि सत्यपि सुदुर्दशेति लज्जाहेतुरित्यर्थः ॥ ३९-४० ॥

शि०—उत्कीर्णेति । आविर्भवदिति च । स कुमारः कार्त्तिकेयः उत्कीर्णचामीकरपङ्कजानाम् उत्खनितहेमकमलानां दिग्दन्तिदानद्रवदूषितानाम् ऐरावतविजयितारककरिमदजलकलुषीकृतपयसाम् हिरण्यहंसव्रजवर्जितानां सुवर्णमरालनिकररहितानां विदीर्णवैदूर्यमहाशिलानाम् संस्फोटितरत्नविशेषसम्बन्धिप्रस्तराम् । तथाऽऽविर्भवद्बालतृणाऽङ्कितानामुत्पन्नशष्पाणां तदीयलीलागृहदीर्घिकाणां शाक्रक्रीडालयवापिकानां सम्बन्धिनीं विरोधिजातां तारककृतां दुर्दशां दुःखावस्थां वीक्ष्य विषादवैलक्ष्यभरं खेदलज्जाधिक्यं बभार भृतवान् । अत्रापि वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ३९-४० ॥

तद्दन्तिदन्तक्षतहेमभित्ति[1] सुतन्तुजालाकुलरत्नजालाम् ।
निन्ये सुरेन्द्रेण पुरोगतेन स वैजयन्ताभिधमात्मसौधम् ॥ ४१ ॥

सी०—तद्दन्तीति । स कुमारः । सुरेन्द्रेणेन्द्रेण पुरोगतेनाग्रण्या सता तस्य तारकस्य दन्तिनां गजानां दन्तैः क्षुण्णा हैम्यो भित्तयः कुड्यानि यस्मिन्यस्य वा । सुतन्तवो लूतानां शोभनानि सूत्राणि तेषां जालेनाकुलं व्याकुलं रत्नजालं रत्नसमूहो यस्मिन् तथा वैजयन्ताभिधं वैजयन्तसंज्ञकम् । 'स्यात्प्रसादो वैजयन्तः' इत्यमरः । आत्मसौधं स्वराजसदनं निन्ये प्रापितः । कर्मणि लिट् ॥ ४१ ॥

शि०—तद्दन्तीति । स कुमारः पुरोगतेनाऽग्रेगच्छता सुरेन्द्रेण शक्रेण तद्दन्तिदन्तक्षतहेमभित्ति तारकारिदशनक्षुण्णस्वर्णकुड्यं सुतन्तुजालाकुलरत्नजालं लूतसूत्रनिकरव्याप्तरत्नसमूहं वैजयन्ताभिधं वैजयन्तसंज्ञकम् आत्मसौधं निजहर्म्यं निन्ये सम्प्रापितः ॥ ४१ ॥

निर्दिष्टवर्त्मा विबुधेश्वरेण सुरैः समग्रैरनुगम्यमानः ।
स [2]प्राविशत्तं विविधाश्मरश्मिच्छिन्नेन सोपानपथेन सौधम् ॥ ४२ ॥

सी०—निर्दिष्टेति । स कुमारः । विबुधेश्वरेणेन्द्रेण कर्त्रा । निर्दिष्ट-

---

१. हेमभित्तिम्, गेहभित्ति, २. तद्विविधात्मरश्मिच्छन्नेन, तं विविधेन रत्नाच्छन्नेन,

वर्त्मेतो गमनं विधेयमित्युक्तिपूर्वकप्रदर्शितमार्गः तथा समग्रैः सुरैर्देवैरनु-गम्यमानोऽनुस्रियमाणः सन्। विविधा अनेकवर्णा येऽश्मानो रत्नानि तेषां रश्मिभिः किरणैश्छिन्नेन भिन्नेन रहितेनेति यावत्। तारककृतसोपान-खचितरत्नोत्पाटनादिति भावः। सोपानपथेनारोहणमार्गेण। 'आरोहणं स्यात्सोपानम्' इत्यमरः। तं सौधं प्राविशत् ॥ ४२ ॥

शि०—निर्दिष्टेति। विबुधेश्वरेण शक्रेण निर्दिष्टवर्त्मा प्रदर्शितमार्गः तथा समग्रैः समस्तैः सुरैः देवैः अनुगम्यमानोऽनुस्रियमाणः स कुमारः कार्त्तिकेयः विविधा-श्मरश्मिच्छिन्नेन नानारत्नकिरणभिन्नेन सोपानपथा आरोहणवर्त्मना तं शक्रप्रापितं सौधं राजसदनं प्राविशत् प्रविष्टवान् ॥ ४२ ॥

निसर्गकल्पद्रुमतोरणं[1] तं [2]स पारिजातप्रसवस्रगाढ्यम्[3]।
दिव्यैः [4]कृतस्वस्त्ययनं मुनीन्द्रैरन्तः[5]प्रविष्टप्रमदं प्रपेदे ॥ ४३ ॥

सी०—निसर्गेति। स कुमारः। निसर्गेण स्वभावेन। अनायासेनेति यावत्। 'निसर्गः शीलसर्गयोः' इति विश्वः। कल्पद्रुमा एव तोरणानि यत्र। तथा पारिजातस्य देववृक्षविशेषस्य प्रसवानां पत्रपुष्पाणां स्रजा मालयाढ्यम् युक्तम्। पूजनार्थंमनेकपत्रपुष्पसहितमित्यर्थः। तथा दिव्यैः स्वर्गीयमुनीन्द्रैः कश्यपादिभिः कृतस्वस्त्ययनं विहितस्वस्तिवाचनम्। तथान्तःप्रविष्टा मध्यं प्रविश्य स्थिताः प्रमदाः स्त्रियो यत्र तं सौधं प्रपेदे प्राप ॥ ४३ ॥

शि०—निसर्गेति। स कुमारः कार्त्तिकेयः निसर्गकल्पद्रुमतोरणं स्वभावसुर-तरुतोरणं तथा पारिजातप्रसवस्रगाढ्यं सुरतरुदलकुसुममाल्ययुक्तं तथा दिव्यैः स्वर्गीयैर्मुनीन्द्रैः कश्यपादिभिः कृतस्वस्त्ययनं विहितस्वस्तिवाचनं तथाऽन्तःप्रविष्ट-प्रमदं मध्यस्थितस्त्रीवर्गं तं सौधं प्रपेदे प्राप्तवान् ॥ ४३ ॥

पादौ महर्षेः किल कश्यपस्य कुलादिवृद्धस्य सुरासुराणाम्।
प्रदक्षिणीकृत्य कृताञ्जलिः [6]सन्षड्भिः शिरोभिः [7]स नतैर्ववन्दे ॥४४॥

सी०—पादाविति। स कुमारः। सुरासुराणां देवदैत्यानां कुल आदि-वृद्धस्य कश्यपस्य महर्षेः पादौ चरणौ कर्मभूतौ। प्रदक्षिणीकृत्य कृताञ्जलिः सन्। नतैः षड्भिः शिरोभिर्ववन्दे नमश्चक्रे। किलेत्यैतिह्ये ॥ ४४ ॥

शि०—पादाविति। स कुमारः षडाननः सुरासुराणां देवदानवानां कुलादि-वृद्धस्य वंशातिप्राचीनस्य महर्षेः ऋषिश्रेष्ठस्य कश्यपस्य तदाख्यमुनेः पादौ चरणौ

---

१. तोरणान्तम्, तोरणाङ्कम्, २. सुपारिजात, ३. स्रजाढ्यम्, ४. कृतस्वस्त्ययनः, ५. कुमारः, प्रविश्य, ६. सः, ७. विनतैः,

प्रदक्षिणीकृत्य परिक्रम्य कृताञ्जलिः बद्धकरयुगः सन् नतैर्नम्रैः षड्भिः शिरोभिरुत्तमाङ्गैः ववन्दे प्रणनाम किल । वितर्के किलशब्दः ॥ ४४ ॥

**स देवमातुर्जगदेकवन्द्यौ पादौ तथैव प्रणनाम कामम् ।**
**मुनेः कलत्रस्य च तस्य भक्त्या प्रह्वीभवञ्शैलसुतातनूजः ॥ ४५ ॥**

सी०—स इति । स शैलसुतातनूजः पार्वतीनन्दनो भक्त्या निमित्तेन प्रह्वीभवन्नम्रीभवन्सन् । मुनेश्च तस्य कलत्रस्य पत्न्याश्च देवानां मातुर्जनन्या अदितेः । जगत एकवन्द्यौ केवलनस्करणीयौ पादौ तथैव मुनिनमस्कारप्रकारेणैव कामं यथायोग्यं प्रणनाम नमश्चक्रे ॥ ४५ ॥

शि०—स इति । शैलसुतातनूजः हिमाद्रिकन्यासुतः कार्त्तिकेयः भक्त्या हेतुना प्रह्वीभवन् नतः सन् तस्य मुनेः कश्यपस्य कलत्रस्य स्त्रिया देवमातुः सुरजनन्या अदितेश्च जगदेकवन्द्यौ लोकत्रयनमस्करणीयौ पादौ चरणौ तथैव मुनिप्रणामाविधयैव कामं यथायोग्यं प्रणनाम नमस्कृतवान् ॥ ४५ ॥

**स कश्यपः सा जननी सुराणां तमेधयामासतुराशिषा [१]द्वौ ।**
**[२]तया [३]यया नैकजगज्जिगीषुं जेता मृधे तारकमुग्रवीर्यम्[४] ॥ ४६ ॥**

सी०—स इति । स कश्यपो मुनिः सा सुराणां जनन्यदितिः, एतौ द्वौ तं कुमारं तयाशिषाशीर्वादैनैधयामासतुर्वर्धयतः स्म । ययाशिषा निमित्तेनोग्रवीर्यमत एव नैकजगन्त्यनेकजगन्ति । त्रीणि जगन्तीत्यर्थः । जिगीषुं जेतुमिच्छुम् । 'न लोक—इति षष्ठीनिषेधः । तारकं दैत्यं मृधे सङ्गरे जेता । जेष्यतीत्यर्थः । कर्तरि लुट् ॥ ४६ ॥

शि०—स इति । स कश्यपो मुनि सा सुराणां देवानां जननी माताऽदितिश्चेत्युभौ द्वौ तं पार्वतीसुतं कार्त्तिकेयं तयाऽऽशिषाऽऽशीर्वादेन एधयामासतुः अवर्धयताम्, ययाऽऽशिषा उग्रवीर्यमधिकपराक्रमम् अत एव नैकजगत् लोकत्रयं जिगीषुं जेतुमिच्छुं तारकं मृधे संग्रामे जेता जेष्यति ॥ ४६ ॥

**[५]स्वदर्शनार्थं समुपेयुषीणां [६]सुदेवताना[७]मदितिश्रितानाम् ।**
**पादौ ववन्दे [८]पतिदेवतास्तमाशीर्वचोभिः [९]पुनरभ्यनन्दन् ॥ ४७ ॥**

सो०—स्वेति । स कुमारः स्वदर्शनार्थं स्वावलोकनार्थं समुपेयुषीणां प्राप्नुवतीनाम् । तथादितिं देवमातरं श्रितानाम् । देवमातुराश्रयेण जीवन्तीनामित्यर्थः । शोभनाः सौभाग्यवत्यो देवतास्तासां पादौ चरणौ ववन्दे प्रणनाम । अथ च पतिरेव देवता यासां ताः पतिव्रतास्ता देवता-

---

१. द्वे, २. यथा तथा, ३. अनया, यथा, ४. उग्रवीर्यः ५. तद्दर्शनार्थम्, ६. स देवतानाम्, ७. अदितेः सुतानाम्, ८. विनयेन ताः, ९. गुहम्,

स्त्वाशीर्वचोभिः 'त्वं जय' इत्यादिभिः। पुनस्तं कुमारमभ्यनन्दन्। अस्तुवतेत्यर्थः॥ ४७॥

शि०—स्वदर्शनेति। स्वदर्शनार्थमात्मनिरीक्षणार्थं समुपेयुषीणां समागतानाम् अदितिश्रितानां कश्यपकलत्राश्रयणेन जीवन्तीनां सुदेवतानां सौभाग्यवतीनां देवीनां पादौ चरणौ ववन्दे प्रणनाम। अथ पतिदेवताः स्वामिभक्तास्ताः सुदेवताः आशीर्वचोभिः ( त्वं विजयीभव ) इत्याद्याशीर्वादवचनैः तं कुमारं पुनः अभ्यनन्दन् तुष्टुवुः॥ ४७॥

पुलोमपुत्रीं विबुधाधिभर्तुस्तत [1]शचीं नाम [2]कलत्रमेष।
नमश्चकार स्मरशत्रुसूनुस्तमाशिषा सा [3]समुपाचरच्च॥ ४८॥

सं०—पुलोमपुत्रीमिति। ततोऽनन्तरम्। नामेति योग्यताप्रतिपादकमव्ययम्। अव्ययानामनेकार्थत्वात्। ततश्च प्रणामकर्तृत्वयोग्य इत्यर्थः। न च पुलोमपुत्र्या एव प्रणामार्हत्वविवक्षाया विशेषणता स्यादिति वाच्यम्। विबुधाधिभर्तृसम्बन्धोद्घाटनेनैव ध्वनितत्वात्। एष स्मरशत्रुसूनुः कुमारो विबुधानां देवानामधिभर्तुरिन्द्रस्य कलत्रं स्त्रीभूतां शचीं शचीसंज्ञिकां पुलोमपुत्रीं नमश्चकार। अथ च सेन्द्राण्याशिषाशीर्वादेन तं कुमारं समुपाचरत्। अवर्धयदित्यर्थः॥ ४८॥

शि०—पुलोमपुत्रीमिति। ततोऽनन्तरं कश्यपादिपादाभिवादनोत्तरमित्यर्थः। एष स्मरशत्रुसूनुः मदनारिपुत्रः कुमारः विबुधाधिभर्तुः सुरेश्वरस्य शक्रस्य कलत्रं भार्यां शचीं नाम तन्नाम्नीं पुलोमपुत्रीं पुलोमतनयां नमश्चकार प्रणनाम। अथ च सा शची तं स्मरशत्रुसूनुमाशिषाऽऽशीर्वादेन समुपाचरत् प्रसादयामास॥ ४८॥

[4]अथादितीन्द्रप्रमदाः समेतास्ता[5] [6]मातरः सप्त घनप्रमोदाः।
उपेत्य भक्त्या [7]नमते महेशपुत्राय[8] तस्मै ददुराशिषः [9]प्राक्॥४९॥

सं०—अथेति। अथानन्तरं घनप्रमोदाः। कुमारावलोकनादिति भावः। अत एव समेता एकत्रभूतास्ता अदितीन्द्रस्य कश्यपस्य प्रमदाः स्त्रियः सप्तमातरो ब्राह्मीप्रभृतयो भक्त्या निमित्तेनोपेत्य समीपमागत्य नमते नमस्कुर्वते तस्य महेशपुत्राय कुमाराय तारकविजयसाधना आशिष आशीर्वादान्प्राङ्नमस्कारात्पूर्वमेव ददुः॥ ४९॥

शि०—अथेति। अथानन्तरमिन्द्राणीकर्तृकाशीर्वादप्रदानोत्तरमित्यर्थः। घनप्रमोदाः अत एव समेता एकत्रीभूतास्ताः पूर्वोक्ता अदितीन्द्रप्रमदाः कश्यपस्त्रियः

---

१. शची, २. अत्र, ३. समुपाचचार, ४. अदितिप्राग्रमुखाः समेताः, अदितीन्द्रप्रमदासमेताः, अदितीन्द्रप्रमुखाः समेताः ५. सः, तम्, ६. मातृकाः ७. नमति, ८. स्म शर्वपुत्राय, ९. ताः,

सन मातरो ब्राह्मीप्रभृतयो भक्त्या हेतुनोपेत्य समीपमागत्य नमते प्रणामं कुर्वते तस्मै महेशपुत्राय कार्त्तिकेयाय प्राक् प्रणामात्पूर्वमेवाऽऽशिषो ददुः ॥ ४९ ॥

समेत्य सर्वेऽपि [1]मुदं दधाना [2]महेन्द्रमुख्यास्त्रिदिवौकसोऽथ ।
आनन्दकल्लोलितमानसं [3] तं [4]समभ्यषिञ्चन्पृतनाधिपत्ये ॥ ५० ॥

सी०—समिति । अथानन्तरं मुदं दधानाः महेन्द्रमुख्या इन्द्रप्रभृतयः सर्वेऽपि त्रिदिवौकसो देवा आनन्देन भावितारकयुद्धकर्तृत्वजन्मना कल्लोलितं तरङ्गितं मानसं सर एव मानसं चेतो यस्य तम् । महानन्दमित्यर्थः । तं कुमारं पृतनाधिपत्ये सैनापत्ये समभ्यषिञ्चन्नभिषिक्तमकुर्वन् ॥ ५० ॥

शि०—समेत्येति । अथानन्तरं सप्तमातृकर्तृकाशीर्वादप्रदानोत्तरमित्यर्थः । मुदं हर्षं दधानाः प्राप्नुवन्तो महेन्द्रमुख्याः शक्रादयः सर्वेऽपि सकला अपि त्रिदिवौकसः सुराः समेत्य एकत्रीभूय आनन्दकल्लोलितमानसं प्रभूतामोदतरङ्गितहृदयं तं कुमारं पृतनाधिपत्ये सेनानायकत्वे समभ्यषिञ्चन् कृताभिषेकं व्यधुः, इन्द्रप्रभृतयो देवास्तारकेण भावियुद्धकर्तारं कुमारं सेनापतिं चक्रुरित्यर्थः ॥ ५० ॥

सकलविबुधलोकः स्रस्तनिःशेषशोकः
कृतरिपुविजयाशः प्राप्तयुद्धावकाशः ।
अजनि हरसुतेनानन्तवीर्येण तेना-
खिलविबुधचमूनां प्राप्य लक्ष्मीमनूनाम् ॥ ५१ ॥

सी०—सकलेति । अनन्तवीर्येणापारपराक्रमेणात एवानूनां महतीमखिला या विबुधचम्वो देवसेनास्तासां लक्ष्मीं वैभवं प्राप्य स्थितेन तेन हरसुतेन । हरसुतसाहाय्येनेत्यर्थः । सकलविबुधलोकः समस्तवृन्दारकनिचयः । स्रस्ता ध्वस्ताः, नष्टा इति यावत्, निःशेषाः समग्राः शोका यस्य । तथा कृता रिपोस्तारकस्य विजय आशा येन तथा प्राप्तो युद्धायावकाशोऽवसरो येन । तथाभूतश्चाजनि जातः । कुण्ठितवीर्याणां सवीर्यसाहाय्यकमेव कार्यसिद्धिहेतुर्भवतीति भावः । मालिनीवृत्तमेतत् । लक्षणं तु पूर्वमेवोक्तम् ॥ ५१ ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसंभवश्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये कुमारसैनापत्याभिषेको नाम त्रयोदशः सर्गः ।

---

१. मुदमादधानाः, २. अत्र, ३. ते, ४. तमभ्यषिञ्चन्,

शि०—सकलेति । अनन्तवीर्येणाऽपरिमितसामर्थ्येन अत एवाखिलविबुधचमूनां सकलसुरसेनानां सम्बन्धिनीमनूनां विपुलां लक्ष्मीमैश्वर्यमाधिपत्यमिति यावत्; प्राप्य विद्यमानेन तेन हरसुतेन कुमारेण; सकलविबुधलोको निखिलसुरनिकरः स्वस्त-निश्शेषशोकः ध्वस्ताखिलखेदः तथा कृतरिपुविजयाशः कृततारकाभिभवाभिलाषः तथा प्राप्तयुद्धावकाशो लब्धसंग्रामावसरश्चाऽजनि जातः । प्रचुरवीर्यवन्तं कुमारं सहायकम्प्राप्य महेन्द्रादयो देवाः कार्यसिद्धिममन्यन्तेति भावः ॥ ५१ ॥

इति मैथिलवंशोद्भवैकनाथठक्कुररात्मजश्रीकनकलालठक्कुरविरचिता-
शिशुहितैषिणीसमाख्यया व्याख्यया सहितः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये कुमारसैनापत्याभिषेको
नाम त्रयोदशः सर्गः ॥ १३ ॥



# चतुर्दशः सर्गः

रणोत्सुकेनान्धकशत्रुसूनुना [1]समं प्रयुक्तैस्त्रिदशैर्जिगीषुणा[2]।
महासुरं [3]तारकसंज्ञकं द्विषं प्रसह्य हन्तुं समनह्यत द्रुतम् ॥ १ ॥

सी०—रणेति। जेतुमिच्छति जिगीषति, जिगीषतीति जिगीषुस्तेन जिगीषुणा। सन्नन्ताज्जयतेः 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। अत एव रणे समरे। 'रणः कोणे क्वणे पुंसि समरे पुंनपुंसकम्।' इति मेदिनी। उत्सुकेनोत्कण्ठितेनान्धकशत्रोः शिवस्य सूनुना कुमारेण कर्त्रा। प्रयुक्तैः प्रेरितैः, संनहनार्थमिति शेषः। त्रिदशैर्देवैरिन्द्रादिभिः समं सार्धं तारकसंज्ञकं द्विषं शत्रुं महासुरं दैत्यं प्रसह्य बलाद्धन्तुं मारयितुं द्रुतं शीघ्रम्। 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। समनह्यत संनद्धम्। नह्यतेर्भावे लङ्। सर्गेऽस्मिन्नपि वृत्तमुपजातिरेव ॥ १ ॥

शि०—रणेति। जिगीषुणा जेतुमिच्छुना अत एव रणोत्सुकेन सङ्ग्रामोत्कण्ठितेन संग्रामविषयकोत्साहवतेत्यर्थः। अन्धकशत्रुसूनुना शिवपुत्रेण कार्तिकेयेन (कर्त्रा) प्रयुक्तैः प्रेरितैः त्रिदशैर्देवैः समं सह तारकसंज्ञकं तारकनामानं द्विषं शत्रुं महासुरं प्रबलदैत्यं प्रसह्य हठात् हन्तुं हिंसितुं द्रुतं सत्वरं समनह्यत संनद्धम्, उद्युक्तमिति यावत्। कुमारप्रेरणया तारकं हन्तुमिन्द्रादयो द्रुतमुद्यता बभूवुरित्यर्थः। अत्राप्युपजातिरेव छन्दः ॥ १ ॥

इतः परं 'सः' इत्यादिभिस्त्रिभिः कुमारसंनहनमाह—

स दुर्निवारं मनसोऽतिवेगिनं जयश्रियः [4]संनयनं सुदुःसहम्।
विजित्वरं नाम [5]तदा महारथं धनुर्धरः [6]शक्तिधरोऽध्यरोहयत् ॥२॥

सी०—स इति। स गुहः कार्तिकेयो धनुर्धरस्तथा शक्तिधरश्च सन्दुर्निवारं दुःखेन निवारयितुं प्रतिरोद्धुं शक्यम्। अप्रतिरुद्धगतिकमित्यर्थः। मनसः सकाशादप्यतिवेगिनम्। बहुगतिजववन्तमित्यर्थः। इहातिनाम बहुश्चासौ जवश्च, स विद्यते यस्येति कृते 'न कर्मधारयान्मत्वर्थीयः' इति निषेधप्रसक्त्या मत्वर्थीयो न स्यात्। अतोऽतीत्यस्य क्रियाविशेषणतामाश्रित्य समर्थनीयम्। केचित्पुनः 'मनसोऽपि' इति पठित्वा व्याचक्षते। तथा जयश्रियो विजयलक्ष्म्याः संनयनं सम्यक्प्राप्तिसाधनम्, यामारुह्य

---

१. स्वयम्, २. जयेषुणा, ३. तारकसंज्ञितं द्विषम्; तारकमूर्जितद्विषम्, ४ संगमनम्, संयमनम्, ५ ततः ६ अध्यरोहत,

गच्छन्तो वीराः सजयलक्ष्मीका एव भवन्तीति भावः। सुतरां दुःसहम्। दुःसहता चैतद्दर्शनविषयिणी बोध्या। एतद्दर्शनेनैव शत्रवः पराजिता भवन्ति। अतो युक्तमेव जयश्रीसंनयनत्वम्। अत एव विजित्वरम्। विजित्वरेत्यानुपूर्विकं नाम। नामत्वं च व्यक्तिबोधजनकतावच्छेदकता संकेतत्वम्, दधानमिति शेषः। तथाभूतं महारथं महान्तं स्यन्दनम्। 'रथः पुमानवयवे स्यन्दने वेतसेऽपि च' इति मेदिनी। तदाध्यरोहय- दारुरोह॥ २॥

इत उत्तरं श्लोकत्रयेण कुमारसंनहनं वर्णयति—

शि०—स इति। धनुर्द्धरश्चापभृत् तथा शक्तिधरस्तदाख्यायुधविशेषधारण- शीलश्च स कुमारः कार्त्तिकेयः। दुर्निवारमनवरुद्धसञ्चारं। तथा मनसोऽतिवेगं चेतसोऽप्यधिकवेगवन्तं। तथा जयश्रियो विजयलक्ष्म्याः संनयनं सम्प्राप्तिकारणं। तथा सुदुःसहं सुतरां सोढुमशक्यम्। विजित्विरं विजित्वरसंज्ञकं महारथं महास्यन्दनं तदा तस्मिन्काले त्रिदशसंनहनावसरे इत्यर्थः, अध्यरोहयत् आरूढवान्॥ २॥

सुरालयश्रीविपदां निवारणं सुरारि[1]संपत्परितापकारणम्[2]।
केनापि दध्रेऽस्य [3]विरोधिदारणं सुचारु चामीकरधर्मवारणम्॥ ३॥

सी०—सुरालयेति। विरोधिनं तारकं दारयति मारयति तद्विरोधि- दारणम्। णिजन्तप्रयोगं कुर्वता कविना छत्रस्य जडत्वात्स्वातन्त्र्येण दारणक्रियोपयोगित्वासंभवात्तदीयधारणप्रभावेण वीरोह्यसौ कुमारस्तारकं जेष्यतीति सूचितम्। 'ओजसापि खलु नूनमनूनं नासहायमुपयाति जयश्रीः' इति न्यायादिति भावः। अत एव सुरालयस्य स्वर्गस्य श्रियो लक्ष्म्या विपदामापदां निवारणं नाशकम्, अत एव सुरारेस्तारकस्य संपदां परि- तापस्य संतापस्य कारणं कर्तृ। सर्वत्र कर्तरि ल्युट्। सुचारु सुतरां मनोहरं चामीकरस्य हेम्नो घर्मवारणं छत्रम्। अस्य कुमारस्योपरि केनापि देवेन दध्रे, धृतम्। कर्मणि ल्युट्॥ ३॥

शि०—सुरालयेति। विरोधिदारणं शत्रुविनाशकम्। अत एव सुरालयश्री- विपदां स्वर्गलक्ष्मीदुःखानां निवारणमपहारकम्। अत एव सुरारिसम्पत्परिताप- कारणं तारकश्रीसन्तापजनकम्। तथा सुचारु अतिमनोज्ञं चामीकरधर्मवारणं सुवर्णच्छत्रम्। अस्य कुमारस्य उपरीतिशेषः। केनापि अनिर्दिष्टनाम्ना केनचिद्देवे- नेत्यर्थः, दध्रे धृतम्। तारकेण सह संग्रामे सौरातपसन्तापनिवृत्तये कश्चिद्देवः कुमारोपरि स्वर्णच्छत्रं धृतवानित्यर्थः॥ ३॥

---

१. संसत्, २. वारणम्, ३. विरागदारणम्.

[1]शरच्चरच्चन्द्रमरीचिपाण्डुरैः[2] [3]संवीज्यमानो वरचारुचामरैः ।
पुरःसरैः किंनरसिद्धचारणै [4]रणेच्छुरस्तूयत वाग्भिरुल्बणैः[5] ॥ ४ ॥

सी०—शरदिति । शरदि घनात्यये चरतो भ्रमतश्चन्द्रस्य मरीचयो मयूखास्तद्वत्पाण्डुरैः शुभ्रैः । 'शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डुराः' इत्यमरः । चरत इति विशेषणं चामराणामपि वीजनवशेन चलत्वादन्वर्थमिति बोध्यम् । तथाभूतैर्वरैः श्रेष्ठैः । 'वरो जामातरि वृतौ देवतादेरभीप्सिते । पिङ्गे पुंसि त्रिषु श्रेष्ठे कुङ्कुमे तु नपुंसकम्' इति मेदिनी । चारुभिर्मनोहरैश्च चामरैर्वीज्यमानः । तथा रणेच्छुः संग्रामाभिलाषुकः स कुमार उल्बणैरुद्भटैः किंनराः किंपुरुषाः । 'स्यात्किंनरः किंपुरुषः' इत्यमरः । सिद्धा देवविशेषाश्चारणाश्च तैः कर्तृभिः । पुरःसरैः सद्भिर्वाग्भिः कृत्वास्तूयतेडितः । 'ष्टुञ् स्तुतौ' इत्यतः कर्मणि लङ् ॥ ४ ॥

शि०—शरदिति । शरच्चरच्चन्द्रमरीचिपाण्डुरैः शारदेन्दुकिरणशुभ्रैः वरचारुचामरैरुत्कृष्टमञ्जुलबालव्यजनैः (किरणैः) वीज्यमानः कृतपवनः । तथा रणेच्छुः संग्रामाभिलाषुकः स कुमारः पुरःसरैरग्रगामिभिः उल्बणैरुद्भटैः सेनाभूतैरित्यर्थः । किन्नरसिद्धचारणैः किंपुरुषामरविशेषचारणैः (कर्तृभिः) वाग्भिर्वचनैः अस्तूयत स्तुतः ॥ ४ ॥

इदानीमिन्द्रादीनामष्टानामनुप्रयाणमाह—

प्रयाणकालोचितचारुवेष[6]भृद्वज्रं वहन्पर्वतपक्षदारणम् ।
[7]ऐरावतं स्फाटिकशैलसोदरं ततोऽधिरुह्य द्युपतिस्तमन्वगात् ॥ ५ ॥

सी०—प्रयाणेति । ततोऽनन्तरं द्युपतिरिन्द्रः प्रयाणकाले प्रस्थानसमय उचितं योग्यं चारु मनोहरं च वेषं बिभर्ति धरति तथोक्तः । तथा पर्वतपक्षाणां दारणं छेदनम् । करणे ल्युट् । वज्रं स्वायुधं वहन् । करेणेति शेषः । तथा स्फाटिकशैलः कैलासस्तस्य सोदरं सदृशमैरावतं गजमधिरुह्यास्थाय तं कुमारमन्वगात्, अनुययावित्यर्थः । 'अभ्यगात्' इति पाठस्त्वसाधुः । सेनानीत्वेन वृतत्वादतिश्रेयः कुमारापेक्षयान्येषामिन्द्रादीनामपि गौणत्वात्पुरतो गमनानौचित्यात् ॥ ५ ॥

शक्राद्यष्टदिक्पालानुगमनं वर्णयति—

शि०—प्रयाणेति । ततस्तदनन्तरं किन्नरादिकर्तृकस्तुत्युत्तरमित्यर्थः । द्युपतिः स्वर्गाधिपः शक्रः प्रयाणकालोचितचारुवेषभृत् यात्रावसरयोग्यमनोज्ञाकृतिमत् तथा

---

१. शरद्वलत्, २. रोचिभिः, ३. मुवीज्यमानः, ४. रणोत्सुकः, स षण्मुखः ५. उच्चकैः, ६. वेषः, ७. ऐरावणम्,

पर्वतपक्षदारणं गिरिपक्षच्छेदनं वज्रं कुलिशं वहन् धारयन् सन् हस्तेनेति शेषः । स्फाटिकशैलसोदरं कैलासाचलतुल्यम् ऐरावतभ्रममातङ्गम् अधिरुह्य आस्थाय तं कुमारमन्वगात् अनुगतवान् एकस्यैव द्युपतेः कर्तुः धारणाऽधिरोहणानुगमनक्रिया-स्वन्वयाद्दीपकाऽलङ्कारः ॥ ५ ॥

**तमन्वगच्छद्गिरिश्टङ्गसोदरं [1]मदोद्धतं मेषमधिष्ठितः शिखी ।**
**विरोधिविद्वेषरुषाधिकं ज्वलन्महो[2]महीयस्तरमायुधं दधत् ॥ ६ ॥**

**सी०—तमिति । विरोधिनस्तारकस्य विद्वेषेण वैरेण हेतुना या रुट् क्रोधस्तया निमित्तेनाधिकं ज्वलन्प्रदीप्यमानः शिख्यग्निर्गिरेः शृङ्गस्य सोदरं सदृशम् । तद्वद्विशालमित्यर्थः । तथा मदेन गर्वेण । 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति मेदिनी । उद्धतं मेषं पशुविशेषं लोके 'मेढा' इति ख्यातमधिष्ठितोऽधिरूढः तथा महसा तेजसा महीयस्तरमतिशयं महदायुधं शस्त्रं दधत् । अथवा 'महो महीयस्तरम्' इति छेदः । महस्तेजोरूपं महीयस्तरमायुधमिति व्याख्यातव्यम् । दधत्सन् । तं कुमारमन्वगच्छदनुगतवान् । अत्राप्यभ्यगच्छदित्यसाधु बोध्यम् ॥ ६ ॥**

शि०—तमिति । विरोधिविद्वेषरुषा तारकद्रोहकोपेन अधिकं बहुलं यथा तथा ज्वलन दीप्यमानः शिखी वह्निः गिरिशृङ्गसोदरम् अद्रिशिखरसदृशम् अतिविशाल-मित्यर्थः । तथा मदोद्धतं गर्वोन्नतं मेषं पशुविशेषं ( लोके मेंढा इति प्रसिद्धम् ) अधिष्ठितः समारूढः । तथा महोमहीयस्तरम् अतितेजस्वि आयुधमस्त्रं दधत् सन् बिभ्रत् सन् तं कुमारमन्वगच्छत् अनुगतवान् ॥ ६ ॥

**[3]अथेन्द्रनीलाचलचण्डविग्रहं विषाणविध्वस्तमहापयोधरम्[4] ।**
**[5]अधिष्ठितः कासरमुद्धरं मुदा [6]वैवस्वतो [7]दण्डधरस्तमन्वगात् ॥७॥**

**सी०—अथेति । अथानन्तरं वैवस्वतो यमः । 'कालो दण्डधरः श्राद्ध-देवो वैवस्वतोऽन्तकः' इत्यमरः । इन्द्रनीलानां नीलमणीनामचलः पर्वतस्त-द्वच्चण्डविग्रहं प्रचण्डदेहम् । कालत्वाद्भयानकमित्यर्थः । तथा विषाणाभ्यां शृङ्गाभ्यां विध्वस्ता अधः पातिता महापयोधरा बृहन्मेघा येन तथा । उद्धरमुद्भटं कासरं महिषम् । 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । अधिष्ठितोऽधिरूढः तथा दण्डं धरतीति तथाभूतश्च सन् । मुदा प्रीत्या तं कुमारमन्वगादनुजगाम ॥ ७ ॥**

---

१. महोद्धरम् २. महामहोजस्तरसा युधे दधे, महो महीयस्तरमादधद्युधि,
३. नन्विन्द्रनीलाचलचण्डविग्रहः, नत्वेन्द्रनीलोचितचण्डविग्रहम् ४. शिलोच्चये
५. स्थितोऽति, मत्तेमहिषेऽसभीषणः, अधिष्ठितः कासरमुद्धतं मुदा,
६. रणोन्मुखः ७. अभ्यगात्,

शि०—अथेति । ततोऽनन्तरं शिखिगमनोत्तरमित्यर्थः । विवस्वतोऽपत्यं वैवस्वतो यमः, इन्द्रनीलाचलचण्डविग्रहं नीलमणिगिरिकठिनकायं तथा विषाणविध्वस्तमहापयोधरं शृङ्गविस्रस्तवृहद्वलाहकम् तथोद्धरमुद्भटं समर्थं कासरं महिषम् अधिष्ठित आरूढः तथा दण्डधरश्च सन् तं कुमारमन्वगात् अनुगतवान् ॥ ७ ॥

[1]मदोद्धतं प्रेतमथाधिरूढवांस्तमन्धकद्वेषितनूजमन्वगात्[2] ।
महासुरद्वेषविशेषभीषणः सुरोषणश्चण्डरणाय नैर्ऋतः ॥ ८ ॥

सी०—मदोद्धतमिति । अथानन्तरं महासुरद्वेषेण तारकासुरवैरेण विशेषमधिकं यथा तथा भीषणो भयानकः । 'भीषणं रसशल्लक्योर्ना गाढे दारुणेऽपि च' इति मेदिनी । तथा सुतरां रोषणः क्रोधनो नैर्ऋतो राक्षसो नैर्ऋतकोणाधीश्वरो मदेन गर्वेणोद्धतं प्रेतं पिशाचमधिरूढवानास्थितवान्सन् । चण्डरणाय प्रचण्डरणं कर्तुं तमन्धकद्वेषिणो हरस्य तनूजं पुत्रं कुमारमन्वगादन्वयाय ॥ ८ ॥

शि०—मदोद्धतमिति । अथानन्तरं यमकर्तृकाऽनुगमनोत्तरमित्यर्थः । महासुरद्वेषविशेषभीषणः तारकवैराधिकभयानकः तथा सुरोषणोऽतिकोपनः नैर्ऋतस्तदाख्यकोणाधिपतिः राक्षसः । मदोद्धतं गर्वोदग्रं प्रेतं पिशाचमधिरूढवान् आस्थितवान् सन् चण्डरणाय ( तुमर्थाच्चेति चतुर्थी ) चण्डरणं कर्तुमित्यर्थः । तम् अन्धकद्वेषितनूजं शिवपुत्रं कुमारमन्वगात् अनुगतवान् ॥ ८ ॥

[3]नवोद्यदम्भोधरघोरदर्शने [4]युद्धाय रूढो [5]मकरे [6]महत्तरे ।
दुर्वारपाशो वरुणो [7]रणोल्बणस्तमन्वियाय त्रिपुरान्तकात्मजम् ॥९॥

सी०—नवेति । रणे युद्ध उल्बण उद्भटो वरुणः प्रचेताः । 'वरुणस्तरुभेदेऽप्सु पश्चिमाशापतावपि' इति मेदिनी । नवो नव्यः । 'नवो नव्ये स्तुतौ' इति मेदिनी । उद्यन्नुदयमानो योऽम्भोधरो मेघस्तद्वद्घोरदर्शने भयानकदर्शने । 'घोरं भीमं भयानकम्' इत्यमरः । तथा महत्तरेऽतिशयदीर्घे मकरे नक्रे रूढः । तथा दुर्वारः पाश आयुधविशेषो यस्य, पाशधरः सन्नित्यर्थः । युद्धाय युद्धं कर्तुं तं त्रिपुरान्तकस्य शिवस्यात्मजं पुत्रं कुमारमन्वियायान्वगच्छत् ॥ ९ ॥

शि०—नवोद्यदिति । रणोल्बणः संग्रामनिपुणो वरुणः प्रचेताः । नवोद्यद-

---

१. मदोद्धतः, प्रेतवराधिरोहणः, मदोद्धत प्रेतवराधिरूढः, २. अभ्यगात्, ३. नवोदयाम्भोधरघोरदर्शनः नवोदयस्तोरणघोरदर्शनम्, नवोदयास्तोरणघोरदर्शनं, ४. युद्धेऽधिरूढः युद्धोपरूढः, ५. मकरम्, ६. महत्तरम्, ७. रणोल्बणम्,

म्भोधरघोरदर्शने नूतनोद्भूतमेघभीषणावलोकने महत्तरेऽतिबृहति मकरे नक्रे रूढ आस्थितः। तथा दुर्वारपाशोऽनिवार्यपाशाख्यायुधविशेषः सन् युद्धाय युद्धं कर्तुमित्यर्थः (तुमर्थाच्चेति चतुर्थी)। त्रिपुरान्तकात्मजं हरसुतम् अन्वियाय अनुगतवान् ॥ ९ ॥

दिगम्बरा[1]धिक्रमणोल्बणं क्षणान्मृगं महीयांसमरुद्धविक्रमम् ।
अधिष्ठितः सरङ्गकेलिलालसो[2] मरुन्महेशात्मजमन्वगाद्[3] द्रुतम्[4] ॥

सी०—दिगिति। संगरकेलौ संग्रामक्रीडायां लालसा कामो यस्य। 'लालसौत्सुक्यतृष्णातिरेकयाच्ञासु च द्वयोः' इति मेदिनी। तथाभूतो मरुत्पवनो वायुकोणाधीशः क्षणान्मुहूर्तमात्रेणैव। 'क्षणः पर्वोत्सवे च स्यात्तथा मानेऽप्यनेहसि' इति मेदिनी। दिशामम्बरस्य च 'अम्बरं वाससि व्योम्नि' इति मेदिनी। अधिक्रमण आक्रमण उल्बणमुद्भटं महीयांसं महत्तरम्। अरुद्धोऽप्रतिरुद्धो विक्रमो विवत्पक्षिवत्क्रमः पादक्षेपो यस्य तथाभूतं मृगं हरिणम् 'मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः' इति मेदिनी। अधिष्ठितः सन्। तं महेशात्मजं कुमारं द्रुतं सत्वरमन्वगादनुजगाम ॥ १० ॥

शि०—दिगम्बरेति। सङ्गरकेलिलालसः संग्रामक्रीडाभिलाषुको मरुद्वायुः (वायुकोणेशः) क्षणात्क्षणमात्रेण दिगम्बराधिक्रमणसमर्थं महीयांसं महत्तरम् अरुद्धविक्रममप्रतिहतपक्षिवत्पादक्षेपम् मृगं हरिणमधिष्ठित आरूढः सन् महेशात्मजं कार्तिकेयं द्रुतं शीघ्रमन्वगात् अनुजगाम ॥ १० ॥

विरोधिना[5]शोणितपारणैषिणीं गदामनूनां नरवाहनो वहन् ।
महाहवाम्भोधि[6]विगाहनोद्धतं यियासु[7]मन्वागमदीशनन्दनम् ॥ ११॥

सी०—विरोधिनामिति। नरवाहनः कुबेरः। 'पौलस्त्यो नरवाहनः' इत्यमरः। विरोधिनां शत्रूणां संबन्धि शोणितं रुधिरं तेन या पारणा भोजनं तामिच्छति तथाभूतामनूनामन्यूनसारां गदामायुधविशेषं वहन् धारयन्सन् महाहवो महारणः स एवाम्भोधिः समुद्रस्तस्य विगाहन उद्धतमुद्भटम्। समर्थमिति यावत्। अत एव यियासुं जिगमिषुमीशनन्दनं शिवपुत्रं कुमारमन्वगमत् अनुगच्छति स्मेत्यर्थः ॥ ११ ॥

शि०—विरोधिनामिति। नरवाहनः पौलस्त्यः विरोधिनां रिपूणां शोणितपारणैषिणीं रुधिराशनाभिलाषिणीम् अनूनां महतीं गदां तदाख्यायुधविशेषं वहन् धारयन् सन् महाहवाम्भोधिविगाहनोद्धतं बृहत्सङ्ग्रामार्णवप्रवेशदक्षम् अत एव

---

१. अद्रिक्रमण, २. लालसम्, ३. अभ्यगात् ४. ध्रुवम्,
५. विग्रह, ६. विगाहमान, ७. अभ्यागमत्,

यियासुं जिगमिषुमीशनन्दनं गिरीशतनयं कार्त्तिकेयमन्वगादनुगतवान् । गदां दधत्कुबेरः कुमारमनुजगामेत्यर्थः ॥ ११ ॥

**महाहि[1]निर्बद्धजटाकलापिनो ज्वलत्त्रिशूल[2]प्रबलायुधा [3]युधे ।**
**[4]रुद्रास्तुषाराद्रिसखं[5] महावृषं ततोऽधिरूढास्तमयुः पिनाकिनः ।१२।**

सी०—महाहीति । ततोऽनन्तरं पिनाकिनः पिनाकवन्तो रुद्रा ईशानकोणाधीशाः महाहिभिर्महद्भिः सर्पैः कृत्वा निर्बद्धो यो जटाकलापः सोऽस्ति येषाम् । अथवा—महाहिभिर्निर्बद्धा जटा येषाम् । 'शेषाद्विभाषा' इति कप् । तथा लापिन इदानीं तारकं जेष्याम इत्युद्धतवादिनश्च । ततो विशेषणसमासः । केचित्तु 'जटाभरावराः' इति पाठं कल्पयन्ति । यथास्थितव्याख्याने तु 'न कर्मधारयान्मत्वर्थीयः' इति मत्वर्थीयप्रसङ्गो दुर्वार इत्यलम् । तथा ज्वलद्दीप्यमानं त्रिशूलमेव प्रबलं सबलमायुधं येषाम् । तथा तुषाराद्रेर्हिमवतः सखं सखायम्, तद्वच्छुभ्रमित्यर्थः । महावृषम् । जातावेकवचनम् । अधिरूढाश्च सन्तः । युधे युद्धाय तं कुमारमयुः अन्वयुरित्यर्थः ॥ १२ ॥

शि०—महाहीति । ततोऽनन्तरमष्टदिक्पालानुगमनोत्तरमित्यर्थः । महाहिनिर्बद्धजटाकलापिनः बृहत्सर्पसंयतजटासमूहाः ज्वलत्त्रिशूलप्रबलायुधा दीप्यमानत्रिशूलबलवदस्त्राः पिनाकिनः पिनाकवन्तो रुद्राः ( ईशानकोणाधिपतयः ) तुषाराद्रिसखं हिमगिरिसदृशं महावृषं बृहतो वृषभानित्यर्थः । अधिरूढा आस्थिताः सन्तः तं कुमारं कार्त्तिकेयमन्वयुः अनुजग्मुः ॥ १२ ॥

**अन्येऽपि संनह्य [6]महारणोत्सवश्रद्धालवः स्वर्गिगणास्तमन्वयुः ।**
**स्ववाहनानि [7]प्रबलान्यधिष्ठिताः प्रमोदविस्मेरमुखाम्बुजश्रियः । १३ ।**

सी०—अन्येऽपीति । अन्येऽप्युक्तातिरिक्ता अपि स्वर्गिगणाः देवगणाः प्रमोदेन रणानन्देन विस्मेरा विशेषेण समन्दहासा मुखाम्बुज श्रीर्येषाम् । अत एव महति रणोत्सवे श्रद्धालवः श्रद्धाशीला अत एव प्रबलानि स्ववाहनान्यधिष्ठिताः । तथा कवचादिना संनह्य संनद्धा भूत्वा तं कुमारमन्वयुः । अनुजग्मुरित्यर्थः ॥ १३ ॥

शि०—अन्येऽपीति । अन्येऽपि शक्राद्यष्टदिगीशरुद्रादिभिन्ना इत्यर्थः । स्वर्गिगणाः सुरसमूहाः प्रमोदविस्मेरमुखाम्बुजश्रियः संग्रामानन्दसमन्दहासाननकमलशोभाः अत एव महारणोत्सवश्रद्धालवो बृहत्संग्रामोत्साहविश्वस्ताः । अत एव प्रबलानि

---

१. निबन्ध, २. प्रवरा-युधा, ३. युधि, ४. रुषा, ५. समम्,
६. महामहोत्सव महामहोत्सवाः, ७. प्रवराणि,

भविक्रवीर्याणि स्ववाहनान्यधिष्ठिता आरूढाः । तथा संनह्य कवचाद्यावृतशरीराः सन्तः तं कुमारमन्वयुः अनुगतवन्तः ॥ १३ ॥

अथ युग्मेनाह—

उद्दण्डहेमध्वजदण्डसंकुला[1]श्चलद्विचित्रातपवारणोज्ज्वलाः[2] ।
[3]चलद्घनस्यन्दनघोषभीषणाः करीन्द्रघण्टारवचण्डचीत्कृताः ॥ १४ ॥
स्फुरद्विचित्रायुधकान्तिमण्डलै[4]रुद्द्योतिताशावलयाम्बरान्तराः[6] ।
दिवौकसां सोऽनुवहन्महाचमूः पिनाकपाणेस्तनयस्ततो ययौ ॥ १५ ॥

सी०—उद्दण्डेति । स्फुरदिति च । ततः सर्वसंनहनानन्तरं स पिनाकपाणेर्हरस्य तनयः कार्तिकेय उद्दण्डा उच्चनालदण्डा ये हेमध्वजाः सुवर्णविकारध्वजास्तेषां दण्डैर्नालिण्दण्डैः संकुला व्याप्ताः । अनेकध्वजदण्डवत्य इत्यर्थः । चञ्चन्ति दीप्यमानानि तथा विचित्राणि हरितपीतादिवर्णयुक्तानि च यान्यातपवारणानि च्छत्राणि तैरुज्ज्वलाः । कान्तिमत्य इत्यर्थः । चलन्तो ये घना मेघास्त इव ये स्यन्दना रथास्तेषां घोषेणारवेण भीषणा भयानकाः । तथा करीन्द्राणां मत्तद्विपानां संबन्धीनि घण्टारवाः, चण्डानि भीषणानि चीत्कृतानि च यासु । चीत्कृतेति शब्दानुकृतिः । तथा स्फुरन्ति सर्वतः प्रसरन्ति विचित्राण्यनेकवर्णान्यायुधसंबन्धिनीनां कान्तीनां मण्डलानि वलयानि तैः कृत्वोद्द्योतितमुच्चैः शोभितमाशावलयं द्युतीनां दिङ्मण्डलमम्बरान्तरमाकाशमध्यं च याभिः । 'अम्बरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इति मेदिनी । एवंविधां दिवौकसां देवानां महाचमूर्महतीः सेना अनु पश्चाद्वहन्सन् ययौ जगामेत्यर्थः ॥ १४-१५ ॥

अथ युग्मेन कुमारगमनं वर्णयति—

शि०—उद्दण्डेति । स्फुरदिति च । ततोऽनन्तरं निखिलदेवसंनहनोत्तरमित्यर्थः । स पिनाकपाणेः शिवस्य तनयः पुत्रः कार्त्तिकेयः । उद्दण्डहेमध्वजदण्डसंकुलाः उन्नतनालदण्डचामीकरध्वजनालदण्डव्याप्ताः तथा चञ्चद्विचित्रातपवारणोज्ज्वलाः दीप्यमानविविधच्छत्रभासुराः तथा चलद्घनस्यन्दनघोषभीषणाः गच्छदभ्रवद्रथारवभयानकाः तथा करीन्द्रघण्टारवचण्डचीत्कृताः मत्तगजघण्टाशब्दघोरचीत्काररवाः । तथा स्फुरद्विचित्रायुधकान्तिमण्डलैः दीप्यमानविविधास्त्रद्युतिसमूहैः उद्द्योतिताशावलयाम्बरान्तराः दीप्तिमद्दिङ्मण्डलवियदन्तराला दिवौकसां देवानां महाचमूर्महतीः सेनाः अनुवहन् पश्चाद्गमयन् सन् ययौ गतवान् ॥ १४-५ ॥

---

१. चलत्, २. उल्बणाः ३. घनाघना, ४. चक्रि, ५. कन्दलै, ६. अम्बरा वरा,

**कोलाहलेनोच्चलतां[1] दिवौकसां महाचमूनां गुरुभिर्ध्वजव्रजैः[2]।**
**घनैर्निरुच्छ्वासमभूदनन्तरं[3] दिङ्मण्डलं व्योमतलं महीतलम् ॥१६॥**

सी०—कोलाहलेति। उत्प्लुत्योड्डीय चलताम्, रोषवशादिति भावः। दिवौकसां देवानां कोलाहलेन घोरघोषेण। तथा महाचमूनां गुरुभिर्विशालैर्घनैः सघनैः, पुष्टैरिति यावत्। ध्वजव्रजैर्ध्वजसमूहैश्च कृत्वा निरुच्छ्वासं निरुद्धश्वासं निरोधहेतुकव्याप्तिमद्दिशां मण्डलं व्योमतलं महीतलमनन्तरमनुद्भासमानभेदमभूत्। 'एकमेवाद्वितीयं ब्रह्म' इत्यद्वैतवादिनां ब्रह्मणोऽद्वैतत्वप्रतिपादने निदर्शनमभूदिति भावः ॥ १६ ॥

शि०—कोलाहलेनेति। उच्चलतां क्रोधाधिक्येनोत्प्लुत्य गच्छतां दिवौकसां देवानां कोलाहलेन कलकलशब्देन तथा महाचमूनां विपुलसेनानां गुरुभिरधिकैर्घनैः सान्द्रैर्ध्वजव्रजैः ध्वजसमूहैः (करणैः) निरुच्छ्वासं प्रतिरुद्धप्राणं दिङ्मण्डलं दिक्चक्रवालं व्योमतलं महीतलम् अनन्तरम् अनुद्भासमानभेदमभूत् जातम्। सुरकोलाहलेन सैन्यध्वजबाहुल्येन च व्याप्तदिङ्मण्डलमेवाऽप्रतीयमानभेदं व्योमतलं महीतलं च बभूवेत्यर्थः ॥ १६ ॥

**सुरारिलक्ष्मीपरिकम्पहेतवो दिक्चक्रवालप्रतिनादमेदुराः।**
**नभोन्तकुक्षिंभरयो[4] घनाः स्वना निहन्यमानैः पटहैर्वितेनिरे ॥१७॥**

सी०—सुरारीति। निहन्यमानैस्ताड्यमानैः पटहैः कर्तृभिः 'पटहो ना समारम्भे आनके पुंनपुंसकम्' इति मेदिनी, 'आनकः पटहोऽस्त्री स्यात्' इत्यमरश्च। सुरारिलक्ष्म्यास्तारकसंपदः संबन्धिनि परिकम्पे हेतवो निदानभूताः। दिशां चक्रवाले मण्डले। 'चक्रवालं तु मण्डलम्' इत्यमरः। ये प्रतिनादः प्रतिध्वनिस्तेन मेदुराः पुष्टाः। तथा नभोन्तेनाकाशप्रान्तेन, प्रान्तपर्यन्तेनेत्यर्थः। कुक्षिं भरन्ति पिपुरन्ति नभोन्तकुक्षिंभरयः। सर्वं नभो व्याप्नुवन्त इत्यर्थः। 'फलेग्रहिरात्मंभरिश्च' इत्यत्र चात्कुक्षेरपि समावेशात्कुक्षिंभरिरिति सिद्धम्। तथा घनाः सान्द्राः स्वनाः शब्दा वितेनिरे। वितस्तरिरे इत्यर्थः ॥ १७ ॥

शि०—सुरारीति। निहन्यमानैस्ताडितैः पटहैर्वाद्यविशेषैः (कर्तृभिः) सुरारिलक्ष्मीपरिकम्पहेतवः तारकश्रीसञ्चलनकारणानि तथा दिक्चक्रवालप्रतिनादमेदुराः दिङ्मण्डलप्रतिशब्दपुष्टाः तथा घनाः सान्द्राः नभोऽन्तकुक्षिंभरयो व्योमान्तरालोदरपूरकाः स्वनाः शब्दाः वितेनिरे। देवैस्ताडितपटहशब्दैर्व्योमान्तरालव्याप्तैर्बभूवे इत्यर्थः ॥ १७ ॥

---

१. उच्छलता, २. ध्वजाग्रैः, ३. अलंतराम्, ४. घनस्वनाः,

**प्रमथ्यमाना[1]म्बुधिगर्जतर्जनैः [2]सुरारिनारीगणगर्भपातनैः ।**
**नभश्चमूधूलिकुलैरिवाकुलं[3] ररास गाढं पटहप्रतिस्वनैः ॥ १८ ॥**

सी०—प्रमथ्यमानेति । चमूनां धूलिकुलै रेणुसमूहैः । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च' इति मेदिनी । आकुलं व्याप्तं पीडितं नभः प्रमथ्यमानोऽत्रलोड्यमानो योऽम्बुधिस्तस्य गर्जो गर्जनं तस्य तर्जना जेतारः । ततोऽप्यधिकगर्जनैरित्यर्थः । अत एव सुरारेस्तारकस्य यो नारीगणः स्त्रीसमूहस्तस्य यो गर्भस्तस्य पातनैः पातनकारिभिः । अतिगर्जनभयादिति भावः । पटहप्रतिस्वनैरानकप्रतिघोषैः कृत्वा गाढं दृढं यथा तथा ररासेव रुरोदेव । उत्प्रेक्षालङ्कारः, आर्तानां रोदनमेवैकं शरणं भवतीति भावः ॥ १८ ॥

शि०—प्रमथ्येति । चमूधूलिकुलैः सेनारेणुसमुदायैः आकुलमावृतमार्त्तमिति यावत् नभोऽन्तरिक्षं प्रमथ्यमानाम्बुधिगर्जतर्जनैर्विलोड्यमानार्णवनादजेतृभिः तथा सुरारिनारीगणगर्भपातनैः तारकस्त्रीवर्गगर्भस्राविभिः पटहप्रतिस्वनैः आनकवाद्यविशेषप्रतिघोषैः गाढं दृढं यथा तथा ररासेव रुरोदेव । सैन्यरेणुसङ्घैराकुलं नभः पटहशब्दद्वारा रोदन चकारेवेत्युत्प्रेक्षा ॥ १८ ॥

**[4]क्षुण्णं रथैर्वाजिभिराहतं खुरैः करीन्द्रकर्णैः परितः प्रसारितम् ।**
**[5]धूतं ध्वजैः काञ्चनशैलजं रजो वातैर्हतं व्योम [6]समारुहत्क्रमात्[7] ॥**

सी०—क्षुण्णमिति । रथैः स्यन्दनै क्षुण्णमुत्खनितम् । तथा काञ्चनशैलजं सुमेरुपर्वतजनितम् । इदं विशेषणं पीतत्वद्योतनार्थम् । रजोः धूलिः । वाजिभिरश्वैः कर्तृभिः । खुरैः करणैः । कृत्वा हतं चूर्णीकृतम् । पिष्टीकृतमिति यावत् । तथा करीन्द्राणां मत्तगजानां कर्णैः श्रवणैः परितः सर्वतः प्रसारितं विस्तृतम् । तथा ध्वजैर्धुतं कम्पितम् । एतेन सघनता द्योतिता । तथा वातैः पवनैर्हतं स्पृष्टम् । एतेन पवनस्योपरि रंहःप्राप्तौ साधकतोक्ता । क्रमाद्यथाक्रमं व्योम कर्म समारुहत् । आकाशमारूढमित्यर्थः । अत्र रुहेर्भौवादिकत्वाल्लङि गुणप्रसङ्गः, लुङि शलन्तत्वात्क्सप्रसङ्गः, णिजन्तत्वे लङि यकारश्रवणप्रसङ्ग इत्यतोऽयं प्रयोगश्चिन्त्य इति बहवः । वयं तु व्योम्न्याकाशे सम्यगारोहतीति समारोहः, इगुपधलक्षणः कः, तत आचारार्थे क्विपि अल्लोपे धातुत्वाल्लङि शपि अल्लोपस्य स्थानिवत्त्वाद् गुणाभावे च रूपसिद्धिरिति समादध्महे ॥ १९ ॥

शि०—क्षुण्णमिति । रथैः स्यन्दनैः क्षुण्णमुत्खनितं काञ्चनशैलजं स्वर्णाद्रि-

---

१. अर्णवगर्जितस्वनै, २. वरारि, ३. आकुलैः, ४. क्षिप्तम्, ५. घनं घनैः, ६. ससार तत्, समासदत्, ७. क्षणात्,

जातं रजो धूलिः (कर्तृ) वाजिभिरश्वैः (कर्तृभिः) खुरैः शफैः (करणैः) आहतं चूर्णीकृतं, तथा करीन्द्रकर्णैः गजश्रेष्ठश्रोत्रैः परितः सर्वतः प्रसारितं विस्तृतं, तथा ध्वजैर्धुतं सञ्चालितं, तथा वातैर्वायुभिः हृतं स्पृष्टं सत् व्योम आकाशं क्रमात् क्रमशः समारुहत् अधिरूढम्। रथोत्थधूलिः क्रमादाकाश-मारुरोहेत्यर्थः ॥ १९ ॥

न केवलं व्योमन्यारूढम्, किन्तु दिगन्तेष्वपि तथेत्याह—

**खातं खुरै रथ्यतुरङ्गपुंगवै[1]रुपत्यकाहाटकमेदिनीरजः।**
**गतं दिगन्तान्मुखरैः[2] समीरणैः[3]सुविभ्रमं भूरि बभार भूयसा ॥२०॥**

सी०—खातमिति। रथं वहन्ति ते रथ्याः। 'तद्वहति रथयुगप्रासङ्गम्' इति यत्। तथोक्ता ये तुरङ्गपुङ्गवा अश्वश्रेष्ठास्तै। कर्तृभिः खुरैः कृत्वा खातं क्षुण्णम्। उपत्यकाऽद्रेरासन्ना या हाटकमेदिनी सुवर्णभूमिः। अद्रेः सौवर्ण्यासन्नभूमिरिति तात्पर्यार्थः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इत्या-सन्नार्थे त्यकन्प्रत्ययः। तस्याः सम्बन्धि। रजः कर्तृ। भूरि बहलं मुखरैः शब्दायमानैः समीरणैः पवनैर्दिगन्तान्दिक्प्रान्तान्गतम्। गमितमित्यर्थः। अन्तर्भावितणिजर्थोऽत्र बोध्यः। तथोक्तं सत्। भूयसातिशयेन शोभमानं विभ्रमं विलासम्। शोभामिति यावत्। बभार धृतवान्। अत्यन्तं शुशुभ इत्यर्थः। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः ॥ २० ॥

शी०—खातमिति। रथ्यतुरङ्गपुङ्गवैः स्यन्दनलग्नाश्वश्रेष्ठैः (कर्तृभिः) खुरैः शफैः (करणैः) खातमुत्पादितम् उपत्यकाहाटकमेदिनीरजः गिर्यासन्नस्वर्णभूमिधूलिः मुखरैः सशब्दैः समीरणैः वायुभिः दिगन्तान् आशाचरमप्रान्तान् गतं प्रापितं (अत्रान्तर्भावितण्यर्थो गमिः) भूयसाऽतिशयेन भूरि अधिकं सुविभ्रमं सुविलासं बभार दधौ। रथोत्थरजो न केवलमन्तरिक्ष एव गतम् अपितु दिगन्तप्रान्तेष्वपि गतमित्यर्थः ॥ २० ॥

**अधस्तथोर्ध्वं पुरतोऽथ पृष्ठतोऽभितोऽपि चामीकररेणुरुच्चकैः।**
**चमूषु सर्पन्मरुदाहतोऽहर[4]न्नवीनसूर्यस्य च कान्तिवैभवम् ॥ २१ ॥**

सी०—अध इति। चमूषु सेनासु मरुता पवनेनाहत उत्पादितः। अत एवाधो नीचैः। तथोर्ध्वमूर्ध्वभागे। अथ पृष्ठतः पृष्ठभागे। तथाभितोऽपीत-स्ततश्च सर्पन्प्रसरन्। चामीकररेणुः सुवर्णरजः। सुवर्णपर्वतोद्भूतत्वा-

---

१. उपत्यकानां कनकस्थलीरजः, २. प्रखरैः, ३. दाहभ्रमम्, ४. तत्कालबालातपवैभवं बहु, तत्कालबालारुणवैभवं बहु.

दिति भावः। नवीनसूर्यस्योषस्यसूर्यस्य कान्तिवैभवं द्युतिसंपदमहरत्। ततोऽप्यधिकं शुशुभ इत्यर्थः ॥ २१ ॥

शी०—अथ इति। चमूषु सेनासु महता पवनेन आहतः सञ्जनितः अत एवाधो नीचैः तथोर्ध्वप्रदेशे तथा पुरतोऽग्रे तथा पृष्ठतः पश्चाद्भागे तथाभितोऽपि सर्वतश्च सर्पन् व्याप्नुवन् चामीकररेणुः स्वर्णधूलिः (स्वर्णाचलजात इति तत्त्वम्) नवीनसूर्यस्य प्रात.कालीनार्कस्य कान्तिवैभवं दीप्तिश्रियमहरत् हृतवान् ॥ २१ ॥

[1]बलोद्धृतं काञ्चनभूमिजं रजो बभौ दिगन्तेषु [2]नभःस्थले स्थितम्।
अकालसन्ध्याघनरागपिङ्गलं[3] घनं घनानामिव [4]वृन्दमुद्यतम् ॥ २२ ॥

सी०—बलोद्धतमिति। काञ्चनस्य भूमौ जातं रजो धूलिर्बलोद्धृतं सैन्येनोत्पातितमत एव दिगन्तेषु दिक्प्रान्तेषु तथा नभःस्थल आकाशदेशे स्थितं च सत्। अकाले या संध्या तस्या यो घनः सान्द्रो रागो लौहित्यं तेन पिङ्गलं पिशङ्गम्। 'पिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः। तथा घनं सान्द्रमुद्यतमुत्पन्नम्। पर्वतेभ्य इति शेषः। घनानां मेघानां वृन्दं समूह इव बभौ। अकालसंध्यालिप्तो मेघो यथा भाति तद्वत्सुवर्णभूमिजमपि रजो बभावित्यर्थः। अत्र पूर्णोपमालंकारः। ननु भानाश्रयाभूते रजसि घटवृन्दत्वेनोत्प्रेक्षासम्भवात्सम्भावनैवास्त्विति चेत्। सत्यम्। क्रियाप्राधान्यमते रजःकर्तृकशोभायां घनवृन्दत्वोत्प्रेक्षापत्तेः ॥ २२ ॥

शि०—बलोद्धृतमिति। काञ्चनभूमिजं स्वर्णक्षितिसमुत्पन्नं रजो रेणुः (कर्तृ) बलोद्धृतं चमूत्थापितम्, अत एव दिगन्तेषु आशाप्रान्तेषु तथा नभःस्थलेऽन्तरिक्षप्रदेशे च स्थितं विद्यमानं सत्, उड्डीयेति शेषः। अकालसन्ध्याघनरागपिङ्गलम् असमयसंध्यारूण्यपिशङ्गम् घनं सान्द्रमुद्यतमुत्पन्नं घनानां मेघानां वृन्दं समूह इव बभौ शुशुभे। असामयिकसन्ध्यारूण्यलिप्तमेघो यथा शोभते तथा काञ्चनभूमिसमुत्पन्नं रजः शुशुभे इत्यर्थः ॥ २२ ॥

[5]हेमावनीषु प्रतिबिम्बमात्मनो मुहुर्विलोक्याभिमुखं महागजाः।
रसातलोत्तीर्ण[6]गजभ्रमात्क्रुधा दन्तप्रकाण्डप्रहृतानि[7] तेनिरे ॥ २३ ॥

सी०—हेमेति। महागजा महान्तो दन्तिनो हेम्नः सुवर्णस्यावनीषु पृथ्वीषु पतितमात्मनः प्रतिबिम्बमभिमुखं विलोक्य रसातलात्पातालात्। 'अधोभुवनपातालं बलिसद्म रसातलम्' इत्यमरः। उत्तीर्णा उत्थिता ये गजास्तेषां भ्रमाद् भ्रान्त्या निमित्तेन। जातयेति शेषः। क्रुधा क्रोधेन।

---

१. वातोद्धतम्, बलोद्धतम्, २. नभस्तले, ३. पिङ्गितम्, ४. दण्डम्, ५. हैमावनीषु, ६. गजभ्रमेण ते, ७. प्रहृतानि; प्रकृतानि

'प्रतिघा रुट्क्रुधौ स्त्रियौ' इत्यमरः। मुहुरनुवेलं दन्ता एव प्रकाण्डाः स्तम्बाः। 'काण्डे स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः' इति मेदिनी। तैस्तत्कर्मकानि प्रहृतानि प्रहारान्। भावे निष्ठा। तेनिरे वितस्तरिरे। कर्त्तरि लिट्। 'अत एकहल्मध्ये नादे-' इत्येत्वाभ्यासलोपौ। पृथिव्यामात्मप्रतिबिम्बदर्शनेन अन्यगजभ्रमवतां गजानां युक्तमेव प्रहारकरणमिति भावः। 'नान्यस्य गन्धमपि मानभृतः सहन्ते' इति गन्धस्यापि दुःसहत्वात्। किं पुनः साक्षाद्दर्शनस्य। तद्दर्शनं तद्वत्ति तत्प्रकारकमतद्वत्ति तत्प्रकारकं वा तत्र तेषां नातीव निग्रहः, मानान्धतायाः प्राधान्यात् ।२३।

शि०—हेमेति। महागजाः करिवराः हेमावनीषु स्वर्णभूमिषु आत्मनः स्वस्य प्रतिबिम्बमाकारम् अभिमुखं संमुखं विलोक्य दृष्ट्वा रसातलोत्तीर्णगजभ्रमात् पातालोत्स्थितकरिभ्रान्त्या हेतुना क्रुधा रोषेण मुहुरसकृत् दन्तप्रकाण्डप्रहृतानि दशनस्तम्भाघातान् तेनिरे वितस्तरिरे ॥ २३ ॥

सुजातसिन्दूरपरागपिञ्जरैः कलं चलद्भिः सुरसैन्यसिन्धुरैः।
शुद्धासु चामीकरशैलभूमिषु [1]नादृश्यत स्वं प्रतिबिम्बमग्रतः ॥ २४ ॥

सी०—सुजातेति। सुजातः शोभनो यः सिन्दूरस्य परागो रजस्तेन पिञ्जरैः पीतैः तथा कलं मन्द्रं यथा तथा चलद्भिर्गच्छद्भिः सुराणां देवानां सैन्यस्य सिन्धुरैर्गजैः कर्तृभिः। शुद्धासु निर्मलास्वपि चामीकरशैलस्य सुमेरुपर्वतस्य भूमिष्वग्रतः पतितमपि स्वं प्रतिबिम्बं नादृश्यत नालोकि। कर्मणि लङ्। आधाराधेययोरेकवर्णतया पृथगभासमानत्वादिति भावः। 'सिन्दूरस्तनुभेदे स्यात्सिन्दूरे रक्तचूर्णके' इति मेदिनी ॥ २४ ॥

शि०—सुजातेति। सुजातसिन्दूरपरागपिञ्जरैः शोभनसिन्दूररजःपीतैः। तथा कलं मन्द्रं (गम्भीरं) यथा तथा चलद्भिर्गच्छद्भिः सुरसैन्यसिन्धुरैः देवचमूगजैः (कर्तृभिः) शुद्धासु मालिन्यरहितासु चामीकरशैलभूमिषु स्वर्णाचलावनीषु अग्रतोऽग्रे विद्यमानमपीति शेषः। स्वं स्वकीयं प्रतिबिम्बमाकृतिः नाऽदृश्यत नालोकि ॥ २४ ॥

इति क्रमेणामरराजवाहिनी महा[2]हवाम्भोधिविलासलालसा।
अवातरत्काञ्चनशैलतो द्रुतं [3]कोलाहलाक्रान्तविधूतकन्दरा ॥ २५ ॥

सी०--इतीति। महानाहवः संग्रामः स एवाम्भोधिः समुद्रस्तत्र यो विलासो लीला। क्रीडेति यावत्। 'विलासो हावभेदे स्याल्लीलाया-

---

१. व्यदृश्यत, २. हवारम्भ, ३. कोलाहलावृत्तिविधूतकन्दराः; कोलाहलाकूतविधूतकन्दरा; कोलाहलाकृत्तवि धूतकन्दराः,

मपि पुंस्ययम्' इति मेदिनी। तत्र लालसौत्सुक्यं यस्याः। तथा कोलाहलेन कलकलेन। 'कोलाहलः कलकलः' इत्यमरः। आक्रान्ता व्याप्ता अत एव विधूताः कम्पिताः कन्दरा गह्वरा यया। 'कन्दरस्त्वङ्कुशे पुंसि गुहायां च नपुंसकम्' इति मेदिनी। एवंभूताममरराजवाहिनीन्द्रसेना। 'वाहिनी स्यात्तरङ्गिण्यां सेनासैन्यप्रभेदयोः' इति मेदिनी। इति क्रमेण पूर्वोक्तक्रमेण काञ्चनशैलतः सुमेरोः सकाशाद् द्रुतं शीघ्रमवातरत् उत्ततारेत्यर्थः॥ २५॥

शि० —इतीति। महाहवाम्भोधिविलासलालसा बृहत्संग्रामार्णवक्रीडोत्कण्ठया तथा कोलाहलाक्रान्तविधूतकन्दरा कलकलव्याप्तकम्पितगह्वरा अमरराजवाहिनी शक्रसेना इति क्रमेण पूर्वोक्तरीत्या काञ्चनशैलतः सुमेरोः सकाशात् द्रुतं सत्वरम् अवातरत् उदतरत्॥ २५॥

[1]महाचमूस्यन्दनचण्डचीत्कृतैर्विलोल[2]घण्टेभपतेश्च बृंहितैः।
सुरेन्द्रशैलेन्द्रमहागुहाशयाः सिंहा [3]महत्स्वप्नसुखं न तत्यजुः॥ २६॥

सी०—महेति। सुरेन्द्रस्येन्द्रस्य शैलेन्द्रे मेरौ या महागुहा महागह्वराणि तासु शेरते स्वपन्ति। गुहासु निद्रां कुर्वन्त इत्यर्थः। तथाभूताः सिंहा मृगेन्द्रा महाचमूषु महतीषु सेनासु ये स्यन्दना रथास्तेषां चण्डैः प्रचण्डैः। तीव्रैरिति यावत्। 'चण्डो धनहरी शङ्खपुष्पास्त्रिष्वतिकोपने। तीव्रेऽपि चूडावलभौ शिखायां बाहुभूषणे।' इति मेदिनी। चीत्कृतैः शब्दविशेषैः। इयं च शब्दानुकृतिः। तथा विलोलघण्टोऽतिचपलघण्टो य इभपतिर्गजराजस्तस्य। जातावेकवचनम्। बृंहितैर्गर्जितैश्च। 'बृंहितं करिगर्जितम्' इत्यमरः। महद्दीर्घं स्वप्ने निद्रायां यत्सुखम्। 'सुखं शर्मणि ना नाके' इति मेदिनी। 'स्वपो नन्' इति नन्प्रत्ययः। न तत्यजुर्न जहुः। अत्र निद्राप्रतिबन्धाश्रयीभूतबहुविधकोलाहलरूपे सत्यपि निदाने निद्राभङ्गरूपकार्योत्पत्त्यभावाद्विशेषोक्तिरलङ्कारः, 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति लक्षणात्। 'शयवासवासिष्वकालात्' इति सूत्रं हलदन्तादेवेति नियमाद् गुहाशय इत्यत्र तदभावान्नालुक्॥ २६॥

शि०—महेति सुरेन्द्रशैलेन्द्रमहागुहाशयाः शक्रस्वर्णाचलबृहद्गह्वरनिद्रिताः सिंहा मृगेन्द्राः। महाचमूस्यन्दनचण्डचीत्कृतैः बृहत्सेनारथतीव्रचीत्कारशब्दैः तथा विलोलघण्टेभपतेः चपलघण्टकरिवरस्य च बृंहितैः गर्जनैः महत्स्वप्नसुखम् अतिनिद्राऽऽनन्दं न तत्यजुः न जहुः। सुमेरुकन्दरसुप्ता मृगेन्द्राः स्यन्दनशब्दैर्गजशब्दैश्चापि निद्रासुखं न जहुरित्यर्थः॥ २६॥

---

१. महाचमूनां करिचण्ड, २. घण्टाक्वणितोपबृंहितैः, ३. महास्वप्न,

गम्भीरभेरीध्वनितैर्भयंकरैः[1]महागुहान्तप्रतिनादमेदुरैः।
महारथानां [2]गुरुनेमिनिस्वनैरनाकुलैस्तैर्मृगराजताजनि[3] ॥ २७ ॥

सी०—गम्भीरेति। महान्तः परिणाहिनो ये गुहान्ता गह्वरमध्यानि तेषु यः प्रतिनादः प्रतिध्वनिस्तेन मेदुरैः पुष्टैः। अत एव भयंकरैर्विभीषकैः 'मेघर्तिभयेषु कृञः' इति खश्। गम्भीराणि मन्द्राणि यानि भेरीध्वनितानि दुन्दुभिशब्दाः। 'भेरीः स्त्री दुन्दुभिः पुमान्' इत्यमरः। तैः। तथा महारथानां महतां स्यन्दनानां सम्बन्धिन्यो या गुरुनेमयो महत्यश्चक्रधाराः। 'चक्रधारा प्रधिर्नेमिः' इत्यमरः। तासां निःस्वनैः शब्दैश्चापि। निमित्तभूतैरित्यर्थः। अनाकुलैराकुलत्वाभाववद्भिस्तैः सिंहैर्निमित्तैर्मृगराजता मृगाधिपत्यम्। अन्वर्थेति शेषः। सार्थाऽजनि जाता। राज्ञामयमेव परमो धर्मः प्रतिकर्तुमशक्यैरपि यदरिभ्यो न भेतव्यमिति। तदेभिर्मृगराट्स्वधारिभिः। कथंचिदपि न भीतम्। अतो युक्तमेषां खलु मृगराजेत्यभिधानमित्यभिप्रायः। अत्रापि विशेषोक्तिरलङ्कारः॥ २७॥

शि०—गम्भीरेति। महागुहान्तप्रतिनादमेदुरैः बृहद्गह्वरमध्यप्रतिशब्दपुष्टैः अत एव भयङ्करैः साध्वसोत्पादकैः गम्भीरभेरीध्वनितैः मन्द्रदुन्दुभिशब्दैः तथा महारथानां बृहत्स्यन्दनानां गुरुनेमिनिस्वनैर्महाप्रधिशब्दैश्चापि (हेतुभिः) अनाकुलैरव्यग्रैस्तैः सिंहैः मृगराजता मृगेन्द्रता अजनि समुदपादि॥ २७॥

[4]समुत्थितेन त्रिदिवौकसां [5]महाचमूरवेणाद्रितटान्तदारिणा।
प्रपेदिरे केसरिणोऽधिकं मदं [6]स्ववीर्यलक्ष्मीमृगराजतावशात् ॥२८॥

सी०—समुत्थितेनेति। समुत्थितेन समुदितेनात एवाद्रेः सुमेरोस्तटान्तानां शृङ्गमध्यानाम्। 'तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु' इति मेदिनी। 'प्रपातस्त्वतटो भृगुः' इत्यमरश्च। दारिणा विदारकेण। अतिघोषेण महान्तः पर्वतभृगवोऽपि विदीर्णा बभूवुरित्यर्थः। अत्र शब्दकर्तृकपर्वततटविदारणस्यायोगेऽपि तद्योगकल्पनात्सम्बन्धातिशयोक्तिरलङ्कारः। त्रिदिवौकसां देवानां सम्बधिन्यो या महाचम्वो महत्यः सेनाः। 'चमूः सेनाविशेषेऽपि सेनामात्रे च योषिति' इति मेदिनी। तासां रवेण ध्वनिना निमित्तेन केसरिणः सिंहाः कर्तारः स्वस्य वीर्यं पराक्रम एव लक्ष्मीः शोभा यस्याः। आत्मपराक्रमशालिनीत्यर्थः। तथाभूता या मृगराजता हरिणाधिपत्यं तस्या वशादायत्तत्वात्। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः' इति मेदिनी। अधिकं बहु मदं गर्वं प्रपेदिरे। कर्तरि

---

१. मुहुर्गुहान्तः, २. गुरुनादनिःस्वनैः, ३. तापि किम्,
४. समुच्छ्रितेन, ५. चमुरवेण तेन, ६. स्ववीरलक्ष्मी,

लिट् । भयानकोऽपि चमूरवः प्रत्युत सिंहानामधिकमदकारक एव जात इति भावः ॥ २८ ॥

शि०—समुत्थितेनेति । समुत्थितेन समुत्पन्नेन अद्रितटान्तदारिणा सुमेरुशिखरमध्यविदारकेण त्रिदिवौकसां सुराणां महाचमूरवेण बृहत्सैन्यघोषेण ( हेतुना ) केसरिणः सिंहाः स्ववीर्यलक्ष्मीमृगराजतावशात् आत्मसामर्थ्यभूषणमृगाधिपत्याधीनत्वात् अधिकं प्रचुरं मदं गर्वं प्रपेदिरे प्राप्नुवन् । सिंहानां सुरसैन्यशब्दो न भीतिजनकोऽपितु तेषां मदाधिक्योत्पादक एवाऽभूदिति भावः ॥ २८ ॥

**भिया सुरानीकविमर्दजन्मना विदुद्रुवुर्दूरतरं द्रुतं मृगाः ।**
**गुहागृहान्ताद्बहिरेत्य[1] [2]हेलया तस्थुर्विशङ्कं[3] नितरां मृगाधिपाः ॥**

सी०—भियेति । मृगा हरिणाः 'मृगः पशौ कुरङ्गे च' इति मेदिनी । सुराणां देवानामनीकस्य सैन्यस्य । 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिनी । यो विमर्दः प्राणापहारि मर्दनं तज्जन्मना । ततो जनितयेत्यर्थः । भिया भयेन निमित्तेन द्रुतं सत्वरं दूरतरं विदुद्रुवुः पलायांचक्रिर इत्यर्थः । भयशीलत्वादिति भावः । अथ च मृगाधिपाः सिंहा हेलया क्रीडया । सहसैवेत्यर्थः । गुहागृहस्य गह्वररूपस्य सद्मनोऽन्तान्मध्याद्बहिरेत्य । 'अपपरिबहिः—' इति समासविधानाज्ज्ञापकात्पञ्चमी । नितरां विशङ्कं निर्भयं यथा तथा तस्थुः ॥ २९ ॥

शि०—भियेति । मृगा हरिणाः सुरानीकविमर्दजन्मना देवसैन्यमर्दनोत्पन्नेन भिया साध्वसेन द्रुतं शीघ्रं दूरतरमतिदूरं विदुद्रुवुः पलायिताः । अथ च मृगाधिपाः सिंहाः हेलयाऽनायासेन गुहागृहान्तात् गह्वरगृहमध्यभागात् बहिः बाह्यप्रदेशे एत्य समागत्य नितरामतिशयेन विशङ्कं निर्भीकं यथा तथा तस्थुः स्थितवन्तः ॥ २९ ॥

**[4]विलोकिताः कौतुकिनामरावतीजनेन [5]जुष्टप्रमदेन दूरतः ।**
**सुराचलप्रान्तभुवः[6] प्रपेदिरे [7]सुविस्तृतायाः प्रसरं [8]सुसैनिकाः ॥३०॥**

सी० विलोकिता इति । कौतुकिना, सैनिकदर्शने कौतुकाविष्टचेतसेत्यर्थः । जुष्टप्रमदेन सेवितकलत्रेण । कलत्रसहितं वर्तमानेनेति फलितोऽर्थः । अमरावतीजनेन सुरेन्द्रनगरीलोकेन दूरतो 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पञ्चमी । 'पञ्चम्याः—' इति तसिल् । विलोकिता दृष्टाः सुसैनिकाः शोभनाः सेनास्थलोकाः कर्तारः । सुतरां विस्तृतायाः सुराचलस्य सुमेरो-

---

१. अभिसृत्य, २. लीलया, ३. विनिः शङ्कतराः ४. विलोकिता, ५. जातप्रमदेन, दुष्टं प्रमदेन, ६. भुवि, ७. सुविस्तृतायाम्, ८. न सैनिकाः

र्यां प्रान्तभूस्तस्याः प्रसरं प्रदेशं प्रपेदिरे प्रापुः । सुमेरोरवरुह्यान्यः प्रापुरिति भावः ॥ ३० ॥

शि०—विलोकिता इति । कौतुकिना कौतुकमस्यास्तीति कौतुकी तेन तथोक्तेन । सुरानीकावलोकनोत्कण्ठावता । तथा जुष्टप्रमदेन जुष्टाः सेविताः प्रमदा येन स तथोक्तस्तेन । सेवितभार्येण । अमरावतीजनेन पुरन्दरपुरस्थलोकेन दूरतो दूरात् विलोकिता दृष्टाः सुसैनिकाः शोभनानीकस्थजनाः ( कर्तारः ) सुविस्तृतायाः अतिदैर्घ्यमापन्नायाः सुराचलप्रान्तभुवः सुमेरुनिकटावनेः प्रसरं प्रदेशं प्रपेदिरे प्राप्ताः ॥ ३० ॥

[1]पीतासितारक्तसितैः सुराचल[2]प्रान्तस्थितैर्धातुरजोभिरम्बरम् ।
[3]अयत्नगन्धर्वपुरोदयभ्रमं बभार [4]भूम्नोत्पतितैरितस्ततः ॥ ३१ ॥

सी०—पीतासितेति । अम्बरं नभः कर्तृ । इतस्ततः सर्वत्रेत्यर्थः । भूम्ना बाहुल्येनोत्पतितैरुड्डीयितैरत एव सुराचलस्य सुमेरोः प्रान्तेषु स्थितैः । प्रान्तत्वं ह्यूर्ध्वं देशिकमवगन्तव्यम् । तथा पीतानि चासितानि चारक्तानि च सितानि च तैर्धातुरजोभिर्गैरिकादिधूलिभिर्निमित्तेन । अयत्नेन यत्नाभावेन । अनायासेनेति यावत् । यो गन्धर्वपुरस्य देवगायकनगरस्योदय उत्पत्तिस्तस्य भ्रमं बभार धृतवत् । अन्तर्भावितणिजर्थः । गन्धर्वपुरस्य ह्यनेकवर्णपरिमण्डितस्वरूपसामान्यधर्मेण नभसो योपमा तन्मूलिका भ्रान्तिः । अत उपमोत्थापितोऽयं भ्रान्तिमानलङ्कारः । तेनोभयोरङ्गाङ्गिभावेन सङ्करः ॥ ३१ ॥

शि०—पीतेति । अम्बरमन्तरिक्षं ( कर्तृ ) इतस्ततः सर्वत्र भूम्नाऽतिशयेनोत्पतितैरुत्प्लुतैः । अत एव सुराचलप्रान्तस्थितैः सुमेरुप्रदेशवर्त्तिभिः । तथा पीतासितारक्तसितैः गौरकृष्णारुणपाण्डुरैः रजोभिः रेणुभिः अयत्नगन्धर्वपुरोदयभ्रमम् अनायाससुरगायकनगरजनिभ्रान्तिं बभार धारयामास । अन्तर्भावितण्यर्थोऽत्र भृधातुः । लोकानिति शेषः । आकाशो विविधवर्णरेणुद्वारा लोकानां भ्रान्तिमुत्पादयामासेत्यर्थः ॥ ३१ ॥

महास्वनः[5] सैन्यविमर्दसम्भवः कर्णान्त[6]कूलंकषतामुपेयिवान् ।
पयोनिधेः क्षुब्धतरस्य [7]वर्धनो बभूव भूम्ना भुवनोदरम्भरिः ॥ ३२ ॥

सी०—महास्वन इति । कर्णान्तः श्रवणमध्यं स एव कूलं तटम् । 'अथ कूलं तटे सूर्ये सैन्यपृष्ठतडागयोः' इति मेदिनी । तत्कषत्युन्मार्ष्टि तस्य भाव-

१. पीतासितं रक्तसितम्, २. प्रान्तोत्थितैः, ३. अखर्व, ४. सुतराम्, नितराम्, ५. रवः प्रगल्भाहतभेरिसम्भवः, ६. मूलंकषताम्, ७. मन्थनः,

स्तत्ता ताम् । 'सर्वकूलाभ्रकरीषेषु कष' इति खश् । 'अरुर्द्विषत्-' इति मुम् । उपेयिवान्प्राप्तवान् । कर्णान्तं स्फोटयन्नित्यर्थः । क्षुब्धतरस्यात्यन्त-संचलितस्य । वेलामतिक्रान्तस्येत्यर्थः । पयोनिधेः समुद्रस्य वर्धनः । कर्तरि ल्युट् । तथा भुवनैः कृत्वोदरं भरतीति तथोक्तः । आवृतसकल-ब्रह्माण्डत्वाद् भुवनानां मध्यपातो युक्त इति भावः । एवंभूतः सैन्यविमर्द-सम्भवः सेनासंघट्टनोत्पन्नो महास्वनो भूम्ना बाहुल्येन युक्तो बभूव । अतिमहत्त्वविशिष्टो जात इत्यर्थः ॥ ३२ ॥

शि०—महास्वन इति । कर्णान्तकूलंकषतां श्रोत्रमध्यविघातकताम् उपेयिवान् प्राप्तवान् क्षुब्धतरस्य अतिसञ्चलितस्य पयोनिधेः समुद्रस्य वर्द्धनो वर्द्धकः तथा भुवनोदरंभरिः जगदुदरपूरकः सैन्यविमर्दसम्भवः सेनाप्रहारोद्भूतो महास्वनः महानादः भूम्नाऽतिशयेन बभूव जातः । सैन्यानामन्योऽन्यप्रहारजन्मा कोलाहलोऽतिशयेन जात इत्यर्थः ॥ ३२ ॥

महागजानां गुरुबृंहितैस्ततैः[1] सुहेषितैर्घोरतरैश्च वाजिनाम् ।
[2]घनै रथानां गुरुचण्डचीत्कृतैस्तिरोहितोऽभूत्पटहस्य निःस्वनः ॥३३॥

सी०—महागजानामिति । महागजानां महतां दन्तिनां सम्बन्धिभिर्गुरु-बृंहितैर्गुरूणि गम्भीराणि यानि बृंहितानि ध्वनितानि तैः । तथा ततैर्विस्तृतैः । तथा घोरतरैरत्यन्तभयङ्करैर्वाजिनां सुहेषितैः शोभनहेषणैः । तथा घनैर्गम्भीरैः रथानां सम्बन्धिभिर्गुरूणि महान्ति चण्डानि भयानकानि च यानि चीत्कृतानि तैश्च पटहस्य निस्वनः स्वनस्तिरोहितोऽन्तर्हितः । अप्रकाशित इति यावत् । अभूत् ॥ ३३ ॥

शि०—महागजानामिति । महागजानां करीन्द्राणां गुरुबृंहितैः गम्भीरध्वनितैः तथा घोरतरैरतिभीषणैः वाजिनामश्वानां सुह्रेषितैः शोभनह्रेषणशब्दैः । तथा घनैर्गम्भीरैः रथानां स्यन्दनानां गुरुचण्डचीत्कृतैः अतिभयानकचीत्कारशब्दैः पटहस्याऽऽनकस्य ( वाद्यविशेषस्य ) निस्वनः शब्दः तिरोहितोऽन्तर्हितोऽभूत् जातः । गजाश्व-स्यन्दनशब्दैः पटहशब्दोऽतिशयेनाऽऽवृत इत्यर्थः ॥ ३३ ॥

महासुराणामवरोधयोषितां कचाक्षिपक्ष्मस्तनमण्डलेषु[3] च ।
ध्वजेषु नागेषु रथेषु वाजिषु क्षणेन तस्थौ सुरसैन्यजं रजः ॥ ३४ ॥

सी०—महासुराणामिति । महासुराणां तारकादीनां सम्बन्धिनीनामवरोधयोषितामन्तःपुरस्त्रीणाम् । 'शुद्धान्तश्चावरोधश्च' इत्यमरः । सम्बन्धीनि कचाश्च, अक्षिपक्ष्माणि च, स्तनमण्डलानि च तस्मिन् ।

---

१. शतैः, स तैः, २. स्वनैः, ३. ध्वलम्,

'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति प्राण्यङ्गत्वादेकवद्भावः। तथा ध्वजेषु नागेषु हस्तिषु रथेषु वाजिषु च घनं सान्द्रं सुरसैन्यजं रजो धूलिः तस्थौ। अनेन तेषां शत्रूणामशुभमुक्तमिति ध्वनिः ॥ ३४ ॥

शि०—महासुरेति। सुरसैन्यजं देवानीकोत्पतितं रजो धूलिः (कर्तृ) महासुराणां तारकप्रभृतिदानवानामवरोधयोषितामन्तःपुरस्त्रीणाम् कचाक्षिपक्ष्मस्तनमण्डलेषु केशनेत्रलोमपयोधरसमुदायेषु ध्वजेषु पताकासु नागेषु करिषु रथेषु स्यन्दनेषु वाजिषु अश्वेषु क्षणेन मुहूर्तमात्रेण तस्थौ स्थितिं चकार ॥ ३४ ॥

[1]घनैर्विलोक्य स्थगितार्कमण्डलैश्चमूरजोभिर्निचितं [2]नभःस्थलम्।
[3]अयायि हंसैरभि मानसं घनभ्रमेण सानन्दमनर्ति केकिभिः ॥ ३५ ॥

सी०—घनैरिति। घनैः सान्द्रैरत एव स्थगितार्कमण्डलैराच्छादितसूर्यबिम्बैश्चमूरजोभिः सेनाधूलिभिर्निचितं व्याप्तं नभस्थलं व्योमदेशं विलोक्य घनभ्रमेण मेघभ्रान्त्या हंसैर्मरालैर्मानसं सरोऽभि संमुखमयायि गतम्। भावे लुङ्। तेषां वर्षास्वप्रगल्भत्वादिति भावः। अथ केकिभिर्मयूरैः सानन्दं सहर्षमनर्ति नृत्यमकारि। अत्रापि भावे लुङ् ॥ ३५ ॥

शि०—घनैरिति। घनैर्निबिडैः, अत एव स्थगितार्कमण्डलैः स्थगितमर्कमण्डलं यैस्तैस्तथोक्तैरावृतभानुबिम्बैः चमूरजोभिः सैन्यरेणुभिः निचितं व्याप्तं नभःस्थलम् अन्तरिक्षप्रदेशं विलोक्य दृष्ट्वा घनभ्रमेण मेघसंशयेन हंसैर्मरालैर्मानसं तदाख्यसरोऽभि सम्मुखम् अयायि अगमि। केकिभिर्मयूरैः सानन्दं सहर्षं यथा तथा अनर्ति नृत्यं व्यधायि। सैन्यरेणुव्याप्ताकाशावलोकनान्मेघभ्रान्त्या मरालमयूरयोर्गमननर्तनमित्यर्थे भ्रान्तिमानलङ्कारः ॥ ३५ ॥

[4]सान्द्रैः सुरानीकरजोभिरम्बरे नवाम्बुदानीकनिभैरभिश्रिते[5]।
चकाशिरे [6]स्वर्णमया महाध्वजाः परिस्फुरन्तस्तडितां गणा इव ॥

सी०—सान्द्रैरिति। अम्बरे नभसि। 'अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके' इति मेदिनी। नवो नूतनः इति यावत्। योऽम्बुदो मेघस्तस्यानीकं समूहस्तन्निभैस्तत्सदृशैः। 'निभस्तु कथितो व्याजे पुंलिङ्गः सदृशे त्रिषु' इति मेदिनी। तथा सान्द्रैः सघनैः। 'सान्द्रं बले वापि घने मृदौ च' इति मेदिनी। सुराणामनीकस्य सैन्यस्य रजोभिः। 'रजो रेणौ परागे स्यादार्तवे च गुणान्तरे' इति मेदिनी। अभिश्रित आवृते सति स्वर्णमया हेममया महाध्वजा महान्तो ध्वजाः। 'ध्वजः स्याच्छौण्डिके पुमान्। न स्त्रियां तु पताकायां खट्वाङ्गे मेढ्रचिह्नयोः' इति मेदिनी।

१. चलैः, २. नभस्तलम्, ३. अयापि; अवापि, ४. सान्द्रे, ५. विलासिभिः, श्रिते, निभैरभिस्तुतैः, ६ स्वर्णमयध्वजव्रजाः,

परिस्फुरन्तः परितः स्फुरन्तः प्रकाशमानास्तडितां विद्युताम्। 'तडित् सौदामनी विद्युत्' इत्यमरः। गणाः समूहा इव चकाशिरे शुशुभिरे ॥ ३६ ॥

शि०—सान्द्रैरिति। अम्बरेऽन्तरिक्षदेशे नवाम्बुदानीकनिभैः नूतन (वार्षिक) जलदसमूहतुल्यैः तथा सान्द्रैर्निबिडैः सुरानीकरजोभिः देवसैन्यरेणुभिः अभिश्रिते व्याप्ते सति स्वर्णमयाः सौवर्णाः महाध्वजाः महान्तो विशिष्टा ध्वजाः परिस्फुरन्तो दीप्यमानाः तडितां विद्युतां गणाः समूहा इव चकाशिरे शुशुभिरे। सुरानीकरेणुव्याप्ताकाशस्थितेषु ध्वजेषु विद्युद्गणत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ ३६ ॥

विलोक्य धूलीपटलैर्भृशं भृतं द्यावापृथिव्योरलमन्तरं महत्।
किमूर्ध्वतोऽधः [1]किमधस्त ऊर्ध्वतो रजोऽभ्युपैतीति जनैरतर्क्यत ॥३७॥

सी०—विलोक्येति। जनैर्लोकैर्द्यावापृथिव्योर्द्यौश्च पृथिवी च तयोः। 'दिवसश्च पृथिव्याम्' इत्यत्र चकाराद्द्यावादेशः। महद्विशालमन्तरमवकाशो धूलिपटलैः रजोनिचयैर्भृशं बहु यथा भृतं पूर्णं विलोक्य रज ऊर्ध्वतः सकाशदध उपैति। किंवाऽधस्तः सकाशादूर्ध्वत ऊर्ध्वभागे। सार्वविभक्तिकस्तसिः। अभ्युपैति किमित्यलं पर्याप्तमतर्क्यत तर्कितम्। भावे लङ्। सर्वतो रजोव्याप्त्या कुत आगच्छतीति निश्चयाभावादिति भावः ॥ ३७ ॥

शि०—विलोक्येति। द्यावापृथिव्योः आकाशभूतलयोर्महद्विशालमन्तरमवकाशो धूलीपटलैः रेणुसमूहैः भृशमतिशयं भृतं परिपूर्णं विलोक्य दृष्ट्वा, रजो धूलि, किम् ऊर्ध्वप्रदेशात् अधस्तलम् अभ्युपैति आगच्छति, किम् अधस्तः अधःप्रदेशात् ऊर्ध्वत उपरिभागेऽभ्युपैति गच्छति इति जनैर्लोकैः अतर्क्यत तर्कितम् ॥

नोर्ध्वं न चाधो न दुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु [2]चक्षुषोर्गतिः।
[3]सूच्यग्रभेद्यैः पृतना[4]रजश्चयैराच्छादिता[5] प्राणिगणस्य सर्वतः ॥३८॥

सी०—नोर्ध्वमिति। सूच्यग्रेण सीवनद्रव्यपुरोभागेन। सूची तु सीवनद्रव्येऽप्याङ्गिकाभिनयान्तरे' इति मेदिनी। भेद्यैर्भेत्तुं योग्यैः। 'ऋहलोः—' इति ण्यत्। अनेनातिसस्ता द्योतिता। तथाभूतैः पृतनायाः सेनायाः। 'पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः' इति मेदिनी। रजसां चयैः समूहैः। 'चयः समूहे प्राकारमूलबन्धे समाहृतौ' इति मेदिनी। सर्वत आच्छादिताऽऽवृता प्राणिगणस्य जन्तुसमूहस्य चक्षुषोर्नेत्रयोः। 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। गतिः प्रसरण-

---

१. अधस्तत्, २. चक्षुषः ३. सूच्यग्रभिन्नैः, ४. रजोभरैः, रजोभिः, ५. सुनिर्भरम्,

मूर्ध्वं नाभूत्, अधश्च नाभूत्, पुरो नाभूत्, पृष्ठतो नाभूत्, पार्श्वतोऽप्युभयतो नाभूत्। खलु निश्चयेन ॥ ३८ ॥

शि०—नोर्ध्वमिति। सूच्यग्रभेद्यैः सूचीपुरोभागभेदनयोग्यैः पृतनारजश्चयैः सेनाधूलिसमुदायैः सर्वतः आच्छादिता आवृता प्राणिगणस्य जन्तुवर्गस्य चक्षुषो नेत्रयोर्गतिः प्रसरणं ऊर्ध्वं नाभूत् अधो नाभूत् पुरो नाभूत्। पृष्ठतो नाभूत् पार्श्वतः उभयतोऽपिनाभूत् ॥ ३८ ॥

**दिगन्तदन्त्यावलि[1]दानहारिभिर्विमानरन्ध्रप्रतिनादमेदुरैः।**
**अनेकवाद्य[2]ध्वनितैरनारतैर्जगर्ज गाढं [3]गुरुभिर्नभस्तलम् ॥ ३९ ॥**

सी०—दिगन्तेति। दिगन्तेषु या दन्त्यावलिर्गजपंक्तिस्तस्या दानं मदजलं तस्य हारिभिः शोषकैः। घोरध्वनितश्रवणजनितभयवशाद्दिगन्तदन्तिनोऽपि शुष्कमदजला जाता इति भावः। तथा विमानानां देवस्यन्दनानां रन्ध्रेषु जालेषु यः प्रतिनादः प्रतिध्वनिस्तेन मेदुरैः पुष्टैर्गुरुभिर्दीर्घैरनारतैरविद्यमानक्षणिकविरामैरनेकवाद्यानां मृदङ्गादीनां ध्वनितैर्घोषैः कृत्वा नभस्तलं कर्तृ गाढं दृढं जगर्ज। प्रतिननादेत्यर्थः। अन्योऽपि कस्मिश्चित्कर्णकटुरवकारिणि सति तटस्थोऽपि प्रतिनदति तद्वत्। समासोक्तिरलंकारः—'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य यत्' इति लक्षणात् ॥ ३९ ॥

शि०—दिगन्तेति। दिगन्तदन्त्यावलिदानहारिभिः दिक्प्रान्तकरिपङ्क्तिमदजलशोषकैः तथा विमानरन्ध्रप्रतिनादमेदुरैः सुररथजालप्रतिध्वनिपुष्टैः तथा गुरुभिः गम्भीरैः तथाऽनारतैरविश्रान्तैः अनेकवाद्यध्वनिभिः विविधवाद्यशब्दैः (करणैः) गाढं दृढं यथा तथा नभस्तलमन्तरिक्षप्रदेशः (कर्तृ) जगर्ज प्रतिनदति स्म। गम्भीरशब्देषूत्पन्नेषु प्रतिनादो भवत्येवेति भावः ॥ ३९ ॥

**भुवं विगाह्य प्रययौ महाचमूः [4]क्वचिन्न मान्ती [5]महतीं दिवं खलु।**
**सुसंकुलायामपि तत्र निर्भरात्कि[6] कांदिशीकत्वमवाप नाकुला ॥४०॥**

सी०—भुवमिति। महाचमूर्महती सेना भुवं विगाह्य व्याप्य क्वचिदपि भूमिस्थले न मान्त्यसमासविशन्ती सती महतीं विशालां दिवं स्वर्गं प्रययौ प्राप खलु निश्चयेन। अथ च निर्भरादधिकात्मभाराद्धेतोस्तत्रापि दिव्यपि सुतरां संकुलायां व्याप्तायां सत्यामाकुला व्याकुला सती कांदिशीकत्वं भयद्रुतत्वम्। 'कांदिशीको भयद्रुतः' इत्यमरः। किं नावाप। अपि त्ववापैवेत्यर्थः। परस्परपेषणभिया व्याकुलत्वाद् दुद्रुवुरित्यर्थः। अत्र द्रवणं

१. दन्तावल, २. वाह, ३ गुरुमत्सरादिव, ४. ततः
५. दिवमभ्यागात्ततः, ६. निर्भरा विकांदिशीकत्वम्,

द्रवणेच्छामात्रपरम् । द्रवणं कर्तुमैच्छदिति तात्पर्यार्थः । अन्यथा व्याप्तेः प्रतिबन्धकत्वेन द्रवणासम्भवाद् द्रवणोक्तेरफलत्वापत्तिः ॥ ४० ॥

शि०—भुवमिति । महाचमूः सुरानीकवर्गः भुवमवनीं विगाह्य समाक्रम्य क्वचित्कुत्रचिदपि भुवि न मान्ती समावेशमलभमाना सती महतीमतिविस्तृतां दिवं नाकं प्रययौ जगाम खलु निश्चयेन । अनन्तरं निर्भरादात्मभाराधिक्याद्धेतोः तत्रापि दिव्यपि सुसंकुलायामाक्रान्तायां सत्याम् आकुला व्यग्रा सती कांदिशीकत्वं भयद्रुतत्वं नाऽवाप न प्राप्तवती, अपि तु प्रापैवेत्यर्थः । स्वर्गेऽप्यसमावेशादन्योऽन्य-पेषणशंकया व्यग्रा सती पलायनं कृतवतीत्यर्थः ॥ ४० ॥

उद्दामदान[१]द्विपवृन्दबृंहितैर्नितान्तमुत्तुङ्गतुरङ्गहेषितैः ।
[२]चलद्घनस्यन्दननेमिनिःस्वनैरभून्निरुच्छ्वासमिवाकुलं[३] जगत्[४] ॥४१॥

सी०—उद्दामेति । उद्दामदाना उत्कटमदा ये द्विपा गजास्तेषां वृन्दस्य समूहस्य बृंहितैः शब्दैः । तथोत्तुङ्गा उन्नता ये तुरङ्गा अश्वास्तेषां हेषितैर्हेषाभिः । तथा नितान्तमत्यन्तं चलन्तो घना इव स्यन्दना रथास्तेषां या नेमयश्चक्रधारास्तासां निःस्वनैश्च नितरामाकुलं व्याकुलं जगन्निरुच्छ्वासमिव निरुद्धश्वासमिवाभूत् । आकुलत्वसाधारणधर्मेण निरुद्धश्वासत्वमुत्प्रेक्षत इत्युत्प्रेक्षालङ्कारः ॥ ४१ ॥

शि०—उद्दामेति । जगत् भुवनम् उद्दामदानद्विपबृंहितैः उत्कटमदकरिवर्ग-शब्दैः तथा उत्तुङ्गतुरङ्गहेषितैः उन्नताश्वह्रेषणैः । तथा नितरामतिशयं चलद्घन-स्यन्दननेमिनिस्वनैः गच्छदभ्ररथप्रधिशब्दैः ( करणैः ) आकुलं व्यग्रं सत् निरु-च्छ्वासं निरुद्धश्वासमिव अभूत् जातम् । यथा कश्चिदन्यः श्रोत्रकटुशब्दैराकुलः सन् निरुद्धश्वासो भवति तथा गजादिकटुशब्दैराकुलं जगत् निरुद्धश्वासमभूदित्यर्थः । आकुलत्वसामान्यधर्मेण जगति निरुद्धश्वासत्वोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ ४१ ॥

महागजानां गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै[५]रणोल्बणैः ।
[६]वीरप्रणादैः प्रमदप्रमेदुरैर्वाचालतामादधिरेतरां दिशः ॥ ४२ ॥

सी०—महागजानामिति । महागजानां सम्बन्धिभिर्गुरुभिर्दीर्घैर्गर्जितै रणोल्बणैर्विलोला या घण्टास्तासां रणितैश्च प्रमदेनोन्मादेन निमित्तेन प्रमेदुरैः प्रकर्षेण पुष्टैर्वीरप्रणादैर्वीराणां शब्दैश्च दिशः काष्ठाः कर्त्र्यः । वाचालतां मुखरतामादधिरेतरामतिशयेन धृतवत्यः । तरपि 'किमेत्तिङ्–' इत्याम् ॥ ४२ ॥

---

१. द्विपबृंहितैः २. चलध्वज, ३. अथ, ४. नभः,
५. रणोज्ज्वलैः, ६. वीरप्रभेदैः

शि०—महागजेति। दिश आशाः (कर्त्र्यः) महागजानां करिश्रेष्ठानां गुरुभिर्महद्भिः गर्जितैर्बृंहितैः। तथा रणोल्वणैः संग्रामोचितैर्विलोलघण्टारणितैश्चपलघण्टाशब्दैः। तथा प्रमदप्रमेदुरैः संमदपुष्टैः वीरप्रणादैः वीरशब्दैः वाचालतां मुखरतामादधिरे दधुः। करिघण्टा-वीरशब्दैर्दिशो व्याप्ता बभूवुरित्यर्थः ॥४२॥

दन्तीन्द्र[1]दानद्रववारिवीचिभिः सद्योऽपि नद्यो [2]बहुधा पुपूरिरे।
[3]धारा रजोभिस्तुरगैः क्षतैर्भृता याः पङ्कतामेत्य रथैः स्थलीकृताः॥

सी०—दन्तीन्द्रेति। दन्तीन्द्राणां गजेन्द्राणां ये दानद्रवाः मदस्रुतयस्तेषां वारिणी जलानि तेषां वीचीभिस्तरङ्गैः कर्तृभिः। नद्यो वाहिन्योऽपि सद्यो बहुधा पुपूरिरे पूरिताः। कर्मणि लिट्। ग्रीष्मसन्तापेन शुष्का अपि नद्यो जलपूर्णा आसन्नित्यर्थः। अथ या नद्यस्तुरगैः क्षतैः क्षुण्णै रजोभिर्भृताः पूर्णा अत एव पङ्कतां कर्दमतामेत्य स्थिताः। ता रथैः कर्तृभिः। धाराश्चक्रधारा भ्रामयित्वा स्थलीकृताः॥ ४३ ॥

शि०—दन्तीन्द्रेति। दन्तीन्द्रदानद्रववारिवीचिभिः करिवरमदस्रुतिजलतरङ्गैः (कर्तृभिः) नद्यः सरितोऽपि सद्यः शीघ्रं पुपूरिरे पूरिताः। अथ या नद्यः तुरगैरश्वैः क्षतैरुत्खनितै रजोभिः भृताः पूर्णा अत एव पङ्कतां कर्दमतामेत्य प्राप्य, विद्यमाना इति शेषः। ता नद्यः धाराश्चक्रधाराः, परिभ्राम्येति शेषः। स्थलीकृता आरोपितस्थलत्वविशिष्टाः सम्पादिताः॥ ४३ ॥

[4]निम्नाः प्रदेशाः स्थलतामुपागमन्निम्नत्वमुच्चैरपि [5]सर्वतश्च ते।
तुरङ्गमाणां व्रजतां खुरैः [6]क्षता रथैर्गजेन्द्रैः परितः [7]समीकृताः।४४।

सी०—निम्ना इति। निम्ना नीचाः प्रदेशा भूमयः स्थलता समानभूमित्वमुपागमन्प्रापुः। सर्वत उच्चैरप्युन्नता अपि ते प्रदेशा निम्नत्वमुपागमन्। निम्नमुच्चैरभवत्, अन्यप्रदेशोत्थापितधूलिपूरितत्वात्। उच्चैर्निम्नमभवत्, आत्मधूलिनामन्यत्र पतितत्वादिति भावः। अथ च ते प्रदेशा व्रजतां गच्छतां तुरङ्गमाणां खुरैः क्षताश्चुक्षुदिरे। अत एव रथैर्गजेन्द्रैश्च परितो निम्नोन्नतेषु समीकृताः। समाश्चक्रिर इत्यर्थः॥ ४४ ॥

शि०—निम्ना इति। निम्ना नीचाः प्रदेशाः स्थलतां समानभूमित्वमुपागमन् प्राप्नुवन्। सर्वत उच्चैरुन्नता अपि ते प्रदेशाः निम्नत्वं नीचत्वमुपागमन् प्राप्नुवन्।

---

१. दानाम्बुधि, दानद्रुत, २. बहु ताः, ३. धरारजोभिस्तुरमक्षतैर्भृतं वाः पङ्कतामेत्य रजस्वलीकृतम्, धारारजोभिस्तुरगैः क्षितिभृता या पङ्कतामेत्य रथैः स्थलीकृता, ४. निम्नप्रदेशः, ५. सर्वतः स्थलम्, सर्वतः स्थलाः, ६. क्षिती, ७. समीकृता,

प्रदेशान्तरोत्थरेणुबाहुल्येन निम्नप्रदेशोऽप्युन्नतो जातः। स्वरेणूनां प्रदेशान्तर उत्पतनादप्युन्नतप्रदेशो निम्नो जात इति भावः। अथच ते प्रदेशा व्रजतां चलतां तुरङ्गमाणामश्वानां खुरैः शफैः क्षता संपिष्टा बभूवुरिति क्रियाशेषः। रथैः स्यन्दनैः गजेन्द्रैर्हस्तिमुख्यैः परितः सर्वतः समीकृताः समाश्चक्रिरे ॥ ४४ ॥

**नभोदिगन्तप्रतिघोषभीषणैर्महामहीभृत्तटदारणोल्वणैः।**
**[1]पयोधिनिर्धूननकेलिभिर्जगद् बभूव भेरीध्वनितैः[2] समाकुलम् ॥४५॥**

सी०—नभ इति। नभसि व्योम्नि दिगन्तेषु च यः प्रतिघोषः प्रतिध्वनिस्तेन भीषणैर्भयानकैः। महान्ति यानि महीभृतां तटानि भृगवस्तेषां दारणे भेदन उल्वणैरुद्भटैः। समर्थैरिति यावत्। तथा पयोधेः समुद्रस्य निर्धूनने कम्पने केलिः क्रीडा येषाम्। पयोधिमपि कम्पयद्भिरित्यर्थः। भेरीध्वनितैर्वादनैकवाद्यमानवाद्यविशेषरवैर्निमित्तैर्जगत् समाकुलं व्याकुलं बभूव ॥ ४५ ॥

शि०—नभ इति। जगत् भुवनं ( कर्तृ ) नभोदिगन्तप्रतिघोषभीषणैः व्योमककुबन्तप्रतिध्वनिभयङ्करैः महामहीभृत्तटदारणोल्वणैः बृहद्गिरिभृगुभेदनक्षमैः पयोधिनिर्धूननकेलिभिः समुद्रकम्पनक्रीडैः भेरीध्वनितैर्दुन्दुभिशब्दैः ( हेतुभिः ) समाकुलं व्यग्रं बभूव जातम् ॥ ४५ ॥

**इतस्ततो वातविधूत[3]चञ्चलैर्नीरन्ध्रिताशागमनैर्ध्वजांशुकैः[4]।**
**[5]लक्षैः क्वणत्काञ्चनकिङ्किणीकुलैरमज्जि धूलीजलधौ नभोगते[6] ॥४६॥**

सी०—इत इति। इतस्ततो वातविधूतानि पवनकम्पितान्यत एव चञ्चलानि च तैः। तथा नीरन्ध्रितं निरवकाशीकृतमाशासु दिक्षु गमनं यैः। आत्मव्याप्त्या रुद्धपथिकपथैरित्यर्थः। क्वणद्रणत्काञ्चनाकिङ्किणीनां सौवर्णनूपुराणां कुलं जालं येषां प्रान्तभागेषु। शोभार्थं प्रतिबद्धनूपुरजालैरित्यर्थः। लक्षैर्लक्षसंख्यैः। लक्षं शरव्ये संख्यायाम्' इति मेदिनी। ध्वजांशुकैर्ध्वजपटैः। 'अंशुकं शुक्लवस्त्रे स्याद्वस्त्रमात्रोत्तरीययोः' इति मेदिनी। नभसि गते प्रसृते धूलिजलधौ रजोम्बुधावमज्जि मज्जितम्। भावे लुङ्। सर्वाणि ध्वजांशुकानि धूलिभिरलक्षितानि बभूवुरित्यर्थः ॥ ४६ ॥

शि०—इत इति। इतस्ततः सर्वत्र वातविधूतचञ्चलैः वायुकम्पितचपलैः तथा नीरन्ध्रिताशागमनैः अवरुद्धदिग्गतिभिः तथा क्वणत्काञ्चनकिङ्किणीकुलैः रणद्धेम-

---

१. पयोविनिर्धूननकेलिभिः, पयोविनिर्धूतककेलिभिः, २. स्वनितैः,
३. विधूति, ४. आरोधिताशा, ५. लघु क्वणत्, चलत्क्वणत्,
६. नभोगतैः,

नूपुरजालैः लक्षैर्लक्षसंख्यकैर्ध्वजांशुकैर्ध्वजवस्त्रैः ( कर्तृभिः ) नभसि व्योम्नि गते व्याप्ते धूलीजलधौ रेणूदधौ अमज्जि मज्जितम् । रजोबाहुल्याद् ध्वजांशुकावरणं बभूवेत्यर्थः ॥ ४६ ॥

**घण्टारवै रौद्रतरैर्निरन्तरं[1] विसृत्वरैर्गर्जरवैः सुभैरवैः ।**
**[2]मत्तद्विपानां प्रथयाम्बभूविरे न वाहिनीनां पटहस्य निःस्वनाः ॥ ४७ ॥**

सी०— घण्टारवैरिति । मत्तद्विपानां सम्बन्धिभिर्निरन्तरं विसृत्वरैः प्रसृमरैः । सुतरां भैरवैर्भीषणैः । 'भैरवः पुंसि शम्बरे । भीषणेऽपि च' इति मेदिनी । गर्जरवैर्गर्जनारूपघोषैः । रौद्रतरैरत्युग्रैः । 'रौद्रं तूग्रममी त्रिषु' इत्यमरः । घण्टारवैश्च । वाहिनीनां सेनानां सम्बन्धिनः पटहस्यानकाख्यवाद्यविशेषस्य निःस्वनाः शब्दा न प्रथयांबभूविरे न प्रकटीचक्रिरे ॥ ४७ ॥

शि०—घण्टारवैरिति । मत्तद्विपानाम् उन्मत्तकरिणां सम्बन्धिभिः निरन्तरं विसृत्वरैः प्रसृतैः तथा सुभैरवैरतिभयानकैः गर्जरवैर्गर्जनात्मशब्दैः, रौद्रतरैरत्युग्रैर्घण्टारवैर्घण्टाशब्दैश्च ( हेतुभिः ) वाहिनीनां सेनानां पटहस्य वाद्यविशेषस्य निःस्वना शब्दाः न प्रथयाम्बभूविरे न ख्याताबभूवुः ॥ ४७ ॥

**करालवाचाल[3]मुखाश्चमू[4]स्वनै[5]र्ध्वस्ताम्बरा वीक्ष्य दिशो रजस्वलाः ।**
**तिरोबभूवे [6]गहनैर्दिनेश्वरो रजोन्धकारैः परितः कुतोऽप्यसौ ॥ ४८ ॥**

सी०—करालेति । चमूस्वनैः सेनाघोषैः करालानि वाचालानि च मुखानि प्रारम्भाः । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति मेदिनी । तथा ध्वस्तं रजोव्याप्तमम्बरं यासाम् । तथा रजस्वला रजोयुक्ता दिशो वीक्ष्य परितो गहनैः सघनैः रजोन्धकारैः । कर्तृभिः । असौ दिनेश्वरः सूर्यः कुतोऽपि कुत्रापि तिरोबभूवे तिरोगमितः । अन्तर्हित इत्यर्थः । 'भूङ् प्राप्तौ' इत्यतो लिट् । 'भू प्राप्तौ' इत्यतो वा । वीक्ष्येवेति गम्योत्प्रेक्षा । अथ द्वितीयपक्षे—रजस्वला आर्तववतीः । अत एव करालां भीषणां वाचां वाणीमलान्त्यगृह्णन्ति मुखानि यासाम् । ततो विशेषणसमासः । मौनव्रतधारिणीत्यर्थः । तथा ध्वस्ताम्बराः स्रस्तशाटिकाः । नग्ना इत्यर्थः । एवं भूता चमूर्योषितः । 'चमूः सेनाविशेषे च सेनामात्रे च योषिति' इति मेदिनी । वीक्ष्य रजस्यार्तवविषयेऽन्धकारोऽन्धवत्कारः कृतिः । क्रिया इति यावत् । भावे घञ् । आर्तवमपत्रपद्भिरित्यर्थः, रजस्वलादर्शननिषेधात् । गहनैर्गहनमनोभिः सद्भिरित्यर्थः । दिनेश्वरः कश्चित्पुरुषः कुतोऽपि

---

१. निरन्तरैः, २. मदद्विपानाम्, ३. मुखैः, रवैः,
४. चमूरवैः, ५. स्रस्ताम्बराः, स्रस्तां धराम्, ६. गगने, गह्वरे,

कुत्रापि तिरोभूयते, कश्चिदसत्पुरुषो रजस्वलां पश्यन्नपि सद्भिः करुणया पटादिभिस्तिरोधीयते तद्वदित्यर्थः ॥ ४८ ॥

शि० – करालेति। चमूस्वनैः सैन्यघोषैः करालवाचालमुखाः करालानि वाचालानि मुखानि यासां तास्तथोक्ताः भीषणमुखरितप्रारम्भाः तथा ध्वस्ताम्बराः रजोव्याप्ताकाशाः तथा रजस्वला रजोयुक्ता दिशः ककुभो वीक्ष्य दृष्ट्वा परितः सर्वतः गहनैः सान्द्रैः रजोऽन्धकारैः धूलिरूपतमोभिः ( कर्तृभिः ) असौ दिनेश्वरः सूर्यः कुतोऽपि कुत्रापि तिरोबभूवेऽन्तर्हितः। ( पक्षान्तरे ) रजस्वला ऋतुमतीः अत एव करालवाचालमुखा भीषणवचनाग्रहिताननना मौनव्रतावलम्बिनीरित्यर्थः। तथा ध्वस्ताम्बरा विगतवसनाश्चमूर्योपितो वीक्ष्य विलोक्य रजोऽन्धकारैरार्तवान्धकृतिभिः गहनैर्गहनमनोभिः दिनेश्वरोऽसौ कश्चित्पुमान् कुतोऽपि कुत्रापि तिरोबभूवेऽन्तर्हितः ॥ ४८ ॥

**आक्रान्तपूर्वा रभसेन सैनिकैर्दिगङ्गना व्योम रजोभिदूषिता।**
**भेरीरवाणां प्रतिशब्दितैर्घनैर्जगर्ज गाढं [1]घनमत्सरादिव ॥ ४९ ॥**

सी० — आक्रान्तपूर्वेति। सैनिकैः सेनाजनैः रभसेन वेगेनाक्रान्तपूर्वा पूर्वमाक्रान्ता दिगङ्गना दिग्रूपा नायिका रजसा धूल्या, आर्तवेन च। 'रजो रेणौ परागे स्यादार्तवे च गुणान्तरे' इति मेदिनी। अभिदूषिता कृता, वीक्ष्येति शेषः। अतो घनमत्सरादिव गाढद्वेषादिव व्योम कर्तृ भेरीरवाणां घनैः प्रतिशब्दितैः कृत्वा गाढं जगर्ज। अन्योऽप्यात्मपत्नीमन्यसङ्गमेन रजोयुक्तां वीक्ष्य गर्जति ॥ ४९ ॥

शि० — आक्रान्तेति। सैनिकैः सेनास्थलोकैः रभसेन जवेनाऽऽक्रान्तपूर्वाः पूर्वमाक्रान्ता दिगङ्गना आशारूपा नायिका रजोऽभिदूषितां रेणुमलिनां ( व्याप्तां ), वीक्ष्येति शेषः। नभः ( कर्तृ ) घनमत्सरात् अधिकवैरादिव भेरीरवाणां दुन्दुभिशब्दानां घनैः सान्द्रैः प्रतिशब्दैः ( करणैः ) गाढं दृढं यथा तथा जगर्ज ननाद। यथाऽन्यपुरुषभुक्तामात्मस्त्रियं ऋतुमतीमभिवीक्ष्य गर्जत्यन्यस्तथा नभोऽपीत्यर्थः। अत्रोत्प्रेक्षासमासोक्त्योरङ्गाऽङ्गिभावेन सङ्करः ॥ ४९ ॥

**गुरुसमीरसमीरितभूधरा इव गजा गगनं विजगाहिरे।**
**गुरुतरा [4]इव वारिधरा रथा भुवमितीह[2] विवर्त[5] इवाभवत्[3] ॥ ५० ॥**

सी० — गुरुसमीरेति। गुरुणा महता समीरेण वातेन समीरिता उपरिक्षिप्ता भूधराः पर्वता इवेत्युत्प्रेक्षा। गजा गगनं विजगाहिरे। अवगाहितवन्त इत्यर्थः। गुरुतरा अपि महान्तो वारिधरा मेघा इवेत्युत्प्रेक्षा।

---

१. गुरुमत्सरादिव, २. बहुवारिभराद्घनाः, ३. अतीव,
४ नमन्तः, ५. अभवन्,

रथा भुवं विजगाहिरे। इह सङ्गर इत्येवं विवर्त इव व्यत्यय इवाभवत्। गगनपृथिव्यवगाहने स्यन्दननागयोर्भूधरसम्भवात्। उत्प्रेक्षितं च तरसा-दृश्यदर्शनात्। द्रुतविलम्बितं वृत्तम् ॥ ५० ॥

शि०—गुर्विति। गजाः करिणः (कर्तारः) गुरुसमीरसमीरितभूधराः प्रबल-वायुविधूतगिरय इव गगनं नभो विजगाहिरे। रथाः स्यन्दनाः (कर्तारः) गुरुतरा महान्तो वारिधरा जलदा इव भुवं पृथिवीं विजगाहिरे। इह सङ्ग्रामे विवर्त इव व्यत्यय इव (विपरीत इव) अभवत्। गजरथयोर्भूधरवारिधरसादृश्योत्प्रेक्षणात् गजानां गुरुत्वादाकाशविगाहनस्य रथानामल्पगुरुत्वेन सत्यप्याकाशविगाहनसम्भवे भूतलविगाहनस्य चैत्युभयस्य विवर्त्तसादृश्योत्प्रेक्षणाच्चोत्प्रेक्षात्रयम् ॥ ५० ॥

[1]बलवदसुरलोकानल्प[2]कल्पान्तकाले
निरवधय इवाम्भोराशयो घोरघोषाः[3]।
गुरुतरपरिमज्जद्भूभृतो देवसेना
[4]ववृधुरपि [5]सुपूर्णा व्योमभूम्यन्तराले ॥ ५१ ॥

सी०—बलवदिति। गुरुतरा अत एव परिमज्जन्तो भूभृतो राजानः पर्वताश्च यासु येषु च। व्योमभूम्योर्द्यावापृथिव्योन्तराले मध्ये सुतरां पूर्णा अपि। इत्युभयत्रापि समानम्। घोरघोषा भयानकरवा देवसेना ववृधुः। तत्रोत्प्रेक्षते—बलवतामसुरलोकानामनल्पो महान्यः कल्पान्त-कालः प्रलयकालस्तत्र निरवधयोऽपारा अम्भोराशय इव समुद्रा इव। अत्रोपमैव अस्त्विति चेत्, न। तत्राभिन्नलिङ्गमुभयोरिति नियमात्। मालिनी छन्दः। लक्षणं पूर्वमुक्तम् ॥ ५१ ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसम्भवश्रीसीता-रामकविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये देवसेनाप्रयाणं नाम चतुर्दशः सर्गः ॥

शि०—बलवदिति। गुरुतरपरिमज्जद्भूभृतः महन्निमग्नगिरिक्षितीशाः तथा व्योमभूम्यन्तराले आकाशक्षितिमध्यदेशे सुपूर्णाः सुतरां व्याप्ता अपि घोरघोषा भीषणशब्दाः देवसेनाः सुरचम्वः बलवदसुरलोकानल्पकल्पान्तकाले प्रबलदनुजवर्गा-धिकप्रलयक्षणे निरवधयो निर्मर्यादा अम्भोराशयो जलधय इव ववृधुः वृद्धिं गताः। देवसेनास्वम्भोराशित्वोत्प्रेक्षणाद् उत्प्रेक्षाऽलङ्कारः ॥ ५१ ॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितशिशुहितैषिणी समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये देवसेनाप्रयाणं नाम चतुर्दशः सर्गः ॥ १४ ॥

---

१. वरतरसुर, २. संहारकाले, ३. घोरघोरः, ४. ववृधुः
५. सुपूर्णव्योमभूम्यन्तरालाः, समाना व्योम्नि भूम्यन्तराले,

# पञ्चदशः सर्गः

सेनापतिं नन्दनमन्धकद्विषो [1]युधे पुरस्कृत्य बलस्य शात्रवः।
सैन्यैरुपैतीति सुरद्विषां पुरोऽभूत्किंवदन्ती [2]हृदयप्रकम्पिनी ॥ १ ॥

सी०—सेनापतिमिति। बलस्य बलनामकराक्षसस्य शात्रवः शत्रुरेव शात्रवः। प्रज्ञादित्वात्स्वार्थेऽण्। इन्द्रः। सेनापतिं पृतनाधिपम्। अन्धकद्विषो हरस्य नन्दनं पुत्रं कार्तिकेयं पुरस्कृत्याग्रे कृत्वा सैन्यैः सह युधे युद्धाय। युद्धं कर्तुमिति यावत्। 'क्रियार्थं—' इत्यादिना चतुर्थी। उपैत्यायाति। इत्येवंभूता हृदयप्रकम्पिनी हृदयं वेपयन्ती किंवदन्ती जनश्रुतिः। 'किंवदन्ती जनश्रुतिः' इत्यमरः। सुरद्विषां दैत्यानां तारकनगरनिवासिनां पुरोऽग्रेऽभूत्। सर्गेऽस्मिन्निन्द्रवंशोपजाती वृत्ते ॥ १ ॥

शि०—सेनापतिमिति। बलस्य तदाख्यराक्षसस्य शात्रवो रिपुः (शात्रवशब्दः स्वार्थिकाणन्तः) शक्रः सेनापतिं चमूनायकम् अन्धकद्विषः शिवस्य नन्दनं सुतं कार्त्तिकेयं पुरस्कृत्य अग्रेकृत्वा अग्रगामिनं कृत्वेत्यर्थः युधे युद्धाय युद्धं कर्तुमित्यर्थः। सैन्यैः पृतनासमुदायैः सहोपैत्यागच्छति इत्येवं भूता हृदयप्रकम्पिनी मनोवेपयन्ती किम्वदन्ती जनश्रुतिः सुरद्विषामसुराणां पुरोऽग्रेऽभूज्जाता। शिवपुत्रपुरोगः शक्रः सैन्यैः सह युद्धायागच्छतीति जनरवोऽसुराणां पुरोऽभूदित्यर्थः ॥ १ ॥

[3]चमूप्रभुं मन्मथमर्दनात्मजं [4]विजित्वरीभिर्विजयश्रियाश्रितम्।
श्रुत्वा सुराणां पृतनाभिरा[5]गतं चित्ते[6] चिरं चुक्षुभिरे महासुराः ॥

सी०—चमूप्रभुमिति। महासुरास्तारकनगरनिवासिनो दैत्या विजयश्रिया विजयलक्ष्म्या श्रितं सेवितम्। एतेनास्य कादाचित्कोऽपि पराभवो न भवतीति ध्वनितम्। अत एव चमूप्रभुं सेनाधिपं मन्मथमर्दनस्य शिवस्यात्मजम्। अनेन यदीयः पिता सकलभुवनजेतुमकरध्वजस्यापि प्लोषिता, अतोऽस्य किं वक्तव्यम्। 'कार्यं निदानाद्धि गुणानधीते', 'प्रवर्तितो दीप इव प्रदीपात्' इत्यादिन्यायेन तारकेणाप्ययं दुर्जेय इति ध्वनितम्। तं कार्तिकेयं विजित्वरीभिर्जयशीलाभिः। जयतेः 'इणनशजिसर्तिभ्यः क्वरप्' इति क्वरपि परे 'ह्रस्वस्य पिति' इति तुकि कृते 'टिड्ढा—' इत्यनेन ङीप्। सुराणां देवानां पृतनाभिः सेनाभिः सहागतमायातं श्रुत्वा चिरं बहुकाल-

---

१. युद्धे, २. हृदयस्य कम्पिनी, ३. चमूपतिम्, ४. विजित्वराभिः,
५. आवृतम्, आगमम्, ६. स्वान्ते,

पर्यन्तं चित्ते मनसि चुक्षुभिरे संचेलुः। बिभ्युरित्यर्थः। 'क्षुभ संचलने' कर्तरि लिट्। अत्र वाच्यापेक्षया व्यङ्ग्यार्थस्य अधिकचमत्कृतिजनकत्वाद् ध्वनिः॥ २॥

शि०—चमूप्रभुमिति। महासुरास्तारकनगरवास्तव्या असुराः विजयश्रिया विजयलक्ष्म्या श्रितं सेवितं युक्तमिति यावत्। अत एव चमूप्रभुं सेनानायकं मन्मथमर्दनात्मजं शिवपुत्रं कार्त्तिकेयं त्रिजित्वरीभिर्विजयशीलाभिः देवानां पृतनाभिः सेनाभिः सहागतं प्राप्तं श्रुत्वाऽऽकर्ण्य चित्ते हृदये चिरं चिरकालं चुक्षुभिरे क्षोभं प्रापुरित्यर्थः॥ २॥

**समेत्य दैत्याधिपतेः [1]पुरे स्थिताः किरीटबद्धाञ्जलयः प्रणम्य ते।**
**न्यवेदयन्मन्मथ[2]शत्रुसूनुना युयुत्सुना [3]जम्भजितं [4]सहागतम्॥ ३॥**

सी०—समेत्येति। दैत्याधिपतेस्तारकस्य पुरे नगरे स्थितास्ते महामहासुराः समेत्य समुदित्य। संघीभूयेति यावत्। तथा किरीटेषु मुकुटेषु बद्धोऽञ्जलिर्यैस्तथा सन्तः प्रणम्य युयुत्सुना योद्धुमिच्छुना मन्मथशत्रोः शिवस्य सूनुना पुत्रेण कुमारेण सहागतं जम्भजितमिन्द्रं न्यवेदयन्। सशंभुपुत्रो महेन्द्र आगत इति निवेदितवन्त इत्यर्थः॥ ३॥

शि०—समेत्येति। दैत्याधिपतेस्तारकासुरस्य पुरे नगरे स्थिता विद्यमानास्ते महासुराः समेत्य एकत्रीभूय किरीटबद्धाञ्जलयः मुकुटार्पितकराः सन्तः प्रणम्याभिवाद्य, युयुत्सुना योद्धुमिच्छुना मन्मथशत्रुसूनुना हरपुत्रेण कार्त्तिकेयेन सहाऽऽगतं प्राप्तं जम्भजितं शक्रं न्यवेदयन् व्यज्ञापयन्॥ ३॥

**दासीकृताशेषजगत्त्रयं [5]न मां जिगाय युद्धे कतिशः शचीपतिः।**
**गिरीशपुत्रस्य बलेन सांप्रतं ध्रुवं [6]विजेतेति [7]स काकुतोऽहसत्॥४॥**

सी०—दासीकृतेति। दासीकृतं भृत्यीकृतम्। 'दासो भृत्ये च शूद्रे च' इति मेदिनी। अशेषजगत्त्रयम् समस्तलोकत्रितयं येन तथाभूतं मां शचीपतिरिन्द्रः कतिशः कतिवारं युद्धे न जिगाय जयति स्म। अपि त्वनेकवारं जिगायेति काकुः। जयनिषेधस्य काक्वाश्रितत्वाज्जयनिषेध एव ध्वन्यते। सांप्रतं वर्तमानकाले गिरीशपुत्रस्य कुमारस्य बलेन वीर्येण तदाश्रयेणेत्यर्थः। ध्रुवं निश्चयेन विजेता विजेष्येत इति स तारकः काकुतः काक्वाहसज्जहास। कदाचिदपि न विजेष्यत इति ध्वन्यते॥ ४॥

शि०—दासीकृतेति। शचीपतिः शक्रः युद्धे सङ्ग्रामे दासीकृताशेषजगत्त्रयं वशीकृतनिखिललोकत्रितयं मां कतिशः कतिवारं न जिगाय, किन्तु बहुवारं जिगा-

---

1. पुरः 2. दूनसूनुना, शत्रुसूनुम्, 3. जम्भजिता 4. समागतम्,
5. तु, नु, 6. इव, एव, 7. सकाकु सोऽहसत्,

येति काक्वर्थः। साम्प्रतमिदानीं गिरीशपुत्रस्य शिवतनुजस्य कार्त्तिकेयस्य बलेन सामर्थ्येन ध्रुवं निश्चयेन विजेता विजेष्यते इति स तारकः काकुता काक्वाऽहसत् हसितवान्। स इन्द्रो मां कदाचिदपि न विजेष्यते इति भावः॥ ४॥

ततः क्रुधा विस्फुरिता[1]धराधरः स तारको दर्पितदोर्बलोद्धतान्[2]।
युधे [3]त्रिलोकीजयकेलिलालसः सेनापतीन् संनहनार्थमादिशत्॥ ५॥

सी०—तत इति। ततोऽनन्तरं क्रुधा क्रोधेन निमित्तेन विस्फुरित उच्छ्वसितोऽधरोऽनूर्ध्वं ओष्ठो यस्य। प्रसिद्धं चैतद्यत्क्रोधवशादधरविस्फुरणम्। तथाऽधरो हीनः। नीच इति यावत्। 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वं च वाच्यवत्' इति मेदिनी। विस्फुरिताधरश्चासावधरश्चेति विशेषणसमासः। तथा त्रिलोक्या जय एव केलिः क्रीडा, तस्यां। लालसेच्छा यस्य। अनायासेनैव त्रिलोकीं जेष्यामीत्यभिमानवानित्यर्थः। एवंभूतः स तारकोऽसुरो दर्पिताः संजातदर्पास्तथा दोर्बलेन भुजबलेनोद्धतान् प्रगल्भान्सेनापतीन् सेनाधिपान्युधे युद्धाय। युद्धं कर्तुमित्यर्थः। संनहनार्थं संनद्धीभवनार्थमादिशदाजज्ञे। 'युद्धे' इति पाठे युद्धे विषये त्रिलोकीजयकेलि विलास इत्यन्वयितव्यम्॥ ५॥

शि०—तत इति। ततस्तदनन्तरं तारककर्तृकहास्योत्तरमित्यर्थः। क्रुधा कोपेन विस्फुरिताधराधरः समुच्छ्वसिताऽनूर्ध्वोष्ठहीनः तथा त्रिलोकीविजयकेलिलालसः भुवनत्रयजयक्रीडाऽभिलाषुकः स तारकः महासुरः दर्पितदोर्बलोद्धतान् सगर्वभुजवीर्योदग्रान् सेनापतीन् सैन्यनायकान् युधे युद्धाय युद्धं कर्तुमित्यर्थः। संनहनार्थं सज्जीभवनार्थमादिशत् आज्ञापयामास॥ ५॥

महाचमूनामधिपाः समन्ततः संनह्य सद्यः सुतरामुदायुधाः।
तस्थुर्विनम्रक्षितिपालसंकुले [4]तदङ्गनद्वारवरप्रकोष्ठके॥ ६॥

सी०—महेति। उदायुधा उद्धृतान्यायुधानि शस्त्राणि यैरेवंभूता महाचमूनां महतीनां सेनानामधिपाः स्वामिनः सद्यस्त्वरितं सुतरां संनह्य संनद्धा भूत्वा विनम्रा ये क्षितिपाला राजानस्तैः संकुले व्याप्ते तस्य तारकस्य यदङ्गनद्वारं चत्वरप्रवेशद्वारं तस्य वरः श्रेष्ठो यः प्रकोष्ठोऽन्तम्। मध्यमिति यावत्। 'प्रकोष्ठो मणिबन्धे स्यात्कूर्परस्यान्तरेऽपि च' इति मेदिनी। तत्र समन्ततः सर्वतस्तस्थुः। नृपं प्रतीक्षमाणा इति शेषः। 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः॥ ६॥

---

१. अधरच्छरः, २. बलात् निजान्, ३. युद्ध, ४. तदङ्गणद्वारि बहिःप्रकोष्ठके, तदङ्गणद्वारबहिःप्रकोष्ठके.

शि०—महेति। उदायुधाः उत्थितशस्त्राः महाचमूनां बृहत्सैन्यानामधिपा अधीश्वराः सद्यः शीघ्रं सुतरामतिशयेन संनह्य सज्जीभूय विनम्रक्षितिपालसंकुले विनतभूपव्याप्ते तदङ्गनद्वारवरप्रकोष्ठके तारकचत्वरप्रवेशद्वारोत्तममध्ये समन्ततः सर्वतः तस्थु स्थितवन्तः ॥ ६ ॥

स द्वारपालेन पुरः प्रदर्शितान्कृताननतीन्बाहुवरान[1]धिष्ठितान् ।
महाहवाम्भोधिविघूननोद्धतान्ददर्श[2] [3]राजा [4]पृतनाधिपान्बहून्[5] ॥७॥

सी०—स इति। स राजा तारकः पुरोऽग्रे द्वारपालेन प्रदर्शितान्कृतानतीन् बाहुवरान्बाहवो वराः श्रेष्ठा येषां तथोक्तानधिष्ठितान्। द्वार इति शेषः। महाहवरूपिणोऽम्भोधेः समुद्रस्य विधूनने कम्पन उद्धतान्प्रगल्भान्। महावीरानित्यर्थः। 'सङ्ग्रामाभ्यागमाहवाः' इत्यमरः। बहून् पृतनाधिपान् सेनापतीन्ददर्श दृष्टवान्। 'अदभ्रं बहुलं बहु' इत्यमरः ॥ ७ ॥

शि०—स इति। स राजा स्वामी, सुरद्विषमिति शेषः। तारकः पुरोऽग्रे द्वारपालेन द्वाःस्थेन दौवारिकेणेति यावत्। प्रदर्शितान् कारितावलोकनान् कृताऽऽनतीन् कृतप्रणामान् बाहुवरान् श्रेष्ठभुजान् अधिष्ठितान् विद्यमानान् द्वारीति शेषः। महाहवाम्भोधिविघूननोद्धतान महासङ्ग्रामार्णवकम्पनप्रगल्भान् बहून् प्रभूतान् पृतनाधिपान् सेनानायकान् ददर्श दृष्टवान् ॥ ७ ॥

बली[6] बलारातिबलातिशातनं दिग्दन्तिनादद्रवनाशनस्वनम्[7] ।
महीधराम्भोधिन[8]वारितक्रमं ययौ रथं घोरमथाधिरुह्य सः ॥ ८ ॥

सी०—बलीति। अथानन्तरं बली वीर्यवान्स तारको बलारातेरिन्द्रस्य सम्बन्धिनो बलस्य सैन्यस्य। 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः' इति मेदिनी। अतिशातनं तनूकर्तारम्। हन्तारमित्यर्थः। दिग्दन्तिनामैरावतादीनां नादद्रवयोर्घोषमदयोर्नाशिनो नाशकः स्वनो घोषो यस्य तम्। यदीयघोषवशाद्दिग्दन्तिनोऽपि तूष्णीं शुष्कमदाश्च भवन्तीति भावः। महीधरेषु पर्वतेष्वम्भोधिषु च नवारितसंचारम्। न शब्देन सह 'सुप्सुपा' इति समासः। घोरं भीमं रथमधिरुह्य ययौ जगाम। प्रतस्थ इति यावत् ॥ ८ ॥

शि०—बलीति। अथानन्तरं सेनापतिदर्शनोत्तरमित्यर्थः। बली बलवान् स तारकः, बलारातिबलातिशातनं सुरेन्द्रसैन्यहन्तारं तथा दिग्दन्तिनादद्रवनाशनस्वनं

---

१. बाहुवरान्, २. ननन्द, ३. दैत्यः, पश्यन्, ४. पृतनायुधान्, ५. निजान्, ६. ततः, ७. दानद्रवनाशनस्वनम्, दानद्रवदाननिःस्वनम्, ८. अम्भोधरनिवारित, अम्भोधिनिवारितः,

दिग्गजशब्दमदापहारकघोषं तथा महीधराम्भोधिनवारितक्रमं शैलार्णवाप्रतिहतगमनं तथा घोरं भयानकं रथं स्यन्दनम् अधिरुह्य आस्थाय ययौ गतवान् ॥ ८ ॥

युगक्षयक्षुब्धपयोधिनिःस्वनाश्चलत्पताकाकुलवारितातपाः ।
धरारजोग्रस्तदिगन्तभास्कराः [1]पतिं प्रयान्तं पृतनास्तमन्वयुः ॥ ९ ॥

सी०—युगेति । युगक्षये प्रलयकाले क्षुब्धः संचलितो यः पयोधिः समुद्रस्तस्य निःस्वना यासाम् । प्रलयकालाद्वेलोभूतसागरसदृशघोरघोषा इत्यर्थः । चलन्तीनां पताकानां वैजयन्तीनाम् । 'पताका वैजयन्त्यां स्यात्सौभाग्ये नाटकाङ्कयोः' इति मेदिनी । कुलेन समूहेन वारितातपा दूरीकृतधर्मा धराया भूमे रजोभिर्ग्रस्ता दिगन्तानि दिक्प्रान्तानि भास्करश्च याभिस्तथाभूताः पृतनाः सेनाः, कर्त्र्यः । प्रयान्तं प्रतिष्ठमानं तं पतिं तारकासुरमन्वयुः अनुजग्मुरित्यर्थः ॥ ९ ॥

शि०—युगक्षयेति । युगक्षयक्षुब्धपयोधिनिस्वनाः प्रलयकालसञ्चलितार्णवाघोषाः तथा चलत्पताकाकुलवारितातपाः कम्प्रध्वजसमूहदूरीकृतघर्माः तथा धरारजोग्रस्तदिगन्तभास्कराः भूरेणुव्याप्तककुप्प्रान्तार्काः पृतनाः सेनाः प्रयान्तं गच्छन्तं पतिं तारकमन्वयुः अनुजग्मुः ॥ ९ ॥

चमूरजः प्राप दिगन्तदन्तिनां महासुरस्याभिसुरं [2]प्रसर्पिणः ।
दन्तप्रकाण्डेषु सितेषु शुभ्रतां कुम्भेषु दानाम्बुघनेषु[3] पङ्कताम् ॥ १० ॥

सी०—चमूरज इति । अभिसुरं सुरसंमुखं प्रसर्पिणः प्रतिष्ठमानस्य महासुरस्य तारकस्य सम्बन्धिनीनां चमूनां रजो रेणुः । दिगन्तदन्तिनामैरावतादीनां सितेषु शुभ्रेषु दन्तप्रकाण्डेषु । दन्तरूपासु शाखास्वित्यर्थः । 'प्रकाण्डो न स्त्री विटपे मूलशाखान्तरे तयोः' इति मेदिनी । शुभ्रतां दानाम्बुना मदजलेन घनेषु सघनेषु कुम्भेषु मूर्धान्तरेषु । गण्डस्थलेष्विति यावत् । 'कुम्भो राश्यन्तरे हस्तिमूर्धान्ते राक्षसान्तरे' इति मेदिनी । पङ्कतां कर्दमताम् । 'पङ्कोऽस्त्री कर्दमे पाप' इति मेदिनी । प्राप । धवलिमाश्रयीभूतसम्बन्धेन युक्तं हि धवलत्वमिति भावः । अन्यत्स्फुटम् ॥

शि०—चमूरज इति । अभिसुरं सुरसम्मुखं सुरमुद्दिश्येति यावत् । प्रसर्पिणो गच्छतो महासुरस्य तारकस्य (सम्बन्धे षष्ठी) चमूरजः सैन्यरेणुः (कर्तृ) दिग्दन्तिनां दिग्गजानामैरावतप्रभृतीनामित्यर्थः । सितेषु शुक्लेषु दन्तप्रकाण्डेषु दन्तरूपशाखासु शुभ्रतां शुक्लत्वं दानाम्बुघनेषु मदजलसान्द्रेषु कुम्भेषु मूर्धतटालेषु करीन्द्रगण्डस्थलेषु पङ्कतां कर्दमत्वं च प्राप । तारकसैन्योत्थरेणुर्दिग्गजदन्तेषु शुक्लतां प्राप तदीय-

---

१ प्रति प्रयातुम्, प्रतिप्रयातम्, २. प्रसर्पतः ३. दानाम्बुधरेषु,

गण्डस्थलेषु पङ्करूपतां च प्रापेत्यर्थः। श्वेतगुणविशिष्टदन्तसम्बन्धेन श्वेततायाः जलसम्बन्धेन पङ्करूपतायाश्चाधिगमो युक्त एवेति भावः ॥ १० ॥

**महीभृतां कन्दरदारणोल्वणैस्तद्वाहिनीनां पटहस्वनैर्घनैः ।**
**[1]उद्वेलिताश्चुक्षुभिरे महार्णवा नभःस्रवन्ती सहसाऽभ्यवर्धत[2] ॥११॥**

सी०—महीभृतामिति। महीभृतां पर्वतानां सम्बन्धिनो ये कन्दरा दर्यः, तेषां दारणे स्फोटन उल्बणैरुद्भटैः। आत्मव्याप्तिवशात्स्फोटद्भि-रिव भासमानैरित्यर्थः। तथा घनैर्दृढैः। कठोरैरिति यावत्। 'वनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्तादौ घनाद्येषु विस्तारे लिहि-मुद्गरे। त्रिषु सान्द्रे दृढे च' इति मेदिनी। तद्वाहिनीनां तारकसेनानां सम्बन्धिनो ये पटहा आनकाः। 'पटहो ना समारम्भ आनके पुंनपुंसकम्' इति मेदिनी। तेषां स्वनैः कर्तृभिः उद्वेलिता वेलामतिक्रमिता महार्णवा महान्तः समुद्राश्चुक्षुभिरे संचेलुः। पटहध्वनिजनितभयादिति भावः। तथा नभःस्रवन्त्याकाशगङ्गा च सहसाऽकस्मादभ्यवर्धत। अतिवेला अभूदित्यर्थः ॥ ११ ॥

शि०—महीभृतामिति। महीभृतां महीं बिभ्रतीति महीभृतस्तेषां पर्वताना-मित्यर्थः। ( सम्बन्धे षष्ठी )। कन्दरदारणोल्वणैः गह्वरस्फोटनक्षमैः तथा घनैर्दृढै-र्घोरैरित्यर्थः। तद्वाहिनीनां तारकसैन्यानां पटहस्वनैरानकघोषैः उद्वेलिताः क्षुब्धा महार्णवाः समुद्राश्चुक्षुभिरे संचेलुः, नभः स्रवन्ती व्योमवाहिनी सुरनदी च सहसा-ऽकस्मात् अभ्यवर्द्धत ववृधे ॥ ११ ॥

**सुरारिनाथस्य महाचमूस्वनैर्विगाह्यमाना तुमुलैः सुरापगा ।**
**अभ्युच्छ्रितै[3]रूर्मिशतैश्च वारिजैरक्षालयन्नाकनिकेतनावलीम्[4] ॥१२॥**

सी०—सुरारिनाथस्येति। तुमुलैः संकुलैः 'तुमुलः कलिवृक्षे ना तुमुलं रणसंकुले' इति मेदिनी। सुरारिरेव नाथो राजा तस्य। यद्वा सुरारीणां नाथो राजा तस्य। सम्बन्धिनां महाचमूनां स्वनैः शब्दैर्विगाह्यमाना व्याप्यमाना सुरापगा मन्दाकिनी। अभ्युच्छ्रितैरभ्युत्पतितैर्वारिजैर्वारि-जानि कमलानि विद्यन्ते येषु तैः। कमलसहितैरित्यर्थः। 'अर्शआदिभ्यः-' इत्यच्। ऊर्मिशतैस्तरङ्गशतकैश्च। 'भङ्गस्तरङ्ग ऊर्मिर्वा' इत्यमरः। नाकनिकेतनावलीं स्वर्गवेश्मपङ्क्तिमक्षालयन्ममार्ज ॥ १२ ॥

शि०—सुरारीति। सुरापमा गङ्गा ( कर्त्री ) तुमुलैर्घोरैः सुरारिनाथस्य तारकस्य महाचमूस्वनैः बृहत्सैन्यघोषैर्विगाह्यमाना व्याप्यमाना सती अभ्युच्छ्रितै-

---

१. उद्वेजिताः, २. व्यवर्धत, ३. ऊर्मिशतैरवारितैः ४. निकेतनावलीः,

रुन्नतैर्वारिजैः कमलविशिष्टैः ऊर्मिशतैस्तरङ्गाविवर्तैश्च नाकनिकेतनावलीं स्वर्गसद्मश्रेणिम् अक्षालयत् ममार्ज ॥ १२ ॥

अथ प्रयाणाभिमुखस्य नाकिनां [1]द्विषः पुरस्तादशुभोपदेशिनी ।
[2]अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पातपरम्परा तव ॥ १३ ॥

सी०—अथेति । अथानन्तरं प्रयाणाभिमुखस्य प्रस्थानसंमुखस्य नाकिनां देवानां द्विषो वैरिणस्तारकस्य पुरस्तादग्रे 'भो तारक, तव त्वत्कर्मकम् । अगाधोऽतलस्पर्शः । 'अगाधमतलस्पर्शे त्रिषु श्वभ्रे नपुंसकम्' इति मेदिनी । यो दुःखाम्बुधिर्दुःखसमुद्रस्तन्मध्ये मज्जनं भविष्यति' इत्येवमशुभोपदेशिन्यशुभवादिन्युत्पातपरम्परा दुःशकुनपंक्तिर्बभूव ॥ १३ ॥

शि०—अथेति । अथानन्तरं तारकासुरप्रयाणोत्तरमित्यर्थः । प्रयाणाभिमुखस्य प्रस्थितस्य नाकिनां स्वर्गौकसां देवानां द्विषः शत्रोस्तारकस्य पुरस्तादग्रे भो तारक तव ( कर्मणि षष्ठ्यन्तम् ) त्वत्कर्मकमिति तदर्थः । अगाधदुःखाम्बुधिमध्यमज्जनम् अतलस्पर्शार्णवान्तःपतनं भावि इत्येवम् अशुभोपदेशिनी अमङ्गलाभिवादिनी उत्पातपरम्परा दुःशकुनश्रेणी बभूव जाता ॥ १३ ॥

इतः परम् 'आगामि—' इत्यादिभिरेकादशभिरुत्पातपरम्परामेव प्रपञ्चयति—

[3]आगामिदैत्याशनकेलिकाङ्क्षिणीं [4]कुपक्षिणां घोरतरा परम्परा ।
दधौ पदं व्योम्नि सुरारिवाहिनीरुपर्युपर्येत्यनिवारितातपा ॥ १४ ॥

सी०—आगामीति । घोरतरातिशयभयानका कुपक्षिणां गृध्रादीनां कपोतादीनां वा परम्परा । आगामि भविष्यद्यद्दैत्यस्याशनकेलिर्भोजनक्रीडा तत्कांक्षतीति तथाभूता । तथा सुरारिवाहिनीस्तारकसेना उपर्युपरि । 'उपर्यध्यधसः सामीप्ये' इति द्विर्भावः । तद्योगे द्वितीया । तदुक्तं वामनेन— 'उपर्यादिषु सामीप्यं द्विरुक्तेषु द्वितीयया' इति । अनिवारितातपा न निवारितघर्मा च सती व्योम्न्याकाशे पदं स्थानं दधौ धृतवती । अनेन पद्येन प्रयाणानौचित्यद्योतकमुत्पातद्वयं वर्णितम् । तथाहि—आकस्मिकोपरि वृत्तिः आतपानिवृत्तिश्च । तस्मात्सर्वथैवास्य मरणं भविष्यतीति सूच्यते ॥ १४ ॥

---

१. द्विषः पुरस्तादशुभौघदायिनी; पताकिनीं प्रत्यसुरेश्वरस्य हि, २. अगाधदुःखाम्बुधिमध्यमज्जनं बभूव चोत्पाततर्तिर्विशंसती; मुहुर्महारिष्टपरम्परापरापतन्मृत्युपहापताकिनी, ३. भविष्यदैत्याशनकेलिकामिनी, ४. द्युपक्षिणाम्,

इत उत्पातं वर्णयति, तत्राद्योत्पातद्वयं तावदाह—

शि०—आगामीति । घोरतराऽतिभीषणा आगामिदैत्याशनकेलिकाङ्क्षिणी भाविताः रक्तभोजनक्रीडाऽभिलाषिणी कुरक्षिणां गृध्रकपोतप्रभृतीनां परम्परा पङ्क्तिः । तथा सुरारिवाहिनीः तारकचमूः उपर्युपरि अनिवारितातपा अदूरीकृतघर्मा सती व्योम्नि वियति पदं स्थानं दधौ बभार । सहस्रोररिश्मित्याातपनिवृत्तिलोभयोत्पात-वर्णनादस्याशु मृत्युर्भावीति ध्वन्यते ॥ १४ ॥

मुहु[1]र्विभग्नातपवारणध्वजश्चलद्धराधूलिकुलाकुलेक्षणः ।
[2]धूताश्वमातङ्गमहारथाकरानवेक्षणोऽभूत्प्रसभं प्रभञ्जनः ॥ १५ ॥

सो०—मुहुरिति । विभग्ना त्रोटिता आतपवारणसहिता ध्वजा येन । चलन्त्यो विसरन्त्यो या धराधूलयः पृथिवीरजांसि तासां कुलेन साधनीभूतेनाकुलानि व्याकुलीकृतानीक्षणानि लोकनेत्राणि येन । तथा धूतस्य कम्पितस्य । नभसि भ्रमितस्येति यावत् । अश्वानां मातङ्गानां महारथानां चाकरस्य निकरस्य । 'आकरो निकरे रत्नस्थाने श्रेष्ठे च कथ्यते' इति मेदिनी । अनवेक्षणमदर्शनं येन । आच्छादितसकलसेनाङ्गः प्रभञ्जनो वायुः । 'पवमानप्रभञ्जनः' इत्यमरः । अभूदुत्पन्नः । 'मुहु' 'प्रसभम्' इत्यस्य विशेषणत्रयेऽपि सम्बन्धः । अयं तृतीय उत्पातः ॥ १५ ॥

शि०—मुहुरिति । मुहुरसकृत् प्रसभं सहसा विभग्नातपवारणध्वजः त्रोटित-च्छत्रपताकः । तथा मुहुः प्रसभ चलद्धराधूलिकुलाकुलेक्षण उत्पतद्भूरेणुसमूहव्याप्त-लोकनेत्रः । तथा मुहुः प्रसभं धूताश्वमातङ्गमहारथाकरानवेक्षणः कम्पितवाजि-करिस्यन्दननिकरादर्शनः प्रभञ्जनो वायुरभूत् उदपद्यत ॥ १५ ॥

सद्यो विभिन्नाञ्जनपुञ्जते[3]जसो मुखैर्विषाग्निं विकिरन्त उच्चकैः ।
पुरः [4]पथोऽतीत्य महाभुजङ्गमा भयंकराकारभृतो भृशं ययुः ॥ १६ ॥

सो०—सद्य इति । सद्यो विभिन्नं तत्क्षणपतितं यदञ्जनं कज्जलम् । 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसान्तरे' इति मेदिनी । तस्य पुञ्ज इव निकर इव तेजो धाम येषाम् । नूतनपातितकज्जलसमूहश्यामभास इत्यर्थः । उच्चकैर्महान्तः । विस्तीर्णा इति यावत् । तथा भृशं भयंकराकारभृतः । अतिभीषणस्वरूपधारिण इत्यर्थः । महाभुजगमा महान्तः सर्पाः पुरोऽग्रे विषाग्निं गरलरूपमग्निम् । 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । विकिरन्तो विक्षिपन्तः सन्तः पथः सैन्यगन्तव्यमार्गानतीत्य पूर्वविहिता-क्रमसम्बन्धेन वियोज्य ययुः । चतुर्थोऽयमुत्पातः ॥ १६ ॥

---

१. विभिन्न, २. धूताश्वमातङ्गमहारथव्रजोऽनवेक्षणोऽभूत्; जनाश्वमातङ्ग-महारथव्रजानवेक्षमाणः ३. संनिभाः ४. परोत्पात,

चतुर्थमुत्पातं वर्णयति—

शि०—सद्य इति। सद्यस्तत्क्षणं विभिन्नाञ्जनपुञ्जतेजसः पतितकज्जलनिकरसदृशधामानः। तथा उच्चकैरत्यायतविग्रहाः। तथा मुखैराननैर्विषाग्निं विषरूपवह्निं विकिरन्त उद्वमन्त अत एव भृशमत्यर्थं भयङ्कराकारभृतो भीषणाकृतिमन्तः महाभुजङ्गमा महान्तो व्यालाः पथः सेनामार्गान् अतीत्य परित्यज्य पुरोऽग्रे ययुः जग्मुः॥ १६॥

**मिलन्महाभीमभुजङ्गभीषणं प्रभुर्दिनानां परिवेषमादधौ।**
**महासुरस्य द्विषतोऽति[1]मत्सरादि[2]वान्तमासूचयितुं भयङ्करः॥ १७॥**

सी०—मिलदिति। दिनानां प्रभुः सूर्यो द्विषतः शत्रुभूतस्य 'द्विषद्द्वेषणदुर्हृदः' इत्यमरः। महासुरस्य तारकस्यान्तं विनाशम्। मरणमिति यावत्। 'अन्तःस्वरूपे नाशे ना स्त्री शेषे चान्तिके त्रिषु' इति मेदिनी। आसूचयितुं ज्ञापयितुं मिलन्तः संयुजन्तः। तथा महाभीमा अतिभयंकरा ये भुजङ्गाः सर्पास्तैर्भीषणं भयदं परिवेषं परिधिं कुण्डलाकारम्। 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः। अतिमत्सरादिवादधौ धृतवान्। विनाशरूपफलसूचकपरिवेषाधाने मत्सरस्य हेतुत्वाभावेऽपि हेतुत्वकल्पनाद्धेतूत्प्रेक्षा। अत एव भयंकरो विभीषकः। 'मेघर्ति—' इति खश्। पञ्चमोऽयमुत्पातः॥ १७॥

पञ्चममुत्पातं वर्णयति—

शि०—मिलदिति। दिनानां वासराणां प्रभुः स्वामी सूर्यः द्विषतः शत्रोः महासुरस्य तारकस्याऽन्तं विनाशं सूचयितुं ज्ञापयितुं मिलन्महाभीमभुजङ्गभीषणं संयुक्तातिभयानकसर्पभयप्रदं परिवेषं परिधिम् अतिमत्सरादिव विपुलविद्वेषादिव आदधौ दधार। अत एव भयङ्करः साध्वसोत्पादकः॥ १७॥

**त्विषामधीशस्य पुरोऽ[3]धिमण्डलं शिवाः समेताः परुषं ववाशिरे।**
**[4]सुरारिराजस्य रणान्तशोणितं प्रसह्य पातुं द्रुतमुत्सुका इव॥ १८॥**

सी०—त्विषामिति। त्विषां तेजसामधीशस्य रवेरधिमण्डला इत्यर्थः। विभक्त्यर्थेऽव्ययीभावः। समेताः समुदिताः शिवाः क्रोष्ट्र्यः। 'शिवा झाटावलौषधौ। अभयामलकी गौरी क्रोष्ट्रीशक्रफलासु च' इति विश्वः। सुरारिराजस्य तारकस्य सम्बन्धिनि रणान्ते संग्रामसमीपे यच्छोणितं रक्तं द्रुतं शीघ्रं प्रसह्य बलात्पातुं पानं कर्तुमुत्सुका इव परुषं कठोरं यथा

---

१. नुमत्सरात्; नमत्सरात्, २. आत्तमास्यं प्रयतुर्भयंकरम्; आत्तमास्वप्रयतुर्भयंकराः, ३. अभिमण्डलम्, ४. सुराधिराजस्य,

ववाशिरे चुक्रुशुः। अत्रोत्पातद्वयम्। मार्तण्डमण्डलाधिकरणकं शिवासमुदितत्वं तत्कर्तृककठोररुदितं चेति। षष्ठसप्तमावेतावुत्पातौ॥ १८॥

षष्ठसप्तमोत्पातौ वर्णयति—

शि०—त्विषामिति। शिवा जम्बुकयः त्विषां भासामधीशस्य स्वामिनः सूर्यस्येत्यर्थः। अधिमण्डलं मण्डले इत्यर्थः। अत्र विभक्त्यर्थेऽव्ययीभावसमासः। समेताः समुदिताः अभिमुखीभूता इति यावत्। (शिवानां मण्डले समुदितत्वं नाम मण्डलाभिमुखीभूतत्वं बोध्यम्)। सत्यः सुरारिराजस्य तारकस्य रणान्तशोणितं युद्धावसानरुधिरं द्रुतं शीघ्रं प्रसह्य हठात् पातुं पानं कर्तुम् उत्सुका उत्कण्ठिता इव परुषं घोरं यथा तथा पुरोऽग्रे तारकस्येति शेषः। ववासिरे चुक्रुशुः। यत्तु सङ्गतस्वरूपं समुदितत्वमभिप्रेत्य सूर्यमण्डलाधिकरणकशिवासमुदितत्वं षष्ठमुत्पातमाह स्म। तदतिविचारणीयम्। शिवानां सूर्यमण्डलाधिकरणकत्वाऽसम्भवात्। अतः सूर्यमण्डलाभिमुखीभूतत्वमेव षष्ठ उत्पातो मन्तव्य इति ब्रूमः। अत्रोत्प्रेक्षाऽलङ्कारः॥ १८॥

दिवापि तारास्तरला[1]स्तरस्विनीः परापतन्तीः परितोऽथ[2] वाहिनीः।
विलोक्य [3]लोको मनसा [4]व्यचिन्तयत्प्राणव्ययान्तं[5] व्यसनं सुरद्विषः॥

सी०—दिवापीति। अथ दिवापि दिनेऽपि तरलाश्चञ्चलाः तरस्विनीर्वेगवतीः। 'रंहस्तरसी तु रयः स्यदः' इत्यमरः। तारा नक्षत्राणि, वाहिनीः परितः 'अभितः परितः समया—' इत्यादिना द्वितीया। परापतन्तीर्विलोक्य लोको मनसा सुरद्विषः सम्बन्धि प्राणव्ययान्तं प्राणनाशावधिव्यसनं व्यचिन्तयत्। प्राणनाशावधि राज्ञो दुःखं भविष्यतीति चिन्तयामासेत्यर्थः। अष्टमोऽयमुत्पातः॥ १९॥

अष्टमोत्पातं वर्णयति—

शि०—दिवापीति। अथानन्तरं शिवाऽऽक्रोशोत्तरमित्यर्थः। दिवापि दिनेऽपि तरलाश्चपलास्तथा तरस्विनीः वेगयुक्तास्तारा नक्षत्राणि वाहिनीः सेनाः परितः सर्वतः (वाहिनीरिति परितः शब्दयोगे द्वितीयान्तम्) परापतन्तीः परिच्युता विलोक्य दृष्ट्वा लोको जनो मनसा हृदयेन सुरद्विषस्तारकस्य प्राणव्ययान्तं जीवविनाशपर्यन्तं व्यसनं दुःखं व्यचिन्तयत् ज्ञातवान्। तारको नंक्ष्यतीत्यबोधीति भावः। तारकासुरजीवनाशावधिव्यसनावबोधे विलोक्यावधिवाक्यार्थस्य हेतुतयाऽभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः॥ १९॥

[6]ज्वलद्भिरुच्चैरभितः प्रभाभरैरुद्भासिताशेषदिगन्तराम्बरम्।
रवेण रौद्रेण [7]हृदन्तदारणं पपात वज्रं नभसो निरम्बुदात्॥२०॥

---

१. तदानिशम्, २. अभिवाहिनीम्, ३. लोकाः, ४. व्यचिन्तयन्, ५. प्राणात्ययान्तं व्यसनम्, ६. चलद्भिः, ७. दिगन्तदारणम्,

सी०—ज्वलद्भिरिति। निरम्बुदादनुद्भूतमेघान्नभसो व्योम्नः संकाशादभितो ज्वलद्भिः प्रस्फुरद्भिः प्रभाभरैः कान्तिसमूहैः कृत्वा। उच्चैरतिशयितं यथा तथोद्भासितानि प्रकाशितान्यशेषदिगन्तराणि समस्तदिशां प्रान्तगतानि येन। तथा रौद्रेण भयानकेन रवेण घोषेण हृदन्तस्योरोमध्यस्य दारणं विदारकं वज्रं स्फूर्जथुः पपात। 'स्फूर्जथुर्वज्रनिर्घोषः' इत्यमरः। अत्राप्युत्पातद्वयं अम्बुदसांनिध्याभावेऽपि वज्रदर्शनं तत्पातश्चेति। एवं नवमदशमावुत्पातावुक्तौ ॥ २० ॥

नवमदशमोत्पातौ वर्णयति—

शि०—ज्वलदिति। निरम्बुदान्मेघशून्यात् नभसोऽन्तरिक्षात् सकाशात् (अपादानपञ्चम्यन्तम्) अभितः सर्वतो ज्वलद्भिः दीप्यमानैः प्रभाभरैस्तेजःपुञ्जैः (करणैः) उच्चैरधिकं यथा तथा उद्भासिताशेषदिगन्तराम्बरम् प्रकाशिताखिलककुप्प्रान्ताकाशम् रौद्रेण भीषणेन रवेण घोषेण हृदन्तदारणं मनोमध्यविदारकं वज्रमशनिः पपात। मेघाभावेऽपि वज्रदर्शनं तत्पतनं चेत्युत्पातद्वयम् ॥ २० ॥

[1]ज्वलद्भिरङ्गारचयैर्नभस्तलं ववर्ष गाढं सह शोणितास्थिभिः।
[2]धूमं ज्वलन्तो व्यसृजन्मुखै[3] रजो दधुर्दिशो रासभकण्ठधूसरम् ।२१।

सी०—ज्वलद्भिरिति। नभस्तलम्। निरम्बुदं सदिति शेषः। ज्वलद्भिरङ्गारचयैः काष्ठशकलसमूहैः। तथा शोणितास्थिभिश्च सह गाढं दृढम्। बह्विति यावत्। ववर्ष। ज्वलदङ्गाररुधिरास्थिगर्भितं जलं ववर्षेत्यर्थः। अम्बुदसांनिध्याभावेऽपि वृष्टिरेकादशतमोऽयमुत्पातः। साप्यङ्गारादिमिश्रितेति द्वादशतमः। अत एव ज्वलन्त्यो दिशो रासभकण्ठधूसरं खरगलसदृशधूसरवर्णम्। 'रासभो गर्दभे क्षुद्रजन्तुरोगप्रभेदयोः' इति मेदिनी। धूमं धूमरूपं रजोरेणुं मुखैः प्रारम्भप्रदेशैर्व्यसृजंस्तत्यजुः। त्रयोदशतमोऽयमुत्पातः ॥ २१ ॥

एकादशादित्रयोदशमुत्पातानि वर्णयते—

शि०—ज्वलद्भिरिति। नभस्तलमन्तरिक्षं (कर्तृ) ज्वलद्भिर्दीप्यमानैः अङ्गारचयैः समित्खण्डराशिभिः तथा शोणितास्थिभिश्च सह गाढमधिकं यथा तथा ववर्ष। ज्वलदङ्गारशोणितास्थियुक्तजलवर्षणं व्यधादित्यर्थः। अत एव ज्वलन्त्यो दीप्यमाना दिशः रासभकण्ठधूसरं गर्दभगलतुल्यधूसरवर्णधूमं रजः धूमरूपं रेणुः मुखैरास्यैर्व्यसृजन् तत्यजुः। मेघाभावे वृष्टिः प्रथमः। साप्यङ्गारादिभिः सहेति द्वितीयः। दिशानां धूमत्यागस्तृतीयः। इत्युत्पातत्रयं बोध्यम् ॥ २१ ॥

---

१. अङ्गारभरे, २. धूम्रम्, ३. मुखे,

निर्घातघोषो [1]गिरिशृङ्गशातनो [2]घनोऽम्बराशाकुहरोदरम्भरिः ।
बभूव [3]भूम्ना श्रुतिभित्तिभेदनः प्रकोपिकालार्जित[4]गर्जितर्जनः ।२२।

सी० – निर्घातेति । प्रकोपिना प्रकृष्टरोषेण कालेन यमेनार्जितोत्पादिता गर्जिनी गर्जनां कुर्वती तर्जनापकारगीर्यत्र । अत एवाम्बरस्याशानां च कुहरेणान्तरेणोदरंभरिः, अत एव गिरीणां शृङ्गस्य शातनो भेदकः । तथा घनः सान्द्रो निर्घातश्चासौ घोषश्च स भूम्ना बाहुल्येन श्रुतिभित्तिभेदनः कर्णकुड्यताडनो बभूव । चतुर्दशतमोऽयमुत्पातः ॥ २२ ॥

चतुर्दशमुत्पातं वर्णयति––

शि० – निर्घातेति । प्रकोपिकालार्जितगर्जितर्जनः अधिकरोषवत्कृतान्तोत्पादितगर्जिभर्त्सनः, अत एव अम्बराशाकुहरोदरम्भरिः आकाशदिगन्तरालरूपोदरपूरकः । अत एव गिरिशृङ्गशातनः शैलशिखरभेदकः । तथा घनः सान्द्रो निर्घातघोषो निर्घातरूपः शब्दो भूम्नाऽऽधिक्येन श्रुतिभित्तिभेदनः श्रोत्रकुड्यताडनो बभूव जातः ॥ २२ ॥

[5]स्खलन्महेभं [6]प्रपतत्तुरङ्गमं परस्पराश्लिष्टजनं समन्ततः ।
[7]प्रक्षुभ्यदंभोधिविभिन्नभूधराद्[8]बलं[9] द्विषोऽभूदवनि[10]प्रकम्पात् ।२३।

सी० – स्खलदिति । द्विषस्तारकस्य बलं सैन्यम् । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः' इति विश्वः । प्रक्षुभ्यद्भिरुन्मथ्यमानैरम्भोधिभिर्विभिन्ना विदीर्णा भूधराः पर्वता यत्र । प्रोत्पद्यमानविकटतरधरणिकम्पप्रोच्छलत्समुद्वेलजलधिघोरतरप्रवाहस्फुटन्तो धराधरा बभूवुरिति भावः । एवंभूतादवनिप्रकम्पाद्भूकम्पाद्धेतोः स्खलन्महेभं मूर्च्छद्बृहत्करीन्द्रं प्रपतत्तुरङ्गमं प्रकृष्टपतद्वाजिराजं परस्पराश्लिष्टोभयवदन्योन्योन्यासंसक्ताननो यत्र तथाभूतं बभूव । पञ्चदशतमोऽयमुत्पातः ॥ २३ ॥

पञ्चदशोत्पातं वर्णयति––

शि० ––स्खलदिति । द्विषस्तारकस्य बलं सैन्यं प्रक्षुभ्यदम्भोधिविभिन्नभूधरात् उन्मथ्यमानार्णवविदीर्णपर्वतात् अवनिप्रकम्पात् भूकम्पनाद्धेतोः स्खलन्महेभं मूर्च्छद्बृहद्गजेन्द्रं प्रपतत्तुरङ्गमम् अतिशयपतदश्वं समन्ततः सर्वतः परस्पराश्लिष्टजनमन्योन्यसम्बद्धलोकमभूत् जातम् । यस्य तारकासुरसैन्यस्य सम्बन्धिनां गजेन्द्राणां मूर्च्छनं तुरङ्गाणां पतनं लोकानामन्योन्यश्लेषणं च भूकम्पनवशाज्जातं तथाभूतं दीनतापन्नं सैन्यमभूदित्यर्थः ॥ २३ ॥

---

१. गिरिशृङ्गघातनैः, गिरिशृङ्गशातनैः  २. घराम्बराशाकुहरोदरंभरिः,  ३. भूमा,  ४. गर्जितस्वनः, गर्जतर्जन,  ५. चलन्,  ६. प्रणयत्तुरंगमम्,  ७. संक्षुभ्यत्,  ८. भूधरम्,  ९. पुरः,  १०. प्रकम्पनम्; प्रकम्पत ।

**ऊर्ध्वीकृतास्या रविदत्तदृष्टयः समेत्य सर्वे सुरविद्विषः पुरः।**
**श्वानः स्वरेण श्रवणान्तशातिना[1] मिथो रुदन्तः करुणेन निर्ययुः ।२४।**

सी०— ऊर्ध्वीकृतास्या इति। सर्वे श्वानः समेत्य समुदेत्योर्ध्वीकृतास्या ऊर्ध्वादिशाविहितवदनाः। तथा रविदत्तदृष्टयः सूर्यनिबद्धलोचनाः। तथा करुणेन करुणरसपूरितेनात एव श्रवणान्तशातिना कर्णमध्यतनूकारिणा स्वरेण शब्देन कृत्वा रुदन्तः क्रोशन्तः सन्तः सुरविद्विषस्तारकस्य पुरोऽग्रे निर्ययुर्निरगच्छन्। षोडशतमोऽयमुत्पातः॥ २४॥

षोडशतममुत्पातं वर्णयति—

शि०—ऊर्ध्वीकृतेति। सर्वे श्वानः समेत्य मिलित्वा ऊर्ध्वीकृतास्या ऊर्ध्वभागविहितवदनास्तथा रविदत्तदृष्टयः सूर्यार्पितनेत्राः तथा करुणेन करुणारसयुक्तेन अत एव श्रवणान्तशातिना श्रोत्रमध्यदुःखदेन स्वरेण शब्देन ( करणेन )। रुदन्तो रोदनं कुर्वन्तः सन्तः सुरविद्विषस्तारकस्य पुरोऽग्रे निर्ययुः निर्जग्मुः॥ २४॥

**[2]अपीति पश्यन्परिणामदारुणां [3]महत्तमां गाढमरिष्टसंततिम्।**
**दुर्दैवदष्टेन[4] [5]खलु [6]न्यवर्तत क्रुधा प्रयाणव्यवसायतो सुरः॥ २५॥**

सी०—अपीति। गाढं दृढं यथा तथा परिणाम उत्तरकाले दारुणां भयप्रदां महत्तमामतिशयमहतीमरिष्टसंतापितमुत्पातपरम्परां पश्यन्नपि असुरस्तारकः क्रुधा मर्षेण प्रयाणव्यवसायतः प्रस्थानोद्योगान्न न्यवर्तत न निवृत्तः खलु। यतो दुर्दैवेन दुरदृष्टेण दष्टो हतोः। 'विनाशकाले विपरीतबुद्धिः' इति न्यायादिति भावः॥ २५॥

शि०—अपीतीति। दुर्दैवदष्टो दौर्भाग्यकवलितोऽसुरस्तारकः गाढं स्थिरं यथा तथा परिणामदारुणामुत्तरक्षणभीतिदां तथा महत्तमामतिशयमहतीम् अरिष्टसन्ततिमुत्पातश्रेणिं पश्यन् अवलोकमानोऽपि सन् क्रुधा कोपेन प्रयाणव्यवसायतो यात्रोद्योगात् न न्यवर्तत न निवृत्तोऽभूत् खलु। अनेकदुःशकुनावलोकनेऽपि न प्रस्थानं जहावित्यर्थः॥ २५॥

**अरिष्टमाशङ्क्य विपाकदारुणं [7]निवार्यमाणोऽपि[8] बुधैर्महा[9]सुरः।**
**पुरः प्रतस्थे महतां वृथा भवेदसद्ग्रहान्धस्य [10]हितोपदेशनम्॥ २६॥**

सी०—अरिष्टेति। महासुरस्तारकोऽरिष्टं विपाके उत्तरकाले दारुणं भयदमाशङ्क्य तर्कयित्वा निवार्यमाणो निषिध्यमानोऽपि पुर एव प्रतस्थे, न तु पश्चान्निववृते। तथाहि। महतां महता कृतमसद्ग्रहेणांधस्याविवेकिनः

---

१. पातिना, २. इति प्रपश्यन्, ३. महत्तराम्, ४. दष्टः ५. खलः, ६. निर्वर्तते, ७. निवार्यमाणैः, ८. विबुधै, विविधैः ९. महासुरैः १०. हितोपदेशनाः, हितोपदेशिता,

सम्बन्धिनो हितरयोपदेशनं वृथा व्यर्थं भवेत्। दुराग्रहशीलस्य सम्यगुपदेशोऽपि तदमततया व्यर्थः स्यादिति भावः ।। २६ ।।

शि०—अरिष्टमिति। महासुररतारको विपाकदारुणमुत्तरकालभयप्रदमरिष्टमुत्पातमाशङ्क्य विचिन्त्य बुधैर्विद्वद्भिर्निवार्यमाणोऽपि प्रतिषिध्यमानोऽपि पुरोऽग्र एव प्रतस्थे जगाम, नतु पश्चात् न्यवर्तत। तथा हि महतां विदुषां कृतमिति शेषः। असद्ग्रहान्धस्य क्रूरग्रहग्रसितस्य हितोपदेशनं शुभशिक्षणं वृथा भवेत् व्यर्थं भवति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ।। २६ ।।

इदानीं पञ्चभिः पञ्चमहोत्पातानाह—

क्षितौ निरस्तं प्रतिकूलवायुना तदीयचामीकरघर्मवारणम्।
रराज मृत्योरिव पारणाविधौ प्रकल्पितं [1]हाटकभाजनं महत् ।। २७ ।।

सी०—क्षिताविति। प्रतिकूलवायुना प्रतीपपवनेन क्षितौ पृथिव्यां निरस्तं निक्षिप्तम्। 'असु क्षेपणे' इत्यतः कर्मणि निष्ठा। तदीयं तारकसम्बन्धिनो चामीकरस्य हेम्नः। 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः। घर्मवारणं छत्र मृत्योर्यमस्य सम्बन्धिनि पारणाविधौ। भोजनक्रियानिमित्तमित्यर्थः। 'निमित्तात्कर्मयोगे' इति सप्तमी। योगोऽत्र संयोगः। प्रकल्पितं निर्मितं महद्विशालं हाटकभाजनं सुवर्णपात्रमिवेत्युत्प्रेक्षा। रराज शुशुभे ।। २७ ।।

इतः परं श्लोकपञ्चकेनोत्पातपञ्चकं वर्णयति। तत्राद्यमहोत्पातमाह—

शि०—क्षिताविति। प्रतिकूलवायुना प्रतीपमारुतेन क्षितौ भूमौ निरस्तं क्षिप्तं तदीयचामीकरघर्मवारणं तारकासुरहैमच्छत्रं मृत्योर्यमस्य पारणाविधौ भोजनक्रियायां प्रकल्पितं रचितं महत् बृहत् हाटकभाजनं स्वर्णपात्रमिव रराज शोभते स्म। तारकस्य स्वर्णच्छत्रं यमस्य भोजनपात्रमिव शोभते स्मेत्यर्थः। तारकच्छत्रे कृतान्तभोजनपात्रत्वोत्प्रेक्षणादिवशब्दसद्भावाच्च वाच्योत्प्रेक्षाऽलङ्कारः ।। २७ ।।

विजानता भाविशिरो[2]निकृन्तनं [3]प्रज्ञेन शोकादिव तस्य मौलिना।
मुहुर्गलद्भिस्तरलैरलंतरामरोदि मुक्ताफलवाष्पबिन्दुभिः ।। २८ ।।

सी०—विजानतेति। प्रज्ञेन। बुधेन। 'प्रज्ञस्तु पण्डिते वाच्यलिङ्गो बुद्धौ तु योषिति' इति मेदिनी। अत एव भावि भविष्यच्छिरोनिकृन्तनं मस्तकच्छेदनं विजानता बुध्यमानेन तस्य तारकस्य मौलिना किरीटेन। 'मौलिः किरीटे शृङ्गारे धम्मिल्ले द्रुमचूडयोः' इति विश्वः। शोकाद्धेतोर्मुहुर्गलद्भिर्निःसरद्भिस्तरलैश्चञ्चलैः। 'तरलं चञ्चले खड्गे हारमध्यमणावपि' इति विश्वः। मुक्तफलान्येव बाष्पबिन्दवोऽश्रुबिन्दवः। 'बिन्दुस्तु

१. राजतपानभाजनम्, २. विकर्तनम्, ३. स्वस्तेन, प्रश्नेन;

दन्तनाले स्यात्तथा वेदितृविप्लुषोः' इति विश्वः। तैः कृत्वालंतरामतिशय-पर्याप्तं यथा। 'अलं भूषणपर्याप्तिवारणेषु निरर्थके' इति विश्वः। अरोदीव रुदितमिवेत्युत्प्रेक्षा। मुकुटखचितमणिनिचयसाहसिकभूपतनरूप उत्पातोऽयमिति भावः॥ २८॥

द्वितीयमहोत्पातमाह—

शि०—विजानतेति। प्रज्ञेन पण्डितेनाऽत एव भावि भविष्यत् शिरोनिकृन्तनं मूर्धच्छेदनं विजानताऽवगच्छता तस्य तारकस्य मौलिना मुकुटेन शोकाच्चिन्तनात् हेतोः मुहुरसकृत् गलद्भिर्निस्सरद्भिः तरलैश्चपलैः मुक्ताफलबाष्पबिन्दुभिः मौक्तिकाश्रुबिन्दुभिः (करणैः) अलंतरामत्यर्थमरोदीव चुक्रोशेव। तारकमुकुटखचितमणयो नाधः पतन्ति, किन्तु तस्य भाविनं विनाशं विज्ञाय मुकुटो रोदितीत्यर्थः। मुक्ताफलेष्वश्रुबिन्दुत्वारोपाद्रूपकम्। मुक्ताफलपतने मुकुटकर्तृकरोदनोत्प्रेक्षणादिवशब्दसत्वाच्च वाच्योत्प्रेक्षा चेत्यनयोः सङ्करः॥ २८॥

**निवार्यमाणैरभितोऽनुयायिभिर्ग्रहीतुकामैरिव तं मुहुर्मुहुः।**
**अपाति गृध्रै[1]रभिमौलिमा[2]कुलैर्भविष्यदेतन्मरणोपदेशिभिः॥ २९॥**

सी०—निवार्यमाणैरिति। भविष्यति एतस्य तारकस्य मरणमुपदिशन्ति बोधयन्ति तथाभूतैः तथाकुलैर्भक्षणक्रियासम्भ्रमितैर्गृध्रैः पक्षिविशेषैः 'गृध्रः खगान्तरे गृध्रो वाच्यवच्चाथ लुब्धके' इति विश्वः। अभितः सर्वतोऽनुयायिभिरनुगच्छद्भिः। अत एवोत्प्रेक्षते मुहुर्मुहुरनेकवेलं निवार्यमाणैरपि तं ग्रहीतुकामैरिव मौलिं किरीटमभि समुखमपाति पतितम्। भावे लुङ्। पुनःपुनर्निवार्यमाणा अपि तद्बुभुक्षया मौलिमुद्दिश्यैव पेतुरिति भावः। अयमपि महोत्पातः॥ २९॥

तृतीयमहोत्पातमाह—

शि०—निवार्यमाणैरिति। भविष्यदेतन्मरणोपदेशिभिः भावितारकजीवत्यागबोधकैः तथाऽऽकुलैरितस्ततो भ्रमितैः गृध्रैस्तदाख्यपक्षिविशेषैः अभितः सर्वतोऽनुयायिभिः अनुसरद्भिः सद्भिः मुहुर्मुहुर्वारं वारं निवार्यमाणैः प्रतिषिध्यमानैरपि तं तारकं ग्रहीतुकामैः प्राप्तमनोभिः मौलिं मुकुटमभि संमुखमपाति पतितम्। गृध्राणां मुकुटाभिमुखपतनादाशुमरणसूचनं भविष्यतीति भावः। अत्रापि वाच्योत्प्रेक्षाऽलङ्कारः॥ २९॥

**सद्यो निकृत्ताञ्जनसोदर[3]द्युति फणामणिप्रज्वलदंशुमण्डलम्।**
**निर्यद्द्विषो[4]ल्कानलगर्भफूत्कृतं ध्वजे जनस्तस्य महाहिमैक्षत॥ ३०॥**

---

१. अभिमौलि चाकुलैः   २. तस्यातनुच्छायामपायदर्शिभिः,

३. सोदरं क्वचित्,   ४. उल्कात,

सी० —सद्य इति । जनो लोकस्य तारकस्य ध्वजे । तदुपरीत्यर्थः । सद्यो निकृत्तस्य तत्कालपातितस्याञ्जनस्य कज्जलस्य सोदरा समाना द्युतिः शोभा यस्य । अञ्जनसदृशश्यामलमित्यर्थः । तथा फणामणिभिः फणारत्नैः प्रज्वलदधिकीभवदंशुमण्डलं यस्य । निर्यद्विषमेवोल्कानलः स गर्भे मध्ये येषां तादृशानि फूत्कृतानि यस्य तथाभूतं महाहिं महान्तं सर्पमैक्षत ददर्श । अयमपि महोत्पातः ॥ ३० ॥

चतुर्थमहोत्पातमाह—

शि० —सद्य इति । जनो लोकस्तस्य तारकस्य ध्वजे पताकायां सद्योनिकृत्ताञ्जनसोदरद्युतिं तत्क्षणपातितकज्जलतुल्याभं फणामणिप्रज्वलदंशुमण्डलं फणारत्नवर्द्धितबहुलकान्तिपुञ्जं निर्यद्विषोल्कानलगर्भफूत्कृतं निःसरद्गरलोल्काग्निमध्यफूत्कारं महाहिं बृहद्व्यालमैक्षत दृष्टवान् । ध्वजे सर्पदर्शनं महोत्पातः ॥ ३० ॥

[1]रथाश्वकेशावलिकर्णचा[2]मरं ददाह बाणासनबाण[3]बाणधीन् ।
[4]अकाण्डतश्चण्डतरो हुताशनस्तस्यातनुस्यन्दन[5]धूर्यगोचरः ॥ ३१ ॥

सी०— रथेति । अकाण्डतोऽसमये । सार्वविभक्तिकस्तसिल् । तस्य तारकस्य सम्बन्धी योऽतनुस्यन्दनो महान् रथस्तस्य धुर्योऽग्रभागस्तस्य गोचरः । तल्लग्न इत्यर्थः । चण्डतरोऽतिशयप्रचण्डो हुताशनोऽग्निः । रथाश्वसम्बन्धिनी या केशावलिः कर्णचामराणि च तेषां समाहारस्तत् । प्राण्यङ्गत्वादेकवद्भावः । तथा बाणासनं बाणक्षेपक्रियासाधनम् । करणे ल्युट् । धनुर्बाणः बाणधिस्तूणीरश्चेत्येतानित्यर्थः । ददाह । अयमपि महोत्पातः ॥ ३१ ॥

पञ्चममहोत्पातमाह—

शि०—रथाश्वेति । अकालतोऽकाले तस्य तारकस्याऽतनुस्यन्दनधुर्यगोचरः महारथाग्रलग्नः तथा चण्डतरः प्रज्वलितो हुताशनो वह्निः (कर्ता) रथाश्वकेशावलिकर्णचामरं स्यन्दनवाजिरोमपङ्क्तिश्रोत्रचामरं तथा बाणासनबाणबाणधीन् धनुश्शरतूणीरांश्च ददाह भस्मसात् कृतवान् ॥ ३१ ॥

[6]इत्याद्यरिष्टैरशुभोपदेशिभिर्विहन्यमानोऽप्यसुरः पुनः पुनः ।
यदा मदान्धो [7]न गतान्न्यवर्तता[8]म्बरात्तदाभून्मरुतां सरस्वती ।३२।

सी०—इत्यादीति । मदान्धोऽसुतस्तारकोऽशुभोपदेशिभिरमङ्गलसूचके-

---

१. रथस्य, २. चामरान्, ३. बालबालधीन्, ४. अखण्डेन, ५. धूर्युगोद्गतः, ६. इत्याद्यनिष्टैः, इत्यादिरिष्टैः, ७. न च त; विन्यवर्तत न गतः स वर्त्मना, ८. अम्बरे,

'रित्याद्यरिष्टैः पूर्वोक्तमहोत्पातैः पुनः पुनर्विहन्यमानोऽपि विघ्नितः क्रियमाणोऽपि यदा गताद् गमनात्। भावे निष्ठा। न न्यवर्तत न निवृत्तः। तदाऽम्बराद् व्योम्नः सकाशान्मरुतां देवानां सरस्वती वाण्यभूत्॥ ३२॥

शि०—इत्यादीति। अशुभोपदेशिभिरमङ्गलसूचकैः इत्याद्यरिष्टैः पूर्वोक्तमहोत्पातैः पुनः भूयो भूयो विहन्यमानैः प्रतिबाध्यमानैरपि मदान्धोऽतिगर्वितोऽसुरस्तारको यदा गतात्संग्रामोद्देश्यकप्रस्थानात् न न्यवर्तत निवृत्तस्तदा तदुत्तरम् अम्बरादाकाशात्सकाशात् मरुतां देवानां सरस्वती वाणी अभूत् जाता। बहूपूत्पातेषु जायमानेष्वपि यदा तारको न निवृत्तस्तदाऽऽकाशवाणी बभूवेत्यर्थः॥ ३२॥

**मदान्ध मा गा भुजदण्डचण्डिमावलेपतो [1]मन्मथहन्तृसूनुना।**
**सुरैः [2]सनाथेन पुरंदरादिभिः समं समन्तात्स[3]मरं विजित्वरैः॥ ३३॥**

सी०—मदान्धेति। भो मदान्ध, भुजदण्डयोर्यश्चण्डिमा प्रचण्डत्वं तेन योऽवलेपो गर्वः। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति मेदिनी विश्वश्च। तस्मात्। पञ्चम्यास्तसिल्। हेत्वर्थे पञ्चमी। विजित्वरैर्जयनशीलैः पुरंदरादिभिः सुरैः समन्तात्सरितः सनाथेन सहितेन मन्मथहन्तृसूनुना शिवपुत्रेण समं सह समरं युद्धम्। कर्तुमिति शेषः। मा गा मा याहि॥ ३३॥

शि०—मदान्धेति। रे मदान्ध, विजित्वरैर्विजयशीलैः पुरन्दरादिभिः शक्रप्रभृतिभिः सुरैर्देवैः समन्तात्सर्वतः सनाथेन सहितेन मन्मथहन्तृसूनुना हरतनुजन्मना कार्त्तिकेयेन समं सार्धं भुजदण्डचण्डिमावलेपतो बाहुदण्डातिवीर्यत्वाभिमानात् हेतोः त्वं समरं संग्रामं विधातुमिति शेषः। मा गा मा याहि॥ ३३॥

अथ 'गुहः—'इत्यादिभिश्चतुर्भिः कुमारविषये तारककर्तृकसमरानौचित्यमेव दर्शयति—

**[4]गुहोऽसुरैः षड्दिनजातमात्रको निदाघधामेव निशातमोभरैः।**
**[5]विषह्यते नाभिमुखो[6] हि[7] संगरे कुतस्त्वया[8] [9]तस्य समं विरोधिता॥**

सी०—गुहेति। भो मदान्ध, संगरे युद्धेऽभिमुखः संमुखः षड्दिनानि जातानि व्यतीतानि यस्य। जन्मदिनादारभ्यातिक्रान्तषट्दिनीकमित्यर्थः। गुहः सेनानीः। 'गुहः षाण्मातुरे गुह्ये' इति मेदिनी। असुरैर्दैत्यैः कर्तृभिः। निशातमोभरै रात्र्यन्धतमससमूहैर्निदाघधामा उष्णतेजाः सूर्य इव न हि

---

१. मन्मथशत्र, २. सनाथैस्त्रिदशेश्वरादिभिः ३. समरे,
४. महासुरैः सुरासुरैः, ५. विमुह्यते, ६. सोऽभिमुखम्;
७ न, ८. त्वियम्, ९. तेन,

नैव विषह्यते विमृष्यते। त्वया समं सह तस्य सम्बन्धिनी विरोधिता वैरं कुतः कारणात्स्यात्। कुमारविषयकभवत्कृतवैरनिमित्तसमरोऽनुचित एवेति भावः ॥ ३४ ॥

इत. परं श्लोकचतुष्टयेन हरसूनुना सह तारकाहवायोग्यत्वं वर्णयति—

शि०—गुह इति। रे मदान्ध, सङ्गरेऽभिमुखः संग्रामं सम्मुखः षड्दिनजातमात्रको व्यतीतवासरषट्को गुहः कार्त्तिकेयः असुरैस्तारकैः (कर्तृभिः) निशातमोभरैः रात्र्यन्धकाराविवर्यैः निदाघधामा सूर्य इव न विषह्यते नैव विमृष्यते। हि तथाहि त्वया समं तस्य गुहस्य विरोधिता वैमनस्यं कुतः कस्मात्कारणात्। न त्वया सह तस्य विरोधो युक्त इति भावः। अत्रोपमाऽर्थान्तरयोः संसृष्टिः ॥ ३४ ॥

**अभ्रंलिहैः शृङ्गशतैः समन्ततो [1]दिक्चक्रवालैः स्थगितस्य भूभृतः।**
**क्रौञ्चस्य रन्ध्रं विशि[2]खेन निर्ममे येनाहवस्तस्य सह त्वया कुतः ।३५।**

सी०—अभ्रंलिहैरिति। भो मदान्ध, येन सेनान्या कर्त्रा। अभ्रंलिहैराकाशस्पृग्भिः शृङ्गशतैः सानुशतैः। तथा दिक्चक्रवालैः। 'चक्रवालं तु मण्डलम्' इत्यमरः। समन्ततः परितः स्थगितस्याच्छादितस्य क्रौञ्चस्य क्रौञ्चसंज्ञकस्य भूभृतः पर्वतस्य सम्बन्धि रन्ध्रं छिद्रम्। जातावेकवचनम्। विशिखेन बाणेन निर्ममे निर्मितम्। कर्मणि लिट्। तस्याहवः सङ्ग्रामस्त्वया सह कुतः कारणात्स्यात्। अपि तु नेदमुचितमिति भावः ॥ ३५ ॥

शि०—अभ्रंलिहैरिति। रे मदान्ध, येन गुहेन अभ्रंलिहैर्व्योमस्पर्शिभिः शृङ्गशतैः शतशिखरैः तथा दिक्चक्रवालैः दिशासमूहैः समन्ततः सर्वतः स्थगितस्याऽऽवृतस्य क्रौञ्चस्य तदाख्यस्य भूभृतो गिरेः रन्ध्रं छिद्रं विशिखेन शरेण निर्ममे कृतवान् तस्य गुहस्य त्वया सह आहवो युद्धं कुतः कस्मात्कारणात् स्यात्, किन्तु नैव स्यादित्यर्थः ॥ ३५ ॥

अथ युग्मेनाह—

**लब्ध्वा धनुर्वेदमनङ्गविद्विषस्त्रिःसप्तकृत्वः समरे महीभुजाम्।**
**[3]कृत्वाभिषेकं रुधिराम्बुभिर्घनैः स्वक्रोधवह्निं शमयांबभूव यः ॥३६॥**

सी०—लब्ध्वेति। यो जामदग्न्यः परशुरामोऽनङ्गविद्विषो हरसकाशाद्धनुर्वेदं लब्ध्वा प्राप्य। अधीत्येति यावत्। अतः समरे युधि महीभुजां राज्ञां सम्बन्धिनी रुचिराम्बुभिः शोणितजलैस्त्रिःसप्तकृत्वस्त्रिगुणसप्तवारम्। एकविंशतिवारमिति यावत्। अभिषेकं स्नानं कृत्वा स्वक्रोधवह्निमात्मीय-

---

१. दिक्चक्रवालस्थगितस्य; दिक्चक्रवालस्थगतस्य, २. स्वशरैर्विनिर्ममे; येनाहवे तेन कुतः समो भवान्, ३. कृताभिषेकः,

कोपाग्निं शमयांबभूव। एकविंशतिवारं क्षत्रियान्हत्वा शान्तोऽभूदिति भावः॥ ३६॥

युग्मम्—

शि०—लब्ध्वेति। यो जामदग्न्यो जमदग्निपुत्रः परशुरामोऽनङ्गविद्विषो महेश्वरात्सकाशात् धनुर्वेदं लब्ध्वा प्राप्य पठित्वेत्यर्थः। समरे सङ्ग्रामे महीभुजां नृपाणां ( सम्बन्धषष्ठ्यन्तम् ) घनैरधिकैः रुधिराम्बुभिः शोणितजलैः त्रिसप्तकृत्वः एकविंशतिवारम् अभिषेकं स्नानं कृत्वा विधाय स्वक्रोधवह्निं निजकोपाग्निं शमयां-बभूव शान्तं व्यदधात्। अत्र द्वितीयदीपकम्॥ ३६॥

**न जामदग्न्यः क्षयकालरात्रिकृत्स क्षत्रियाणां समराय वल्गति।**
**येन त्रिलोकी[1]सुभटेन तेन कुतोऽ[2]वकाशः सह [3]विग्रहग्रहे॥ ३७॥**

सी०—नेति। क्षत्रियाणाम्। 'क्षत्राद्धः' इति घप्रत्ययः। 'आयनेयी—' इति तस्येयादेशः। क्षयसम्बन्धिनी कालरात्रिं करोति यः स जामदग्न्यो जमदग्नेरपत्यं रामस्त्रिलोक्यां सुभटेन सुतरां योद्ध्रा येन सेनान्या सह समराय समरं कर्तुं न वल्गति न चलति। नैवोद्युङ्क्त इत्यर्थः। तेन सकल-राजकुलजिघत्सद्रामविभीषकेन सेनान्या सह तव त्वत्कर्तृके विग्रहग्रहे रणग्रहे। 'विग्रहः कायविस्तारविभागे ना रणे स्त्रियाम्' इति मेदिनी। कुतः कस्मादवकाशोऽवसरः स्यात्। अपि तु न स्यादिति काक्वा व्याख्येयम्। अतः सर्वथैवामुना सह त्वया न योद्धव्यं किं तु निवर्तनीय-मेवेति भावः॥ ३७॥

शि०—नेति। क्षत्रियाणां क्षयकालरात्रकृत् विनाशकालरजनीकारकः स जाम-दग्न्यः परशुरामः त्रिलोकीसुभटेन जगत्त्रयप्रवीरेण येन कार्त्तिकेयेन, सहेति शेषः। समराय समरं कर्तुमित्यर्थः। ( तुमर्थाच्चेति चतुर्थी )। न वल्गति नोत्सहते। तेन कार्त्तिकेयेन सह ते तव ( कर्तृषष्ठ्यन्तम् ) त्वत्कर्तृक इत्यर्थः। विग्रहग्रहे समरग्रहणे विषये ( विषयसप्तम्यन्तम् ) कुतोऽवकाशो, नास्त्यवकाश इत्यर्थः॥ ३७॥

ननु निवर्तने पुनरपि वधशङ्केति चेत्तत्राह—

**त्यजाशु [4]गर्वं मदमूढ मा स्म गाः स्मरारिसूनोर्वरशक्तिगोचरम्।**
**तमेव नूनं शरणं व्रजाधुना [5]जगत्सुवीरं [6]स चिराय जीव तत्॥३८॥**

सी०—त्यजेति। भो मदमूढ उन्मादमूर्ख, आशु शीघ्रं गर्वमभिमानं त्यज। स्मरारिसूनोः सेनान्याः सम्बन्धिनी या वरा श्रेष्ठा शक्तिरायुधं

---

१. तिलकेन, २. अवकाशी, अवकेशी, ३. विग्रहग्रहः, ४. दर्पम्, ५. जगत्प्रवीरम्, ६. सुचिराय,

तस्या गोचरं विषयं मास्म गा मा स्म याहि। तर्हि किं कर्तव्यमित्याह—अधुनेदानीं नूनमेव निश्चयेनैव। 'नूनमवश्यं निश्चये द्वयम्' इत्यमरः। शरणं रक्षितारम्। 'शरणं गृहरक्षित्रोर्वधरक्षणयोरपि'। इति मेदिनी। तं जगत्सुवीरं सेनान्यं व्रज गच्छ। तत्तस्माद्गमनाद्धेतोः स त्वं चिराय जीव बहुकालं प्राणान्धारय। कुमारगमनं विना न तवान्यज्जीवातुरिति भावः॥ ३८॥

शि०—त्यजाश्विति। भो मदमूढ! गर्वविचारशील, गर्वमभिमानम् आशु सत्वरं त्यज समुत्सृज स्मरारिसूनोः शिवपुत्रस्य कार्त्तिकेयस्य वरशक्तिगोचरं प्रकृष्टशक्त्याख्यायुधविषयं मास्म गाः मास्म याहि। किं करणीयं तदेत्याह—अधुना साम्प्रतं नूनमवश्यमेव शरणं रक्षकं तं जगत्सुवीरं लोकवीर्यवन्तं कार्त्तिकेयं व्रज याहि, तत्तस्मात् कार्त्तिकेयं प्रति गमनाद्धेतोः स त्वं चिराय चिरकालपर्यन्तं जीव प्राणधारणं कुरु। हरसूनुना सह युद्धाग्रहं परित्यज्य तमेव शरणं गत्वा सुखं चिरं जीवेत्यर्थः। अत्रापि दीपकालङ्कारः॥ ३८॥

**श्रुत्वेति वाचं वियतो [1]गरीयसीं क्रोधादहंकारपरो महासुरः।**
**प्रकम्पिताशेषजगत्त्रयोऽपि [2]सन्न[3]कम्पतोच्चैर्दिवमभ्य[4]धाच्च सः॥**

सी०—श्रुत्वेति। वियत आकाशस्येत्येवंभूतां गरीयसीमतिशयगुर्वीं वाचं श्रुत्वा क्रोधाद्धेतोरहंकारेऽभिमाने। 'गर्वोऽभिमानोऽहंकारः'। इत्यमरः। परः सक्तः। 'परः श्रेष्ठादिदूरान्योत्तरे क्लीबं तु केवले'। इति मेदिनी। आदिशब्दसंगृहीतत्वेन शक्तिवाचकत्वं विवेचनीयम्। सोऽसुरस्तारकः प्रकर्षेण कम्पितं वेपितमशेषं समस्तं जगतां त्रयं येन तथाभूतः सन्नप्यकम्पत चकम्पे। भारत्या अत्याप्तत्वादिति भावः। अथ च दिवं स्वर्गमुच्चैरुच्चैः स्वरेणाभ्यधादचकथत्॥ ३९॥

शि०—श्रुत्वेतीति। वियतो व्योम्नः सम्बन्धिनीं गरीयसीमर्थगौरवयुक्तां वाचं वाणीं श्रुत्वा समाकर्ण्य क्रोधात्कोपाद्धेतोः अहङ्कारपरोऽभिमानसक्तः स महासुरस्तारकः प्रकम्पिताशेषजगत्त्रयः वेपितसकललोकत्रयः सन्नपि अकम्पत अवेपत। च पुनः उच्चैरुन्नतस्वरेण दिवं स्वर्गं प्रति अभ्यधात् जगाद॥ ३९॥

अथ 'किम्' इत्यादिभिस्त्रिभिस्तदुक्तिमाह—

**किं ब्रूथ रे [5]व्योमचरा महासुराः [6]स्मरारिसूनुप्रतिपक्षवर्तिनः।**
**मदीयबाणव्रणवेदना[7] हि साधुना कथं [8]विस्मृतिगोचरीकृता॥ ४०॥**

---

१. वरीयसीम्, २. सः ३. नाकम्पत, प्राकम्पत ४. अभ्यधात्तत; अभ्यगात्ततः, ५. हे, ६. मखारि, ७. वेपन महोऽधुनेव ८. विस्मृत्य गताः स्वपृष्ठतः,

सी०—किमिति । रे व्योमचराः ! रे इति नीचसंबोधने । महासुरा महान्तः सुरा यूयं स्मरारिसुनोः कुमारस्य प्रतिपक्षे कोटौ वर्तन्ते तथा-भूताः सन्तः किं ब्रूथ वदथ । नेदं वाच्यमिति ध्वनिः । ननु वादे त्वया किं कृतमित्याह—सा पूर्वतरा मदीयानां बाणानां संबन्धिनां रन्ध्राणां वेदना पीडाधुना हीदानीमेव कथं केन प्रकारेण विस्मृतिगोचरीकृता विस्मरण-विषयीकृता । अपि त्विदानीमपि सैव स्मर्तव्या, अग्रे भोक्ष्यमाणत्वात् ॥

इतः परं श्लोकत्रयेण तारकोक्तिं वर्णयति—

शि०—किमिति । रे व्योमचराः ! ( रे शब्दो नीचसम्बोधनार्थकः ) स्मरारि-सूनुप्रतिपक्षवर्तिनः कार्त्तिकेयकोटिस्थाः महासुराः महान्तो देवाः किं ब्रूथ किं गदथ यूयमितिशेषः । न किमपि युष्माभिर्वक्तव्यमित्यर्थः । कथमित्याह—हि तथाहि सा पूर्वानुभूता मदीयबाणव्रणवेदना अस्मदीयशररन्ध्रपीडा अधुना सम्पति कथं कुतो विस्मृतिगोचरीकृता विस्मरणविषयीकृता किन्तु सैव साम्प्रतं स्मरणीयेत्यर्थः । मदीयशरकृतव्रणजन्यवदेनां संस्मृत्य कुमारपक्षवर्त्तिभिरपि युष्माभिर्न किमपि वाच्यमिति तात्पर्यार्थः ॥ ४० ॥

[1]कटुस्वरैः प्रालपथाम्बरस्थिताः शिशोर्बलात्षड्दिनजातकस्य किम् ।
श्वानः [2]प्रमत्ता इव [3]कार्तिके निशि स्वैरं वनान्ते मृगधूर्तका इव ॥४१॥

सी०—कटुस्वरैरिति । भो देवाः ! यूयमम्बरस्थिता आकाशवर्तिनः सन्तः षड्दिनजातकस्य षड्दिनजन्मनः शिशोर्बालस्य बलाद्वीर्याद्धेतोः कार्तिके बहुले मासि प्रमत्ता उन्मत्ताः श्वान इव निशि वनान्ते वनमध्ये मृगधूर्त्तका मृगा एव धूर्तकास्त इव किं प्रालपथ प्रलापं कुरुथ ? अपि तु मदपेक्षया निर्वीर्यैर्भवद्भिः प्रलापो न विधेय इति भावः ॥ ४१ ॥

शि०—कटुस्वरैरिति । रे व्योमचरा देवा यूयं भवन्तः अम्बरस्थिता व्योम-वर्त्तिनः सन्तः षड्दिनजातकस्यातीतषड्वासरस्य शिशो कुमारस्य कार्त्तिकेयस्य बलात्सामर्थ्यात् हेतोः कार्त्तिके बहुले मासे प्रमत्ता उन्मत्ताः श्वानः कुक्कुरा इव निशि रात्रौ वनान्तेऽरण्यमध्ये मृगधूर्त्तका मृगा इव स्वैरं स्वच्छन्द यथा तथा कटुस्वरैर्निष्ठुरशब्दैः किं प्रालपथ प्रलापं कुरुथ । मदपेक्षयाऽल्पशक्तिभिर्युष्माभिः शिशुवीर्यमाश्रित्य न किमपि वक्तव्यमित्यर्थः । अत्रार्थापत्युपमयोः संसृष्टिः ॥ ४१ ॥

सङ्गेन वो [4]गर्भतपस्विनः शिशुर्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ।
[5]अतस्करस्तस्करसङ्गतो यथा तद्वो निहन्मि प्रथमं ततोऽप्य[6]मुम् ॥

सी०—सङ्गेनेति । भो देवाः, वो युष्माकं सङ्गेन सम्बन्धेन निमित्तेन

---

१. कटुस्वरैरारटथ, कटुस्वरैरीरयथ, २. प्रवृत्ताः, ३. कार्तिकी निशा,
४. भर्गतपस्विनः, ५. अतस्करम् ६. तु,

वराकोऽतिकृपणत्वाच्छोचनीयः। 'वराकः शंकरे पुंसि शोचनीयेऽभिधेयवत्। इति मेदिनी। एष पुरोवर्ती गर्भतपस्विनः अत्र गर्भशब्देन गर्भत्वं तदस्यास्तीति गर्भः। अर्श आद्यच्। ततो गर्भत्ववानिति निष्पन्नम्। गर्भत्वं चात्र बालत्वम्। 'गर्भो भ्रूणेऽर्भके कुक्षौ'। इति मेदिनी। एवं च बाल इति निष्कर्षः। स चासौ तपस्वी च। बालत्वेऽपि तपस्वित्वकथनाद्वार्धक्ये त्वर्थात्सिद्धम्। एवं च बालकत्वमारभ्य तपस्वित्वेन निष्किचनस्येति तात्पर्यार्थः। अथवा गर्भत्वादिति ल्यब्लोपनिका या पञ्चमी तदन्तेन तपस्वीत्यर्थः। तथाभूतस्य शिशुर्बालः कुमारः। तस्करसङ्गतश्चौरसङ्गेनातस्करो यथा चौर इव। ध्रुवं निश्चयेनान्तं मरणमवाप्स्यति। तत्तस्माद्वो युष्मान्प्रथमं प्राङ् निहन्मि। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्कालेऽपि वर्तमानप्रयोगः। ततो भवद्धननानन्तरममुं कुमारमपि निहन्मि निहनिष्यामि ॥ ४२ ॥

शि०—सङ्गेनेति। रे व्योमचरा देवा वो युष्माकं सङ्गेन सम्पर्केण एष पुरोविद्यमानो वराकोऽतिशोच्यो गर्भतपस्विन आबालतपश्चरणशीलस्य हरस्य शिशुः पुत्रः कार्त्तिकेयः ध्रुवं निश्चयेन तस्करसङ्गतश्चौरसम्पर्कादतस्करो यथाऽचौर इव अन्तं विनाशमवाप्स्यति प्राप्स्यति। तत्तस्माद्धेतोः प्रथमं प्राक् वो युष्मान् निहन्मि हनिष्यामि ( अत्र भविष्यदर्थे लट् ) ततस्तदनन्तरं युष्मद्धननोत्तरमित्यर्थः। अमुं कुमारमपि निहन्मि निहनिष्यामि। उपमालङ्कारः ॥ ४२ ॥

इतीरयत्युग्रतरं महासुरे महाकृपाणं कलयत्यलं [1]क्रुधा।
परस्परोत्पीडितजानवो भयान्नभश्चरा दूरतरं विदुद्रुवुः ॥ ४३ ॥

सी०—इतीति। इति पूर्वोक्तमीरयति वदति महासुरे तारके क्रुधा हेतुनोग्रतरमत्यन्तभयानकं महाकृपाणं महान्तं खड्गम्। अलं पर्याप्तत्वेन। अनेन प्रथमं स्पर्शमात्र एवेति व्यज्यते। 'अलं भूषणपर्याप्तिवारणेषु निरर्थके'। इति विश्वः। कलयति बिभ्रति सति। नभश्चरा देवा भयाद्धेतोः परस्परमन्योन्यमुत्पीडिता अतिसङ्कीर्णतया धृष्टत्वाद् व्यथिता जानव ऊरुपर्वाणि येषाम्। 'जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्'। इत्यमरः। तथाभूताः सन्तो दूरतरमतिदूरम्। 'दूरान्तिकार्थेभ्यो द्वितीया च' इति प्रातिपदिकार्थमात्रे द्वितीया। विदुद्रुवुः पलायांचक्रिरे। 'द्रु गतौ' इत्यस्मात्कर्तरि लिट् ॥ ४३ ॥

शि०—इतीति। इति पूर्वोक्तमीरयति कथयति महासुरे तारके क्रुधा कोपेन महाकृपाणं बृहत्खड्गम् अलं पर्याप्तरूपेण कलयति धारयति सति भयात्साध्वसात्

१. ध्रुवम्

हेतोः नभश्चरा व्योमस्थाः सुराः परस्परोत्पीडितजानवः अन्योन्यव्यथितोरुपर्वभागाः सन्तः दूरतरमतिदूरं विदुद्रुवुः पलायाम्बभूवुः ॥ ४३ ॥

**ततोऽवलेपाद्विकटं [1]विहस्य स [2]व्यधत्त कोशादसिमुत्तमं बहिः ।**
**रथं द्रुतं प्रापय वासवान्तिकं [3]नन्वित्यवोचन्नि[4]जसारथिं रथी ॥४४॥**

सी०—तत इति । ततोऽनन्तरं स तारको विकटं करालं यथा तथा । वक्ष्यमाणस्यासेर्विशेषणं वा । 'विकटा वज्रवाराह्यां त्रिषु रुचिकरालयोः' । इति मेदिनी । विहस्याट्टहासं कृत्वा । उत्तममसिं करवालं कोशाद्बहिर्व्यधत्त कृतवान् । अथ च रथी सः 'रथं वासवान्तिकमिन्द्रसमीपं द्रुतम् । ननु निश्चयेन । प्रापय' इति निजं स्वीयं सारथिं सूतमबोचत् । 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे' । इति विश्वः ॥ ४४ ॥

शि०—तत इति । ततोऽनन्तरं सुरकर्तृकपलायनोत्तरमित्यर्थः । स तारकासुरोऽवलेपादभिमानाद्धेतोर्विकट विकरालं भयानकमिति यावत् यथा तथा विहस्याट्टहासं विधाय कोशात्खड्गस्थापनपात्रात् सकाशात् श्रेष्ठमसिं खड्गं बहिर्व्यधत्त बहिर्भूतं कृतवान् । अथ रथी रथस्थः स तारकः रथ स्यन्दनं वासवान्तिकं शक्रसमीपं द्रुतं शीघ्रं ननु निश्चयेन प्रापय गमय इतीत्येव वचनमिति शेषः । निजमात्मीयं सारथिं सूतं प्रति अवोचत् जगाद ॥ ४४ ॥

**मनोतिवेगेन रथेन सारथिप्रणोदितेन प्रचलन्महासुरः ।**
**[5]ततः प्रपेदे सुरसैन्यसागरं भयंकराकारमपारमग्रतः ॥ ४५ ॥**

सी०—मन इति । ततोऽनन्तरं मनोतिवेगेनान्तःकरणादपि बहुलगतिजवेन सारथिना प्रणोदितेन प्रेरितेन रथेन प्रचलन्गच्छन्महासुरस्तारकोऽग्रतः । पुरतः । स्थितमिति शेषः । अपारमनवधिकं भयंकराकारम् । विभीषकाकृतिमत्पुरुषमित्यर्थः । सुरसैन्यसागरं देवसेनासमुद्रं प्रपेदे प्राप ॥ ४५ ॥

शि०—मनोतिवेगेनेति । ततस्तदनन्तरं तारकाभिधानोत्तरमित्यर्थः । महासुरस्तारकः मनोतिवेगेन चेतसोऽप्यधिकजवेन सारथिप्रणोदितेन सूतप्रेरितेन रथेन स्यन्दनेन प्रचलन् गच्छन् सन् अग्रतोऽग्रे विद्यमानमिति शेषः । अपारं निर्मर्यादं भयंकराकारं भीषणस्वरूपं सुरसैन्यसागरं देवचमूदधिं प्रपेदे प्राप ॥ ४५ ॥

**पुरः सुराणां [6]पृतनां प्रथीयसीं विलोक्य वीरः पुलकं प्रमोदजम् ।**
**बभार [7]भूम्नाथ स बाहुदण्डयोः प्रचण्डयोः सङ्गरकेलिकौतुकी ॥४६॥**

---

१. विकृष्य, २. अभिकोशमाधादसिमंशुभासरम्, ३. बत,
४. प्रति, ५. द्रुतम्, ६. पृतनाः पथीयसीः ७. भूम्ना बहु,

सी०—पुर इति। वीरः शूरः। 'वीरो रसविशेषे पुंस्युत्तरे सुभटे त्रिषु'। इति मेदिनी। स तारकः प्रथीयसीमतिपृथुलां४सुराणां देवानां सम्बन्धिनीं पृतनां सेनां पुरोऽग्रे विलोक्य प्रचण्डयोर्बाहुदण्डयोर्भुजदण्डयोः। 'दण्डोऽस्त्री लगुडे पुमान्' इति मेदिनी। प्रमोदजमानन्दजनितं पुलकं रोमाञ्चं भूम्ना बाहुल्येन बभार धृतवान्। यतः सङ्गरकेली संग्रामक्रीडायां कौतुकयुत्साहवान्। वीराणां सेनादर्शनमेव महान्मुदो हेतुरिति भावः॥ ४६॥

शि०—पुर इति। सङ्गरकेलिकौतुकी सङ्ग्रामक्रीडोत्कण्ठितो वीरः पराक्रमी स तारकः प्रथीयसीं महतीं सुराणां देवानां पृतनां सेनां पुरोऽग्रे विलोक्य दृष्ट्वा अथानन्तरं देवसैन्यवैपुल्यावलोकनोत्तरमित्यर्थः। प्रचण्डयोर्वीर्यवतोर्बाहुदण्डयोर्भुजस्तम्भयोर्विषये भूम्ना आधिक्येन प्रमोदजमानन्दसमुत्पन्नं पुलकं रोमाञ्चं बभार धृतवान्। अत्र वाक्यार्थहेतुककाव्यलिङ्गमलङ्कारः॥ ४६॥

ततो [1]महेन्द्रस्य चराश्चमूचरा रणान्तलीलारभसेन भूयसा।
पुरः प्रचेलुर्मनसोऽतिवेगिनो युयुत्सुभिः किं समरे विलम्ब्यते॥ ४७॥

सी०—तत इति। ततोऽनन्तरं मनसः सकाशादप्यतिवेगिनोऽत्यन्तजववन्तः। तथा भूयसातिशयेन रणान्ते संग्राममध्ये या लीला विलासः। विलासोऽत्र समराङ्गणाधिकरणकमात्मीयभुजदण्डगतपराक्रमचमत्कृतिदर्शनम्। तत्र रभसेन वेगेन। 'लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्वः। चम्वां सेनायां चरन्तीति विग्रहे 'चरेष्टः' इति टप्रत्ययः। तथाभूता महेन्द्रस्येन्द्रस्य चराश्चाराः। दूता इति यावत्। 'चरो द्यूतप्रबन्धे स्याच्चारजङ्गमयोश्चले'। इति विश्वः। समरे संग्रामे युयुत्सुभिर्योद्धुमिच्छुभिः। भवद्भिरित्यर्थः। किं विलम्ब्यते किं विलम्बः क्रियते। अपि तु सत्वरमेव युध्यतामिति प्रतिपक्षान्वक्तुमित्यपि शेषः। पुरोऽग्रे प्रचेलुः॥ ४७॥

शि०—तत इति। ततोऽनन्तरं बाहुद्वये तारककर्तृकपुलकधारणोत्तरमित्यर्थः। मनसोऽतिवेगिनो मानसादप्यतिशयवेगवन्तो महेन्द्रस्य शक्रस्य चमूचराः सेनास्थाश्चरा दूता भूयसाऽधिकेन रणान्तलीलारभसेन संग्राममध्यविलासवेगेन युयुत्सुभिर्योद्धुमिच्छुभिर्भवद्भिरिति शेषः। समरे सङ्ग्रामे किं किमर्थं विलम्ब्यते विलम्बो विधीयते किन्तु शैघ्र्यं विधेयमिति तारकपक्षाश्रितानभिधातुमिति शेषः। पुरोऽग्रे प्रचेलुर्जग्मुः॥ ४७॥

---

1. असुरेन्द्रानुचराः, सुरेन्द्रस्य चराः,

[1]पुरःस्थितं देवरिपोश्चमूचरा [2]बलद्विषः सैन्यसमुद्रम[3]भ्ययुः।
भुजं समुत्क्षिप्य [4]परेभ्य आत्मनोऽभिधानमुच्चैरभितो न्यवेदयन् ।४८।

सो०—पुर इति। देवरिपोस्तारकस्य चमूचराः सेनाचराः पुरःस्थितमग्रस्थितं बलद्विष इन्द्रस्य सम्बन्धिनं सैन्यसमुद्रं सेनासागरमभ्ययुः संमुखत्वेन जग्मुः। अथ चाभितः संमुखम्। 'अभितः शीघ्रसाकल्यसंमुखोभयतोऽन्तिके' इति विश्वः। भुजं बाहुं समुत्क्षिप्योत्थाप्य आत्मनोऽभिधानं नाम। 'आख्याह्वे अभिधानं च नामधेयं च नाम च'। इत्यमरः। उच्चैः स्वरेण परेभ्यः शत्रुभ्यो न्यवेदयन्वयममुकनामानो वयममुकनामा इति निवेदितवन्तः॥ ४८॥

शी०—पुर इति। देवरिपोः सुरशत्रोस्तारकस्य चमूचराः सेनास्थदूताः पुरःस्थितमग्रे विद्यमानं बलद्विषो महेन्द्रस्य सैन्यसमुद्रं सेनासागरम् अभ्ययुः सम्मुखं जग्मुः। अनन्तरमभितः सम्मुखं भुजं बाहुं समुत्क्षिप्य आत्मनोऽभिधानं निजनामधेयं परेभ्यः शत्रुभ्य उच्चैरधिकस्वरेण न्यवेदयन् अकथयन्॥ ४८॥

पुरोगतं दैत्यचमूमहार्णवं दृष्ट्वा [5]परं चुक्षुभिरे [6]महासुराः।
[7]पुरारिसूनोर्नयनैककोणके [8]ममुर्भटा[9]स्तस्य[10] रणेऽवहेलया ॥४९॥

सो०—पुर इति। महासुरा महान्तः सुरा इन्द्रादयः पुरोगतमग्रे प्राप्तं दैत्यस्य तारकस्य चमूरेव महानर्णवः समुद्रस्तं दृष्ट्वा परं केवलम्। 'परमव्ययमिच्छन्ति—' इति विश्वः। चुक्षुभिरे संचेलुः। विव्यथुरिति यावत्। रणे सङ्गरेऽवहेलया मंदपेक्षया केयं वराकिका सेनेत्यनादरेणोपलक्षितस्य तस्य पुरारिसूनोः शिवपुत्रस्य नयनैककोणके नेत्रैकदेश एव। 'कोणो वाद्यप्रभेदे स्यात्कोणोऽस्त्री लगुडेऽर्कजे। वीणादिवादनोपायेऽप्येकदेशे गृहस्य च।' इति विश्वः। अत्र गृहस्यैव कोण इत्यविवक्षितम्। किंत्वन्यसाधारणत्वेन प्रकृत इष्टसिद्ध्यर्थमुपलक्षितत्वेन गमनीय इत्यलम्। भटा योद्धारो ममुः संविविशुः॥ ४९॥

शि०—पुरोगतमिति। महासुरा महान्तो देवाः शक्रप्रभृतयः पुरोगतमग्रे प्राप्तं दैत्यचमूमहार्णवं तारकसैन्यबृहत्सागरं दृष्ट्वा समीक्ष्य परं केवलं चुक्षुभिरे क्षोभं प्रापुः। रणे सङ्ग्रामेऽवहेलयाऽनादरेणोपलक्षितस्य पुरारिसूनोः शिवतनुजन्मनः कार्त्तिकेयस्य नयनैककोणके नेत्रैकदेशे भटा योद्धारस्तारकपक्षीया इति शेषः।

---

१. पुरःसरा, २. सुरद्विषः ३. अभ्यगुः ४. सहेलमात्मनः ५. अभितः, ६. अखिलाः सुराः, अखिलाः स तु, ७ स्मरारिसूनोः ८. ममौः, ९. भटः, पुरः, १०. भावि रणे हि हेलया,

ममुः प्राविशन् । यं तारकसैन्यवर्गं विलोक्य महेन्द्रादीनां विषादप्राप्तस्य कुमारस्य नेत्रैकदेशः एव प्राविशदित्यर्थः ॥ ४९ ॥

द्विषद्बलत्रासवि[1]भीषिताश्चमूर्दिवौकसामन्धकशत्रुनन्दनः ।
अपश्यदुद्दिश्य [2]महारणोत्सवं प्रसादपीयूषधरेण चक्षुषा ॥ ५० ॥

सी०--द्विषदिति । महारणोत्सवमुद्दिश्य स्थितोऽन्धकशत्रुनन्दनः कार्त्तिकेयो द्विषद्बलत्रासेन तारकसैन्यशासनेन विभीषिता भीता दिवौकसां देवानां चमूः सेनाः कर्म । प्रसादोऽनुग्रहः स एव पीयूषममृतं तद्धरति तथाभूतेन चक्षुषापश्यद्ददर्श । अनेन यूयं मा भैष्ट प्रसन्ना भवत, निःशङ्कं युध्यध्वं चेति व्यज्यते ॥ ५० ॥

शि०—द्विषदिति । महारणोत्सवं रणस्योत्सवो रणोत्सवो महांश्चासौ रणोत्सवो महारणोत्सवस्तं तथोक्तं प्रवृद्धसङ्ग्रामानन्दमुद्दिश्य स्थित इति शेषः । अन्धकशत्रुनन्दनः शिवपुत्रः कुमारः ( कर्ता ) द्विषद्बलत्रासविभीषिता रिपुसैन्यभयभीता दिवौकसां देवानां चमूः सेनाः ( कर्म ) प्रसादपीयूषधरेण अनुग्रहामृतयुक्तेन चक्षुषा नेत्रेण अपश्यत् दृष्टवान् ॥ ५० ॥

[3]उत्साहिताः शक्तिधरस्य दर्शनान्मृधे महेन्द्रप्रमुखा [4]मखाशनाः ।
[5]अहं मृधे जेतुमरीनरीरमन् कस्य वीर्याय वरस्य सङ्गतिः ॥ ५१ ॥

सी०—उत्साहिता इति । शक्तिधरस्यायुधविशेषस्य धारिणः । 'शक्तिर्बले प्रभावादौ शक्तिः प्रहरणान्तरे' । इति विश्वः । अत एव मृधे सङ्ख्ये । 'मृधमास्कन्दनं सङ्ख्यम्' इत्यमरः । तस्य कुमारस्य दर्शनाद्धेतोरुत्साहिता उत्साहं प्राप्ता महेन्द्रप्रमुखा इन्द्रपूर्वा मखाशना यज्ञहविर्भोक्तारो देवाः मृधे सङ्गरे 'अहमेवारीञ्शत्रूञ्जेतुं समर्थोऽस्मि नान्यः' इति वदन्तः सन्तोऽरीरमन्नरेमिरे । तथाहि । वरस्य श्रेष्ठस्य सङ्गतिः सम्बन्धः कस्य पुरुषस्य वीर्याय वीर्यं कर्तुं न भवति । अपि तु सर्वस्यापीत्यर्थः । गतवीर्यस्य वीर्यकरणे महदाश्रय एव निदानं नान्यदिति काक्वा ध्वन्यते ॥ ५१ ॥

शि०—उत्साहिता इति महेन्द्रप्रमुखा इन्द्रप्रधाना मखाशना यज्ञहविर्भोजिनो देवा मृधे सङ्ग्रामे शक्तिधरस्य तदाख्यायुधधारिणः कार्त्तिकेयस्य दर्शनान्निरीक्षणात् हेतोः उत्साहिताः सन्तः मृधे सङ्ग्रामेऽरीन् शत्रून् जेतुं पराभवयितुम् अहमहमेव दक्षोऽस्मीति शेषः । इति वदन्त सन्तः अरीरमन् चिक्रीडुः । तथा हि वरस्य महतः सङ्गतिः सम्पर्कः कस्य पुरुषस्य वीर्याय सामर्थ्याय वीर्यं कर्तुमित्यर्थः । न प्रभवति किन्तु सर्वस्यापीत्यर्थः ॥ ५१ ॥

---

१. विसंकुलाश्चमूम्, २. महाहवोत्सवम्, महाहवे बलम्, ३. उत्साहितः, ४. सुधाशिनः ५. अहंजुष, आयत्नतः,

परस्परं वज्रधरस्य सैनिका द्विषोऽपि योद्धुं [1]स्वकरोद्धृतायुधाः ।
[2]वैतालिकश्रावितताराविक्रमाभिधानमीयुर्विजयैषिणो रणे ॥ ५२ ॥

सी०—परस्परमिति । रणे युद्धे विजयैषिणो विजयं प्राप्तुमिच्छवः । अत एव योद्धुं युद्धं कर्तुं स्वकरैरात्मीयपाणिभिरुद्धृतानि गृहीतान्यायुधानि खड्गादीनि यैस्तथाभूता वज्रधरस्येन्द्रस्य द्विषोऽपि तारकस्य च । अपिरत्र समुच्चयार्थः । 'अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये' । इति विश्वः । सैनिकाः सेनाचराः । 'चरति' इति ठक् । वैतालिकैर्वन्दिभिः श्रावितान्याकर्णितानि तार उच्चैर्विक्रमोऽभिधानानि नामानि च यस्मिन्कर्मणि यथा तथा परस्परमन्योन्यमीयुः प्रापुः । मिमिलुरिति यावत् ॥ ५२ ॥

शि०—परस्परमिति । रणे सङ्ग्रामे विजयैषिणः विजयाभिलाषिणः अत एव योद्धुं संग्रामं कर्तुं स्वकरोद्धृतायुधा निजहस्तोत्थापितास्त्रा वज्रधरस्य शक्रस्य द्विषः शत्रोस्तारकस्यापि सैनिकाः सेनाः वैतालिकश्रावितताराविक्रमाभिधानं बन्दिगणाकर्णितोच्चवीर्यनामधेयं यथा तथा परस्परमन्योऽन्यमीयुः प्राप्नुवन् । सुरासुरसैन्यानि योद्धुमन्योऽन्यं संमिमिलुरित्यर्थः ॥ ५२ ॥

[3]सङ्ग्रामं प्रलयाय संनिपततो वेलामतिक्रामतो
वृन्दारासुरसैन्यसागरयुगस्या[4]शेषदिग्व्यापिनः ।
[5]कालातिथ्यभुजो बभूव बहलः कोलाहलः क्रोष[6]णः
शैलोत्तालतटीविघट्टनपटुर्ब्रह्माण्डकुक्षिंभरिः ॥ ५३ ॥

सी०—संग्राममिति । प्रलयाय नष्टचेष्टतायै । तां कर्तुमित्यर्थः । संग्रामं समरं संनिपततः समुदितवतः । अन्यत्र प्रलयाय लोकसंहाराय संनिपततो वर्धमानस्य । अत एव वेलां मर्यादाम् । एकत्र न्यायाचरणम्, अन्यत्रावधिम् । सीमानमिति यावत् । 'वेलाकाले च जलधौ तीरे नीरविकारयोः । क्लिष्टरसने रोगे च सीम्नि वाचि युधि स्त्रियाम्' इति विश्वः । अतिक्रामत उल्लङ्घयतः । निर्मर्यादत्वेन युध्यमानस्य सीमानमुल्लङ्घ्य चलत इत्यर्थः । अत एवाशेषासु दिक्षु व्यापिनो व्याप्नुवतः । उभयत्रापि समानमेतत् तथा कालस्य यमस्य सम्बन्ध्यातिथ्यमतिथ्युचितसत्कारं भुनक्ति भोक्ष्यति

---

१. प्रवरोद्धृतायुधाः प्रचुरोद्धतायुधाः, २. वैमानिकैः श्रावितमानसत्क्रमाभिधानम्, वैतालिकैः श्रावितनामविक्रमाः सोत्साहम्, वैतालिकश्रावितनामविक्रमाभिधानम्, ३. संग्रामप्रलयाय, संग्रामे प्रलयाय, ४. आरोहदिग्व्यापिनः, ५. कालातिथ्यपृथुप्रदानबहलः, कालातिथ्यपृथूच्चचाल बहलः, ६. क्रोधिनः क्रोधिलः,

तथोक्तस्य। 'वर्तमानसामीप्ये—' इति लट्। अन्यत्र कालं कृष्णमातिथ्यमतिथिसत्कारं भुनक्ति भोजयति। अन्तर्भावितणिजर्थः। प्रलये वर्धमानसमुद्रनीरे केवलं तस्यैव वर्तमानत्वात्। वृन्दाराणां देवानामसुराणां च सैन्ये ते एव सागरौ समुद्रौ तयोर्युगस्य युग्मस्य। 'युग्मं तु युगुलं युगम्' इत्यमरः। तत्सम्बन्धी क्रोषणो मुखरः कोलाहलः कलकलो बहलः। अत एव शैलसम्बन्धिनीनामुत्ताला उच्चतालवृक्षसहिता यास्तटयः सैकतानि। शृङ्गाणीति यावत्। तासां विघट्टने स्फोटने पटुः समर्थः। अत एव ब्रह्माण्डेन कुक्षिं भरति तथोक्तश्च बभूव। शार्दूलविक्रीडितं वृत्तम्। 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्॥ ५३॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसम्भवश्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसम्भवे सुरासुरसैन्यसंघट्टो नाम पञ्चदशः सर्गः॥

शि०—सङ्ग्राममिति। प्रलयाय प्रलयं कर्तुमित्यर्थः। (तुमर्थाच्चेति चतुर्थी) सङ्ग्रामं युद्धं संनिपततः सङ्घीभूतस्य एकत्रीभूतस्येति यावत्। वेलामुचिताचरणमतिक्रामतस्त्यजतः अत एवाऽशेषदिग्व्यापिन सकलाशा व्याप्नुवतः तथा यमातिथ्यभुजः कृतान्तातिथियोग्यसत्कारापन्नस्य वृन्दारकासुरसैन्यसागरस्य देवदैत्ययुद्धार्णवद्वयस्य बहलोऽधिकः क्रोषणो मुखरः कोलाहलः कलकलः शैलोत्तालतटीविघट्टनपटुः पर्वतोच्चतालवृक्षसहितकूलविघातदक्षः तथा ब्रह्माण्डकुक्षिम्भरिः ब्रह्माण्डोदरपूरकश्चाभूत्। सागरस्याप्युक्तविशेषणानि योज्यानि। सागरपक्षे—प्रलयाय लोकक्षयाय—सन्निपततः समेधमानस्य वेलामतिक्रामतः सीमानमुल्लङ्घयतः अशेषदिग्व्यापिनः—विशेषणमिदमुभयपक्षेऽपि तुल्यम्। कालातिथ्यभुजः कृष्णातिथिसत्कारविधातुः प्रलयक्षणनिखिलजीवनाशेन केवलं कृष्णस्यैवोदेधौ विद्यमानत्वादिति तात्पर्यम्॥ ५३॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितया शिशुहितैषिणीसमाख्यया व्याख्यया सहितः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये सुरासुरसैन्यसंघट्टो नाम पञ्चदशः सर्गः॥ १५॥

## षोडशः सर्गः

अथान्योऽन्यं विमुक्तास्त्रशस्त्रजालैर्भयं[2]करैः ।
युद्धमासीत्सुनासीरसुरारिबलयोर्महत्[3] ॥ १ ॥

सी०—अथेति । अथ सुरासुरासंमेलनानन्तरम् । भयंकरैर्भयमुत्पादयद्भिः । अन्योन्यं परस्परं विमुक्तानि प्रहर्तुं विसृष्टान्यस्त्रशस्त्राणां शरादिमोहनादिनां जालानि समूहास्तैः कृत्वा । सुनासीर इन्द्रः, सुरारिस्तारकः, तयोर्बले सैन्ये तयोः । 'बलं गन्धरसे रूपे स्थामनि स्थौल्यसैन्ययोः' । इति विश्वः । महद्घोरं युद्धं सङ्ग्राम आसीद्बभूव । सर्गेऽस्मिन्वृत्तमनुष्टुप् ॥ १ ॥

शि०—अथेति । अथानन्तरं सुरासुरसैन्यसम्मेलनोत्तरमित्यर्थः । भयङ्करैः भीतिजनकैः अन्योन्यं परस्परं विमुक्तास्त्रशस्त्रजालैः विसृष्टबाणादिमोहनादिसमूहैः ( करणैः ) सुनासीरसुरारिबलयोरिन्द्रतारकसैन्ययोः सम्बन्धि महत् घोरं तुमुलमिति यावत् युद्धं समर आसीत् जातम् ॥ १ ॥

पत्तिः पत्तिमभीयाय रणाय रथिनं[1] रथी ।
तुरङ्गस्थं तुरङ्गस्थो दन्तिस्थं दन्तिनि स्थितः ॥ २ ॥

सी०—पत्तिरिति । पत्तिः पादचारी पत्तिं पादचारिणम्, रथी रथारूढो रथिनं रथारूढम्, तुरङ्गस्थोऽश्ववाहस्तुरङ्गस्थमश्ववाहम्, दन्तिनि गजे स्थितो दन्तिस्थं गजारोहम्, रणाय रणं कर्तुमभीयाय संमुखमगमत् । अत्र प्रत्येकं क्रियासम्बन्धो विधेयः । अन्यथा बहुत्वप्रसङ्गः ॥ २ ॥

शि०—पत्तिरिति । पत्तिः पादचारी पत्तिं पादचारिणं रणाय रणं कर्तुमभीयाय जगाम । रथी रथस्थः रथिनं रथस्थं रणायाभीयाय तुरङ्गस्थोऽश्वारूढः तुरङ्गस्थमश्वारूढः रणायाभीयाय दन्तिनि गजे स्थित आरूढो दन्तिस्थं गजारूढं रणायाभीयाय ॥ २ ॥

युद्धाय धावतां घोरं वीराणामितरेतरम् ।
वैतालिकाः [4]कुलाधीशा नामान्यलमुदाहरन् ॥ ३ ॥

सी०—युद्धायेति । इतरेतरं परस्परं युद्धाय युद्धं कर्तुं घोरं गम्भीरं यथा तथा धावतां विद्रवतां वीराणां योद्धॄणां नामानि कुलाधीशाः कुलस्वामिनः । कुलप्रदीपा इति यावत् । अनेन स्वात्मविद्यायामतिप्रावीण्यं व्यज्यते । वैतालिका बन्दिनः । अलं भूषणम् । शोभेति यावत् । यथा

---

१ अन्योन्य, २. भयंकरम्, ३. द्वयोः ४ कुलाधीशनामानि,

स्यात्तथोदाहरन्नूचुः। अयममुकसंज्ञको वीरो धावति, अयममुकसंज्ञको वीरो धावतीत्येवंभूतं जगदुरित्यर्थः, आत्मपरावबोधार्थमिति भावः ॥ ३ ॥

शि०—युद्धायेति। कुलाधीशाः कुलश्रेष्ठाः वैतालिकाः बन्दिनः (कर्तारः) इतरेतरमन्योन्यं युद्धाय युद्धं कर्तुं धीरं मन्दं यथा तथा धावतां गच्छतां वीराणां योद्धृणां नामानि नामधेयानि अलं भूषणं यथा तथा उदाहरन् अब्रुवन् ॥ ३ ॥

[1]पठतां बन्दिवृन्दानां प्रवीरा विक्रमावलीम्।
क्षणं विलम्ब्य चित्तानि ददुर्युद्धोत्सुकाः [2]पुरः ॥ ४ ॥

सी०—पठतामिति। प्रवीराः प्रकृष्टयोद्धारो विक्रमावलीं पराक्रमसमाहारं पठतां स्तुवताम् 'साधु पराक्रान्तम्, साधु पराक्रान्तम्' इति वदतां बन्दिवृन्दानां वैतालिकसमूहानां पुरोग्रे चित्तानि मनांसि क्षणं विलम्ब्य ददुः। यतो युद्धोत्सुकाः। समरोत्कण्ठिताः। समरोत्कण्ठितमनोदानाभावो न श्रवणेन्द्रियस्य केवलस्यैवार्थबोधासम्भवात् ॥ ४ ॥

शि०—पठतामिति। युद्धोत्सुका रणोत्कण्ठिता प्रवीराः प्रकृष्टयोद्धारो विक्रमावलीं सामर्थ्यपङ्क्ति पठतां कथयतां बन्दिवृन्दानां बन्दिसमूहानां पुरोऽग्रे क्षणं मुहूर्तं विलम्ब्य व्यतीत्य चित्तानि मानसानि ददुर्व्यतरन्। कार्यासक्तानां चित्तानि कार्यान्तरे विलम्बेन लगन्तीति भावः ॥ ४ ॥

सङ्ग्रामानन्दवर्धिष्णौ विग्रहे [3]पुलकाञ्चिते।
आसीत्कवचविच्छेदो वीराणां[4] मिलतां मिथः ॥ ५ ॥

सी०—संग्रामेति संग्रामानन्देन समरोत्साहेन वर्धिष्णौ वृद्धिशीले अत एव पुलकाञ्चिते रोमाञ्चव्याप्ते मिथो मिलतां सङ्गच्छमानानां वीराणां योद्धृणां विग्रहे शरीरे। जातावेकवचनम्। कवचानां वारणानां विभेद आसीत् ॥ ५ ॥

शि०—सङ्ग्रामेति। मिथोऽन्योन्यं मिलतां सङ्गच्छमानानां वीराणां योद्धृणां सम्बन्धिनि सङ्ग्रामानन्दवर्द्धिष्णौ युद्धोत्साहवर्द्धनशीले पुलकाञ्चिते रोमोद्गमव्याप्ते विग्रहे शरीरे कवचविच्छेदो वर्मभेद आसीत् ॥ ५ ॥

निर्दयं खड्गभिन्नेभ्यः कवचेभ्यः [5]समुत्थितैः।
आसन्व्योमदि[6]शस्तूलैः [7]पलितैरिव [8]पाण्डुराः ॥ ६ ॥

---

१. पठिता बन्दिभिः श्रुत्वा, प्रवीरविरुदावलीः, पठिता बन्दिवृन्देन प्रवीरविरुदावलीः; पठतां बन्दिवृन्दानां प्रवीरा विरुदावलिम्, २. अपि, ३. पुलकाङ्कित, ४. धीराणाम्, ५. समुच्छ्रितैः, ६. स्थूलैः, ७. पतितैः, ८ पञ्जराः,

सी०—निर्दयमिति। निर्दयं निष्कृपं खड्गभिन्नेभ्यः करवालविदीर्णेभ्यः कवचेभ्यः सकाशात्समुत्थितैरुड्डयितैस्तूलैः कार्पासैः। 'तूलः पिचौ भवेत्तूलं ब्रह्मदारुविहायसोः'। इति विश्वः। पलितैरिव जराजनितशुक्लत्वैरिव। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। व्योमसहिता दिशः पाण्डुराः श्वेता आसन्। उत्प्रेक्षया कवचविच्छेदेऽपि वीराणां युद्धविषयक उत्साहो न विच्छिन्न इति ध्वन्यते। अतोऽलङ्कारेण वस्तुध्वनिः॥ ६॥

शि०—निर्दयमिति। निर्दयं निष्ठुरं यथा तथा खड्भिन्नेऽभ्योऽसिविदीर्णेभ्यः कवचेभ्यो वारणेभ्यः सकाशात् समुत्थितैः समुत्पतितैस्तूलैः कार्पासैः पलितैर्जराजनितशौक्ल्यैरिव व्योमदिशोऽन्तरिक्षसहिता आशाः पाण्डुराः शुक्ला आसन् बभूवुः। अत्रोत्प्रेक्षयाऽलङ्कारेण कवचभेदेऽपि न वीरोत्साहत्याग इति वस्तु ध्वन्यते॥ ६॥

खड्गा रुधिरसंलिप्ताश्चण्डांशुकरभासुराः।
इतस्ततोऽपि वीराणां [1]विद्युतां वैभवं दधुः॥ ७॥

सी०—खड्गा इति। रुधिरेण संलिप्ताः। तथेतस्ततश्चण्डांशुकरैः सूर्यकिरणव्यतिकरैर्भासुराश्चमत्कुर्वन्तो वीराणां खड्गा विद्युतां वैभवं सादृश्यं ददुः। तद्वच्छुशुभिर इत्यर्थः। अत्रोपमया खड्गानां वीरकरसंपर्कजनितपरिकम्पचमत्कारकारित्वं ध्वन्यते। अतोऽत्राप्यलंकारेण वस्तुध्वनिः। तथा वीरकरसंपर्कजनितपरिकम्पचमत्कारकारित्वरूपव्यङ्ग्यो प्रतिद्वन्द्विविहननजनितद्विगुणोत्साहवत्त्वं च व्यज्यते॥ ७॥

शि०—खड्गा इति। रुधिरसंलिप्ताः शोणितव्याप्तास्तथा इतस्ततः चण्डांशुकरभासुराः भानुकिरणभासमाना वीराणां योद्धॄणां खड्गा असयोऽपि विद्युतामचिरप्रभाणां वैभवं सम्पत्ति साम्यमिति यावत्। दधुर्धृतवन्तः॥ ७॥

विसृजन्तो मुखैर्ज्वाला भीमा इव भुजंगमाः।
विसृष्टाः सुभटै [2]रुष्टैर्व्योम व्यानशिरे [3]शराः॥ ८॥

सी०—विसृजन्त इति। रुष्टैः सुभटैः शोभनयोद्धृभिर्विसृष्टा विमुक्ताः शरा बाणाः। मुखैरग्रैर्ज्वाला उल्का विसृजन्तो मुञ्चन्तः। अत एव भीमा भयानका भुजङ्गमा इवेत्युत्प्रेक्षा। व्योम कर्म। व्यानशिरे व्यापुः। अत्र सुभटकर्तृकविसर्जनव्यापारपूर्वकव्योमव्याप्त्या प्राग्भाविताविशिष्टशत्रुविग्रहभेदनं ध्वन्यते। अन्यथा व्योमव्याप्तिमात्रस्यैव विवक्षितत्वेन व्यापृतेर्व्यर्थत्वमुद्भाव्येत। तेनात्र वस्तुना वस्तुध्वनिः॥ ८॥

शि०—विसृजन्त इति। रुष्टैः क्रुद्धैः सुभटैः प्रकृष्टवीरैः विसृष्टा विमुक्ताः;

---

१. वैद्युतम्; विद्युतः   २. तुष्टैः, तुङ्गा,   ३. असुराः

शरा बाणाः ( कर्तारः ) मुखैरास्यैः ज्वाला उल्का विसृजन्तो मुञ्चन्तो भीमा भयानका भुजङ्गमाः सर्पा इव व्योमाऽन्तरिक्षं ( कर्म ) व्यानशिरे व्याप्नुवन् ॥८॥

[1]बाढं वपूंषि निर्भिद्य धन्विनां निघ्नतां मिथः।
अशोणितमुखा भूमिं प्राविशन्दूरमाशुगाः॥ ९॥

सी०—बाढमिति। मिथोऽन्योन्यं दूरमतिशयेन निघ्नतां प्रहरतां धन्विनां धनुर्धारिणां वपूंषि गात्राणि बाढं गाढम्। दृढमितियावत्। निर्भिद्याप्यशोणितमुखाः शोणितसाहित्यराहित्यवन्ति मुखान्यग्राणि येषां त आशुगा बाणा भूमिं प्राविशन्प्रविष्टाः। अत्र विभेदका अप्यशोणितमुखा इति विरोधाभासालंकारेण बाणानामतिशीघ्रगामित्वरूपवस्तुध्वनिः। न च शीघ्रमेव व्यञ्जनीयमिति वाच्यम्। आशुगा इत्यनेनैव तदभिहितत्वात्॥ ९॥

शि०—बाढमिति। मिथः परस्परं दूरमत्यर्थं निघ्नतां प्रहारं कुर्वतां धन्विनां धनुर्द्धराणां वीराणां वपूंषि शरीराणि बाढं दृढं यथा तथा निर्भिद्य विदीर्य अशोणितमुखा अरुधिरास्या आशुगा बाणा भूमिं वसुन्धरां प्राविशन् विविशुः॥ ९॥

निर्भिद्य[2] दन्तिनः पूर्वं पातयामासुराशुगाः।
पेतुः प्रवरयोधानां प्रीतानामाहवोत्सवे॥ १०॥

सी०—निर्भिद्येति। आहवोत्सवे संग्रामरूपोत्सवे प्रीतानां प्रवरयोधारूनामतिश्रेष्ठयोद्धृणां सम्बन्धिन आशुगा बाणा दन्तिनोगजान्निर्भिद्य भेदयित्वा पूर्वं पातयामासुः। पश्चात्स्वयमपि पेतुः। अत्र वाक्यार्थरूपवस्तुना प्राणापहारकं तेषामतितैक्ष्ण्यं वस्तु ध्वन्यत इति वस्तुना वस्तुध्वनिः॥ १०॥

शि०—निर्भिद्येति। आहवोत्सवे रणानन्दे प्रीतानां प्रसन्नानां प्रवरयोधानां महावीराणाम् सम्बन्धिन आशुगा बाणा दन्तिनो द्विपान् निर्भिद्य विदार्य पूर्वं प्राक् पातयामासुः, तानिति शेषः। पश्चात्स्वयमपि पेतुः॥ १०॥

ज्वलदग्निमुखैर्बाणैर्नीरन्ध्रैरितरेतरम्।
उच्चैर्वैमानिका व्योम्नि [3]कीर्णे दूरमपासरन्॥ ११॥

सी०—ज्वलदिति। ज्वलदग्निमुखैः प्रज्वलद्वह्निसहिताग्रैः। तथेतरेतरं परस्परं नीरन्ध्रैर्निर्गतावकाशैः। परस्परसंघट्टितैरिति तात्पर्यार्थः। बाणैः शरैः। उच्चैरतिशयितं यथा तथा कीर्णे व्याप्ते व्योम्नि वैमानिका विमानचारिणो देवा विष्णवादयो दूरमपासरन्दुद्रुवुः। आत्मशरीरसम्बन्ध-

१. गाढम्, २. निर्भेद्य, ३. कीर्णैः,

शङ्काकुलत्वादिति भावः ॥ ११ ॥

शि०--ज्वलदिति । ज्वलदग्निमुखैर्दीप्यमानानलयुक्ताग्रभागैः तथा इतरेतरमन्योन्यं नीरन्ध्रैरवकाशशून्यैः अन्योन्यमिलितैरिति यावत् । बाणैराशुगैः उच्चैरधिकं यथा तथा कीर्णे व्याप्ते सुरा विष्णुप्रभृतयोऽपासरन् पलायाञ्चक्रिरे ॥ ११ ॥

विभिन्नं धन्विनां बाणैर्व्यथा[१]र्तमिव विह्वलम् ।
ररास विरसं व्योम [२]श्येनप्रतिरवच्छलात् ॥ १२ ॥

सी०--विभिन्नमिति । धन्विनां बाणैर्विभिन्नं विदीर्णम् । अत एव व्यथार्तं पीडया दुःखितम् । अत एव विह्वलम् । इतिकर्तव्यताविस्मरणाश्रयमित्यर्थः । व्योम नभः श्येनप्रतिरवस्य पक्षिविशेषप्रतिध्वनेश्छलान्मिषेण विरसं कठोरं यथा तथा ररासेव रुरोदेवेत्युत्प्रेक्षालङ्कारः ॥ १२ ॥

शि०--विभिन्नमिति । धन्विनां धनुर्द्धराणां बाणैः शरैर्विभिन्नं विदीर्णम् अत एव व्यथार्त्तं बाधाऽऽकुलम् अत एव विह्वलं विस्मृतेतिकर्तव्यताकं व्योम अन्तरिक्षं (कर्तृ) श्येनप्रतिरवच्छलात् श्येनाख्यपक्षिविशेषप्रतिशब्दव्याजात् विरसं नीरसं यथा तथा ररास चुक्रोशेव । अत्र योद्धृबाणाकुले व्योम्नि श्येनप्रतिशब्दद्वारा रोदनोत्प्रेक्षणादुत्प्रेक्षाऽलङ्कारः ॥ १२ ॥

चापैराकर्णमाकृष्टैर्विमुक्ता दूरमाशुगाः ।
अधावन्रुधिरास्वादलुब्धा इव रणैषिणाम् ॥ १३ ॥

सी०--चापैरिति । आकर्णं कर्णपर्यन्तमाकृष्टे रणैषिणां योद्धृणां सम्बन्धिभिश्चापैर्धनुर्भिर्विमुक्ता विसृष्टा आशुगाः शरा रुधिरास्वादे लुब्धा लम्पटा इव दूरमधावन्विद्रुताः । लम्पटा अपि भोजनास्वादाय द्रुतं पलायंते तद्वत् ॥ १३ ॥

शि०—चापैरिति । आकर्ण श्रोत्रपर्यन्तम् आकृष्टैः रणैषिणां युद्धाभिलाषिणां योद्धृणामित्यर्थः । चापैर्विमुक्ता विसृष्टा आशुगा बाणा रुधिरास्वादलुब्धाः शोणितास्वादलम्पटा इव दूरमसन्निकटप्रदेशमिति शेषः । अधावन् पलायन्त । अत्रोपमाऽलङ्कारः ॥ १३ ॥

गृहीताः पाणिभिर्वीरैर्विकोशाः खड्गराजयः ।
[३]कान्तिजालच्छलादाजौ व्यहसन्संमदादिव ॥ १४ ॥

---

१. यथार्थमिव विह्वलम्, वेश्याया इव विह्वलम्, विशाख इव विह्वली,

२. सेनारतिरवच्छलात्, सेनापतिरिवच्छलात्, ३. कान्तिजालच्छलादाजौ व्यहसन्समदा इव, कान्त्याननच्छलादाजेव्यर्हसनमुमदा इव, कान्त्याजनच्छलादानैर्व्यहसन् प्रमदा इव.

सी०--गृहीता इति। आजौ संग्रामे वीरैः कर्तृभिः। पाणिभिर्गृहीताः। तथा विकोशाः। कोशरहिताः। 'कोशोऽस्त्री कुड्मले पाले दिव्यखड्गापिधानके' इति मेदिनी। खड्गराजयः करवालपङ्क्तयः कान्तिजालच्छलाद् द्युतिसमूहकैतवेन संमदाद्वीराणामपि शत्रुविघातसाधने वयमेव यथोचितास्तथा नान्य इति प्रमोदाद्व्यहसन्निव जहसुरिवेत्युत्प्रेक्षा॥

शि०—गृहीता इति। आजौ सङ्गरे वीरैर्योद्धृभिः (कर्तृभिः) पाणिभिः करैः करणैः गृहीता धृताः खड्गराजयः असिपङ्क्तयः कान्तिजालच्छलात् दीप्तिसमूहकैतवात् संमदात् अतिहर्षात् व्यहसन्निव हास्यमकुर्वन्निव॥ १४॥

खड्गाः शोणितसंदिग्धा नृत्यन्तो वीरपाणिषु।
[1]रजोघने रणेऽनन्ते विद्युतां [2]वैभवं दधुः॥ १५॥

सी०—खड्गा इति। शोणितेसन्दिग्धा रुधिरसंलिप्ताः। तथा वीरपाणिषु नृत्यन्तः खड्गाः। रजसा घने सान्द्रे। तथानन्तेऽपारे रणे विद्युतां वैभवं दधुः। तद्वच्छुशुभिर इत्यर्थः। अत्र पदार्थवृत्तिनिदर्शनालङ्कारः॥

शि०--खड्गा इति। शोणितसंदिग्धाः शोणितेन संदिग्धाः लिप्ता रुधिरव्याप्ता इत्यर्थः। वीरपाणिषु वीराणां योद्धृणां पाणयो हस्तास्तेषु नृत्यन्तो नृत्यं कुर्वन्तः खड्गाः करवालाः (कर्तारः) रजोघने रजसा रेणुना घनः सान्द्रस्तस्मिन् रेणुव्याप्त इत्यर्थः। अनन्तेऽविद्यमानोऽन्तः पारो यस्य स तस्मिन् अपार इत्यर्थः। रणे सङ्ग्रामे विद्युतामचिरप्रभाणां वैभवं सम्पत्ति शोभामिति यावत् दधुः धृतवन्तः। विद्युत इव शोभन्ते स्म। अत्र खड्गा विद्युत इवेति बिम्बप्रतिबिम्बभावान्निदर्शनाऽलङ्कारः॥ १५॥

कुन्ताश्चकाशिरे चण्डमुल्लसन्तो [3]रणार्थिनाम्।
[4]जिह्वाभोगा यमस्येव लेलिहाना [5]रणाङ्गणे॥ १६॥

सी०--कुन्ता इति। रणाङ्गणे संग्रामचत्वरे चण्डं प्रचण्डं यथा तथोल्लसन्तो दीप्यमानाः कुन्ताः प्रासाः। भल्ला इति यावत्। 'कुन्तः प्रासे चण्डभावे क्षुद्रजन्तौ गवेधुके'। इतिविश्वः। लेलिहानाः पुनः पुनरतिशयेन वा लिहन्ति ते लेलिहानाः। आस्वादयन्त इत्यर्थः। लिहेर्यङन्ताच्छानच्। यमस्य जिह्वाभोगा रसनारूपयन्त्राणीव। 'आभोगो वरुणच्छत्रे पूर्णतायन्त्रयोरपि'। इति विश्वः। चकाशिरे दिद्युतिरे॥ १६॥

शि०—कुन्ता इति। रणाङ्गणे युद्धाजिरे चण्डं भीषणं यथा तथोल्लसन्तो

---

१. रजोघनरणे, २. विभ्रमम्, ३. रणार्तिपाः, ४. जिह्वाभागा,
५. रणक्षये, रणाजिरे,

दीप्यमाना रणार्थिनां सङ्ग्रामाभिलाषुकाणां कुन्ताः प्रासाः लेलिहाना अत्यर्थमास्वादयन्तो यमस्य कृतान्तस्य जिह्वाभोगा रसनायन्त्राणीव चकाशिरे दिदीपिरे। अत्रोपमा ॥ १६ ॥

प्रज्वलत्कान्ति[१]चक्राणि चक्राणि वरचक्रिणाम्।
[२]चण्डांशुमण्डलश्रीणि रणव्योमनि बभ्रमुः ॥ १७ ॥

सी०—प्रज्वलदिति। प्रज्वलत्प्रदीप्यमानं कान्तिचक्रं द्युतिमण्डलं येषां तानि तथा चण्डांशुमण्डलस्य सूर्यमण्डलस्य श्रीरिव श्रीः शोभा येषां तानि। वराः श्रेष्ठा ये चक्रिणो योधास्तेषां सबन्धानि चक्राण्यायुधविशेषाः। 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः। ग्रामजाले कुलालस्य भाण्डराष्ट्रास्त्रयोरपि'। इति विश्वः। रणव्योमनि संग्रामरूपगगने बभ्रमुः। 'वा जृभ्रमुत्रसाम्' इत्येत्वाभ्यासलोपयोर्विकल्पः। अथ व्याख्यानान्तरम्—वरचक्रिणां वराणां वीराणां ये चक्रिणो रथास्तेषां चक्राण्यङ्गानि रणव्योमनि बभ्रमुः। विशेषद्वयमुभयत्रापि समानम् ॥ १७ ॥

शि०—प्रज्वलदिति। प्रज्वलत्कान्तिचक्राणि दीप्यमानदीप्तिसमूहानि चण्डांशुमण्डलश्रीणि सूर्यबिम्बशोभानि वरचक्रिणां श्रेष्ठयोधानां चक्राणि तदाख्यायुधविशेषाः रणव्योमनि रणं व्योमेव तस्मिन् बभ्रमुः संचेलु। ( पक्षान्तरे ) प्रज्वलत्कान्तिचक्राणि प्रदीप्यमानद्युतिव्रजानि चण्डांशुमण्डलश्रीणि सूर्यमण्डलच्छवीनि वरचक्रिणां श्रेष्ठरथानां चक्राण्यङ्गानि ( कर्तृणि ) रणव्योमनि रणं व्योमेव तस्मिन् आकाशसदृशरणे इत्यर्थः। बभ्रमुः भ्राम्यन्ति स्म। अत्र चक्रपदस्य श्लिष्टत्वाच्छ्लेषाऽलङ्कारः। रणे व्योमसादृश्यारोपाद्रूपकालङ्कारश्चेत्युभयोः संसृष्टिः ॥१७॥

[३]केचिद्वीरैः प्रणादैश्च [४]वीराणामभ्युपेयुषाम्।
निपेतुः क्षोभतो [५]वाहादपरे मुमुहुर्मदात् ॥ १८ ॥

सी०—केचिदिति। अभ्युपेयुषां संमुखमागतवतां वीराणां घोरैर्गम्भीरैः प्रणादैर्गर्जितैः केचिद्वीराः क्षोभतश्चित्तसंचलनाद्धेतोर्वाहादश्वान्निपेतुर्मुमूर्च्छुः। अपरे केचिन्मदाद् गर्वान्मुमुहुः। चेतनाविरहिता बभूवुरित्यर्थः ॥ १८ ॥

शि०—केचिदिति। केचिद्वीरा अभ्युपेयुषां संमुखमागतानां वीराणां घोरैर्गम्भीरैः प्रणादैर्गर्जनैः क्षोभतो मनः सञ्चलनाद्धेतोः वाहादश्वान्निपेतुः अपरेऽन्ये वीरा मदात् अभिमानात् हेतोः मुमुहुर्मूर्च्छां प्रापुः। चैतन्यशून्या बभूवुरित्यर्थः ॥ १८ ॥

---

१. वक्राणि, २. चण्डेषुमण्डल, ३. घोरैः, ४. तु, ५. वाहा न,

कश्चिदभ्यागते वीरे जिघांसौ मुदमादधौ।
परावृत्य गते [1]क्षुब्धे विषसादाहवप्रियः॥ १९॥

सी०—कश्चिदिति। कश्चिद्वीरो जिघांसौ हन्तुमिच्छौ वीरेऽभ्यागते संमुखमागते सति। मुदमादधौ प्रससाद। अथ च क्षुब्ध एतदीयप्रहारक्षुभितेऽत एव परावृत्य गते तु विषसाद खिन्नोऽभूत्। यत आहवप्रियः संग्रामप्रियः। वीराणां प्रतिद्वन्द्विसंमुखागमनमेव प्रीतिजनकं भवतीति भावः॥ १९॥

शि०—कश्चिदिति। आहवप्रियः प्रियसङ्ग्रामः (वा प्रियस्येति वार्तिकेन बहुव्रीहौ प्रियशब्दो वा पूर्वं प्रयुज्यते) कश्चिद्वीरो जिघांसौ हन्तुमिच्छौ वीरे योद्धरि अभ्यागते संमुखमागते सति मुदं हर्षमादधौ प्राप। अनन्तरं क्षुब्धे प्राप्ततदीयप्रहारजनितक्षोभेऽत एव परावृत्य गते तस्मिन्वीरे इति शेषः। विषसाद विषादं प्राप, सुशोच। द्विषदभियानमेव वीरानन्दोत्पादकमिति तात्पर्यम्। हर्षमप्राप्तौ वीराभिगमनस्याहवप्रियत्वस्य च विषादप्राप्तौ परावृत्य तदीयगमनस्याऽऽहवप्रियत्वस्य च हेतुत्वेन पदार्थहेतुकं काव्यलिङ्गद्वयम्॥ १९॥

बहुभिः [2]सह युद्ध्वा वा परिभ्रम्य रणोल्बणाः।
[3]उद्दिश्य तानुपेयुः केऽपि ये पूर्ववृता रणे॥ २०॥

सी०—बहुभिरिति। रण उल्बणा उद्भटाः केऽपि योधा रणे संग्रामे बहुभिः सह युद्ध्वा परिभ्रम्य वा तानुद्दिश्योपेयतुर्युद्धार्थमभि जग्मुः। ये पूर्वं वृता अङ्गीकृताः। यैः सह पूर्वमयोधि पुनरपि तैरेव सह योद्धुं जग्मुरित्यर्थः॥ २०॥

शि०—बहुभिरिति। रणोल्बणाः सङ्ग्रामदक्षाः केऽपि योद्धारो रणे सङ्गरे बहुभिरनेकैः प्रतिद्वन्द्विवीरैरिति शेषः। सह युद्ध्वा प्रहृत्य वाऽथवा परिभ्रम्य परि सर्वतोभावेन भ्रमणं कृत्वा ये प्रतिद्वन्द्विवीराः पूर्ववृता युद्धार्थं प्रागङ्गीकृतास्तान् प्रतिद्वन्द्विवीरान् उद्दिश्य उपेयुर्ययुर्योद्धुमिति शेषः। पुरा यैः सह युद्धं कृतवन्तस्तैः सह भूयोऽपि योद्धुमभिजग्मुरित्यर्थः॥ २०॥

[4]अभितोऽभ्यागतान्योद्धुं[5] वीरान्रण[6]मदोद्धतान्।
[7]प्रत्यनन्दन्भुजादण्डरोमोद्गमभृतो भटाः॥ २१॥

सी०-अभित इति। भुजादण्डेषु यो रोम्णामुद्गमस्तं बिभ्रति तथाभूता

---

१. क्षुब्धः, क्षुद्रे, २. सहयुध्वानः, ३. नामग्राहमुपेयुः केऽप्यग्रे पूर्ववृता वयम्, ४. अप्यागतान्, ५. योधो, ६. मदोल्बणान्, मदोद्धताः, ७. प्रत्यनन्नंस्तद्भुजादण्डे रोमोद्गमभृतो मदात्,

भटा योधाः कर्तारः। रणस्य संग्रामस्य मदेनोद्धतान्। अत एव योद्धुमभितोऽभ्यागतान्वीरान्। आलोक्येति शेषः। प्रत्यनन्दन्नहृष्यन्॥ २१॥

शि०—अभित इति। भुजादण्डरोमोद्गमभृतोधृतबाहुदण्डपुलका भटा योद्धारः (कर्तारः) रणमदोद्धतान् सङ्गरदर्पोदग्रान् अत एव योद्धुं सङ्ग्रामार्थमभितः सर्वतोऽभ्यागतान् प्राप्तान् वीरान् भटान् (कर्मभूतान्) दृष्ट्वेति शेषः। प्रत्यनन्दन् हृष्यन्ति स्म॥ २१॥

शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधः[1]।
[2]अध्याहवक्षेत्रमुप्तकीर्तिबीजाङ्कुरश्रियम्॥ २२॥

सी०—शस्त्रेति। शस्त्रैर्भिन्ना विदीर्णा य इभकुम्भा गजगण्डस्थलानि 'कुम्भः स्यात्कुम्भकर्णस्य सुते वेश्यापतौ घटे। राशिभेदे द्विपाङ्गे च' इति विश्वः। 'तेभ्योऽधश्च्युतानि मौक्तिकानि कर्तॄणि। अध्याहवक्षेत्रमधिसंग्रामकेदारम्। उप्तम्। 'टुवप् बीजसंताने' इत्यतो निष्ठा। यत्कीर्तिबीजं यशोरूपमहोरुहबीजं तस्याङ्कुरस्तस्य श्रियं शोभाम्। दधुरिति शेषः॥ २२॥

शि०—शस्त्रेति। शस्त्रभिन्नेभकुम्भेभ्यः बाणविदीर्णकरिकपोलेभ्योऽधो नीचप्रदेशे च्युतानि पतितानि मौक्तिकानि मुक्तामणयः अध्याहवक्षेत्रं संग्रामरूपकेदार इत्यर्थः। उप्तकीर्तिबीजाङ्कुरश्रियम् उप्तयशोरूपतरुकारणाङ्कुरशोभां प्रापुरिति क्रियाशेषः॥ २२॥

वीराणां विषमैर्घोषैर्विद्रुता वारणा रणे।
शास्यमाना अपि त्रासाद्भेजुर्धूताङ्कुशा दिशः॥ २३॥

सी०—वीराणामिति। रणे विषमैर्दुःसहैर्वीराणां घोषैर्विद्रुताः पलायिता वारणा गजाः शास्यमानाः शिष्यमाणा अपि। यन्तृभिरिति शेषः। धूताङ्कुशा अपमानिताङ्कुशाः सन्तस्त्रासाद्दिशो भेजुः। 'तॄफलभज—' इत्येत्वाभ्यासलोपौ। दिशः प्रति पलायांचक्रिरे॥ २३॥

शि०—वीराणामिति। रणे संग्रामे विषमैः कठिनैः वीराणां योद्धॄणां विद्रुताः पलायिता वारणा गजाः शास्यमाना आज्ञाप्यमाना अपि हस्तिपकैरिति शेषः। धूताङ्कुशास्तिरस्कृताङ्कुशाः सन्तः त्रासाद्भयात् दिश आशा भेजुः। ताः प्रतिपलायाम्बभूवुरित्यर्थः॥ २३॥

रणे बाणगणैर्भिन्ना भ्रमन्तो भिन्नयोधिनः।
निममज्जुर्मि[3]लद्रक्तनिम्नगासु[4] महागजाः॥ २४॥

---

१. अधः, २. आहवक्षेत्रमप्युप्तकीर्तिबीजोत्करश्रियम्, ३. गलत्, ४. विमग्नाः सुमहागजाः,

सी०—रण इति। रणे संग्रामे बाणगणैः शत्रुशरनिकरैर्भिन्नयोधिनो विदीर्णयन्तारः। अत एव स्वयमपि भिन्ना अत एव भ्रमन्तो महागजा मिलन्त्यः संयुजन्त्यो या रक्तस्य निम्नगा नद्यस्तासु निममज्जुः॥ २४॥

शि०—रण इति। रणे युद्धे बाणगणैः शरसमूहैः भिन्नयोधिनो विदीर्णयन्तारोऽत एव स्वयमपि भिन्ना विदीर्णा अत एव भ्रमन्तोऽटन्तो महागजा बृहत्करिणः (कर्तारः) मिलद्रक्तनिम्नगासु सङ्गच्छद्रुधिरसरित्सु निमग्ना निमग्ना बभूवुः॥२४॥

[1]अपारेऽसृक्सरित्पूरे रथेषूच्चैस्तरेष्वपि।
[2]रथिनोऽभिरिपुं क्रुद्धा हुंकृतैर्व्यसृजञ्शरान्॥ २५॥

सी०—अपार इति। उच्चैस्तरेष्वपि रथेष्वपारेऽगाधेऽसृक्सरित्पूरे रुधिरनदीप्रवाहे मज्जत्सु सत्सु रथिनो रथारोहाः क्रुद्धाः। अत एव हुंकृतैः। भीषयन्त इति शेषः। अभिरिपुं शत्रुसंमुखं शरान्व्यसृजंस्तत्यजुः।

शि०—अपार इति। उच्चैस्तरेष्वत्युन्नतेष्वपि रथेषु स्यन्दनेषु अपारेऽगम्येऽसृक्सरित्पूरे शोणितनिम्नगाप्रवाहे मज्जत्स्विति शेषः। सत्सु रथिनः स्यन्दनारूढाः क्रुद्धा रुष्टा अत एव हुङ्कृतैर्हुङ्कारशब्दैः (करणैः) रिपून् भीषयन्त इति शेषः। सन्तः अभिरिपुं रिपुसंमुखं शरान् बाणान् व्यसृजन् अमुञ्चन्॥ २५॥

खड्गनिर्लूनमूर्धानो [3]व्यापतन्तोऽपि वाजिनः।
प्रथमं पातयामासुरसिना दारितानरीन्॥ २६॥

सी०—खड्गेति। खड्गनिर्लूनमूर्धानः करवालकृत्तशिरसः। अत एव वाजिनोऽश्वाद्व्यापतन्तोऽप्यसिना खड्गेन दारितान्विदीर्णानरीन्प्रथमं पातयामासुः। पुनः स्वयं पेतुरिति शेषः। अत्र 'दारयित्वासिना रिपून्' इति पाठः साधीयान्॥ २६॥

शि०—खड्गेति। खड्गनिर्लूनमूर्धानः खड्गेन निर्लूनाश्छिन्ना मूर्धानो येषां ते तथोक्ता असिच्छिन्नोत्तमाङ्गा वीरा शेषः। अत एव वाजिनोऽश्वात् व्यापतन्तः स्रंसमाणा अपि असिना करवालेन दारितान् छिन्नान् अरीन् शत्रून् प्रथमं प्राक् पातयामासुः। पश्चात्स्वयमपि पेतुरिति शेषः। छिन्नशिरसोऽपि योद्धारः शत्रून् खड्गेन दारयित्वा निपात्य च तदनु स्वयमपि पेतुरित्यर्थः॥ २६॥

वीराणां शस्त्र[4]भिन्नानि शिरांसि निपतन्त्यपि।
अधा[5]वन्दन्तदष्टोष्ठभीमान्यभिरिपुं क्रुधा॥ २७॥

सी०—वीराणामिति। शस्त्रभिन्नान्यत एव निपतन्त्यपि दन्तैर्दष्टा

---

१. अपरेऽसृसरित्पूरे, २. अभिरथि क्रुद्धा हुङ्कृतैः, अभिक्रुधा क्रुद्धहुङ्कृतैः, ३. व्यापतन्तः ४. भिन्नानाम्, ५. दन्तदष्टोष्ठभीषणान्यरिषु,

पीडिता य ओष्ठा अधरास्तैर्भीमानि घोराणि वीराणां शिरांसि क्रुधाभि-रिपुं वैरिसंमुखमधावन् ॥ २७ ॥

शि०—वीराणामिति । शस्त्रभिन्नानि करवालनिकृत्तानि अत एव निपतन्त्यपि स्रंसमाणान्यपि दन्तदष्टोष्ठभीमानि दशनक्षताधरभयानकानि वीराणां योद्धृणां शिरांसि उत्तमाङ्गानि ( कर्तृणि ) क्रुधा कोपेन अभिरिपुं शत्रुसंमुखम् अधावन् अगच्छन् ॥ २७ ॥

शिरांसि वरयोधानामर्धचन्द्रहृतान्यलम्[1] ।
[2]आदधाना भृशं पादैः श्येना व्यानशिरे [3]नभः ॥ २८ ॥

सी०—शिरांसीति । अर्धचन्द्रहृतान्यर्धचन्द्राकारबाणकर्तितानि वरयोधानां शिरांसि । पदैरादधाना गृह्णन्तः श्येनाः पक्षिविशेषा भृशमति-शयेन नभो व्यानशिरे व्यापुः । सर्वस्मिन्नेव नभसि श्येननीतमस्तकान्येव जातानीति भावः ॥ २८ ॥

शि०—शिरांसीति । अर्द्धचन्द्रहृतानि अर्द्धचन्द्राकारशरच्छिन्नानि वरयोधानां श्रेष्ठवीराणां शिरांसि मस्तकानि ( कर्मभूतानि ) पादैश्चरणैरादधाना गृह्णन्तः श्येनास्तदाख्यपक्षिणः ( कर्तारः ) भृशमत्यर्थमलम्पर्याप्तं नभोऽन्तरिक्षं ( कर्म ) व्यानशिरे व्याप्नुवन् । सर्वं नभः श्येनगृहीतशिरोव्याप्तं बभूवेत्यर्थः ॥ २८ ॥

क्रोधादभ्यापतद्दन्तिदन्तारूढाः[4] पदातयः ।
[5]अश्वारोहा गजारोहप्राणान्प्रासैरपाहरन् ॥ २९ ॥

सी०--क्रोधादिति । पदातयः पद्गतयोऽश्वारोहाश्च क्रोधाद्धेतोर-भ्यापततां संमुखमागच्छतां दन्तिनां दन्तेष्वारूढाः सन्तः प्रासैः कुन्तैर्गजा-रोहप्राणान्यन्तृणामसूनपाहरन् ॥ २९ ॥

शि०--क्रोधादिति । पदातयः पत्तयः अश्वारोहा अश्वस्थाश्च ( अध्याहार्यो-ऽत्र च शब्दः ) क्रोधाद्रोषाद्धेतोः अभ्यापतद्दन्तिदन्तारूढाः सम्मुखमागच्छत्करिदश-नस्थाः सन्तः प्रासैः कुन्तैः गजारोहप्राणान् दन्त्यारूढजीवान् अपाहरन् व्यनाशयन् ॥ २९ ॥

शस्त्रच्छिन्नगजारोहा विभ्रमन्त इतस्ततः ।
युगान्तवातचलिताः शैला इव गजा बभुः ॥ ३० ॥

सी०--शस्त्रेति । शस्त्रैश्छिन्ना गजारोहा येषामत एवेतस्ततो विभ्रमन्तो गजाः युगान्तवातैः प्रलयप्रभञ्जनैश्चालिता उत्पातिताः शैला इव बभुः शुशुभिरे ॥ ३० ॥

---

१. अपि, २. आददाना., ३. दिशः, ४. दन्तारूढे, वाजिषु दन्तारूढां नृवाजिषु, ५. अश्वारूढाः,

शि०—शस्त्रेति । शस्त्रच्छिन्नगजारोहा असिकर्तितहस्तिपका अत एवेतस्ततो यत्र कुत्र विभ्रमन्तः पर्यटन्तो गजा हस्तिनः युगान्तवातचलिताः प्रलयकालिकवायुकम्पिताः शैलाः भूधरा इव बभुः शोभन्ते स्म । अत्रोपमा ॥ ३० ॥

मिलितेषु मिथो योद्धुं दन्तिषु प्रसभं भटाः ।
[1]अगृह्णन्युद्ध्यमानाश्च शस्त्रैः प्राणान्परस्परम् ॥ ३१ ।

सी०—मिलितेष्विति । योद्धुं मिलितेषु दन्तिषु । आरूढा इति शेषः । भटा मिथोऽन्योन्यं युद्ध्यमानाः प्रसभं बलाच्छस्त्रैः कृत्वा परस्परं प्राणानगृह्णन् ॥ ३१ ॥

शि०—मिलितेष्विति । योद्धुं युद्धार्थं मिलितेषु सङ्गतेषु दन्तिषु करिषु स्थिता इति शेषः । भटा वीरा मिथः परस्परं युध्यमानाः सन्तः प्रसभं हठात् शस्त्रैः खड्गैः ( करणैः ) परस्परमन्योन्यं प्राणानसून् अगृह्णन् अहरन् ॥ ३१ ॥

[2]रुषा मिथो मिलद्दन्तिदन्तसंघर्षजोऽनलः ।
योधाञ्शस्त्रहृतप्राणा[3]नदहत्सहसारिभिः ॥ ३२ ॥

सी०—रुषेति । रुषा क्रोधेन मिथोऽन्योन्यं मिलतां दन्तिनां ये दन्तास्तेषां संघर्षाज्जातोऽनलोऽग्निररिभिर्वैरिभिः शस्त्रैर्हृताः प्राणा येषां तान्योधान्सहसाकस्माददहत्पुप्लोष ॥ ३२ ॥

शि०—रुषेति । रुषा क्रुधा मिथः परस्परं मिलद्दन्तिसंघर्षजः सङ्गच्छत्करिसंघट्टनोद्भूतोऽनलो वह्निः ( कर्ता ) अरिभिः ( कर्तृभिः ) शस्त्रहृतप्राणान् खड्गनाशितासून् योधान् वैरीन् अदहत् भस्मावशेषान् व्यधात् ॥ ३२ ॥

आक्षिप्ता[4] अपि [5]दन्तीन्द्राः कोपनैः पत्तयः [6]परम् ।
[7]तदसूनहरन्खड्गाघातैः[8] स्वस्य पुरः प्रभोः ॥ ३३ ॥

सी०—आक्षिप्ता इति । परमतिशयितं कोपनैः क्रुद्धैर्दन्तीन्द्रैराक्षिप्ता अपि । आक्षेप्तुं शुण्डेन गृहीता अपीत्यर्थः । पत्तयः पादचारिणः स्वस्य प्रभोः पुरः खड्गाघातैस्तदसून्दन्तीन्द्रप्राणानहरञ्जगृहुः ॥ ३३ ॥

शि०—आक्षिप्ता इति । परमधिकं कोपनै रुष्टैर्दन्तीन्द्रैः करिवर्यैराक्षिप्ता गृहीता अपि पत्तयः पदातयः स्वस्यात्मनः प्रभोः स्वामिनः पुरोऽग्रे खड्गाघातैः करवालप्रहारैः तदसून् करीन्द्रप्राणान् अहरन् व्यनाशयन् ॥ ३३ ॥

उत्क्षिप्य करिभि[9]र्दूरान्मुक्तानां योधिनां दिवि[10] ।
प्रापि जीवात्मभिर्दिव्या[11] गतिर्वा विग्रहैर्मही ॥ ३४ ॥

---

१. सहयुध्वानः, २. गजारूढात्, ३. सह सादिभिः, ४. उत्क्षिप्ताः, ५. हस्तीन्द्रैः, ६. क्रूरैः, ७. ते रिपूनहनन्, ८. खड्गपातैः, ९. दूरम्, १०. दिवः, ११. दिव्याङ्गनाकण्ठपरिग्रहः, दिव्याङ्गनैषां विग्रहैर्मही,

सी०—उत्क्षिप्येति। करिभिरुत्क्षिप्योत्थाप्य दिवि दूरान्मुक्तानां जीवात्मभिर्जीवैः प्राणैरिति यावत्। दिव्या स्वर्गीया गतिः प्रापि। विग्रहैर्देहैर्मही वा प्रापि प्राप्ता। कर्मणि लुङ्॥ ३४॥

शि०—उत्क्षिप्येति। करिभिर्गजैरुत्क्षिप्योत्थाप्य दिवि नभसि दूरादतिदूरं मुक्तानामुत्क्षिप्तानां योधिनां वीराणां जीवात्मभिरसुभिः दिव्या उत्तमा स्वर्गीया इत्यर्थः। गतिः प्रापि। वाऽपि च विग्रहैः शरीरैर्मही भूतलं प्रापि प्राप्ता॥ ३४॥

खड्गैर्धवलधारालैर्निहत्य करिणां करान्।
तैर्भुवापि[1] समं [2]विद्धान्संतोषं न भटा ययुः॥ ३५॥

सी०—खड्गैरिति। भटा योद्धा धवलधारालैर्धवलां धारां लान्ति गृह्णन्ति तैः। शुभ्रधारैरित्यर्थः। अद्वितीयैः खड्गैः कृत्वा भुवा पृथिव्या समं विद्धान्प्रहृतान्करिणां कराञ्शुण्डान्निहत्यापि लवित्वापि सन्तोषं तृप्तिं न ययुः। अन्यानपि निहन्मीति बुद्धिमन्तो बभूवुरित्यर्थः॥ ३५॥

शि०—खड्गैरिति। भटा योद्धारो धवलधारालैः विशदधारावद्भिस्तैः खड्गैरसिभिः ( करणैः ) भुवा वसुमत्या समं सह विद्धान् ताडितान् करिणा गजानां करान् शुण्डादण्डान् निहत्य संछिद्याऽपि सन्तोषं तृप्तिं न ययुः प्रापुः। भटानामन्यहननबुद्धया तृप्तिर्नाभूदित्यर्थः॥ ३५॥

[3]आक्षिप्याभिदिवं नीताः पत्तयः करिभिः करः।
दिव्याङ्गनाभिरादातुं रक्ताभि[4]र्द्रुतमीषिरे॥ ३६॥

सी०—आक्षिप्येति। करिभिः कर्तृभिः। करैर्दण्डैः कृत्वाक्षिप्योत्थाप्याभिदिवमाकाशसंमुखं नीताः प्रापिताः पत्तयः पादचारिणो रक्ताभिरनुरक्ताभिर्दिव्याङ्गनाभिर्द्रुतं शीघ्रमादातुं ग्रहीतुमीषिरे इष्टा बभूवुः। अहमेतान्ग्रहीष्यामि, अहमेतान्ग्रहीष्यामीति त्वरिता बभूवुः॥ ३६॥

शि०—आक्षिप्येति। करिभिर्गजैः (कर्तृभिः) करैः शुण्डादण्डैः ( करणैः ) आक्षिप्य समुत्थाप्य अभिदिवं दिवसंमुखमित्यर्थः। नीताः प्रापिता अपि पत्तयः पदातयः रक्ताभिरनुरागवतीभिर्दिव्याङ्गनाभिरप्सरोभिर्द्रुतं सत्वरमादातुं गृहीतुम् ईषिरे ईषिता जाताः। वीरग्रहणार्थमप्सरसामन्योन्यं कलहोऽभूदित्यर्थः॥ ३६॥

धन्विनस्तुरगारूढा गजारोहाञ्शरैः क्षतान्।
[5]प्रत्यैच्छन्मूर्छितान्भूयो योद्धुमाश्वसतश्चिरम्॥ ३७॥

---

१. यैः, २. वृद्धं शस्त्र्या तान्पत्तयोऽहरन्, ३. उत्क्षिप्य, ४. वृतम्बरम्, व्याप्तमम्बरम्, ५. प्रत्यैक्षन्,

सी०—धन्विन इति। तुरगारूढा धन्विनो धनुर्धारिणो योधाः शरैः क्षतान्। अत एव मूर्च्छितान्गजारोहान्यन्तॄन्भूयोऽपि पुनरपि योद्धुमाश्वसतो जीवत एतादृशांश्चिरं प्रत्यैच्छन्। प्रतीक्षन्ते स्मेत्यर्थः॥ ३७॥

शि०—धन्विन इति। तुरगारूढा अश्ववारा धन्विनो धनुर्द्धराः वीरा इति शेषः। शरैर्व्रणैः क्षतान् विद्धान् अत एव मूर्च्छितान् चेतनारहितान् गजारोहान् हस्तिपकान् भूयः पुनर्योद्धुमाश्वसतो जीवतस्तान् चिरं बहुकालं प्रत्यैच्छन् प्रतीक्षन्ते स्म॥ ३७॥

क्रुद्धस्य [1]दन्तिनः पत्तिर्जिघृक्षोरसिना करम्।
निर्भिद्य [2]दन्तमुसलावारुरोह जिघृक्षया॥ ३८॥

सी०—क्रुद्धस्येति। पत्तिः पादचारी कश्चिद्योधः क्रुद्धस्यात एव जिघृक्षोर्गृहीतुमिच्छोर्दन्तिनः करं दन्तयोरधोभागम्। असिना निर्भिद्य अच्छित्वा जिघृक्षया प्रत्युत तस्यैव गृहीतुमिच्छया दन्तमुसलावारुरोहारूढवान्॥ ३८॥

शि०—क्रुद्धस्येति। पत्तिः पदातिः कश्चिद्वीरः क्रुद्धस्य सञ्जातरोषस्य अत एव जिघृक्षोः गृहीतुमिच्छोर्दन्तिनो गजस्य करमधरम् असिना करवालेन निर्भिद्य छित्वा जिघृक्षया गृहीतुमिच्छया दन्तमुसलौ मुसलाकारौ दन्तौ (कर्मभूतौ) आरुरोह समारूढवान्। क्रुद्धस्य दन्तिनोऽधरं छित्वा तदीयदन्तद्वयग्रहणेच्छया तदुपरि समास्थितेत्यर्थः॥ ३८॥

खड्गेन [3]मूलतो हृत्वा दन्तिनो [4]रदनद्वयम्।
[5]प्रातिपक्ष्ये प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम्॥ ३९॥

सी०—खड्गेनेति। प्रातिपक्ष्ये शत्रुसम्बन्धिनि सैन्ये प्रविष्टोऽपि पदातिः पादचारी दन्तिनो गजस्य रदनद्वयं दन्तद्वयं खड्गेन कृत्वा मूलतो मूलाद्धत्वा भित्त्वा द्रुतं निरगान्निश्चक्राम। शत्रुसैन्यप्रविष्टस्य मरणमेव ध्रुवम्, तदस्य विपरीतमभूदित्यपिना द्योत्यते॥ ३९॥

शि०—खड्गेनेति। प्रातिपक्ष्येऽरिदलीयसैन्ये प्रविष्टः स्थितोऽपि पदातिः पादचारी कश्चिद्वीर इति शेषः। दन्तिनः करिणो रदनद्वयं दशनोभयं खड्गेन करवालेन (करणेन) मूलतो मूलात् भित्वा सञ्छिद्य द्रुतं सत्वरं निरगात् निश्चक्राम रिपुसैन्यमध्यवर्तिनो वीरस्य मरणस्यैव सम्भवेऽपि तदस्य न जातमित्यपिशब्दद्योतितोऽर्थः॥ ३९॥

---

१. करिणः, २. दन्तमुसलान्, दन्तमुसलेन ३. आमूलतः,
४. अङ्घ्रिचतुष्टयम्, ५. प्रपतिष्णोः,

करेण करिणा वीरः सुगृहीतोऽपि कोपिना ।
असिनासूञ्जहाराशु तस्यैव स्वयमक्षतः ॥ ४० ॥

सी०--करेणेति । कोपिना क्रुद्धेन करिणा दन्तिना कर्त्रा । करेण कृत्वा सुतरां गृहीतोऽपि वीरोऽसिना खड्गेन तस्यैव करिण एवासून्प्राणाञ्जहार हृतवान् । स्वयमक्षततोऽभूत् ॥ ४० ॥

शि०—करेणेति । कोपिना जातरोषेण करिणा गजेन ( कर्त्रा ) करेण शुण्डादण्डेन ( करणेन ) सुगृहीतो नितरां धृतोऽपि वीरोऽसिना शस्त्रेण तस्य करिण एव असून् जीवान् आशु शीघ्रं जहार हृतवान् स्वयमक्षतोऽविनष्टोऽभूत् ॥ ४० ॥

[1]तुरङ्गी तुरगारूढं प्रासेनाहत्य वक्षसि ।
पततस्तस्य नाज्ञासी[2]त्प्रासघातं स्वके हृदि ॥ ४१ ॥

सी०—तुरङ्गीति । तुरंगयश्वारोहः कश्चिद्योद्धा तुरगारूढमश्ववारं प्रासेन कुन्तेन वक्षस्याहत्य ताडयित्वा पततस्तस्याश्ववारस्य कर्तृकं स्वके आत्मीये हृदि प्रासघातं कुन्तक्षतं नाज्ञासीन्न विजज्ञे ; तदीयपतनजानन्दस्योद्वेलत्वादिति । भावः ॥ ४१ ॥

शि०--तुरंगीति । तुरङ्गी अश्वारूढः कश्चिद्वीरः तुरगारूढमश्वपृष्ठस्थितं कञ्चिद्वीरं प्रासेन कुन्तेन वक्षसि हृदये आहत्य संताडच पततः स्रंसमाणस्य तस्य तुरगारूढस्य ( कर्तृषष्ठयन्तम् ) तुरगारूढकर्तृकमित्यर्थः । स्वके निजे हृदि वक्षसि प्रासघातं कुन्तताडनं नाज्ञासीत् न विवेद । वक्षसि ताडितोऽश्ववारस्ताडनकर्तुः पतनजन्यानन्दमग्नः सन्नात्ममानसताडनव्यथां न बुध्यतेस्मेत्यर्थः । अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४१ ॥

द्विषा प्रासहृतप्राणो वाजिपृष्ठदृढासनः ।
[3]हस्तोद्धृतमहाप्रासो [4]भुवि जीव[5]न्निवाभ्रमत् ॥ ४२ ॥

सी०—द्विषेति । द्विषा शत्रुणा कृत्वा हृतप्राणो मारितः । तथा वाजिपृष्ठेऽश्वपृष्ठभागे दृढासनः प्राग्दृढासनत्वान्मृतत्वे दृढत्वं युक्तम् । तथा हस्त उद्धृतो महाप्रासो येन तथाभूतः कश्चिज्जीवन्निव भुव्यभ्रमत । अश्वभ्रमणवशाद्भ्रमञ्शवोऽशव इव लक्षित इति भावः ॥ ४२ ॥

शि०--द्विषेति । द्विषा वैरिणा प्रासहृतप्राणः कुन्तविनाशितजीवः । वाजिपृष्ठदृढासनः पूर्ववदश्वपृष्ठे बद्धासनः । तथा हस्तोद्धृतमहाप्रासः करोत्थापितबृहत्कुन्तः कश्चिद्वीरो जीवन्निव श्वसन्निव भुवि पृथिव्याम् अभ्रमत् भ्रमतिस्म । तुरगारूढ एव गतप्राणो वीरस्तुरगगत्या जीवित इवावलोकित इति भावः ॥ ४२ ॥

---

१. तुरगी  २. प्रासपातम्,  ३. हस्तोद्धतमहाप्रासाः,  ४. भटः,
५. अभवत्,

तुरङ्गसादिनं शस्त्रहृतप्राणं मतं भुवि।
[1]अबद्धोऽपि महावाजी न[2] साश्रुनयनोऽत्यजत् ॥ ४३ ॥

सी०—तुरङ्गेति। अबद्धोऽप्यनिरुद्धोऽपि महावाजी महाश्वः साश्रुणी सबाष्पे नयने यस्य तथाभूतः सन्। शस्त्रहृतप्राणमत एव भुवि गतं तुरङ्गसादिनमश्ववारं नात्यजन्न जहौ। किन्तु तज्जीवनमपेक्षमाणस्तत्रैव तस्थावित्यर्थः ॥ ४३ ॥

शि०—तुरङ्गेति। अबद्धोऽनवरुद्धोऽपि महावाजी वृद्धश्वः साश्रुनयनः सबाष्पनेत्रः सन् शस्त्रहृतप्राणं खड्गनाशिता सृत् अत एव भुवि पृथिव्यां गतं पतितं तुरङ्गसादिनमश्ववारं नात्यजत् न त्यक्तवान्। अश्ववारे हतेऽपि जीवित एव मदुपरिस्थितोऽस्तीति बुद्धया तत्रैव स्थितवानिति भावः ॥ ४३ ॥

[3]भल्लेन शितधारेण भिन्नोऽपि रिपुणाश्वगः।
नामूर्च्छत्कोपतो हन्तुमियेष [4]प्रपतन्नपि ॥ ४४ ॥

सी०—भल्लेनेति। रिपुणा कर्त्रा। शितधारेण तीक्ष्णधारेण भल्लेन भिन्नोऽपि विदारितोऽप्यश्वगस्तुरङ्गगामी कोपतः क्रोधवशान्नामूर्च्छन्न मुह्यति स्म। किन्तु प्रपतन्नप्यश्वादधः स्रंसमानोऽपि रिपुं हन्तुमियेषैच्छत् ॥ ४४ ॥

शि०—भल्लेनेति। रिपुणा शत्रुणा शितधारेण तीक्ष्णधारेण भल्लेन ( लोके भाला नाम्ना प्रसिद्धेन ) शस्त्रेण भिन्नोऽपि विदारितोऽपि अश्वगस्तु तुरङ्गारूढः कश्चिद्वीरः कोपतः क्रोधात् क्रोधवशादित्यर्थः। नाऽमूर्च्छत् न मोहं प्राप। किन्तु प्रपतन्नपितुरगादधः भ्रंसमानोऽपि हन्तुं मारयितुं रिपुमिति शेषः। इयेष इच्छतिस्म ४४

मिथः [5]प्रासाहतौ वाजिच्युतौ भूमिगतौ रुषा।
[6]शस्त्र्या युयुधतुः कौचित्कोशाकेशि भुजाभुजि ॥ ४५ ॥

सी०—मिथ इति। मिथोऽन्योन्यं प्रासेनाहतौ। अत एव वाजिभ्यां सकाशाच्च्युतावधः पतितौ। अत एव भूमि गतौ कौचिद्योधौ रुषा युतौ सन्तौ शस्त्र्या खड्गपुत्र्या युयुधतुर्युयुधाते। अथ च केशाकेशि केशेषु केशेषु गृहीत्वा प्रवृत्तं यद्युद्धम्, भुजाभ्यां भुजाभ्यां प्रहृत्य प्रवृत्तं यद्युद्धं तदभूत्। 'तत्र तेनेदमिति सरूपे' इति सूत्रेण समासः ॥ ४५ ॥

शि०—मिथ इति। मिथः परस्परं प्रासाहतौ कुन्तताडितौ अत एव वाजिच्युतौ अश्वादधः पतितौ अत एव भूमिगतौ क्षितिवर्तिनौ कौचिद्वीरौ रुषा क्रोधेन युतौ

---

१ अन्त्राद्यः, २ नात्रस्तनयनः, ३ खड्गेन, ४ च पतन्, निपतन्, ५ प्रासहतौ प्रहारतः, ६ शस्त्रैः,

सन्तौ शरव्याऽसिपुत्र्या युयुधाते युध्यतः स्म । अनन्तरं तयोः केशाकेशि केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं भुजाभ्यां भुजाभ्यां प्रहृत्य प्रवृत्तं युद्धं बभूव ॥ ४५ ॥

**रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासनाः ।**
**[1]क्षतकार्मुकसंधानाः सप्राणा इव मेनिरे[2] ॥ ४६ ॥**

सी०—रथिन इति । रथिभी रथारोहैः कर्तृभिः । बाणैः कृत्वा हृतप्राणास्तथा दृढासनाः क्षतं नष्टं कार्मुकसंधानं धनुः सज्जीकरणं येषामेवंभूता रथिनो रथारोहाः सप्राणा इव जीवन्त इव मेनिरे मताः । कर्मणि लिट् । द्रष्टृभिरिति शेषः ॥ ४६ ॥

शि०—रथिन इति । रथिभिः स्यन्दनारूढैर्वीरैः ( कर्तृभिः ) बाणैः शरैः ( करणैः ) हृतप्राणाः विनाशितासवः तथा दृढासना दृढ निश्चलमासनं येषां ते तथोक्ताः तथा क्षतकार्मुकसन्धाना नष्टचापसज्जीकरणा रथिनो रथारूढा वीराः सप्राणाः जीविता इव मेनिरे ज्ञाता जनैरिति शेषः ॥ ४६ ॥

**न रथी रथिनं भूयः प्राहरच्छस्त्रमूर्च्छितम् ।**
**प्रत्याश्वसन्त[3]मन्विच्छ[4]न्नातिष्ठद्युधि लोभतः ॥ ४७ ॥**

सी०—नेति । रथी रथारोहः शस्त्रेण मूर्च्छितमचेतितं रथिनं भूयो न प्राहरत् । किन्तु पुनरपि युधि लोभतो लोभेन । तृतीयार्थं तसिः । प्रत्याश्वसन्तं पुनरुज्जीवन्तमन्विच्छन्नपेक्षमाणः सन्नतिष्ठत् ॥ ४७ ॥

शि०—नेति । रथी स्यन्दनारूढः कश्चिद्वीरः शस्त्रमूर्च्छितं शस्त्रेण करवालेन मूर्च्छितं चेतनारहितं रथिनं रथारूढं कञ्चिद्वीरं भूयः पुनर्न प्राहरत् प्रहरति स्म । किन्तु युधि लोभतः संग्रामलोभेन हेतुना प्रत्याश्वसन्तं पुनरुज्जीवन्तं तं वीरम् अन्विच्छन् प्रतीक्षमाणः सन् अतिष्ठत् स्थितवान् ॥ ४७ ॥

**अन्योन्यं रथिनौ कौचिद्[5]गतप्राणौ दिवं गतौ ।**
**एकामप्सरसं प्राप्य युयुधाते वरायुधौ ॥ ४८ ॥**

सी०—अन्योन्यमिति । वरायुधौ श्रेष्ठायुधौ कौचिद्रथिनावन्योन्यं परस्परेण कृत्वा गतप्राणौ गमितासू अत एव दिवं गतावेकामप्सरसं प्राप्य युयुधाते । अहमेतां ग्रहीष्यामि, अहमेतां ग्रहीष्यामीति वदन्तौ कलहं चक्रतुरित्यर्थः ॥ ४८ ॥

शि०—अन्योऽन्यमिति । वरायुधौ श्रेष्ठशस्त्रधारिणौ कौचिद्रथिनौ यन्तारौ अन्योन्यं मिथो युद्धं कृत्वेति शेषः । दिवं गतौ स्वर्गं प्राप्तौ सन्तौ एकामप्सरं

---

१ कृत, २ रेजिरे, ३ मत्वैनम् ४ नागाद्युद्धमलोभतः
५. हृतप्राणौ; हतप्राणौ,

दिव्याङ्गनां प्राप्य लब्ध्वा युयुधाते युध्यतः स्म। अहमेतत्पतिरित्येव रूपेण वादं व्यधातामित्यर्थः ॥ ४८ ॥

**मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ [1]रथिनौ [2]रुचा।**
**[3]खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ ४९ ॥**

सी०—मिथ इति। मिथोऽन्योन्यमर्धचन्द्रेण तदाकारबाणेन निर्लूनमूर्धानौ छिन्नमस्तकावत एव खेचरावाकाशचारिणौ रुच्या कान्त्या युतौ कौचिद्रथिनौ रथारोहौ कर्तारौ। भुवि नृत्यन्तौ गात्रं विक्षिपन्तौ स्वकबन्धौ शिरोरहितस्वदेहौ कर्म। अपश्यतां दृष्टवन्तौ ॥ ४९ ॥

शि०—मिथ इति। मिथः परस्परम् अर्द्धचन्द्रनिर्लूनमूर्धानौ अर्द्धचन्द्राकारबाणकर्तितमस्तकौ अत एव खेचरौ व्योमगतौ तथा रुचा दीप्त्या भुवि क्षितौ नृत्यन्तौ गात्रविक्षेपं कुर्वन्तौ स्वकबन्धौ मस्तकशून्यविग्रहौ ( कर्मभूतौ ) अपश्यतां ददृशतुः ॥ ४९ ॥

**रणाङ्गणे शोणित[4]पङ्कपिच्छिले कथं कथं चिन्ननृतुर्धृतायुधाः।**
**नदत्सु तुर्येषु परेतयोषितां गणेषु गायत्सु कबन्धराजयः ॥ ५० ॥**

सी०—रणेति। तूर्येषु नदत्सु सत्सु, परेतयोषितां भूताङ्गनानां गणेषु गायत्सु सत्सु, धृतायुधाः कबन्धराजयः शिरोरहितदेहपङ्क्तयः शोणितपङ्कपिच्छिले रुधिरकर्दमलिप्ते। अनेन स्निग्धत्वमुक्तम्। रणाङ्गणे संग्रामचत्वरे कथं कथंचिन्महता कष्टेन ननृतुर्गात्रं विचिक्षिपुः। भूमेरतिस्निग्धतया पादयोः स्थैर्येण स्थापनासम्भवान्नृत्ये प्रयत्नो योग्य इति भावः। एषां श्लोकानां स्फुटार्थत्वाद्विस्तरेण विवृतिर्नोक्ता। प्रसङ्गाद्वक्तव्यनिर्धारणेन लाघवाद्यकारि। अतः क्षन्तव्यमित्यलम्। उपजातिर्वृत्तम् ॥ ५० ॥

शि०—रणेति। तुर्येषु तदाख्यवाद्यविशेषेषु नदत्सु सत्सु परेतयोषितां पिशाचाङ्गनानां गणेषु समुदायेषु गायत्सु गानं कुर्वत्सु सत्सु, धृतायुधा गृहीतशस्त्राः कबन्धराजयो मस्तकशून्यकायश्रेणयः शोणितपङ्कपिच्छिले रुधिरपङ्क्तिलिप्ते रणाङ्गणे-युद्धाजिरे कथं कथञ्चित् केनापि प्रकारेणाऽतिक्लेशेनेति यावत्। ननृतुर्गात्रविक्षेपं चक्रुः। पिच्छिलभूमौ पादस्थैर्यासम्भवात्क्लेशेन तत्स्थापनमुचितमेवेति भावः। ५०।

**इति सुररिपुर्वृत्ते युद्धे सुरासुरसैन्ययो**
**रुधिरसरितां मज्जद्दन्तिव्रजेषु तटेष्वलम्।**
**अरुणनयनः [5]क्रोधाद्भीमभ्रमद्भृकुटीमुखः**
**सपदि ककुभामीशानस्यागमत्सयुयुत्सया ॥ ५१ ॥**

---

१. रुषितौ, २. रुषा, ३. खचरैः, ४. शोभित;
५. क्रोधापीनभ्रमद्भृकुटीमुखः; क्रोधासीनभ्रमद्भृकुटीमुखः,

सो०—इतीति। इति पूर्वोक्तप्रकारेण सुरासुरसैन्ययोर्देवदैत्यसैन्ययो-र्युद्धे संग्रामे वृत्ते भूते सति। तथा रुधिरसरितां शोणितनदीनां तटेषु मज्जन्तो निमग्नीभवन्तो दन्तिव्रजा गजसमूहा येषु तथाभूतेषु सत्सु। अलमतिशयेन क्रोधाद्धेतोररुणनयनो रक्तलोचनः। तथा भीमे भयानके भ्रमती विवर्तमाने भृकुटीमुखे भृकुट्योरग्रे यस्य तथोक्तः स सुररिपुस्तारको युयुत्सया योद्धुमिच्छया सपदि तत्क्षणमेव ककुभां दिशमीशानिन्द्रादीनष्ट-दिक्पालानभ्यागमत्संमुखमाजगाम। हरिणीवृत्तम्—रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ ५१ ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसम्भव-
श्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया
समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
सुरासुरसैन्यसंग्रामवर्णनं नाम षोडशः सर्गः ॥

•

शि०—इतीति। इत्युक्तप्रकारेण सुरासुरसैन्ययोः अमरदानवपृतनयोर्युद्धे सङ्गरे वृत्ते जाते सति तथा रुधिरसरितां शोणितनदीनां तटेषु कूलेषु मज्जद्दन्तिव्रजेषु निमग्नीभवत्करिवर्गेषु सत्सु अलमत्यर्थं क्रोधात्कोपाद्धेतोः अरुणनयनो रक्तनेत्रः तथा भ्रमद्भृकुटीमुखो विवर्तमानभ्रुकुट्यग्रः स सुररिपुः तारकः युयुत्सया योद्धुमिच्छया सपदि शीघ्रमेव दिशामाशानामीशान् स्वामिनः शक्रप्रभृत्यष्टदिगीश्वरान् अभ्यागमत् संमुखमाजगाम। सर्गान्ते वृत्तभेदस्योक्तत्वादुपजातिहरिणीवृत्तेऽभिहिते ॥ ५१ ॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितया
शिशुहितैषिणीसमाख्यया व्याख्यया सहितः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये सुरासुरसैन्यसंग्रामवर्णनं
नाम षोडशः सर्गः ॥ १६ ॥

•

# सप्तदशः सर्गः

इदानीं तारकवधं चिकीर्षुस्तत्रभवान्कालिदासः सप्तदशतमं सर्गमारभते—

दृष्ट्वाभ्युपेतमथ [1]दैत्यपतिं पुरस्ता-
त्सङ्ग्रामकेलिकुतुकेन घन[2]प्रमोदम् ।
योद्धुं मदेन मिमिलुः ककुभामधीशा
बाणान्धकारितदिगम्बरगर्भमेत्य[3] ॥ १ ॥

सी०—दृष्ट्वेति । अथ तारकसंमुखगमनानन्तरम् । एते ककुभामधीशा इन्द्रादयोऽष्टौ दिक्पालाः । संग्रामः समरः स एव केलिः क्रीडा । न तु प्रयत्नसाध्यं कर्मेति भावः । तत्र यत्कुतुकं कौतूहलम् । तदनुभवहेतुक उत्साह इति यावत् । तेन घनः सान्द्रः बहल इति यावत् । यः प्रमोद आनन्दः स यस्य । तथा बाणैरन्धकारितः संजातान्धकारीकृतो दिशामम्बरस्य च गर्भः कुक्षिः । मध्य इति यावत् । येन । तथाभ्युपेतं संमुखमागतं दैत्यपतिं तारकं दृष्ट्वा विलोक्य योद्धुं संप्रहर्तुं मदेन गर्वेण । वीररसानुभावेनेति यावत् । मिमिलुः संयुयुजुः । सर्गेऽस्मिन्वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ ग.' इति लक्षणात् ॥ १ ॥

अथ तारकासुरवधं वर्णयति—

शि०—दृष्ट्वेति । अथानन्तरं तारकाभिमुखीभवनोत्तरमित्यर्थः । ककुभां दिशामधीशाः स्वामिनः शक्रप्रभृतयः सङ्ग्रामकेलिकुतुकेन युद्धक्रीडोत्साहेन घनप्रमोदं प्रभूतहर्षं तथा बाणान्धकारितदिगम्बरगर्भं शराच्छादितककुबाकाशमध्यं तथाऽभ्युपेतं संमुखप्राप्तं दैत्यपतिमसुराधीशं तारकं दृष्ट्वा निरीक्ष्य योद्धं, युद्धं कर्तुं मदेनाऽभिमानेन मिमिलुः संजग्मिरे । वसन्ततिलकावृत्तेन निबद्धोऽयं सर्गः ॥ १ ॥

देवद्विषां परिवृढो विकटं विहस्य
बाणावलीभि[4]रमरान्विकटान्ववर्ष ।
शैलानिव [5]प्रवरवारिधरो गरिष्ठा-
नद्भिः पराभिरथ गाढमनारताभिः ॥ २ ॥

सी०—देवेति । अथानन्तरं देवद्विषामसुराणां परिवृढो नायकस्तारको विकटं यथा स्यात्तथा । 'विकटः सुन्दरे प्रोक्तो विशालविकरालयोः' इति

---

१. तं च पतिम्, २. प्रसादम् ३. भक्तिम्, ४. अभितः कुपितो ववर्ष,
५. प्रबलवारिधरो गरिष्ठानम्भस्ततीभिः, प्रचुरवारिधरो गरिष्ठानम्भस्ततीभिः,

विश्वः। विहस्य हसित्वा। अट्टाट्टहासं कृत्वेत्यर्थः। हट्टाट्टहासोऽत्र रुडभिव्यञ्जकः, न तु सुरसैन्यविषयिणोऽत्रहेलनस्य। तत्र शाङ्कुरैरधिष्ठितत्वात्। विहस्येत्यत्र वेव्यर्थत्वं नाशङ्कनीयम्। विकटत्वेऽपि विशेषाधानात्। प्रवरः प्रकर्षेण श्रेष्ठः। वर्षाकालिक इति यावत्। स चासौ वारिधरो मेघो गरिष्ठानतिशयगुरुञ्शैलान्। उद्दिश्येति शेषः। पराभिरुत्कृष्टाभिरनारताभिर्निरन्तरं पतन्तीभिरद्भिर्जलैरिव विकटान्करालानमरानिन्द्रादिदेवान्। उद्दिश्येति शेषः। बाणावलीभिः शरपंक्तिभिः कृत्वा ववर्ष वृष्टिमकार्षीत्॥

शि०—देवद्विषामिति। अथानन्तरं दिगीशकर्तृकमिलनोत्तरमित्यर्थः। देवद्विषां दैत्यानां परिवृढोऽधीश्वरस्तारको विकटं विकरालं यथा तथा विहस्य हसित्वा प्रवरवारिधरो वर्षाकालिकमेघो गरिष्ठान् गुरुतमान् शैलानचलान् उद्दिश्येति शेषः। पराभिरधिकाभिरनारताभिरविच्छिन्नाभिरद्भिर्जलैरिव विकटान् विकरालान् अमरान् शक्रप्रभृतिदेवान् उद्दिश्येति शेषः। बाणावलीभिः शरजालैः (करणैः) ववर्ष वृष्टिं कृतवान्॥ २॥

जम्भद्विषत्प्रभृतिदिक्पतिचापमुक्ता
बाणाः शिताः[1] [2]दनुजनायकबाणसङ्घान्।
अह्नाय तार्क्ष्यनिवहा इव नागपूगा-
न्सद्यो विचिच्छिदुरलं कणशो रणान्ते॥ ३॥

सी०—जम्भद्विषदिति। दनुजानां दैत्यानां नायकस्य स्वामिनस्तारकस्य सम्बन्धिनो बाणसङ्घाञ्शरसमूहान्कर्मभूतान्। जम्भद्विषत्प्रभृतयो महेन्द्रादयो ये दिक्पतयो दिगधिपास्तैः कर्तृभिः। चापेभ्यो मुक्ता विसृष्टाः शितास्तीक्ष्णा बाणाः शराः। नागपूगान्सर्पव्रजान्। 'नागः पन्नगमातङ्गक्रूरचारिषु तोयदे' इति, 'पूगस्तु क्रमुके वृन्दे' इति च विश्वः। अह्नाय शीघ्रम्। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः। तार्क्ष्यनिवहा गरुडसमूहा इव। 'तार्क्ष्यं रसाञ्जने तार्क्ष्यो गरुडे गरुडाग्रजे' इति विश्वः। रणान्ते संग्राममध्ये सद्यः सपद्यलमतिशयेन कणशो विचिच्छिदुर्विभिदुः। कणश इति 'बह्वल्प—' इति शस्॥ ३॥

शि०—जम्भद्विषदिति। जम्भद्विषत्प्रभृतिदिक्पतिचापमुक्ता इन्द्राद्यष्टदिक्पालधनुर्विसृष्टाः शितास्तीक्ष्णा बाणाः शराः (कर्तारः) दनुजनायकबाणसङ्घान् तारकशरसमूहान् (कर्मभूतान्) तार्क्ष्यनिवहा गरुडसमूहा नागपूगान् सर्पव्रजानिव रणान्ते युद्धमध्ये सद्यः शीघ्रम् अलमत्यर्थं कणशो विचिच्छिदुरच्छिन्दन्। अत्रोपमाऽलङ्कारः॥ ३॥

---

१. शिताम्, २. असुरराजकबाण,

[1]तान्प्रज्वलत्फलमुखैर्विषमैः[2] सुरारि-
नामाङ्कितैः पिहितदिग्गगनान्तरालैः ।
[3]आच्छादितस्तृणचयानिव [4]हव्यवाह-
श्चिच्छेद सोऽपि सुरसैन्यशराञ्शरौघैः ॥ ४ ॥

सी०-तानिति । सोऽपि तारकोऽपिप्रकर्षेण ज्वलन्ति दीप्यमानानि फलानां फलकानाम् । अयोनिर्मितपुरोभागानामिति यावत् । 'फलं हेतुकृते जातीफले फलकसस्ययोः' इति मेदिनी । मुखान्यग्राणि येषाम् । अत एव विषमैर्दुःसहैः । तथारिनाम्ना तारक इति व्रणपाटयाङ्कितैर्युक्तैः । तथा पिहितमाच्छादितं दिशां गगनस्याम्बरस्य चान्तरालं मध्यं यैस्तथाभूतैः शरौघैर्बाणसङ्घैः कृत्वा तान् द्वितीयान्सुरसैन्यस्य देवसैन्यस्य शरान् । आच्छादित उपर्यावृतो हव्यवाहोऽग्निस्तृणचयानिव घासराशीनिव । चिच्छेद ज्वालयति स्मेत्यर्थः । हव्यवाहस्य तृणचयभस्मीकरणे यावान्प्रयत्न उद्भवति तावानेव सुरशरभस्मसात्करणे । इत्यतोऽसुरबाणानां सामर्थ्यातिशयो ध्वन्यत इत्यलंकारेण वस्तुध्वनिः ॥ ४ ॥

शि०—तानिति । स तारकोऽपि प्रज्वलत्फलमुखैरतिदीप्यमानलोहरचिताग्रभागैरत एव विषमैस्तीक्ष्णैरसह्यैरिति यावत् । तथा सुरारिनामाङ्कितैस्तारकनामचिह्नितैः तथा पिहितदिग्गगनान्तरालैरावृतककुबन्तरिक्षमध्यैः शरौघैराशुगव्रजैः ( करणैः ) तान् सुरसैन्यशरान् देवसेनाबाणान् । आच्छादित उपर्यावृतो हव्यवाहो वह्निः तृणचयान् शष्पसमूहानिव चिच्छेद ददाह । ( भस्मीकरणार्थकोऽत्र दहतिः ) अत्राप्युपमालङ्कारः ॥ ४ ॥

दैत्येश्वरो ज्वलितरोषविशेषभीमः
सद्यो मुमोच युधि यान्विशिखान्सहेलः[5] ।
ते प्रापुरुद्भटभुजङ्गमभीमभावं
[6]गाढं बबन्धुरपि तां[7]स्त्रिदशेन्द्रमुख्यान् ॥ ५ ॥

सी०—दैत्येश्वर इति । ज्वलितः प्रदीप्तो यो रोषः क्रोधः । 'कोपक्रोधामर्षरोषप्रतिघाः' इत्यमरः । तस्य विशेष आधिक्यं तेन भीमो घोरो दैत्येश्वरस्तारकः । युधि युद्धविषये सहेलः किमेतद्युद्धमित्यनादरसहितः सन् । यान्विशिखान्बाणान् । 'विशिखो लोमश शरे' इति विश्वः । मुमोच विससर्ज । ते शराः सद्यः सपद्युद्भटा विकटा ये भुजंगमाः सर्पाः, भीमा

१. ते, तैः, २. विशिखैः सुरारिम्, समरेऽसुरारिम्, ३. प्राच्छादयंस्तृणचयैरिव ४. हव्यवाहम्, ५. सहेलम्, ६. बाढम्, ७. त्रिदिबेन्द्र,

भयानकास्तदुभयभावं तदुभयत्वं प्रापुः। सत्यपि भुजंगमत्वे भीमत्वस्यैच्छिकत्वात्पृथग्व्यपदेशः। अथ च त्रिदशेन्द्रमुख्यानिन्द्रप्रभृतींस्तान्देवान्गाढं दृढं यथा तथा बबन्धुरपि। अपिरत्र प्राप्तिक्रियापेक्षया समुच्चयार्थः। 'अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः। इन्द्रप्रभृतयो देवास्तारकोन्मुक्तनागपाशबद्धा बभूवुरित्यर्थः। ५॥

शि०—दैत्येश्वर इति। ज्वलितरोषविशेषभीमः प्रवृद्धकोपाधिक्यभयानकः स दैत्येश्वरस्तारको युधि सङ्ग्रामे सहेलोऽनादरसहितः सन् सद्यः शीघ्रं यान् विशिखान् बाणान् मुमोच मुक्तवान् ते विशिखा उद्भटभुजङ्गमभीमभावं विकटसर्पभयानकत्वं प्रापुः। तान् त्रिदशेन्द्रमुख्यान् शक्रप्रधानान् अपि गाढं दृढं यथा तथा बबन्धुः संयेमुः॥ ५॥

ते नागपाशविशिखैरसुरेण बद्धाः
[1]श्वासानिलाकुलमुखा विमुखा [2]रणस्य।
दिङ्नायका बलरिपुप्रमुखाः स्मरारि-
सूनोः समीपमगमन्विपदन्तहेतोः॥ ६॥

सी०—त इति। असुरेण तारकेण नागपाशविशिखैर्नागपाशरूपबाणैः कृत्वा बद्धाः। अत एव श्वासानिलैर्निःश्वासपवनैराकुलानि व्याप्तानि मुखानि येषाम्। अत एव रणस्य विमुखाः पराङ्मुखाः। भीतस्य च रणवैमुख्यं नानुचितमिति भावः। बलरिपुप्रमुखा इन्द्रप्रभृतयो दिङ्नायका अष्टदिगधिपाः कर्तारः विपदोऽन्तो नाशः स एव हेतुः कारणं तस्मात्स्मरारिसूनोः कुमारस्य समीपं संनिधिमगमन्प्रापुः॥ ६॥

शि०—त इति। ते बलरिपुप्रमुखा इन्द्रप्रधानाः दिङ्नायका दिगीशा असुरेण तारकेण (कर्त्रा) नागपाशविशिखैर्नागपाशरूपबाणैर्बद्धाः संयता अत एव श्वासानिलाकुलमुखाः श्वासवायुपूरितानना अत एव रणस्य सङ्ग्रामस्य विमुखाः पराङ्मुखाः सन्तः विपदन्तहेतोर्दुःखावसानार्थं स्मरारिसूनोः शिवपुत्रस्य समीपं निकटमगमन् प्राप्नुवन्॥ ६॥

दृष्टिप्रपातवशतोऽपि पुरारिसूनो-
स्ते नागपाशघनबन्धविपत्तिदुःखात्।
इन्द्रादयो मुमुचिरे स्वयमस्य देवाः
सेवां [3]व्यधुर्निकटमेत्य महाजिगीषोः॥ ७॥

सी०—दृष्टीति। त इन्द्रादयो देवाः पुरारिसूनोस्त्रिपुरशत्रुपुत्रस्य

---

१. श्वासाकुल, २. रणान्तात्, ३. व्यधुश्च पुनरेत्य,

दृष्टिर्नेत्रम् । 'स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि च' इति विश्वः । तस्य प्रपातः पतनं तस्य वशतो वशेन प्रभुत्वेन । प्रभावेणेति यावत् । 'वशं मिथ्याप्रभुत्वयोः' इति विश्वः । नागपाशेन घनो दृढो बन्धो बन्धनमेव विपत्तिस्तेन यद्दुःखं ततस्तस्मान्मुमुचिरे मुक्ताः अथ च महाजिगीषोरस्य कुमारस्य स्वयमात्मना न तु परोक्षेण निकटं सांनिध्यमेत्यागत्य सेवां सेवनम् । स्तुतिमिति फलितोऽर्थः । व्यधुश्चक्रुः ॥ ७ ॥

शि०—दृष्टिप्रपातेति । ते इन्द्रादयः शक्रप्रभृतयो देवाः सुराः पुरारिसूनोर्हरसुतस्य कार्त्तिकेयस्य दृष्टिप्रपातवशतो नेत्रापाङ्गप्रभावात् नागपाशघनबन्धविपत्तिदुःखात् नागपाशकर्तृकदृढसंयमनात्मविपज्जन्यक्लेशात् मुमुचिरे मुक्ता बभूवुः । अनन्तरं महाजिगीषोर्महतो जेतुमिच्छोः कार्त्तिकेयस्य निकटं समीपमेत्य सेवां स्तुतिं व्यधुश्चक्रुः ॥ ७ ॥

अथ युग्मेनाह—

[1]उद्दीप्तकोपदहनोऽथ सुरेन्द्रशत्रु-
रह्नाय सारथिमथोचत चण्डबाहुः ।
बद्धा मया सुरपतिप्रमुखाः प्रसह्य
बालस्य धूर्जटिसुतस्य निरीक्षणेन ॥ ८ ॥
मुक्ता बभूवुरधुना तदिमान्विहाय
कर्तास्म्यमुं[2] समरभूमिपशूपहारम् ।
तत्स्यन्दनं सपदि वाहय शंभुसूनुं
द्रष्टास्मि दर्पितभुजाबलमाहवाय ॥ ९ ॥

सी०—उद्दीप्तेति । मुक्ता इति च । अथ नागपाशविमोचनानन्तरम् । उद्दीप्तः प्रदीप्तः कोप एव दहनोऽग्निर्यस्य । तथा चण्डौ प्रचण्डौ बाहू यस्य । एवंभूतः सुरेन्द्रशत्रुस्तारकोऽह्नाय झटिति 'भो सारथे' मया प्रसह्य बलाद्बद्धा नागपाशवशीकृताः सुरपतिप्रमुखा इन्द्रादयो देवा बालस्य शिशोः, न तु यूनः धूर्जटिसुतस्य शिवपुत्रस्य निरीक्षणेन दर्शनमात्रेण, न तु प्रत्यस्त्रादिप्रयत्नेन, मुक्ता बभूवुः । अनेन शिशुनात्मनिरीक्षणेनैव स्वपक्षवर्तिनो देवा मोचिता अतो महाधन्योऽयमिति भावः । तत्तस्मान्मदीयशत्रूणां पक्षवृत्तित्वेन कृतनागपाशमोचनरूपापराधादिमान्पुरोवर्तिन इन्द्रादिदेवान्विहाय परित्यज्य । आहवाय । मया सहाहवं कर्तुमित्यर्थः । दर्पितमभिमानमूलकं भुजाबलं बाहुबलं बाहुवीर्यं यस्य न तु तत्त्वतः, तथाभूतममुं पुरोवर्तिनं

१. उद्यत्प्रकोपदेहेनाऽथ सुरेन्द्रः शत्रुः, उद्दण्डकोपे दहनोऽप्यसुरेन्द्रसूनुः,
२. अहम्, :

शंभुसूनुं द्रष्टास्मि द्रक्ष्यामि। लुट उत्तमैकवचनम्। अथ च समरभमौ संग्रामभुवि ये पशवो गृध्रादयस्तेषामुपहारमुपदारूपं कर्तास्मि करिष्यामि। प्रागवलोकितमेनमत्र हत्वा संङ्ग्रामभूमिस्थेभ्यो विहंगेभ्योऽत्तुं विभज्य दास्यामीत्यर्थः। तत्तस्मादेवंकार्यत्वात्सपदि सद्य एव स्यन्दनं रथं वाहय प्रापय। अवश्यकर्तव्ये विलम्बानौचित्यादिति भावः। इति सार्धश्लोकद्वयोक्तं सारथिमवोचत जगाद। 'नियन्ता प्राजिता यन्ता सूतः क्षता च सारथिः' इत्यमरः ॥ ८-९ ॥

युग्मम्—

शि०—उद्दीप्तेति। अथानन्तरं नागपाशविमुक्तेन्द्रकर्तृककुमारस्तुत्युत्तरमित्यर्थः। उद्दीप्तकोपदहनः प्रज्वलितक्रोधाग्निः तथा चण्डभुजः प्रचण्ड (प्रबल) बाहुः सुरेन्द्रशत्रुः शक्ररिपुः तारकः अह्नाय सपदि भो सारथे मया प्रसह्य हठात् बद्धाः संयताः सुरपतिप्रमुखा इन्द्रप्रधाना बालस्य शिशोर्धूर्जटिसुतस्य शिवपुत्रस्य कार्त्तिकेयस्य निरीक्षणेन विलोकनेन मुक्ता बन्धनरहिता बभूवुर्जाताः तत्तस्माद्धेतोः अधुना साम्प्रतम् इमान् सुरपतिप्रमुखान् विहाय परित्यज्य आहवाय संग्रामं कर्तुं दर्पितभुजाबलम् अभिमानहेतुकबाहुवीर्यममुं पुरोवर्तिनं शम्भुसूनुं हरपुत्रं कुमारं द्रष्टास्मि द्रक्ष्यामि। अनन्तरं समरभूमिपशूपहारम् युद्धक्षेत्रगृध्राद्युपदारूपं कर्तास्मि करिष्यामि। तत्तस्मात्कारणात् सपदि शीघ्रं स्यन्दनं रथं वाहय प्रापय इति, सारथिं सूतं प्रत्यवोचत जगाद। यद्दर्शनमात्रेणैव मत्रहितनागपाशबद्धेन्द्रादीनाम्मुक्तिस्तमेव निहनिष्यामीति भावः ॥ ८-९ ॥

तत्स्यन्दनः सपदि सारथिसंप्रणुन्नः
[1]प्रक्षुब्धवारिधरधीरगभीरघोषः।
[2]चण्डश्चचाल दलिताखिलशत्रुसैन्य-
मांसास्थिशोणित[3]विपङ्कविलुप्तचक्रः ॥ १० ॥

सी०—तत्स्यन्दन इति। प्रक्षुब्धः कोपाविष्टः। अनेन प्रलयकालीन इति व्यज्यते प्रायस्तत्रैव तस्य क्रोधाविष्टत्वदर्शनात्। यो वारिधरो मेघस्तस्य घोष इव धीरो गभीरो घनश्च घोषो यस्य तथोक्तः। तथा दलितं चूर्णीकृतमखिलं समस्तं यच्छत्रुसैन्यं वैरिसैन्यं तस्य मांसमस्थीनि शोणितविपङ्को रुधिरकर्दमश्चेत्येतैर्विलुप्तानि चक्राणि चरणानि यस्य। अत एव चण्डः प्रचण्डस्तत्स्यन्दनस्तारकरथः सपदि स्वामिनोऽनुशासनक्षण एव न तु मुहूर्तमात्रं स्थित्वेति भावः। सारथिना संप्रणुन्नश्चलितुं नोदितः सन् चचाल ॥ १० ॥

---

१. प्रारब्ध, २. चण्डं, ३. शोणितसुपङ्कविलुप्तवेगः, शोणितपङ्कविलुप्तचक्रः

शि०—तत्स्यन्दन इति । प्रक्षुब्धवारिधरघोरगंभीरघोषः कुपितमेघगम्भीरचनशब्दः तथा दलिताखिलशत्रुसैन्यमांसास्थिशोणितविपङ्कविलुप्तचक्रः । चूर्णीकृतसकलरिपुसेनाक्रव्यास्थिरुधिरकर्दमव्याप्त (आवृत) चक्रः । अत एव चण्डः प्रचण्डः तत्स्यन्दनस्तारकरथः सपदि शीघ्रं सारथिसंप्रणुन्नः सूतप्रेरितः सन् चचाल चलितवान् ॥ १० ॥

दृष्ट्वा रथं प्रलयवातचलद्गिरीन्द्र-
कल्पं दलद्बलविराव[1]विशेषरौद्रम् ।
अभ्यागतं सुररिपोः सुरराजसैन्यं
क्षोभं जगाम परमं भयवेपमानम् ॥ ११ ॥

सी०-दृष्ट्वेति । प्रलयवातेन युगान्तकालप्रभञ्जनेन चलतोड्डीयमानेन गिरीन्द्रकल्पं गिरीन्द्रेण हिमालयेनेषन्न्यूनम् । हिमालयौपम्यं धवलवसनवेष्टितत्वात् । 'ईषदसमाप्तौ कल्पप्' इति कल्पप्प्रत्ययः । तथा दलतामुपरि वेगपूर्वकवशाच्चूर्णीभवतां बलानां देवसैन्यानां यो विरावो हाहाहाहेति रुदितं तेन कृत्वा विशेषरौद्रमतिशयभयानकमात्मीयघोराररवरौद्रत्वाश्रयीभूत्वेऽप्यतिजवप्रपतनचूर्णीकृतसकलसुरसैन्यविहितमहाघोरविरावधारणाजनितरौद्रत्वधारणानुकूलव्यापाराश्रयीभूतमित्यर्थः । तथाभ्यागतं संमुखमागतं सुररिपोस्तारकस्य रथं दृष्ट्वा भयेन वेपमानं कम्पमानं सुरराजस्य महेन्द्रस्य सैन्यं सेनाजनसमूहः कर्तृ । परममतुलं क्षोभं व्यथां जगाम प्राप । तदीयरथावलोकनादेव क्षोभप्राप्तिः किं पुनस्तदीयाकृतिविलोकनादिति भावः ॥ ११ ॥

शि०—दृष्ट्वेति । प्रलयवातचलद्गिरीन्द्रकल्पं युगान्तकालिकवायुकम्पितशैलतुल्यं तथा दलद्बलविरावविशेषरौद्रम् चूर्णीभवत्सुरसैन्यकोलाहलातिभीषणं तथाऽभ्यागतं संमुखमागतं सुररिपोस्तारकस्य रथं स्यन्दनं दृष्ट्वा विलोक्य सुरराजसैन्यं शक्रसेनासमूहो भयवेपमानं साध्वसकम्पितं सत् परमुत्कृष्टं क्षोभं पीडां जगाम प्राप । तारकरथावलोकनेन सुरसेनाः क्षुब्धा बभूवुरित्यर्थः । अत्र वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ११ ॥

प्रक्षुभ्यमानमवलोक्य दिगीशसैन्यं
शंभोः सुतं [2]कलहकेलिकुतूहलोत्कम् ।
उद्दामदोः कलितकार्मुकदण्डचण्डः
प्रोवाच वाचमुपगम्य स कार्त्तिकेयम् ॥ १२ ॥

सी०—प्रक्षुभ्यमाणमिति । स तारको दिगीशसैन्यं देवसैन्यं प्रकर्षेण

---

१. विराम, २. सेमरकलि,

क्षुभ्यमाणं क्षोभं प्राप्नुवत्। बिभ्यदिति यावत्। क्षुभ्यतेर्दैवादिकत्वं तदाकृतिगणत्वाद्बोध्यम्। तथाभूतमवलोक्य दृष्ट्वोद्दामदोरुद्भटयोर्दोष्णोर्बाह्वोः कलितेन निहितेन कार्मुकरूपदण्डेन चण्डः सन्। कलहः संग्रामरूपो विग्रहः स एव केलिः, न तु प्रयत्नसाध्यं कर्म, तत्र यत्कुतूहलं तत्रोत्कम्। तदभिलाषुकमित्यर्थः। तथा शंभोः शिवस्य सुतं पुत्रम्। अनेन तारकवीररसस्यानुभाव उक्तः। कार्तिकेयं कुमारमुपगम्य समीपं गत्वा वाचं प्रोवाचावोचत्। १२॥

शि०—प्रक्षुभ्यमाणमिति। उद्दामदोःकलितकार्मुकदण्डचण्डः उद्भटबाहुनिहितधनुर्दण्डप्रचण्डः स तारको दिगीशसैन्यं शक्राद्यष्टदिक्पालसेनां प्रक्षुभ्यमाणमतिशयप्राप्तदुःखम् अवलोक्य दृष्ट्वा कलहकेलिकुतूहलोत्कं विग्रहक्रीडाकौतुकोत्सुकम् शम्भोः सुतं हरपुत्रं कार्त्तिकेयं कुमारमुपगम्य समीपमेत्य वाचं वचनं प्रोवाच जगाद॥ १२॥

इतः परम् 'रे' इत्यादिभिस्त्रिभिः श्लोकैर्वाचमेव प्रपञ्चयति—

रे [1]शंभुतापसशिशो बत मुञ्च मुञ्च
दोर्दर्पमत्र[2] विरम [3]त्रिदिवेन्द्रकार्यात्।
[4]शस्त्रैः किमत्र भवतोऽनुचितै[5]रतीव
[6]बालत्वकोमलभुजातुलभारभूतैः॥ १३॥

सी०—रे इति। रे इति नीचोक्तिसंबोधने। भोः शंभुतापसशिशो शंभुः शिवः स एव तापसस्तपस्वी। अनेन महा कृपणत्वं व्यज्यते। तस्य शिशो कौमारावस्थानुभवरसिक, अत्र मयि विषये। विधीयमानमिति शेषः। दोर्दर्पं भुजदण्डगतवीर्यहेतुकमभिमानम्। 'दर्पोऽहंकारकस्तूर्योः' इति विश्वः। मुञ्च मुञ्च। सर्वथैव मुञ्चेत्यर्थः। अथ च त्रिदिवेन्द्रकार्यान्मदीयवधरूपमहेन्द्रविधेयाद्विरमम्। अनुद्युक्तो भवेत्यर्थः। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। नन्वनेकसाधनकर्माश्रयीभूतत्वेन त्वदीयवधं चिकीर्षुरहं कथं विरमामीत्याशङ्क्य न हि तव साधनानि मयि विषये परिपक्त्रिमाणि भविष्यन्तीत्याह—अतीव बालस्य भवतः संबन्धिनोः कोमलभुजयोर्बालत्वादतिशयपेलवबाह्वोरतुलं बहुभारभूतैः। दुर्वहैरित्यर्थः। अत एवात्र मय्यनुचितैरयोग्यैः शस्त्रैः कृपाणप्रभृतिभिः किम् अपि तु न किमपीति भावः।१३।

शि०—रे शम्भुतापसेति। रे इति नीचसम्बोधने। रे शम्भुतापसशिशो शिव-

१. शम्भुतान्तव शिशो, २. दोर्द्वयम्, ३. त्रिदिवेश, ४. शश्वत्, ५. असारैः, चरित्रैः ६. बालकत्वकोमलभुजबलममारभूतैः, बालाब्जकोमलभुजाक्रमभीरुभूतैः,

तपस्विपुत्र अत्र मयि विषये दोर्दर्पं भुजाभिमानं मुञ्च मुञ्च त्यज त्यज, त्रिदिवेन्द्र-कार्यात् शक्रविधेयान्मदीयवधरूपादित्यर्थः। विरम विरक्तो (पृथक्) भव। अतीवाऽत्यन्तं बालस्य शिशोर्भवतस्तव कोमलभुजातुलभारमूर्तैः पेलवदोरधिक-भाररूपैरत एवाऽत्र मयि विषयेऽनुचितैरयोग्यैः शस्त्रैः करवालादिभिः किं न किमपीत्यर्थः ॥ १३ ॥

[1]एवं त्वमेव[2] तनयोऽसि गिरीशगौर्योः
किं यासि कालविषयं विषमैः शरैर्मे ।
[3]सङ्ग्रामतोऽपसर जीव पितुर्जनन्या
[4]स्तूर्णं प्रविश्य वरमङ्कतलं विधेहि ॥ १४ ॥

सी०—एवमिति। रे शिशो, एवं नाम मद्विषयको यो दोर्दर्पस्तस्याङ्गीकारे रसिकः। त्वमिति शेषः। 'एवं प्रकारोपमयोरङ्गीकारावधारणे' इति विश्वः। विषमैर्दुःसहैर्मे मम शरैर्बाणैः कृत्वा कालविषयं दण्डधरदेशं संयमिनीं पुरीमित्यर्थः। किं किमर्थं यासि प्राप्नोषि। 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः। ननु कालविषयप्राप्तौ कैव नः खलु वीराणां हानिरित्याशङ्क्याह—यतो गिरीशगौर्योः शिवपार्वत्योः। अत्र गिरीशस्याभ्यर्हितत्वाद्बह्वचोऽपि पूर्वनिपातः। त्वमेव तनयोऽसि पुत्रोऽसि। अतिकृच्छ्रलब्धैकपुत्रस्य वृद्धस्य तनयकर्मककालविषयप्राप्तिरतिदुःखावहा भवतीति भावः। एतेन मया सह भवता न कदापि योद्धव्यमिति व्यज्यते। तर्हि किं कर्तव्यं मयेत्यत्राह—संग्रामत इति। रे शिशो, संग्रामतः समरसकाशादपसर पलायस्व। मदग्रे मा तिष्ठेत्यर्थः। अत एव जीव प्राणान्धरस्व। इतः पलायनमेव तव परमं जीवातुरिति भावः। ननु पलायनपूर्वकजीवनेन कः पुरुषार्थो भविष्यतीत्यत आह—पितुरिति। पितुर्जनकस्य। तथा जनन्या मातुश्च। अङ्कतलमुत्सङ्गतलं तूर्णं शीघ्रं प्रविश्योपविश्य वरं श्रेष्ठम्। कृतार्थमिति यावत्। विधेहि कुरु। पुत्रस्यायमेव परमो धर्मः, यन्मातापित्रोर्येन केनापि सद्व्यापारेण चित्तस्य परितोषकृत्याश्रयो भवति। कथं संग्रामतः पलायनं सद्व्यापारपदवाच्यमित्यस्याः शङ्कायाः पूर्वश्लोके तापसपदेन निवर्तितत्वात् ॥ १४ ॥

शि०—एवमिति। एवं मद्विषयेऽङ्गीकृतभुजाभिमानस्त्वं मे मम विषमैरसह्यैः शरैर्बाणैः कालविषयं कृतान्तस्थानं किं यासि किमर्थं व्रजसि यतो गिरीशगौर्योः शिवपार्वत्योस्त्वमेव तनयः पुत्रोऽसि। अतः सङ्ग्रामतो युद्धात् अपसर पलायस्व, अत एव जीव प्राणान् धारय। तथा पितुः शिवस्य जनन्याः पार्वत्याश्च अङ्कतलं

1. एकः, 2. एकतनयः, 3. तत्रासनः, 4. पूर्णम्,

क्रोडं प्रविश्य समुपविश्य तूर्णं सत्वरं वरं कृतार्थं विधेहि कुरु ॥ १४ ॥

इदानीं हितोपदेशनव्याजेन पलायनविधिमुपदिशति—

सम्यक्स्वयं किल विमृश्य गिरीशपुत्र
जम्भद्विषोऽस्य जहिहि प्रतिपक्षमाशु ।
एष स्वयं पयसि मज्जति [1]दुर्विगाह्ये
पाषाणनौरिव निमज्जयते पुरा त्वाम् ॥ १५ ॥

सी०—सम्यगिति । भो गिरीशपुत्र शिवपुत्र, त्वं सम्यक्साधु यथा स्यात्तथा विमृश्य विचार्य । साधुविचारणमत्रोदर्कविचारणम् । तत्कृत्वास्य पुरोवर्तिनो जम्भद्विष इन्द्रस्य प्रतिपक्षं मां स्वयं किलात्मनैव, न तु परोक्षेण । प्रयोज्यकर्त्रेति यावत् । आशु सत्वरं जहिहि नाशय । साधु विचार्यैव मदीयहननकृत्याश्रयो भव । 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ।' न्यायादिति भावः । प्रस्तुतेर्विमृश्य करणेन कैव विपत्तिरित्याशङ्क्याह—एष इति । रे शिशो, एष जम्भद्विट् पुरोऽग्रे दुःखेन कृच्छ्रेण विगाह्य उत्तार्ये पयसि नीरे । मदीयनाराचवर्षणरूप इत्यर्थः । पाषाणनौरिव प्रस्तरतरिरिव स्वयं मज्जति मङ्क्ष्यति । त्वां च निमज्जयते । निमज्जयिष्यत इत्यर्थः । 'यावत्पुरा—' इति भविष्यदर्थे लट् । यथा पाषाणघटिता नौका पयः पतिता मज्जति, आत्मोपर्यारूढांश्च निमज्जयति, तथायमिन्द्रोऽपि मदीय-घोरनाराचनिचयरूपजलेनावृतः सन्मरिष्यति । स्वात्माश्रयीभूतं त्वामपि तत्र पातयिष्यतीति वाच्यार्थः । अत आत्मजीवनाभिलाषुकत्वपक्ष एतदा-श्रयीभूतत्वं विहाय वृद्धयोर्मातापित्रोः समीपमेव गन्तव्यम् । तेनेहामुत्र च महान्ति श्रेयांसि भविष्यन्तीति व्यङ्ग्यार्थः । तेनात्रालङ्कारेण वस्तु-ध्वनिः ॥ १५ ॥

शि०—सम्यगिति । हे गिरीशपुत्र कार्त्तिकेय ! त्वं सम्यक् सुष्ठु यथा तथा विमृश्य विचार्य अस्य पुरोविद्यमानस्य जम्भद्विषः शक्रस्य प्रतिपक्षं शत्रुभूतं मामिति शेषः । स्वयं साक्षात् आशु शीघ्रं जहिहि त्यज ( ओहाक् त्यागे इत्यतो लोटि मध्यम-पुरुषैकवचनम् ) अथ वा जहिहीत्यत्र हीति पृथक् पदम् निश्चयार्थकम् । त्वं साक्षात्प्रति-पक्षं मां जहि नाशय ( हन्तेर्लोटि मध्यमपुरुषैकवचनम् ) अविमृश्य करणे विपत्ति-माह—एष पुरोवर्ती जम्भद्विट् स्वयं साक्षात् दुर्विगाह्ये दुःखेनोत्तार्ये पयसि जले पाषाणनौरिव प्रस्तारतरणिरिव पुरा पूर्वं मज्जति मंक्ष्यति । पश्चात् त्वां च निमज्ज-यिष्यते । ( पुराशब्दयोगे भविष्यतीति लट् ) । यथा पाषाणनौः स्वयं निमज्जति

[1]. दुर्विगाहे, दुर्हिगाढे,

स्वाङ्गांश्च निमज्जयति तद्वदिन्द्रोऽपि स्वयं मरिष्यति त्वामपि मारयिष्यतीत्यर्थः। अत्रोपमाऽलङ्कारः ॥ १५ ॥

इत्थं निशम्य वचनं युधि तारकश्च
कम्प्राधरो विकचकोकनदारुणाक्षः।
[1]क्षोभात्त्रिलोचनसुतो धनुरीक्षमाण:
प्रोवाच वाचमुचितां [2]परिमृश्य शक्तिम् ॥ १६ ॥

सी०—इत्थमिति। युधि संग्रामे स्थितस्य तारकस्य संबन्धोत्थमेवंभूतं वचनं निशम्य श्रुत्वा क्षोभात्क्रोधाद्धेतोः कम्प्रः कम्पनशीलोऽधरोऽधरोष्ठो यस्य। क्रोधवशादधरविस्फुरणं लोकप्रसिद्धमेव। तथा विकचकोकनदवद्विलसद्रक्तोत्पलवदरुणे शोणिते अक्षिणी नेत्रे यस्य। क्रोधवशादरुणनेत्रत्वमपि प्रसिद्धमेव। एवं भूतस्त्रिलोचनसुतः कुमारः शक्तिमात्मीयवीर्यवैभवं परिमृश्य तुलयित्वा। मदीयवीर्यापेक्षया किमेतदीयवीर्यमित्यनादरपूर्वकमात्मीयशक्तेराधिक्यं परामृश्येत्यर्थः। धनुरीक्षमाणः पश्यन्सन्। अनेन त्वां क्षणादेव निहन्मि, सावधानो भव, मदीयैतद्धनुरग्रे कुतो यास्यसीति व्यज्यते। तेन वस्तुना वस्तुध्वनिः। उचितां योग्यां वाचं वचनं प्रोवाच प्रोचे ॥ १६ ॥

शि०—इत्थमिति। युधि सङ्गरे विद्यमानस्य तारकस्य इत्थमीदृशं वचनं निशम्य श्रुत्वा समाकर्ण्य कम्प्राधरः कम्पनशीलोऽधरोष्ठो विकचकोकनदारुणेक्षो विकसिताहणवारिजनेत्रः त्रिलोचनसुतो हरपुत्रः कार्त्तिकेयो धनुश्चापमीक्षमाणः पश्यन् सन् उचितां रिपुविनाशयोग्यां शक्तिमात्मसामर्थ्यं परिमृश्य सम्यगालोच्य वाचमुवाच जगाद। अथवा शक्तिं परामृश्योचितां वाचमुवाचेत्यन्वयः ॥ १६ ॥

दैत्याधिराज भवता [1]यदवादि गर्वा-
त्तत्सर्वमप्युचितमेव तवैव किं तु।
द्रष्टास्मि ते प्रवरबाहुबलं वरिष्ठं
शस्त्रं गृहाण कुरु कार्मुकमाततज्यम् ॥ १७ ॥

सी०—दैत्येति। भो दैत्यानामधिराज तारकसंज्ञक महाराज, भवता त्वया गर्वाद्धेतोर्यदवादि 'रे शंभुतापस–' (१३) इत्यादिना यदुक्तं तत्सर्वमपि तवोचितमेव योग्यमेव। अभिमानिनो महाराजस्य तव बालत्वाद्वराकीभूतमदवज्ञा योग्यैव। ननु मदुक्त्यौचित्याज्ञानवतस्तत्र कथमयं संग्रामकरणसमारम्भ इति चेत्तत्राह—किं त्विति। किंतु वरिष्ठमतिशयश्रेष्ठं ते त्वत्संबन्धिप्रवरौ प्रकृष्टश्रेष्ठौ यौ बाहू भुजौ तयोर्बलं वीर्यमेव द्रष्टा-

---

१. कोपात्, २. परिमृज्य, १. यदवोचि,

ऽस्मि द्रक्ष्यामि। त्वदीयपराजयं कृत्वा मदीयो विजयः स्यादित्यभिलाषे न मम तात्पर्यम्, किंतु लोकारोप्यमाणवीरताश्रयीभूतेन मया त्वदीयवीरतावलोकनमेव युद्धकरणे तात्पर्यम्। वस्तुतस्तु मयि वीरत्वासम्भवात्त्वया सह युद्धकरणानौचित्येऽपि तत्र प्रवृत्तिः केवलं बालत्वजनितबालिशत्वमेवोद्भावयति। अतोऽपि भवता क्षन्तव्यम्। 'जनक इव शिशुत्वेऽसुप्रियस्यैक सूनोरविनयमपि सेहे पाण्डवस्य स्मरारिः' इत्यादिन्यायादिति भावः। अतो युद्धकरणपक्षे शस्त्रं कृपाणादिकं गृहाणादत्स्व। कार्मुकं धनुराततज्यं विस्तृतमौर्वीकं कुरु। युद्धार्थं शस्त्रसंधानेन सज्जो भवेति वाच्यार्थः ॥ १७ ॥

शि० – दैत्येति। हे दैत्याधिराज, तारक, भवता त्वया गर्वादभिमानाद्धेतोः यद् वचनमवादि उक्तम् तत्सर्वमपि वचनं तवोचितं योग्यमेव। किन्तु ते तव वरिष्ठमतिश्रेष्ठं प्रवरबाहुबलं श्रेष्ठभुजसामर्थ्यं द्रष्टास्मि अतः शस्त्रं करवालादिकं गृहाण कार्मुकं धनुराततज्यमारोपितमौर्वीकं कुरु विधेहि। मां शिशुं विजानता त्वया सह योद्धुमिच्छाम्यतस्त्वं युद्धाय सज्जो भवेत्यर्थः ॥ १७ ॥

इत्युक्तवन्तमवदत्त्रिपुरारिपुत्रं
दैत्यः क्रुधौष्ठमधरं किल निर्विभिद्य[1]।
युद्धार्थमुद्भट[2]भुजाबलदर्पितोऽसि
बाणान्सहस्व मम [3]सादितशत्रुपृष्ठान् ॥ १८ ॥

सी०--इतीति। इत्युक्तवन्तं निगदितवन्तं त्रिपुरारिपुत्रं कुमारं कर्म। दैत्यस्तारकः क्रुधा निमित्तेनाधरं नीचैरोष्ठम्। अधरोष्ठमित्यर्थः। निर्विभिद्य दन्तैश्चर्वयित्वा रे बाल, सादितं विभिन्नम् शत्रुपृष्ठं यैर्न तु मुखम्। मदीयबाणानां तदुद्देशेनाभिगच्छतां प्रहृतिसहनासमर्थतया पलायमानत्वात्। एवंभूतान्मम बाणान्सहस्व। अपि तु त्वया न सहिष्यन्ते इति ध्वन्यते। ननु बालत्वात्कथमहं सहे इत्याह--यतस्त्वं युद्धार्थं युद्धकरणायोद्भटे विपरीतलक्षणयानुद्भटे ये भुजे बाहू तयोर्बलं वीर्यं तेन दर्पितोऽसि संजातगर्वोऽसि। विपरीतलक्षणापन्नभुजानुद्भटत्वमेव न सहिष्यन्त इति व्यङ्ग्ये हेतुः। अतो मया सह कथंचिदपि त्वया न योद्धव्यमिति फलितोऽर्थः। 'द्वौ परौ द्वयोः। भुज बाहू' इत्यमरः ॥ १८ ॥

शि०—इतीति। दैत्यस्तारकः क्रुधा कोपेनाऽधरमोष्ठं नीचैरोष्ठं निर्भिद्य संछिद्य इतीत्थमुक्तवन्तं कथयन्तं त्रिपुरारिपुत्रं कार्तिकेयमवदत् जगाद युद्धार्थं युद्धाय उद्भटभुजाबलदर्पित उद्धतबाहुवीर्यगर्वितोऽसि अतः सादितशत्रुपृष्ठान्

---

१. निर्विभुज्य, २. भुजावलिदर्पितः ३. शातितशत्रुपृष्ठान्, शोणितरक्तपृष्ठान्.

'विदारितारिपृष्ठभागान् मम बाणान् शरान् सहस्व। मम बाणसहनसामर्थ्यं तव नास्तीति न मया सह त्वया योद्धव्यमित्यर्थः ॥ १८ ॥

दुःप्रेक्षणीयमरिभिर्धनुरातज्यं
सद्यो विधाय विषमान्विशिखान्न्यधत्त।
स क्रोधभीमभुजगेन्द्रनिभं स्वचापं
[1]चण्डं प्रपञ्चयति जैत्रशरैः कुमारे ॥ १९ ॥

सी०--दुरिति। स तारकः कुमारो क्रोधेन भीमो यो भुजगेन्द्रस्तेन निभं सदृशम् अत एव चण्डं प्रचण्डं स्वचापमात्मधनुर्जैत्रशरैर्जयसाधनबाणैः प्रपञ्चयति संदधति सति। अरिभिर्वैरिभिर्दुःप्रेक्षणीयं दुरवलोकनीयं धनुः सद्यः सः सपद्याततज्यं विस्तृतप्रत्यञ्चं विधाय कृत्वा विषमान तितीक्ष्णान्विशिखान्बाणान्न्यधत्त निदधे। कुमारं सज्जमवलोक्य स्वयमपि तथाभूदिति भावः ॥ १९ ॥

शि०--दुःप्रेक्षणीयमिति। स तारकः कुमारे कार्त्तिकेये क्रोधभीमभुजगेन्द्रनिभं रोपभीषणनागेन्द्रतुल्यम् अत एव चण्डं प्रचण्डं स्वचापमात्मीयशरासनं जैत्रशरैर्जयसाधकबाणैः प्रपञ्चयति संदधति सति अरिभिः शत्रुभिर्दुःप्रेक्षणीयं दुर्दर्शनीयं धनुः शरासनं सपदि सत्वरम् आततज्यं समौर्वीकं विधाय कृत्वा विषमान् तीव्रान् विशिखान् बाणान् न्यधत्त निहितवान्। युद्धाय सज्जीभूते कार्त्तिकेये स्वयमपि तारकः सज्जो बभूवेत्यर्थः ॥ १९ ॥

कर्णान्तमेत्य दितिजेन विकृष्यमाणं
[2]कोदण्डमेतदभित [3]सुषुवे शरौघान।
व्योमाङ्गणे लिपिकरान्कि[4]रणप्ररोहैः
[5]सान्द्रैरशेषककुभां [6]पलितं करिष्णून् ॥ २० ॥

सी०--कर्णान्तमिति। दितिजेन तारकेण कर्णान्तं श्रवणप्रान्तमेत्य प्रापय्य। अन्तर्भावितणिजर्थः। आकर्णान्तमित्यर्थः। विकृष्यमाणं विस्तार्यमाणमेतत्कोदण्डं धनुः सान्द्रैः सघनैः किरणप्ररोहैर्मयूखाङ्कुरैः कृत्वा व्योमाङ्गण आकाशचत्वरे लिपिकरांल्लेपनकर्तॄन्। तथा अशेषककुभां समस्तदिशां सम्बन्धि पलितंकरिष्णूञ्जराजनितशौक्ल्यं कर्तुं शीलं येषाम्। 'अलंकृञ-' इत्यादिना खिष्णुच्। एवंभूताञ्शरौघान्बाणसंघानभितः सर्वतः सुषुवे प्रासूत। कुमारोद्देशेन तारकनिःक्षिप्तविशिखसमूहैर्व्योम

---

१. चण्डं प्रपञ्चयति जैत्रशरैः, चण्डप्रभं यशांसि जैत्रशरं कुमारः, कुमारे,
२. कोदण्डदण्डम्, ३. शुशुभे, ४. स्वकरप्रहासान्, ५. अग्नैः, ६. पतिवत्करिष्यत्,

दिशश्च व्याप्ता बभूवुरित्यर्थः। अनेन वाच्यार्थेन मदीयविशिखनिचयव्याप्यमानोऽयं बाल इतिकर्तव्यताहीनः सन्नन्तरेव निरुद्धश्वासतया प्रयत्नमन्तरेव मरिष्यति किं पुनरायोधनप्रयत्नेनेति व्यङ्ग्यार्थस्य प्रतीयमानत्वाद् गम्योत्प्रेक्षोत्थापिततद्गुणालङ्कारेण वस्तुध्वनिः ॥ २० ॥

शि०—कर्णान्तमिति। दितिजेन तारकेण कर्णान्तं श्रोत्रपर्यन्तमेत्य आगमय्य (प्रापय्य) (अन्तर्भावितणिजर्थोऽत्रेण् धातुः) विकृष्यमाणं तन्यमानमेतत्साक्षाद्दृश्यमानं कोदण्डं धनुः सान्द्रैर्बहलैः किरणप्ररोहैः किरणाङ्कुरैः (करणैः) व्योमाङ्गणेऽन्तरिक्षाजिरे लिपिकरान् लेपनविधायकान् तथाऽशेषककुभां सकलदिशां पलितंकरिष्णून् जराजनितशौक्ल्यजनकान् शरौघान् बाणसमूहान् अभितः सर्वतः सुषुवे समुत्पादयमास ॥ २० ॥

बाणैः सुरारिधनुषः प्रसृतैरनन्तै-
र्निर्घोषभीषितभटो[1] लसदंशुजालैः।
अन्धीकृताखिलसुरेश्वरसैन्य[2] ईश-
सूनुः कुतोऽपि विषयं न जगाम दृष्टेः ॥ २१ ॥

सी०—बाणैरिति सुरारेस्तारकस्य धनुषः कार्मुकसकाशात्प्रसृतैः निःसृतैरिति फलितोऽर्थः। तथानन्तैरपारैः। असंख्यैरिति यावत्। लसद्दीप्यदंशुजालं किरणजालं येषाम् अनेन सोल्का बाणा निःक्षिप्ता इति व्यज्यते। तथाभूतैर्बाणैः कर्तृभिः। अन्धीकृतं सर्वत आच्छादितत्वात्प्रतिरुद्धविलोचनीकृतसकलजनम्। अखिलं सर्वं यत्सुरेश्वरसैन्यमिन्द्रसैन्यं तत्र मध्ये। 'यतश्च निर्धारणम्' इति सप्तमी। निर्घोषेण निह्रादेन भीषिता भयं प्रापिता भटा योधास्तारकपक्षवर्तिनो येन एवंभूत ईशसूनुः कुमारः कुतोऽपि कुत्राऽपि। सप्तम्यर्थे तसिः। दृष्टेर्विषयं गोचरं न जगाम। तारकपरिक्षिप्तशितशतशरगणैः सर्वत आच्छादितत्वात्कुत्रासौ कुमारो गत इति चिन्तयतां सैनिकानां दृगिन्द्रियग्रहणविषयतासम्बन्धावच्छिन्नकोटिगणनाबहिर्भूतोऽभूदिति भावः। 'विषयो गोचरे देशे' इति मेदिनी ॥

शि०—बाणैरिति। सुरारिधनुषस्तारकशरासनात्सकाशात् प्रभूतैर्निःसृतैरनन्तैरसंख्यैर्लसदंशुजालैर्दीप्यत्किरणसमूहैर्बाणैः शरैः अन्धीकृताखिलसुरेश्वरसैन्ये प्रतिरुद्धलोचनीकृतेन्द्रसेनावर्गे मध्ये निर्घोषभीषितभटः निह्रादसभीषणीकृतयोध ईशसूनुः कार्त्तिकेयः कुतोऽपि कुत्रापि दृष्टेर्लोचनस्य विषयं गोचरं न जगाम न प्राप। तारकशिलीमुखैः सर्वत आवृतत्वात्कुमारो दृष्टिगोचरो न जात इत्यर्थः ॥ २१ ॥

---

१. भटैः, २. सैन्यकोऽसौ छन्नाकृतिः सः, सैन्यकैः स छन्नः कुतोपि,

देवेन मन्मथरिपोस्तनयेन गाढ-
माकर्णकृष्टमभितो धनुराततज्यम् ।
बाणानसूत निशितान्युधि[1] यान्सुजैत्रां[2]-
स्तैः सायका [3]बिभिदिरे सहसा सुरारेः ॥ २२ ॥

सी०—देवेनेति । मन्मथरिपोः शिवस्य तनयेन पुत्ररूपेण देवेन कुमारेण गाढं दृढं यथा तथा कर्णकृष्टं कर्णं मर्यादीकृत्य कृष्टमाकृष्टम् । तथाततज्यं विस्तृतमौर्वीकं धनुः कर्तृ । युध्यायोधनेऽभितः सर्वतः जैत्राञ्जयनशीला-न्निशितांस्तीक्ष्णान्बाणानसूत । कुमाराकृष्टाद्धनुषः सकाशान्निशिता ये बाणा निःसृता इत्यर्थः । तैर्बाणैः कर्तृभिः । सुरारेस्तारकस्य सायका बाणाः बिभिदिरे भिन्नाः । कर्मणि लिट् । अनेन वाच्येन यथा यामिनीनामन्धतमसमम्बरमणिकिरणसमूहेन दूरीक्रियते, तथा कुमारनिक्षिप्तप्रज्वलद्धोरायमाणसायकनिकरेण तारकनिक्षिप्तसायकजनितमन्धतमसं निराकृतमित्युपमा व्यज्यते । अतोऽत्र वस्तुनालंकारध्वनिः ॥ २२ ॥

शि०—देवेनेति । मन्मथरिपोः शिवस्य तनयेन पुत्रेण देवेन कुमारेण गाढं दृढं यथा तथाऽऽकर्णकृष्टं श्रोत्रपर्यन्तमाकृष्टं तथाऽऽततज्यमारोपितमौर्वीकं धनुः शरासनं ( कर्तृ ) युधि सङ्ग्रामेऽभितः सर्वतः सुजैत्रान् अतिशयजयनशीलान् तथा निशितान् तीव्रान् यान् बाणान् शरान् असूत जनयामास तैर्बाणैः सुरारेस्तारकस्य सायका बाणाः सहसा हठात् विभिदिरे भिन्ना बभूवुरिति क्रियाशेषः । अत्र गम्योपमा ॥ २२ ॥

रेजे सुरारिशरदुर्दिनके निरस्ते
[4]सद्यस्तरां निखिलखेचरखेद[5]हेतौ ।
देवः[6] प्रभाप्रभुरिव स्मरशत्रुसूनुः
प्रद्योतनः सुघनदुर्धरधामधामा[7] ॥ २३ ॥

सी०—रेज इति । निखलाः समस्ता ये खेचराः सूर्यादयस्तेषां खेदस्य शरीरसंबन्धजनितदहनहेतुकदुःखस्य हेतौ निदाने सुरारेस्तारकस्य शरास्तैर्यद्दुर्दिनकं मेघच्छन्नदिवसस्तस्मिन्सद्यस्तरामतिसत्वरं निरस्ते दूरीकृते सति । सुतरां घनं सान्द्रं दुर्धरं दुर्धर्षणीयम् । दुःसहमिति यावत् । तथाभूतं यद्धाम तेजस्तस्य धाम स्थानम् । अत एव प्रकर्षेण द्योतते शोभते । कर्तरि ल्युट् । अथवा नन्द्यादित्वाल्ल्युः । तथाभूतः स्मरशत्रुसूनुः कुमारः । प्रभायाः कान्त्याः प्रभुर्देवः सूर्य इव । रेजे बभौ । यथा मेघ-

१. विविधान् २. विजैत्रैः, विजैत्रान् ३. विविदिरे,
४. सद्यः स्वयम्, ५. खिन्नदेहे, ६. देवप्रभोः प्रभुः, ७. धाम,

जनितदुर्दिनोन्मुक्तोऽम्बरमणिः शोभते, तथा तारकविकीर्णसायकजनित-दुर्दिनोन्मुच्यमानोऽसौ कुमारो रराजेत्यर्थः ॥ २३ ॥

शि०—रेज इति सुघनदुर्धरधामशामा अतिसान्द्रदुर्धर्षणीयतेजः स्थानम् अत एव प्रद्योतनोऽतिशोभमानः स्मरशत्रुसूनुः शिवतनुजः कार्त्तिकेयः ( कर्ता ) निखिल-खेचरखेदहेतौ सकलसूर्यादिदुःखकारणे सुरारिशरदुर्दिनके तारकबाणकृतमेघच्छन्न-दिवसे सद्यस्तरामतिशीघ्रं निरस्ते दूरीकृते सति प्रभाप्रभुर्देवः सूर्य इव रेजे शुशुभे। मेघच्छन्नदिवसे निरस्ते सूर्यो यथा शोभते तथा तारकशरकृतदुर्दिवसे निरस्ते कुमारः शुशुभे इत्यर्थः। अत्रोपमाऽलङ्कारः ॥ २३ ॥

तत्राथ दुःसहतरं समरे [1]तरस्वी
[2]धामाधिकं दधति धीरतरं कुमारे।
मायामयं समरमाशु महासुरेन्द्रो
माया[3]प्रचारचतुरो रचयांचकार ॥ २४ ॥

सी०—तत्रेति। अथानन्तरं तत्र कुमारे धीरतरं गम्भीरतातिशयशालि धाम तेजोऽधिकं दुःसहतरं दधति सति। 'अयं बालोऽपि मदपेक्षयाधिक-तरधामवान् अतः शस्त्रयुद्धेन नैव धर्षणीय, इति मनोविश्वयविचारकर्तृकता व्यज्यते। समरे युद्धे तरस्वी बलवान्महानसुराणामिन्द्रस्तारको मायामयं मायारूपं समरं युद्धमाशु सत्वरं रचयांचकार निर्ममे। शस्त्रैरधर्षणीयोऽयं मायाप्रधानैरस्त्रैः पराजयं प्राप्स्यतीति बुद्धया मायारचनापरो बभूवेत्यर्थः यतो मायाप्रचारे मायानिर्माणे चतुरः कुशलः ॥ २४ ॥

शि०—तत्रेति। अथाऽनन्तरं कुमारकर्तृकशोभाप्राप्त्युत्तरमित्यर्थः। तत्र तस्मिन् कुमारे कार्त्तिकेये धीरतरमत्यर्थमधिकं दुःसहतरं सर्वथा दुर्धर्षणीयं धाम तेजो दधति धारयति सति समरे सङ्ग्रामे तरस्वी बलवान् मायाप्रचारचतुरो मायानिर्माणदक्षो महासुरेन्द्रस्तारको मायामयं समरं सङ्ग्राममाशु शीघ्रं रचयाञ्चकार विदधौ। तेजस्विनः कुमारस्य शस्त्रैर्धर्षणमनुचितमिति मायामययुद्धारम्भ इति भावः ॥ २४ ॥

अह्नाय कोपकलुषो विकटं विहस्य
[4]व्यर्थां समर्थ्य वरशस्त्रयुधं कुमारे।
जिष्णु[5]र्जगद्विजयदुर्ललितः सहेलं
वायव्यमस्त्रमसुरो धनुषि न्यधत्त ॥ २५ ॥

---

१. तरसा, २. धामाधिकं दधति धीरतरे, धामादवादधिकधीरतरः,
३. प्रपञ्च, ४. व्यर्थम्, ५. जिष्णोः,

सी०—अह्लायेति। जिष्णुर्जयनशीलः, अत एव जगतां विजयेन दुर्ललित उद्धटः। तथा कोपेन क्रोधेन निमित्तेन कलुषोऽनच्छः। आविल इति यावत्। 'कलुषोऽनच्छ आविलः' इत्यमरः। असुरस्तारको विकटं करालं यथा स्यात्तथा विहस्य। इदानीं त्वां जेष्यामीति कुतो गमिष्यसीति विकटहासेन व्यज्यते। तथा कुमारे विषये वरैः श्रेष्ठैः शस्त्रैः कृत्वा युधं युद्धम्। 'समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः' इत्यमरः। व्यर्थां फलराहित्येन निरर्थकां समर्थ्यं सिद्धान्तयित्वा। निश्चित्येति यावत्। सहेलं सानादरम्। अयं मायोचितो नास्ति व्यर्थमेवात्र मायायुद्धमित्यवहेलनासहितं यथा स्यात्तथा। वायव्यं वायुदेवताकमस्त्रमह्लाय झटिति धनुषि न्यधत्त निदधे॥ २५॥

शि०—अह्लायेति। जिष्णुर्जयनशीलोऽत एव जगद्विजयदुर्ललितः त्रैलोक्योत्कर्षप्राप्त्युद्धटः तथा कोपकलुष क्रोधमलिनोऽसुरस्तारको विकटं घोरं यथा तथा विहस्य हसित्वा कुमारे कार्तिकेये विषये वरशस्त्रयुधं श्रेष्ठशस्त्रसाध्ययुद्धं व्यर्थां निष्फलां समर्थ्य निश्चित्य सहेलं सतिरस्कारं यथा तथा वायव्यं वायुदेवताकमस्त्रं बाणं धनुषि चापेऽह्लाय शीघ्रं न्यधत्त निहितवान्॥ २५॥

[1]संधानमात्रमपि यस्य युगान्तकाल-
[2]भूतभ्रमं पुरुषभीषणघोरघोषः।
उद्धूतधूलिपटलैः[3] पिहिताम्बराशः
प्रच्छन्नचण्डकिरणो [4]व्यसरत्समीरः॥ २६॥

सी०—संधानमिति। यस्य वायव्यास्त्रस्य संधानमात्रमपि कोदण्डे प्रक्षेपणार्थमारोपणमात्रमपि युगान्तकाल इव भूतानां प्राणिनां भ्रमो भ्रान्तिरोगो येन तथाभूतम्। यस्य प्रक्षेपणेनेति शेषः। परुषः कठोरो भीषणो भयदायी घोरो महान्। परुषेण भयदत्वं दीर्घत्वेन भयदत्वं चेत्युभयविधस्य भयदायित्वस्य विवक्षणत्वान्न पौनरुक्त्यम्। तथाविधो घोष आरवो यस्य। तथोद्धूतान्युपर्युत्पातितानि यानि धूलिपटलानि रजोमण्डलानि तैः कृत्वा पिहिता आच्छादिता अम्बरं व्योम दिशश्च येन। तथा प्रच्छन्नः पिहितश्चण्डकिरणो रविर्येन तथाभूतः। एवंभूतश्च समीरो वायुर्व्यसरत्प्रससार। प्रचचालेति यावत्॥ २६॥

---

१. संधानमात्रसममस्यः, सन्धानकालसममस्यः, २. भूतभ्रमः,
३. पटलीपिहिताम्बरान्तः, पटलीपिहिताम्बराशः, पटलीपिहिताम्बराङ्गः,
४. व्यहरत्।

शि०—संधानमात्रमिति। यस्य वायव्यास्त्रस्य सन्धानमात्रमपि चापारोपणमपि युगान्तकालभृतभ्रमं प्रलयक्षणमिव प्राणिभ्रान्तिरोगकारकं भवतीति शेषः। तस्य प्रक्षेपणेनेति शेषः। परुषभीषणघोरघोषः कठिनभयदमहारावः। तथा उद्धूतधूलिपटलैरुर्वीतरिततरजोवृन्दैः पिहिताम्बराश आच्छादितान्तरिक्षककुप्। तथा प्रच्छन्नचण्डकिरण आच्छादितभानुः समीरो वायुर्व्यसरत् विशेषेण चचालेत्यर्थः॥

कुन्दोज्ज्वलानि सकलातपवारणानि
धूतानि तेन मरुता सुरसैनिकानाम्।
उड्डीयमान[1]कलहंसकुलोपमानि
[2]मेघाभधूलिमलिने नभसि प्रसस्रुः॥ २७॥

सी०—कुन्दोज्ज्वलानीति। कुन्दपुष्पवदुज्ज्वलानि विमलानि। श्वेतानीति फलितोऽर्थः। तथा तेन वायव्यास्त्रप्रभूतेन मरुता धूतानि कम्पितानि। उपर्युड्डीयितानीति यावत्। अत एवोड्डीयमाना उत्पतन्तो ये कलहंसा राजहंसास्तेषां कुलेन समुदायेनोपमा सादृश्यं येषाम्। उत्पतत्कलहंससदृशानीत्यर्थः। सुरसैनिकानां देवरूपसेनालोकानां सकलातपवारणानि समस्तानि छत्राणि मेघाभा वर्षाकालीनपयोदसदृशभासो या धूलयः सेनोत्पातितरजांसि ताभिर्मलिने मेचके नभसि प्रसस्रुः। प्रभञ्जनवेगोड्डीयितानि विशदधर्मवारणान्युत्पतत्कलहंसकुलानीव रेजुरित्यर्थः॥

शि०—कुन्देति। कुन्दोज्ज्वलानि कुन्दपुष्पवद्विशदानि। तथा तेन वायव्यास्त्रजन्येन मरुता वायुना धूतानि कम्पितानि। तथा उड्डीयमानकलहंसकुलोपमानि उत्पतद्राजहंससमूहतुल्यानि सुरसैनिकानां देवचमूनां सकलातपवारणानि निखिलच्छत्राणि मेघाभधूलिमलिने मेघसदृशरजोव्याप्ते नभसि आकाशे प्रसस्रुः समुत्पेतुः। यथाऽन्तरिक्षे कलहंसाः शोभन्ते तथा देवचमूनामातपवारणानि शोभन्ते स्मेत्यर्थः॥

विध्वस्य तेन सुरसैन्यमहापताका
नीता [3]नभस्थलमलं नवमल्लिकाभाः।
स्वर्गापगाजलमहौघसहस्रलीलां
व्यातेनिरे दिवि[4] सिताम्बरकैतवेन॥ २८॥

सी०—विध्वस्येति। तेन प्रभञ्जनेन कर्त्रा विध्वस्य भञ्जयित्वा नभःस्थलमाकशतलं नीताः प्रापिताः। तथा नवमल्लिकाभा नूतनविदलन्मल्लिकाकुसुमसदृशभासः सुरसैन्यस्य महान्त्यः पताकाः सिताम्बरकैतवेन श्वेतवस्त्रव्याजेन स्वर्गापगाया जलस्य महतामोघानां पूराणां

---

१. वरहंस, २. संग्राम धूलिमलिने, मेघाभ्रधूलिमिलिते,
३. नभस्तलम्, ४. दिविचरी चिरविभ्रमेण, दिवि चराचरविभ्रमेण,

सहभ्रस्य लीलां शोभां व्यातेनिरे वितस्तरिरे। उत्पतन्त्या व्योमनि स्थिता: श्वेताः पताका अतिविदूरदोषेण अलघवोऽपि लघव इव प्रतीयमाना नभोगतगगनवाहिनोनिर्झरा इव रेजुरिति भावः। अत्र कैतवापह्नुतिनिदर्शनालंकारयोः संसृष्टिः ॥ २८ ॥

शि०—विष्वस्येति। तेन वायव्यास्त्रजन्यवायुना (कर्तृभूतेन) विष्वस्य आमर्द्य नभ स्थलमाकाशं नीताः प्रापिताः। तथा नवमल्लिकाभाः नूतनमल्लिकापुष्पतुल्याः सुरसैन्यमहापताका देवचमूबृहद्ध्वजा दिवि व्योम्नि सिताम्बरकैतवेन श्वेतवसनच्छलेन स्वर्गापगाजलमहौघसहस्रलीलां गङ्गाम्बुसमूहाऽयुतशोभां व्यातेनिरे विस्तृतां चक्रुः ॥ २८ ॥

धूतानि तेन सुरसैन्यमहागजानां
सद्यः[1]शतानि विधुराणि [2]दलत्कुथानि।
पेतुः क्षितौ कुपितवासववज्रलून-
पक्षस्य भूधरकुलस्य तुलां वहन्ति ॥ २९ ॥

सी०—धूतानीति। तेन वायुना। धूतानि कम्पितानि। नभसि भ्रामितानीति यावत्। अत एव विधुराणि पीडितानि। तथा दलन्तः 'चरड् चरड्' इति स्फुटन्तः कुथाः कम्बला येषाम्। 'कुथः स्त्रीपुंसयोर्वस्त्रकम्बले पुंसि बर्हिषि' इति मेदिनी। अत एव कुपितस्य वासवस्य वज्रेण पविना लूनपक्षस्य छिन्नपत्रस्य भूधरकुलस्य पर्वतसमूहस्य तुलां साम्यं वहन्ति दधति सुरसैन्यमहागजानां देवसैन्यबृहद्दन्तिनां शतानि शतसंख्याककुलानि क्षितौ भुवि पेतुः पतितवन्ति ॥ २९ ॥

शि०—धूतानीति। तेन वायव्यास्त्रोद्भूतवायुना (कर्तृभूतेन) धूतानि कम्पितानि। अत एव विधुराणि क्लेशितानि। तथा दलत्कुथानि स्फुटत्कम्बलानि। तथा कुपितवासववज्रलूनपक्षस्य क्रुद्धेन्द्राशनिच्छिन्नपक्षस्य भूधरकुलस्य पर्वतसमूहस्य तुलां सादृश्यं वहन्ति दधति सुरसैन्यमहागजानां विबुधसेनाबृहत्करिणां शतानि शतसंख्यकसुरसैन्यमहागजा इत्यर्थः। सद्यः सपदि क्षितौ भूमौ पेतुः सस्रंसिरे।२९।

[3]तास्ताः खरेण मरुता रथराजयोऽपि
दोधूयमाननिपतिष्णुतुरंगमाश्च[4]।
[5]विस्रस्तसारथिकुलप्रवराः समन्ताद्
[6]व्यावृत्य पेतुरवनौ सुरवाहिनीनाम् ॥ ३० ॥

सी०—ता इति। तास्ताः सुरवाहिनीनां देवसेनानां रथराजयोऽपि

१. कुलानि २. गलत्कुथानि, ३. भ्रष्टाः, ४. तुरङ्गमव्ये,
५. वित्रस्तसारथिवरप्रकराः, विस्वस्तसारथिरथप्रवराः, ६. व्यावृत्तिमापुः,

स्यन्दनपंक्तयोऽपि खरेण तीक्ष्णेन मरुता वायुना दोधूयमानाः पुनःपुनरतिशयेन वा कम्प्यमाना अत एव निपतिष्णवः पतनशीलास्तुरङ्गमा अश्वा यासाम् । तथा विस्रस्ता अधःपतिताः सारथय एव कुलप्रवराः कुलश्रेष्ठाः कुलीना इति यावत् । यासाम् । तथाभूताः सत्यो नभसि समन्ताद् व्यावृत्य परिभ्रम्यावनौ पेतुः ॥ ३० ॥

शी०—तास्ता इति । खरेण तीव्रेण मरुता वायुना दोधूयमाननिपतिष्णुतुरङ्गमा अतिशयकम्प्यमाननिपतनशीलाश्च । तथा विस्रस्तसारथिकुलप्रवरा अधःपतितसूतकुलश्रेष्ठास्तास्ताः सुरवाहिनीनां देवसेनानां रथराजयः स्यन्दनपङ्क्तयोऽपि समन्तात् सर्वतो व्यावृत्य भ्रमित्वाऽवनौ क्षितौ पेतुः पतिताः ॥ ३० ॥

हित्वायुधानि सुरसैन्य[1]तुरंगवाहा
वातेन तेन [2]विधुराः सुरसैन्यमध्ये ।
[3]शस्त्राभिघातमनवाप्य निपेतुरुर्व्यां
स्वीयेषु वाहनवरेषु पतत्सु सत्सु ॥ ३१ ॥

सी०—हित्वेति । तेन वातेन विधुराः पीडिताः सुरसैन्यस्य तुरङ्गवाहा अश्ववाहाः । अश्वारोहा इति यावत् । सुरसैन्यमध्य आयुधानि भल्लादीनि हित्वा परित्यज्य स्वीयेष्वात्मीयेषु वाहनवरेषु श्रेष्ठवाहनेषु पतत्सु सत्सु शस्त्रभिघातं शस्त्रप्रहारमनवाप्यापि न प्राप्यप्युर्व्यां भूमौ निपेतुः ॥ ३१ ॥

शी०—हित्वेति । सुरसैन्यतुरङ्गवाहा देवसेनाऽश्ववाराः तेन वायव्यास्त्रजन्येन वातेन वायुना विधुराः पीडिताः सन्तः सुरसैन्यमध्ये देवसेनाऽन्ते आयुधान्यस्त्राणि हित्वा परित्यज्य स्वीयेष्वात्मीयेषु वाहनवरेषु वाहनोत्कृष्टेषु पतत्सु भ्रंशमाणेषु सत्सु शस्त्राभिघातं खड्गादिप्रहारम् अनवाप्याऽप्राप्यापि उर्व्यां पृथिव्यां निपेतुः पतिताः ॥ ३१ ॥

तेनाहतास्त्रिदशसैन्यपदातयोऽपि
[4]स्रस्तायुधाः सुविधुराः परुषं रसन्तः ।
[5]वात्याविवर्तदलवद्भ्रममेत्य दूरं
निःपेतुरम्बरतलाद्वसुधातलेऽस्मिन्[6] ॥ ३२ ॥

सी०—तेनेति । तेन प्रभञ्जनेनाहताः पीडिताः । अत एव स्रस्तान्यधःपतितान्यायुधानि शस्त्राणि येषाम् । अत एव सुतरां विधुरा दुःखिताः । करेभ्यः शस्त्रगलने वीराणामतिदुःखावहं भवतीति भावः । तथा परुषं

---

१. तुरङ्गधारावेगेन तुरङ्गधारा दैत्येन, २. विधुता त्रिधुरा रणान्ते, ३. शस्त्राभिघातमथिताः परिपेतुः ४. वारणवरेषु, ५. वात्या विधूतदलवद्भ्रमम्, वायोर्द्विवृन्तदलवृन्दमिव, ६. अपि, ते

कठोरं यथा स्यात्तथा रसन्तः क्रोशन्तः। रुदन्तः इति यावत्। त्रिदशसैन्यपदातयोऽपि देवसैन्यपादचारिणो योधा अपि। पूर्वोक्तानां गजादीनामपेक्षया समुच्चयार्थकोऽपिशब्दः। 'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये' इति विश्वः। वात्यया वातसमूहेन विवर्तं भ्रान्तं यद्दलं पत्रं तद्वद् दूरमतिशयेन भ्रमं भ्रान्तिमेत्य प्राप्याम्बरतलादाकाशमध्यादस्मिन्वसुधातले भूतले निपेतुः। वातसमूहविवर्तितानि वृक्षशुष्कपत्राणि यथाधः पतन्ति, तथा देवसैन्यपत्तयोऽपि वायव्यास्त्रजनितप्रभञ्जनवशादम्बरमभित उड्डीयमानाः कियन्तमपि कालं तत्र रथचक्रवत्परिभ्रम्य प्रतिक्षीणभ्रमणजवाः सन्तोऽधः पेतुरिति वाच्यार्थः। यथा पतितमपि दलं न चूर्णीभवति, तथाधः पतन्तोऽपि सैनिका न चूर्णीभूता इत्यभिहितयोपमया व्यज्यते। सति पतनेऽपि चूर्णत्वाभावे देवत्वादिति गूढो हेतुः। अतोऽलङ्कारेण वस्तुध्वनिः। ३२॥

शि०—तेनेति। तेन वायव्यास्त्रोद्भूतवायुना आहताः पीडिता अत एव त्रस्तायुत्रा अत एव सुविधुरा अतिपीडिताः। तथा परुषं कठिनं यथा तथा रसन्तः शब्दं कुर्वन्तः त्रिदशसैन्यपदातयो देवसेनापत्तयो वीरा अपि वात्या वायुसमूहेन विवर्तदलवत् भ्रान्तपत्रवत् दूरमसन्निकटं भ्रमं संचलनमेत्य प्राप्य अम्बरतलात् व्योम्नः सकाशात् अस्मिन् वसुधातले क्षितौ निपेतुः पतिताः॥ ३२॥

इत्थं विलोक्य सुरसैन्यमथो[1]अशेषं
दैत्येश्वरेण विधुरीकृतमस्त्रयोगात्।
स्वर्लोकनाथ[2]कमलाकुशलैकहेतु-
र्दिव्यं प्रभावमतनोदतनुः[3] स देवः॥ ३३॥

सी०—इत्थमिति। अथो तारकप्रयोजितवायव्यास्त्रकृतसैन्यविप्लवानन्तरम्। अतनुर्महान्। महत्त्वं च विद्यया, विद्या चास्त्रशस्त्रनैपुण्यम्। स देवः षाण्मातुरः। अशेषं सकलं सुरसैन्यं देवसैन्यं कर्म, दैत्येश्वरेण तारकेणेत्थं पूर्वोक्तप्रकारेण अस्त्रयोगाद्वायव्यास्त्रप्रयोगान्निमित्ताद्विधुरीकृतं पीडितं विलोक्य दिव्यं लोकोत्तरं प्रभावं सामर्थ्यमतनोत्। अनेन वायव्यप्रतिरोधकं पवननाशनास्त्रमक्षिपदिति व्यज्यते। यतः स्वर्लोकनाथस्येन्द्रस्य कमलाया लक्ष्म्याः कुशले श्रेयस्ये क एव हेतुर्निदानम्॥ ३३॥

शि०—इत्थमिति। अथोऽनन्तरं वायव्यास्त्रकृतसुरचमूपीडोत्तरमित्यर्थः। स्वर्लोकनाथकमलाकुशलैकहेतुः सुरेन्द्रलक्ष्मीरक्षणकारणभूतोऽतनुर्महान् स देवः कार्त्तिकेयः। दैत्येश्वरेण तारकेणाऽस्त्रयोगात् वायव्यास्त्रप्रयोगादित्थमुक्तप्रकारेण

---

१. अशेषमेव, २. कमलालकनैकहेतुम्; कमलाकुशलैकहेतुम्, ३. अतनुम्,

विधुरीकृतं पीडितमशेषं समस्तं सुरसैन्यं देवसेनां विलोक्य दृष्ट्वा दिव्यमलौकिकं प्रभावं सामर्थ्यमतनोत् व्यधात् ॥ ३३ ॥

[1]तेनोज्झितं सकलमेव सुरेन्द्रसैन्यं
स्वास्थ्यं प्रपद्य पुनरेव [2]युधि प्रवृत्तम् ।
दृष्ट्वासृजद्दहनदैवतमस्त्रमिद्ध-
[3]मुद्दीप्तकोपदहनः सहसा सुरारिः ॥ ३४ ॥

सी०—तेनेति । तेन कुमारप्रभावेण सकलमेव, न तु त्यक्तभागम् । उज्झितं वायव्यास्त्रनिर्मुक्तं सुरेन्द्रसैन्यं इन्द्रसैन्यं कर्म, स्वास्थ्यमविकलत्वं प्रपद्य प्राप्य पुनर्युध्येव, न त्वन्यकार्ये पलायनरूपे । एवंविधास्त्रप्रयोक्तासौ दुर्जय इति बुद्ध्या पलायनप्रसक्तिशङ्कानिरासार्थमेवकारः । प्रवृत्तं व्यापाराश्रयीभूतं दृष्ट्वा । उद्दीप्तोऽनुभावसान्निध्यात्प्रदीप्तः कोप एव दहनोऽग्निर्यस्यैवंभूतः सुरारिस्तारकः सहसा झटिति, न तु विलम्बेन । इद्धं सिद्धम् न तु तत्कालसाधनीयम् । प्रदीप्तमिति वा । दहनदैवतमग्निदेवताकमस्त्रमसृजद् व्यसृजत् । 'सृज विसर्गे' इत्यस्मात्तौदादिकाल्लङ् । वायव्यास्त्रपरिहारानन्तरं वह्न्यस्त्रमक्षिपदित्यर्थः ॥ ३४ ॥

शि०—तेनेति । तेन कार्तिकेयप्रभावेणोज्झितमुन्मुक्तं सकलमशेषमेव सुरेन्द्रसैन्यं शक्रसेनावर्गं स्वास्थ्यमव्यग्रत्वं प्राप्य पुनरेव भूयोऽपि युधि संग्रामे प्रवृत्तमुद्युक्तं दृष्ट्वा विलोक्य, उद्दीप्तकोपदहनः प्रज्वलितक्रोधाग्निः सुरारिस्तारकः सहसा शीघ्रम् इद्धं प्रदीप्तं दहनदैवतमग्निदेवताकमस्त्रमसृजत् अक्षिपत् ॥ ३४ ॥

[4]वर्षातिकालजलदद्युतयो नभोऽन्ते
गाढान्धकारितदिशो घनधूमसंघाः ।
सद्यः प्रसस्रुरसितोत्पलदामभासो
दृग्गोचरत्वमखिलं न[5] हि सन्नयन्तः ॥ ३५ ॥

सी०—वर्षेति । वर्षास्वतिकाला मेचकतरा ये जलदा मेघास्तेषां द्युतिः कान्तिरिव कान्तिर्येषाम् । वर्षाकालीनमेघसदृशमेचकितभास इत्यर्थः । श्यामत्वे द्वितीयविशेषणेनोपमिमीते । असितानां नीलानामुत्पलानां दाम्नः स्रजो भा इव भा रुग्येषामत एव गाढं नितरामन्धकारिता विसंजातान्धकारीकृता दिशो यैरेवंभूता घनधूमसंघा निविडधूमसमूहा अखिलं घटादिवस्तु दृग्गोचरत्वं दृष्टिविषयत्वं न हि नैव । 'हि पादपूरणे हेतौ विशेष्येऽप्य-

---

१. उद्गतम्; अन्वितम्, २. युधे, ३. उच्चैःप्रकोपदहनः ४. तत्कालजातजलद, ५. तत्र, ६. द्युसदां हरन्तः,

वधारणे' इति विश्वः। नयन्तः प्रापयन्तः सन्तः। घनधूमसंघव्याप्त्येव न हि किंचिदपि वस्तु लक्षणीयं बभूवेति भावः। सद्यः सपदि प्रसस्रुः। प्रज्वलिद्दहनप्राग्भावित्वेन धूमप्रसरणस्योचितत्वाद् धूमप्रसरणमुक्तम्। प्रपूर्वात् 'सृ गतौ' इत्यतो लिट्॥ ३५॥

शि०—वर्षेति। वर्षातिकालजलदद्युतयो वर्षाकालीनमेघतुल्यनीलकान्तयः। तथाऽसितोत्पलदामभासो नीलकमलस्रग्रुचः। तथा गाढान्धकारितदृशोऽतिनिस्तेजस्कीकृतनयनाः घनधूमसंघाः सान्द्रधूमसमूहाः (कर्तारः) अखिलं सकलं घटादिवस्तु दृग्गोचरत्वं नेत्रविषयत्वं नहि संनयन्तः न सम्यक् प्रापयन्तः सन्तः नभोऽन्तेऽन्तरिक्षमध्ये सद्यः सपदि प्रसस्रुः प्रसृता बभूवुः॥ ३५॥

दिक्चक्रवाल[1]गिलनैर्मलिनैस्तमोभि-
र्लिप्तं [2]नभःस्थलमलं घनवृन्दसान्द्रैः।
धूमैर्विलोक्य [3]मुदिताः खलु राजहंसा
गन्तुं सरः सपदि मानसमीषुरुच्चैः॥ ३६॥

सी०—दिगिति। दिशां चक्रवालस्य मण्डलस्य गिलनैराच्छादकैः। 'गॄ निगरणे' इत्यतः कर्तरि ल्युट्। 'अचि विभाषा' इति रेफस्य लत्वम्। मलिनैर्मेचकैः, अत एव घनवृन्दमिव मेघमण्डलमिव सान्द्रैः सघनैर्धूमैर्धूमरूपस्तमोभिर्लिप्तं व्याप्तं नभःस्थलं विलोक्य दृष्ट्वा मुदिताः प्रसन्ना राजहंसा सपदि सद्य उच्चैर्महन्मानसं सरः पल्वलं गन्तुमीषुरैच्छन्। दहनास्त्रप्रभूतधूमावलीव्याप्तनभोदर्शनजनितमेघागमभ्रान्तिमतां कलहंसानांमानससरोजिगमिषोचितैवेति भावः॥ ३६॥

शि०—दिगिति। दिक्चक्रवालगिलनैः ककुब्मण्डलाच्छादकैः। तथा मलिनैः श्यामैः। तथा घनवृन्दसान्द्रैः मेघव्रजवन्निबिडैः, धूमैः धूमरूपैस्तमोभिरन्धकारैरलंपर्याप्तरूपेण लिप्तं व्याप्तं नभःस्थलमाकाशदेशं विलोक्य दृष्ट्वा मुदिता हृष्टा राजहंसा मरालाः सपदि शीघ्रमुच्चैर्महत् मानसं सरो गन्तुं यातुम् ईषुर्वाञ्छन्ति-स्म॥ ३६॥

जज्वाल वह्निरतुलः सुरसैनिकेषु
कल्पान्तकालदहनप्रतिमः समन्तात्।
आशामुखानि [4]विमलान्यखिलानि कीला-
जालैरलं [5]कपिलयन्सकलं नभोऽपि॥ ३७॥

सी०—जज्वालेति। कल्पान्तकालस्य प्रलयकालस्य दहनोऽग्निस्तस्य

---

१. मिलितैः, २. नभस्तलम्, ३. पिहिताः, ४. अपिहन्निखिलानि, ५. कपिशयन्,

प्रतिमेव प्रतिमा स्वरूपं यस्य। तथातुलो बहुलो वह्निः कीलाजालेर्ज्वाला-समूहैः। 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्'। इत्यमरः। अखिलानि समस्तानि विमलानि शुद्धान्याशामुखानि दिगग्राणि। तथा सकलं नभोऽपि व्योम च कपिलयन्पिशङ्गीकुर्वन्सुरसैनिकेषु मध्ये। 'यतश्च निर्धारणम्' इति सप्तमी। समन्तात्परितो जज्वाल दिदीपे॥ ३७॥

शि०—जज्वालेति। कल्पान्तकालप्रतिमः प्रलयकालिकाग्नितुल्यः। तथाऽतुलोधिकः। वह्निरग्निः (कर्ता) कीलाजालैर्ज्वालासमुदायैः (करणैः) अखिलानि समग्राणि विमलानि स्वच्छानि आशामुखानि दिगाननानि सकलं समग्रं नभोऽन्तरिक्षमपि अलं पर्याप्तरूपेण कपिलयन् पिशङ्गीकुर्वन् सुरसैनिकेषु देवचमूषु मध्ये समन्तात्सर्वतो जज्वाल ज्वलतिस्म॥ ३७॥

उज्जागरस्य दहनस्य निरर्गलस्य
ज्वालावलीभिरतुलाभिरनारताभिः।
कीर्णं पयोदनिवहैरिव धूमसंघै-
र्व्योमाभ्यलक्ष्यत कुलैस्तडितामिवोच्चैः॥ ३८॥

सी०—उज्जागरस्येति। उज्जागरस्योद्दीप्तस्य। जागर्तेः 'ऋदोरप्' इति भावेऽप्। निरर्गलस्य निर्गतप्रतिबन्धस्य दहनस्य वह्नेरतुलाभिर्बहुलाभिः अनारताभिरक्षणिकाभिः ज्वालावलीभिः कीलपङ्क्तिभिः। तथा पयोदनिवहैरिव मेघसमूहैरिव धूमसंघैः व्याप्तमिति शेषः। तथाभूतं व्योम नभः, कर्तृ। उच्चैर्महद्भिस्तडितां विद्युतां कुलैर्गणैः कीर्णं वृतमिवाभ्यलक्ष्यत दर्शनीयं बभूव। मेघमण्डलान्तरे चमत्कारकारिणीभिर्क्षणदाभिर्नभो यथा राजति, तथा मेघमण्डलसदृशधूमसंघमण्डलान्तर्गतक्षणदासदृशज्वालावलीभिरपि बभावित्यर्थः। भानुक्रियाकर्तोभयत्राप्येक एव, अतो ज्वालावलीषु क्षणदात्वेनोत्प्रेक्षितम्॥ ३८॥

शि०—उज्जागरस्येति। उज्जागरस्य समुज्ज्वलितस्य। तथा निरर्गलस्य प्रतिबन्धशून्यस्य दहनस्य कृशानोरतुलाभिरधिकाभिरनारताभिः सार्वदिकाभिर्ज्वालावलीभिर्वह्निकणापंक्तिभिः, तथा पयोदनिवहैर्जलदवृन्दैरिव धूमसंघैर्धूमसमूहैः व्याप्तमिति शेषः। व्योम आकाशः (कर्तृ) उच्चैर्महद्भिस्तडितां विद्युतां कुलैर्निवहैः कीर्णं व्याप्तमिव अलक्ष्यत व्यलोक्यत जनैरितिशेषः। नभो यथा विद्युद्भिः शोभते तथा विद्युत्सदृशाग्नेषास्त्रोद्भूतज्वालावर्गैरप्यशोभतेत्यर्थः॥ ३८॥

[1]गाढाद्भयाद्द्रियति [2]विद्रुतखेचरेण
दीप्तेन[3] तेन दहनेन सुदुःसहेन।

---

१. तद्भीतितः, तत्प्राक्ततः  २. चाद्भुतसंचरेण  ३. दीर्घेण,

दन्दह्यमानमखिलं[1] सुरराजसैन्य-
मत्याकुलं शिवसुतस्य समीपमाप[2] ॥ ३९ ॥

सी०—गाढादिति। गाढाद्भयाद्धेतोर्वियति नभसि विद्रुता विद्राविताः पलायिता इति यावत्। खेचरा रव्यादयो येन। रव्यादयो ग्रहा अपि यद्भयाद् दुद्रुवुरित्यर्थः। तथा दीप्तेन। तथा सुतरां दुःसहेन सोढुमशक्येन तेन दहनेन कर्त्रा दन्दह्यमानं पुनरतिशयेन वा दह्यते भस्मीक्रियते तथाभूतम्, अत एवात्याकुलमतिपीडितमखिलं समस्तं सुरराजसैन्यं, कर्तृ शिवसुतस्य कुमारस्य समीपं सन्निधिमाप। अतो नः पाहीति निवेदयितुं जगामेति व्यज्यते। तेन वस्तुना वस्तुध्वनिः॥ ३९ ॥

शि०—गाढादिति। गाढात्सुस्थिरात् भयात्साध्वसात् हेतोर्वियति गगने, विषये, विद्रुतखेचरेण पलायितसूर्यादिना तथा दीप्तेन प्रज्वलितेन। तथा सुदुःसहेनाऽसह्येन तेनाऽऽग्नेयास्त्रोद्भूतेन वह्निना (कर्त्रा) दंदह्यमानं भस्मीभवन्तम्, अत एवाऽत्याकुलम् अतिशयव्यग्रम् अखिलं समस्तं सुरराजसैन्यं शक्रसेनावर्गः शिवसुतस्य कार्त्तिकेयस्य समीपं सान्निध्यम् आप प्राप ॥ ३९ ॥

इत्यग्निना घनतरेण [3]ततोऽभिभूतं
तद्देवसैन्यमखिलं विकलं विलोक्य।
सस्मेरवक्त्रकमलोऽन्धकशत्रुसूनु-
र्बाणासनेन[4] समधत्त स वारुणास्त्रम् ॥ ४० ॥

सी०—इतीति। ततः सैन्यागमनानन्तरम्। सोऽन्धकशत्रुसूनुः कुमारः। इति पूर्वोक्तप्रकारेण घनतरेणातिसान्द्रेणाग्निनाभिभूतं पराभूतमखिलं समस्तं तद्देवसैन्यं विकलं विधुरं विलोक्य सस्मेरं समन्दहासं वक्त्रकमलं यस्य। किञ्चिद्विहस्येत्यर्थः। अनेनात्मोत्कर्षव्यञ्जक उपहासो व्यज्यते। बाणासनेन धनुषा वारुणास्त्रमग्न्यस्त्रप्रतिरोधकं वरुणदेवताकमस्त्रं समधत्त संदध इत्यर्थः॥ ४० ॥

शि०—इतीति। ततस्तदनन्तरं दहनाऽस्त्राकुलसुरसैन्यकर्तृकशिवसुतसमीपागमनोत्तरमित्यर्थः। सोऽन्धकशत्रुसूनुः कार्त्तिकेयः। घनतरेणाऽतिबहुलेनाऽग्निना पावकेनाऽभिभूतं पीडितमखिलं समग्रं तत् देवसैन्यं सुरसेनासमुदायं विकलं व्यग्रं विलोक्य समीक्ष्य सस्मेरवक्त्रकमलः समन्दहासवदनपङ्कजः सन् बाणासनेन चापेन वारुणास्त्रं वरुणदेवताकमाशुगं समधत्त संनिहितवान् ( आरोपितवान् ) ॥ ४० ॥

घोरान्धकारनिकरप्रतिमो युगान्त-
कालानलप्रबलधूमनिभो नभोन्ते।

---

१. अनिशम् २. आगात्, ३. तदा, ४. बाणासनेऽथ,

गर्जारवैर्वि[1]घटयन्नवनीधराणां
शृङ्गाणि मेघनिवहो घनमुज्जगाम ॥ ४१ ॥

सी०—घोरेति। घोराणि भयनकानि यान्यन्धकाराणि तमांसि तेषां निकरस्य समूहस्य प्रतिमेव प्रतिमा स्वरूपं यस्य। गाढान्धकारसदृशकान्तिरित्यर्थः। तथा युगान्तकालस्य योऽनलोऽग्निस्तस्य प्रबलोऽधिको वो धूमस्तेन सदृशः। तथा गर्जारवैर्गर्जनाघोषैः कृत्वाऽवनीधराणां पर्वतानां शृङ्गाणि सानूनि विघटयन् स्फोटयन्मेघनिवहः पयोधरसमुदायो नभोऽन्ते व्योममध्ये घनं सान्द्रम्, न तु विरलतया। उज्जगामोदियाय ॥ ४१ ॥

शि०—घोरेति। घोरान्धकारनिकरप्रतिमो भीषणतमोवृन्दस्वरूपः। तथा युगान्तकालानलप्रबलधूमनिभः प्रलयकालिकाग्निबहुलधूमसदृशो मेघनिवहो घनसमूहः। गर्जारवैर्गर्जनशब्दैः अवनीधराणां गिरीणां शृङ्गाणि सानूनि विघटयन् विश्लेषयन् सन् नभोऽन्तेऽन्तरिक्षमध्ये घनं बहुलं यथा स्यात्तथा उज्जगाम प्रादुर्बभूव ॥ ४१ ॥

विद्युल्लता वियति वारिदवृन्द[2]मध्ये
गम्भीरभीषण[3]रवैः कपिशीकृताशा।
घोरा युगान्तचलितस्य [4]भयंकराऽथ
कालस्य लोलरसनेव चमच्चकार ॥ ४२ ॥

सी०—विद्युदिति। अथ मेघोदयानन्तरं वियति नभसि गम्भीराः सान्द्रा अत एव भीषणा भयदा ये रवा घोषास्तैरुपलक्षिता। तथा कपिशीकृताः पिशङ्गिता आशा दिशो यया। तथा युगान्तचलितस्य प्रलयकाले लोकादनाय प्रस्थितस्य कालस्य यमस्य भयंकरा भयदा लोलरसना चपलजिह्वेव घोरा भीमा विद्युल्लता तडिद्रूपिणी हाटकलता वारिदवृन्दमध्ये जलदमण्डलान्तराले चमच्चकार। प्रतिक्षणव्यक्तीकृतात्मरोचिरासीदित्यर्थः। अनेन उपमालंकारेण तारकासुरसैनिकानामियमिव चमत्कुर्वन्ती वैवस्वतरसना नोऽभ्यवहरिष्यतीति बुद्धिरुत्पन्नेति ध्वन्यते। अतोऽलङ्कारेण वस्तुध्वनिः ॥ ४२ ॥

शि०—विद्युदिति। अथानन्तरं मेघप्रादुर्भावोत्तरमित्यर्थः। गम्भीरभीषणरवैः सघनभयानकाऽऽरावैः, युक्तेति शेषः। तथा कपिशीकृताशा पिशङ्गीकृतदिक्। तथा युगान्तचलितस्य कालस्य यमस्य (सम्बन्धषष्ठ्यन्तम्) सम्बन्धिनी भयङ्करा साध्वसोत्पादिका अत एव घोरा भीमाकृतिर्लोलरसना चपलजिह्वेव वियति व्योम्नि वारिदवृन्दमध्ये जलदसमूहमध्ये चमच्चकार स्वभासं प्रकटीचकार ॥ ४२ ॥

---

१. विषमयन्, २. वृन्दवर्ग, वृन्दवर्गे, ३. रवे, ४. भयंकरस्य

कादम्बिनी विरुरुचे [1]विषकण्ठिकाभि-
रुत्तालकाल[2]रजनीजलदावलीभिः।
व्योम्न्युच्चकै[3]रचिररुक्परिदीपिताशा
[4]दृष्टिच्छदा [5]विषमघोषविभीषणा च ॥ ४३ ॥

सी०—कादम्बिनीति। अचिररुग्भिर्विद्युद्भिः प्रयोज्यकर्त्रीभिः परिदीपिताः प्रकाशिता आशा यया प्रयोजकर्त्र्या। तथा दृष्टिच्छदा नेत्रावरणकर्त्री सा न भवतीति, किंतु नेत्रप्रकाशिका। 'पुंसि संज्ञायां घः' इति घः। 'छादेर्घे' इति ह्रस्वः। तथा विषमेण करालेन घोषेण विभीषणा भयदा। उच्चकैर्महति व्योम्न्यन्तरिक्षे विषं जलम्। 'विषं तु गरले तोये' इति विश्वः। कण्ठे मध्ये यासाम्। जलपूर्णमध्याभिरित्यर्थः। उत्तालो विकरालः 'उत्तालो होमकुण्डे स्यादुगर्ते चोत्ताल उत्कटे। श्रेष्ठेऽपि विकरालेऽपि स्यादुत्तालाः प्लवंगमे'। इति विश्वः। तथा कालाः कृष्णपक्षीयाः। 'कालश्यामलमेचकाः' इत्यमरः। एवंभूता या रजन्यो रात्रयः। 'रजनी यामिनी तमी' इत्यमरः। ता इव या जलदावल्यो मेघपंक्तयः। 'मयूरव्यंसकादयश्च' इति समासः। ताभिरुपलक्षिता कादम्बिनीमाला विरुरुचे बभौ। अत्र कादम्बिनीशब्दः केवलमालापरः। तदुक्तम्—'विशिष्टवाचकानां पदानां सति हि पृथग्विशेषणसमवधाने विशेष्यमात्रपरता' इति ॥ ४३ ॥

शि०—कादम्बिनीति। अचिररुक्परिदीपिताशा विद्युत्प्रकाशितदिक्। तथाऽदृष्टिच्छदा नेत्राऽनावरणकारिणी। तथा विषमघोषविभीषणा करालशब्दभीतिदा। तथा विषकण्ठिकाभिः पयोव्याप्तमध्याभिः उत्तालकालरजनीजलदावलीभिः विकराल (भीषण) कृष्णपक्षीयरात्रिसदृशमेघपंक्तिभिः, उपलक्षितेति शेषः। कादम्बिनी मेघमाला उच्चकैरतिबृहति व्योम्नि गगने विरुरुचे विशेषेण दिदीपे ॥ ४३ ॥

व्योम्नस्तलं पिदधतां ककुभां मुखानि
गर्जारवै[6]र्विरतस्तुदतां मनांसि।
अम्भोभृतामतितरामनणीयसीभि-
र्धाराबलीभिरभितो ववृषे समूहैः ॥ ४४ ॥

सी०—व्योम्न इति। व्योम्न आकाशस्य तलं स्वरूपम्। 'तलं स्वरूपाधरयोः खड्गमुष्टिचपेटयोः' इति विश्वः। तथा ककुभां दिशां मुखा-

---

१. बिस, २. रजनीव रदावलीभिः, ३. अचिररोचिररोचताग्रे, ४. दृष्टिच्छलात्, दृष्टिच्छदा, ५. विषमकोपविभीषणेव, विषमरोषविभीषणेव, ६. अविततैः,

न्यग्राणि च पिदधतामाच्छदयताम् । 'पिधानाच्छादनानि च' इत्यमरः । तथा विरतैर्निरन्तरभवद्भिर्गर्जारवैर्गर्जनाघोषैः कृत्वा मनांसि तुदतां व्यथयतामम्भोभृतां जलधराणां समूहैः कर्तृभिः । अनणीयसीभिरणीयस्योऽतिलघ्व्यो न भवन्ति तथोक्ताभिः । महतीभिरित्यर्थः । धारावलीभिः संपातपंक्तिभिः कृत्वाऽतितरां ववृषे वृष्टम् । भावे लिट् ॥ ४४ ॥

शि०—व्योम्न इति । व्योम्नस्तलं वियत्प्रदेशं तथा ककुभामाशानां मुखानि पुरोभागान् पिदधतामाच्छादयतां तथाऽविरतैर्निरन्तरैर्गर्जारवैर्गर्जनशब्दैर्मनांसि चित्तानि तुदतां पीडयतामम्भोभृतां मेघानाम् अनणीयसीभिरलघ्वीभिर्धारावलीभिरासारपङ्क्तिभिः ( करणैः ), अभितः सर्वतो ववृषे वृष्टिरकारि ॥ ४४ ॥

[1]घोरान्धकारपटलैः पिहिताम्बराणां
गम्भीरगर्जनरवैर्व्यथितासुराणाम् ।
वृष्टयाऽनया जलमुचां वरुणास्त्रजानां
विश्वोदरंभरिरपि[2] प्रशशाम वह्निः ॥ ४५ ॥

सी०--घोरेति । घोराणि भयदानि यान्यन्धकारपटलान्यन्धतमसपटलानि तैः कृत्वा पिहिताम्बराणामावृतगगनानाम् । तथा गम्भीरगर्जनरवैः कृत्वा व्यथिताः पोडिता असुरा यैस्ते वरुणास्त्रजानां वरुणदेवतास्त्रोत्पन्नानां जलमुचां मेघानाम् । तथा द्वितीयया वृष्ट्या वर्षण विश्वेन समस्तजगता कृत्वोदरं भरतीति तथोक्तोऽपि समस्तलोकव्याप्यमानोऽपि वह्निरग्निः प्रशशाम । कुमारकृतवारुणास्त्रप्रयोगेण आग्नेयास्त्रमप्यनशदिति भावः ॥ ४५ ॥

शि०—घोरेति । घोरान्धकारपटलैः भीषणतमोवृन्दैः पिहिताम्बराणाम् आवृताकाशानां तथा गम्भीरगर्जनरवैर्मन्द्रगर्जनशब्दैर्व्यथितासुराणां पीडितदानवानां वरुणास्त्रोद्भूतानां जलमुचां मेघानां ( सम्बन्धषष्ठ्यन्तम् ) सम्बन्धिन्या तया वृष्ट्या वर्षणेन विश्वोदरंभरिरपि त्रैलोक्यव्याप्यमानोऽपि वह्निरनलः प्रशशाम शान्तोऽभून् निववृत इति यावत् ॥ ४५ ॥

---

१. 'आप्लावितो बहुभयोऽपिहिताम्बराणां गम्भीरगर्जनिपतद्विधुरासुराणाम्, आप्लाविताहवभुवा पिहिताम्बराणां गम्भीरगर्जितपतद्विधुरासुराणाम् ॥'

२. अथ,

४४.४५ श्लोकयोर्मध्ये क्षेपकोऽयं दृश्यते —

'वह्नीयसाधिकतराः सहसा रसेन व्यन्त्यस्तटे निजकुलेऽप्रसुरप्ररूढे ।
मेघान्धकारपटलीपिहिते नभोन्ते नद्यः प्रचेलुरभितः प्रमदा इवाढ्याः ॥'

( १ वहीयसा, २. इव सुप्ररूढे, ३. प्रमदाहवाय, )

दैत्योऽपि [1]रोषकलुषो निशितैः क्षुरप्रै-
राकर्णकृष्टधनुरुत्पतितैः स भीमैः ।
तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यो[2]
गाढं जघान मकरध्वजशत्रुसूनुम् ॥ ४६ ॥

सी०--दैत्य इति । रोषेण क्रोधेन कलुष आविलः । 'कलुषं त्वावले पापे' इति मेदिनी । स दैत्योऽपि निशितैः खरैः । अत एव भीमैर्भयदैः । तथाकर्णमाश्रवणं कृष्टाद्धनुषः सकाशादुत्पतितैर्निःसृतैः क्षुरप्रैः शरविशेषैः कृत्वा । तेभ्यः क्षुरप्रेभ्यो भीत्या निमित्तेन विद्रुतं विद्रावितं समस्तं सुरेन्द्रसैन्यं पुरंदरबलं येन । 'सैन्यं क्लीबं बले सेनासमवेते तु वाच्यवत्' इति मेदिनी । तथाभूतः सन् । गाढं दृढं यथा स्यात्तथा मकरध्वजस्य कामस्य शत्रोः शंभोः सूनुं पुत्रं जघान । प्राणापहरणकरणाभिप्रायेण हिनस्ति स्मेत्यर्थः । 'पुनस्तत्रैवावलम्बितो वेतालः' इति न्यायेन मायया सुखेन जेय एवेति मन्यमानेन तारकेण बाणसमरं हित्वा मायासमरं कुर्वाणेन तत्र सत्यपि दुर्जेयताबुद्धया पुनर्बाणयुद्धमकार्षीदित्यर्थः । अनेन वाच्यार्थेन 'अप्रतिहतप्रचारा मदीया मायाप्यनेन वीरेण प्रतिहता' इति शोकग्रस्तेन दैत्येन यथा पराजितेनापि विदुषा युक्त्या विवाद्यते तथा युध्यते, न तु वीररसानुगतत्वेनेति ध्वन्यते ॥ ४६ ॥

शि०--दैत्य इति । रोषकलुषः क्रोधमलिनः स दैत्यस्तारकोऽपि निशितैस्तीक्ष्णैः, अत एव भीमैर्भीषणैः तथाऽऽकर्णकृष्टधनुरुत्पतितैः श्रोत्रपर्यन्तानीतशरासनोन्मुक्तैः क्षुरप्रैः बाणविशेषैः ( करणैः ) तद्भीतिविद्रुतसमस्तसुरेन्द्रसैन्यः क्षुरप्रसाध्वसविद्रावितसकलेन्द्रबलः सन् गाढं स्थिरं यथा तथा मकरध्वजशत्रुसूनुं कामारिपुत्रं कार्त्तिकेयं जघान जिहिंस । स्वप्रहिताग्नेयास्त्रे कुमारप्रहितवारुणास्त्रेण शमिते सति पुनर्बाणेन कुमारं जघानेत्यर्थः ॥ ४६ ॥

देवोऽपि दैत्यविशिख[3]प्रकरं सचापं
बाणैश्चकर्त कणशो [4]रणकेलिकारी ।
योगीव योगविधि[5]शुष्कमना यमाद्यैः
सांसारिकं [6]विषयसङ्गममोघवीर्यम्[7] ॥ ४७ ॥

सी०—देवोऽपीति । रण एव केलिः क्रीडा तां करोति । संग्रामरूपक्रीडाविधायीत्यर्थः । देवोऽपि कुमारोऽपि बाणैः शरैः सचापं सकोदण्डं दैत्यस्य तारकस्य विशिखानां शराणां प्रकरं समूहं योगविधिना योगा-

---

१. कोपकलुषः २. सैन्यैः, ३. प्रवरम्, ४. रणकेलिकारः, ५. विनिषक्तमनाः, ६. विषयवर्गम्, ७. अमोघवीर्यैः,

भ्यासविधानेन शुष्कमना नीरसमनाः। निःस्पृहचेता इति तात्पर्यार्थः। योगी यमाद्यैर्यमनियमप्रभृतिभिर्योगसाधनैः कृत्वामोघवीर्यं योगिनामपि मनः संभ्रान्तिकरणे सफलप्रभावं सांसारिकं संसारः प्रयोजनमस्येति तथोक्तम्। प्रयोजने ठक्। विषयसंघं चक्षुरादिकरणोपभोग्यसमाहारमिव कणशश्चकर्त विभेद। यथा योगाभ्यासनिरतो यमनियमपूर्वैश्चक्षुरादिकरणभोग्यंदर्शनीयादिकरणवस्तु कृन्तति, तथा कुमारोऽपि यमनियमवत्तीव्रैर्बाणैर्विषयसंघमिव सकललक्ष्यभेदनक्रियोचितत्वमपि शरनिकरमभनगिति भावः॥ ४७॥

शि०—देव इति। रणकेलिकारी समरक्रीडाविधायको देवः कुमारोऽपि (कर्ता) बाणैः शरैः (करणैः) सचापं शरासनसहितं दैत्यविशिखनिकरं तारकबाणसमूहं (कर्म) योगविधिशुष्कमना योगाभ्यासविधाननीरसचेता योगी योगाभ्यासी यमाद्यैर्यमनियमादिभिरमोघवीर्यं सफलसामर्थ्यं सांसारिकं संसारप्रयोजनकं विषयसंघमुपभोगसमुदायमिव कणशः सर्वावयवं यथा तथा चकर्त चिच्छेद॥ ४७॥

भ्रूभङ्गभीषणमुखोऽसुरचक्रवर्ती
संदीप्तकोपदहनोऽथ रथं विहाय।
क्रीडत्करालकरवालकरोऽ[1]सुरेन्द्र-
स्तं प्रत्यधावदभितस्त्रिपुरारि[2] सूनुम्॥ ४८॥

सी०—भ्रूभङ्गेति। अथ शस्त्रास्त्रयुद्धानन्तरं सम्यगधिकं यथा तथा दीप्तः कोप एव दहनोग्निर्यस्य अत एव भ्रुवोर्भ्रूकुटयोर्भङ्गेन वक्रत्वेन भीषणं विलोकयितॄणां भयदं मुखं वदनं यस्य तथोक्तोऽसुराणां दैत्यानां चक्रवर्ती सम्राट्। सार्वभौम इत्यर्थः। 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः। चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः' इत्यमरः। असुरेन्द्रस्तारको रथं स्यन्दनं विहाय परित्यज्य क्रीडन्नूर्ध्वंदिशि कम्पमानस्तथा करालो भीषणः करवालः खड्गः स करे पाणौ यस्य। धारितविकटकृपाणः सन्नित्यर्थः। तं त्रिपुरारिसूनुं शिवपुत्रमभितः संमुखं प्रत्यधावत्। कुण्ठितसर्वशस्त्रास्त्रत्वात्करवालेन शिरोनालजिहीर्षया प्रतिदुद्रावेत्यर्थः। 'धावु गतौ' इत्यस्मात्कर्तरि लङ्॥ ४८॥

शि०—भ्रूभङ्गेति। अथानन्तरं शस्त्रास्त्रयुद्धोत्तरमित्यर्थः। सन्दीप्तकोपदहनः प्रज्वलितक्रोधाग्निः, अत एव भ्रूभङ्गभीषणमुखो भृकुटिभीमवदनः। तथाऽसुरचक्रवर्ती दैत्यसार्वभौमोऽसुरेन्द्रस्तारको रथं स्यन्दनं विहाय परित्यज्य क्रीडत्कराल-

१. कवानश्चर्माभ्यधावत्, २. पुत्रम्,

करवालकरः ऊर्ध्वकम्पमानभीषणखड्गः सन् तं त्रिपुरारिसूनुं हरसुतं कार्त्तिकेयमभितः सम्मुखं प्रत्यधावत् धावति स्म ॥ ४८ ॥

अभ्यापतन्तमसुराधिपमी[1]शपुत्रो
दुर्वारबाहुविभवं सुरसैनिकैस्तम्[2] ।
दृष्ट्वा युगान्तदहनप्रतिमां मुमोच
शक्तिं प्रमोदविकसद्वदनारविन्दः ॥ ४९ ॥

सी०--अभ्यापतन्तमिति । सुरसैनिकैर्देवसेनाजनैर्दुर्वारो दुःसह्यो बाहुविभवो भुजवीर्यं यस्य । सुरसैनिकैर्जेयमित्यर्थः । तमसुराधिपं दैत्यराजमभ्यापतन्तं संमुखमागच्छन्तं दृष्ट्वा विलोक्येशपुत्रो महेशतनयः कुमारः प्रमोदेन तदीयवशंगतत्वजनितानन्देन विकसद्विदलद्वदनारविन्दं मुखकमलं यस्य । किंचिद्विहस्येत्यर्थः । युगान्तदहनस्य प्रलयकालीनानलस्य प्रतिमेव प्रतिमा प्रतियातना यस्याः । प्रज्वलद्दहनकीलाजालपरिवृतामित्यर्थः । शक्तिमायुधविशेषं मुमोच । 'शक्तिः प्रहरणान्तरे' इति विश्वः ॥ ४९ ॥

शि०--अभ्यापतन्तमिति । ईशपुत्रः कार्त्तिकेयः सुरसैनिकैर्देवचमूजनैः दुर्वारबाहुविभवं दुर्धर्षणीयभुजसामर्थ्यं तम् दृष्ट्वा विलोक्य प्रमोदविकसद्वदनारविन्दोऽत्यानन्दफुल्लमुखकमलः सन् युगान्तदहनप्रतिमां प्रलयकालिकाग्निसदृशीं शक्तिं तदाख्यायुधविशेषं मुमोच मुक्तवान् ॥ ४९ ॥

उद्द्योतिताम्बरदिगन्तरमंशुजालैः
शक्तिः पपात हृदि तस्य महासुरस्य ।
हर्षाश्रुभिः सह [3]समस्तदिगीश्वराणां
शोकोष्ण[4]बाष्पसलिलैः सह दानवानाम् ॥ ५० ॥

सी०—उद्द्योतितेति । अत्र सेति शेषः । सा कुमारमुक्ता शक्तिः समस्ता दिगीश्वरा इन्द्रादयोऽष्टदिक्पालास्तेषां हर्षाश्रुभिरानन्दबाष्पैः सह । तेषामभिलषितत्वाद्युक्तमेव तदीयहृदयशक्तिपतनजनित आनन्दो यदासीत् । दानवानां तदीयपक्षपातिनां रक्षतां शोकेन भर्तृमरणजनितेनोष्णानि यानि बाष्पसलिलानि तैः सह । अंशुजालैः किरणसमूहैः कृत्वोद्द्योतितं प्रकाशितमम्बरस्य दिशां चान्तरं मध्यं यत्र यस्यां क्रियायां यथा भवति तथा । उज्ज्वालितसकलदिगम्बरमध्यं तस्य महासुरस्य तारकस्य हृदि हृदये पपात पतितवती ॥ ५० ॥

---

१. असुरेश्वरम्, २. तैः, ३. समग्र, ४. शोकोत्थ,

शि०—उद्योतितेति । अत्र सेतिपदमध्याहार्यम् । सा कुमारप्रहिता शक्तिः । समस्तदिगीश्वराणां सकलेन्द्राद्यष्टदिक्पालानां हर्षाश्रुभिरानन्दास्रैः सह दानवानामसुराणां शोकोष्णबाष्पसलिलैर्मन्यूष्णास्रजलैः सह अंशुजालैर्मयूखनिकरैः ( करणैः ) उद्योतितान्तरदिगन्तरं प्रकाशितान्तरिक्षककुभ्मध्यं यथा तथा तस्य महासुरस्य तारकस्य हृदि चेतसि पपात पतिता ॥ ५० ॥

शक्त्या [1]हृतासुमसुरेश्वरमापतन्तं
कल्पान्तवातहत[2]भिन्नमिवाद्रिशृङ्गम् ।
दृष्ट्वा [3]प्ररूढपुलकाञ्चितचारुदेहा
देवाः प्रमोदमगमं[4]स्त्रिदशेन्द्रमुख्याः ॥ ५१ ॥

सी०—शक्त्येति । शक्त्या कर्त्र्या हृता अपगमिता असवः प्राणा यस्य । शक्तिप्रहारेण गतप्राणमित्यर्थः । एवंभूतमसुरेश्वरं तारकं कल्पान्तवातेन प्रलयकालीनप्रभञ्जनेन हतमास्फोटितमत एव भिन्नं विदीर्णमद्रिशृङ्गमिव पर्वतसान्विवापतन्तं मूर्च्छन्तं दृष्ट्वा प्ररूढैः प्रोद्गतैः पुलकैः रोमभिरञ्चिता व्याप्ता अत एव चारवो मनोहरा देहा गात्राणि येषां प्रफुल्लितरोमाञ्चितविग्रहास्त्रिदशेन्द्रमुख्याः पुरंदरप्रभृतयो देवाः प्रमोदमानन्दमगमन् प्रापुः ॥ ५१ ॥

शि०—शक्त्येति । त्रिदशेन्द्रमुख्याः शक्रप्रधाना देवा सुराः ( कर्तारः ) शक्त्या तदाख्यायुधविशेषेण हृतासुं गतप्राणमसुरेश्वरं तारकं कल्पान्तवातहतभिन्नं प्रलयकालिकानिलाऽऽस्फोटिताविदीर्णमद्रिशृङ्गं पर्वतशिखरमिव आपतन्तं भ्रंसमाणं दृष्ट्वा समीक्ष्य प्ररूढपुलकाञ्चितचारुदेहाः प्रोद्गतरोमव्याप्तसुन्दरशरीराः सन्तः प्रमोदमतिशयानन्दमगमन् प्राप्नुवन् ॥ ५१ ॥

यत्रापतत्स दनुजाधिपतिः परासुः
[5]संवर्तकालनिपतच्छिखरीन्द्र[6]तुल्यः ।
तत्रादधात्फणिपतिर्धरणीं फणाभि-
स्तद्भूरिभारविधुराभिरधोव्रजन्तीम् ॥ ५२ ॥

सी०—यत्रेति । परासुर्गतप्राणः मृत इति यावत् । अत एव संवर्तकालः प्रलयकालस्तत्र निपतता शिखरीन्द्रेण पर्वतराजेन तुल्यः समानः स दनुजानां दैत्यानामधिपतिस्तारको यत्र भूमिदेशेऽपतन्मूर्च्छितस्तत्र भूमिदेशे फणिपतिः शेषोऽधोव्रजन्तीं नीचैर्गन्तुं प्रवर्तमानां धरणीं फणाभिस्तस्य

---

१. हतासुम्, अथ तारम्, २. हति, ३. प्ररूढपुलकाङ्कित, अवरूढपुलकाञ्चित, ४. त्रिदिवेशमुख्याः, ५. संवर्तवात, ६. कल्पः,

तारकस्य भूरिभारेण विधुराभिर्भुग्नीभवन्तीभिरदधादधः पतनान्निवर्तयांचक्रे। अनेन तारकविग्रहस्यातिभारवत्त्वं ध्वनितम् ॥ ५२ ॥

शि०—यत्रेति। परासुर्गतजीवः। अत एव संवर्तकालनिपतच्छिखरीन्द्रतुल्यः प्रलयकालस्रंसमाणगिरिराजसदृशः स दनुजाधिपतिस्तारको यत्र यस्मिन् प्रदेशेऽपतत् पतितः तत्र तस्मिन् प्रदेशे फणिपतिः सर्पराजः अधोव्रजन्ती नीचप्रदेशं गच्छन्तीं धरणीं पृथ्वीं तद्भूरिभारविधुराभिस्तारकाधिकभारपीडिताभिः फणाभिः अधात् धृतवान् ॥ ५२ ॥

स्वर्गापगासलिलसीकरिणी समन्तात्
सौरभ्यलुब्धमधुपावलिसेव्यमाना।
कल्पद्रुमप्रसववृष्टिरभून्नभस्तः
शंभोः सुतस्य शिरसि त्रिदशारिशत्रोः ॥ ५३ ॥

सी०—स्वर्गापगेति। त्रिदशानां देवानामरेस्तारकस्य शत्रोः शातयितुः। हन्तुरिति यावत्। 'शंभोः सुतस्य कुमारस्य शिरसि शीर्षे। 'उत्तमाङ्गं शिरः शीर्षम्'। इत्यमरः। नभस्य आकाशसकाशात्। पञ्चम्यास्तसिल्। स्वर्गापगाया गङ्गायाः सलिलस्य सीकराः सृताम्बुकणाः। 'सीकरोऽम्बुकणाः सृताः' इत्यमरः। ते विद्यन्ते यस्याम्। तथा सौरभ्ये सौगन्ध्ये लुब्धया मधुपानां भ्रमराणामावल्या पंक्त्या कर्त्र्या सेव्यमाना-कल्पद्रुमस्य कल्पवृक्षस्य प्रसवानां पुष्पाणाम्। 'प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचने' इति विश्वः। वृष्टिरभूत्। तारकवधजनितानन्दार्णवमग्ना व्योमस्थिता विष्ण्वादयो दवाः कुमारमस्तकोपरि कल्पद्रुमपुष्पाणि विचकरुरित्यर्थः ॥ ५३ ॥

शि०—स्वर्गापगेति। स्वर्गापगासलिलसीकरिणी गङ्गाजलकणसम्पृक्ता। तथा सौरभ्यलुब्धमधुपावलिसेव्यमाना सौगन्ध्यलम्पटभ्रमरपङ्क्त्याश्रीयमाणा कल्पद्रुमप्रसववृष्टिः सुरतरुकुसुमवर्षणं (कर्त्री) त्रिदशारिशत्रोस्तारकरिपोः शंभोः शिवस्य सुतस्य तनुजस्य कुमारस्य शिरसि मूर्ध्नि नभस्तो व्योम्नः सकाशात् समन्तात्सर्वतोऽभूत् जाता ॥ ५३ ॥

पुलकभरविभिन्नवार[1]बाणा
भुजविभवं बहु तारकस्य शत्रोः।
[2]सकलसुरगणा महेन्द्रमुख्याः
प्रमदमुख[3]च्छविसंपदोऽभ्यनन्दन् ॥ ५४ ॥

---

१. चारुदेहा, २. ससुरपरगणा, ३. द्युति,

सी०—पुलकेति प्रमदा उत्कृष्टा या मुखच्छविर्वदनकान्तिः सैव संपद्वैभवं येषां तारकवधजनितमानन्दमेव महतीं संपदं मन्यमानाः । अत एव पुलकभरेण रोमाञ्चभारेण विभिन्नानि स्फुटितानि वारबाणानि कवचानि येषाम् । 'कञ्चुको वारबाणोऽस्त्री' इत्यमरः । प्रथमविग्रहप्रमाणनिर्मितानां कवचानामिदानीमानन्दवशात्प्रफुल्लद्विग्रहेषु संकीर्णतया विदलनमुचितमेवेति भावः । एवंभूता महेन्द्रमुख्याः पुरंदरप्रभृतयः सकलसुरगणाः समस्तवृन्दारकसंघा बहु महत्तारकस्य शत्रोः कुमारस्य भुजविभवं बाहुपराक्रममभ्यनन्दन् 'साधुस्ते विक्रमः' इति तुष्टुवुः । पुष्पिताग्रा वृत्तम् ॥ ५४ ॥

शि०—पुलकेति । प्रमदमुखच्छविसम्पदः उत्कृष्टवदनकान्तिविभवाः । अत एव पुलकभरविभिन्नवारवाणा रोमाञ्चाऽऽधिक्यविदीर्णकञ्चुका महेन्द्रमुख्याः शक्रप्रधानाः सकलसुरगणा निखिलामरवर्गाः तारकस्य दैत्यराजस्य शत्रोः कुमारस्य बहु प्रचुरं भुजविभवं बाहुसामर्थ्यम् अभ्यनन्दन् अस्तुवन् ॥ ५४ ॥

इति विषमशरारेः सूनुना जिष्णुनाजौ
त्रिभुवन[१]वरशल्ये [२]प्रोद्धृते दानवेन्द्रे ।
बलरि[३]पुरथ नाकस्याधिपत्यं प्रपद्य
व्यजयत सुरचूडारत्नधृष्टाग्रपादः ॥ ५५ ॥

सी०—इतीति । जिष्णुना जयशीलेन विषमशरारेः पञ्चशरशत्रोर्हरस्य सूनुना कुमारेण त्रिभुवनस्य भुवनत्रयस्य वरे श्रेष्ठे शल्ये शत्रौ । 'शल्यश्च कथितः शत्रौ मदनद्रुमयोरपि' इति विश्वः । दानवेन्द्रे तारके इत्येवंप्रकारेण प्रोद्धृत उत्खनिते । मारिते सतीत्यर्थः । अथ तारकवधानन्तरं बलरिपुः पुरंदरो नाकस्य स्वर्गस्याधिपत्वं राज्यं प्रपद्य प्राप्य सुराणां चूडारत्नैर्मुकुमणिभिर्धृष्टावग्रपादौ पादाग्रे यस्य । षष्ठीसमासे राजदन्तादित्वादग्रस्य पूर्वनिपातः । तथाभूतः सन् । व्यजयत । सर्वोत्कर्षेण ववृत्त इत्यर्थः । स स्वर्गराज्यं प्राप्य निष्कण्टकतयाभुनगिति भावः । व्यज्यतेति 'विपराभ्यां जेः' इत्यात्मनेपदम् । मालिनीवृत्तम् । लक्षणं तूक्तप्रायम् ॥५५॥

यं प्रासूत सुतं पुरा च जननी नाम्ना सुहीरेति सा
ख्यातो यस्य बुधेन्द्रमस्तकमणिः श्रीलक्ष्मणाख्यः पिता ।
यद्भ्रातृद्वितयं महद्विजयते विद्वत्तया मण्डितं
तेनासौ रचिता कुमारविवृतिः संजीविनी जीवदा ॥

---

१. खलशल्ये, २. प्रेरिते, पातिते ३. अपि,

संवत्सरेऽङ्काद्रिपुराण(१८७०)तुल्ये नभस्यमासे बहुले दले च ।
तिथावनङ्गस्य सजीववारे टीका कुमारस्य समापदेषा ॥
शुद्धं त्वशुद्धं च विवेचनीयं सर्वत्र विद्यार्णवपारगेण ।
मयोक्तमेतद्विदुषा परेण पक्षेऽपरस्मिन्ननुकम्पनीयः ॥
टीकासंयुतकाव्यपञ्चकमथ स्तोत्राणि दिक्संख्यका-
न्येकश्छन्दसि चैक एव गणिते साहित्यशास्त्रे त्रयः ।
प्राक्काव्यद्वयटिप्पणीद्वयमिति ग्रन्थावलीसंगता
सीतारामकवेः कृतिः कृतिगले नक्षत्रमालायताम् ॥

इति श्रीपर्वणीकरोपनामकश्रीलक्ष्मणभट्टात्मजसतीगर्भसम्भव-
श्रीसीतारामकविविरचितया संजीविनीसमाख्यया व्याख्यया
समेतः श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
तारकासुरवधो नाम सप्तदशः सर्गः ॥

•

शि०—इतीति । जिष्णुना जयनशीलेन विषमशरारेः मदनरिपोः शिवस्य सूनुना पुत्रेण कार्त्तिकेयेन त्रिभुवनवरशल्ये जगत्त्रयश्रेष्ठशत्रौ दानवेन्द्रे तारके इत्युक्त-रीत्या प्रोद्धृतेऽवदारिते ( विनाशिते ) सति । अथानन्तरं बलरिपुरिन्द्रो नाकस्य स्वर्गस्याऽऽधिपत्यं स्वामित्वं प्रपद्य प्राप्य सुरचूडारत्नघृष्टाग्रपादो देवमुकटमणि-संस्पृष्टचरणाग्रः सन् व्यजयत सर्वोत्कर्षेण वर्तते स्म । कुमारेण तारके हते सति सुरेन्द्रः पुरेव स्वर्गराज्यं व्यधादित्यर्थः ॥ ५५ ॥

शरचतुर्वसुचन्द्रमिते शके नभसि कृष्णदले दशमीतिथौ ।
अवनिनन्दनसंज्ञकवासरे मम कृतिः खलु पूर्त्तिमगादियम् ॥ १ ॥

इति मैथिलवंशोद्भवैकनाथठक्कुरात्मजश्रीकनकलालठक्कुरविरचितया
शिशुहितैषिणीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये तारकासुरवधो
नाम सप्तदशः सर्गः ॥ १७ ॥



## कुमारसम्भवस्य अकारादिक्रमेण

# श्लोकाऽनुक्रमणिका



**चतुर्दशसर्गः—**

